Epic

# ADHYATMA RAMAYANA.

BY

*MAHARSHI VEDAVYASHA*

WITH THE COMMENTARY OF RAMAVARMAH

EEDITED BY

PANDIT JIBANANDA VIDYASAGARA B. A.

Superintendent Free Sanskrit College.



*CALCUTTA:*

*Printed at the*

*New Valmiki Press.*

---

1884.

*To be had from Pandit Jibananda Vidyasagara B. A.*

*Superintendent Free Sanskrit College, Calcutta.*

# एतानि मुद्रितसंस्कृतपुस्तकानि ।

| | |
|---|---|
| १ आशुबोध व्याकरणम् | २।० |
| २ धातुरूपादर्शः | २ |
| ३ शब्दस्तोम महानिधिः | १० |
| ४ सिद्धान्तकौमुदी सरला सहिता | ११ |
| ५ सिद्धान्तबिन्दुसार (वेदान्त) | ॥ |
| ६ तुलादानादिपद्धतिः(वङ्गाक्षरैः | ४ |
| ७ गयाश्राद्धादि पद्धतिः | १ |
| ८ शाब्दार्थरत्नम् | ॥। |
| ९ वाक्यमञ्जरी (वङ्गाक्षरैः) | ।० |
| १० छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक | ॥/ |
| ११ वेणीसंहार नाटक | १ |
| १२ मुद्राराक्षस नाटक सटीक | १॥ |
| १३ रत्नावली नाटिका सटीक | ॥। |
| १४ मालविकाग्निमित्र सटीक | १॥ |
| १५ धनञ्जय विजय सटीक | । |
| १६ महावीरचरितनाटक | १॥ |
| १७ सांख्यतत्त्वकौमुदी सटीक | २ |
| १८ वैयाकरणभूषणसार | ॥। |
| १९ लीलावती | ॥। |
| २० वीजगणित | १ |
| २१ शिशुपालबध सटीक (माघ) | ४ |
| २२ किरातार्जुनीय सटीक | २॥ |
| २३ कुमारसम्भव पूर्वखण्ड सटीक | ॥। |
| २४ कुमारसम्भव उत्तरखण्ड | ॥ |
| २५ अष्टकम् पाणिनीयम् | ॥। |
| २६ वाचस्पत्यम् (बृहदभिधान) | १३२ |
| २७ कादम्बरी सटीक | ४ |
| २८ राजप्रशस्ति | / |
| २९ अनुमानचिन्तामणि तथा अनुमानदीधिति | ४ |
| ३० सर्वदर्शनसंग्रहः | १ |
| ३१ भामिनीविलास सटीक | १ |
| ३२ हितोपदेश सटीक | १ |
| ३३ भाषापरिच्छेदमुक्तावलीसहित | १ |
| ३४ बहुविवाहवाद | ।० |
| ३५ दशकुमारचरित सटीक | १॥ |
| ३६ परिभाषेन्दुशेखर | ॥। |
| ३७ कविकल्पद्रुम धातुपाठः | ॥ |
| ३८ चक्रदत्त (वैद्यक) | २॥ |
| ३९ उणादिसूत्र सटीक | २ |
| ४० मेदिनीकोष | १ |
| ४१ पञ्चतन्त्रम् | २॥ |
| ४२ विद्वन्मोदतरङ्गिणी(चम्पूकाव्य) | ॥ |
| ४३ माधवचम्पू | ।/ |
| ४४ तर्कसंग्रह | ॥ |
| ४५ प्रसन्नराघव नाटक | १ |
| ४६ विवेकचूडामणि | ।/ |
| ४७ काव्यसंग्रह (सम्पूर्ण) | ५ |
| ४८ लिङ्गानुशासन सटीक | । |
| ४९ ऋतुसंहार सटीक | ।/ |
| ५० विक्रमोर्वशी (सटीक) | १॥ |
| ५१ वसन्ततिलक भाण | ।/ |
| ५२ गायत्री व्याख्या | ॥० |
| ५३ सांख्यदर्शन (भाष्यसहित) | २ |
| ५४ भोजप्रबन्ध | ॥।० |
| ५५ नलोदय सटीक | ॥/ |
| ५६ ईश केन कठ प्रश्न मुण्डक माण्डूक्य (सटीक सभाष्य) | ५ |
| ५७ छान्दोग्य सटीक सभाष्य | ५ |

Adhyatmaramayana

# अध्यात्मरामायणम्।

महर्षि श्रीकृष्ण द्वैपायन विरचितम्।

श्रीरामवर्म्म विरचित-टीका-समेतम।

बि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण

संस्कृतम् प्रकाशितञ्च।

pur.


कलिकाता नगर्य्याम्।

नूतन वाल्मीकि यन्त्रे मुद्रितम्

१८८४।

# टीकाकारस्य मुखबन्धः ।

ओं गणेशाय नमः श्रीरामचन्द्राय नमः ।

विशेन वंशजलधौ पूर्णः शीतकरो परः ।
प्रजाह्लादकरो विष्णुभूषणः * कौस्तुभो परः ॥ १ ॥
नाम्ना हिम्मतिवर्माभूद्धैर्येण हिमवानिव ।
रूपेण जितकन्दर्पः क्षमायां क्षमया समः ॥ २ ॥
पराक्रमेऽर्जुनः साक्षात्तेजसा भानुमानिव ।
भूपानां भ्रष्टराज्यानां पुनाराज्यप्रदायकः ॥ ३ ॥
यं दृष्ट्वार्थिसमूहस्य जातेयं निश्चिता मतिः ।
हित्वा पशुत्वं स्त्रीत्वं च कामधुक् भूमिमागता ॥ ४ ॥
तस्माज्जातो रामदत्तश्चन्द्राचन्द्र इवापरः ।
मित्राणां च रिपूणां च मानदः † प्रथितः प्रभुः ॥ ५ ॥
आसमुद्रं क्षमा देवी यत्कीर्त्या धवलीकृता ।
हिमाचलेन समतां नीताः सप्तापि चाचलाः ॥ ६ ॥
यद्दानाम्बुप्रवाहेण मेघोदस्थानपेक्षकाः ।
कृषीवलाः प्रतिदिशं प्रहृष्यन्ति दिने दिने ॥ ७ ॥
तेन श्रीरामभक्तेन सर्वविद्याप्रजानता ।
शृङ्गवेरपुरेशेन रिपुकक्षदवाग्निना ॥ ८ ॥
अर्थिनां कल्पवृक्षेण विद्वज्जनसभासदा ।
भट्टनागेशशिष्येण क्रियते रामवर्मणा ॥ ९ ॥
प्रणम्य जानकीजानिं रामं कामातिसुन्दरम् ।
चापबाणधरं देवं मायामानुषविग्रहम् ॥ १० ॥
सेतुः परोपकृतयेऽध्यात्मरामायणाम्बुधौ ।
सुग्रन्थमणिभिः स्वच्छैः प्रीयतां तेन राघवः ॥ ११ ॥

---

* अत्र विष्णुभूषणत्वेन परमभक्ततया सदा भगवद्धृदयाह्लादकताऽस्य ध्वनिता

† मानदः मानदाता मानखण्डकश्च ।

# अध्यात्मरामायणम् ।



## बालकाण्डम् ।

---

### प्रथमः सर्गः ।

अप्रमेयत्रयातीतनिर्म्मलज्ञानमूर्त्तये ।
मनोगिरां विदूराय दक्षिणामूर्त्तये नमः ॥ १ ॥

सूत उवाच ।

कदाचिन्नारदो योगी परानुग्रहवाञ्छया ।
पर्य्यटन् सकलान् लोकान् सत्यलोकमुपागमत् ॥ २ ॥

श्रीमता वाल्मीकिना लोकोद्धाराय च कृते रामचरित्रवर्णनरूपे रामायणाख्यकाव्ये भगवतो लीलावतारस्य राघवादीनां दृढमनुष्यत्वबुद्धये नटवदात्मस्वरूपगोपनेन व्यवहरतः स्वरूपं वाल्मीकिना गुप्तमेव तत्र तत्र निरूपितम् तदेतत्परमदयालुर्भगवान् साक्षाद्वेदव्यासो लोकानां स्फुटं बोधयितुं नारदब्रह्मसंवादरूपेण ब्रह्माण्डपुराणे अध्यात्मरामायणाख्यसंहितां चक्रे तस्याश्च वाल्मीकिरूपितार्थज्ञापकत्वं बोधयितुं वाल्मीकिरामायणवदेव काण्डसर्गोपेतां कृतवान् तां यथामति स्वमतिदोषशुद्धये व्याचक्ष्महे तामेतां संहितां नैमिषेऽरण्ये नैमिषीयानृषीन् श्रावयति च सूत इत्याह ।

अप्रमेयेति अप्रमेयं त्रयं मायाजीवेश्वररूपं तदतीतस्ततोऽधिकश्चासौ निर्मलं यत् ज्ञानं तत्स्वरूपाय नमः इति वाङ्मनसामगोचरायेत्यर्थः ॥ १ ॥

कदाचिदिति योगी योगपक्वकषायतया विदितवेदितव्यः तादृशस्य

तत्र दृष्ट्वा मूर्त्तिमद्भिश्छन्दोभिः परिवेष्टितम् ।
बालार्कप्रभया सम्यक् भासयन्तं सभागृहम् ॥ ३ ॥
मार्कण्डेयादिमुनिभिः स्तूयमानं मुहुर्मुहुः ।
सर्वार्थगोचरज्ञानं सरस्वत्या समन्वितम् ॥ ४ ॥
चतुर्मुखं जगन्नाथं भक्ताभीष्टफलप्रदम् ।
प्रणम्य दण्डवद्भक्त्या तुष्टाव मुनिपुङ्गवः ॥ ५ ॥
सन्तुष्टस्तं मुनिं प्राह स्वयम्भूर्वैष्णवोत्तमम् ।
किं प्रष्टुकामस्त्वमसि ? तद्वदिष्यामि ते मुने ! ॥ ६ ॥
इत्याकर्ण्य वचस्तस्य मुनिर्ब्रह्माणमब्रवीत् ।
त्वत्तः श्रुतं मया सर्वं पूर्वमेव शुभाशुभम् ॥ ७ ॥

पर्य्यटनं विरुद्धं तत्राह परेति परेषां तत्तल्लोकवासिनां धर्मज्ञानाद्युपदेशेन यतोऽनुग्रहस्तदिच्छयेत्यर्थः सत्यलोकं ब्रह्मलोकम् ॥ २ ॥

तत्र सत्यलोके मुनिपुङ्गवो नारद उच्यमानगुणं चतुर्मुखं दृष्ट्वा तुष्टावेति अधिमहतीयल्लोकस्थेन सम्बन्धः मूर्त्तिमद्भिः स्फोतविग्रहैः छन्दोभिर्वेदैः परितो वेष्टितं तत्तद्वेदाध्येतृचतुर्मुखे तत्तद्वेदमूर्त्त्यवस्थानादिति भावः बालार्कप्रभया बालार्कसदृश्या स्वप्रभया ॥ ३ ॥

सर्वार्थगोचरज्ञानं अतीतानागतवर्त्तमानरूपा ये सर्वेऽर्थास्तद्विषयज्ञानयुक्तम् बहुव्रीहिसमासः अतएव तत्तत्ज्ञानरूपया सरस्वत्याख्यशक्त्या युक्तम् ॥ ४ ॥

जगन्नाथं जगत्स्रष्टारम् भक्ताभीष्टफलप्रदत्वेन प्रश्नयोग्यतासूचनम् ॥ ५ ॥

स्वयम्भूरित्यनेन अनाहृतज्ञानत्वं सूचितम् वैष्णवोत्तमम् "सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः भूतानि भगवत्यात्मन्येष भागवतोत्तम" इत्युक्तलक्षणम् तत्पृष्टं वस्त्वित्यर्थः ॥ ६ ॥

शुभं विहितम् अशुभं निषिद्धम् ॥ ७ ॥

इदानीमेकमेवास्ति श्रोतव्यं सुरसत्तम ।
तद्रहस्यमपि ब्रूहि यदि तेऽनुग्रहो मयि ॥ ८ ॥
प्राप्ते कलियुगे घोरे नराः पुण्यविवर्जिताः ।
दुराचाररताः सर्वे सत्यवार्त्तापराङ्मुखाः ॥ ९ ॥
परापवादनिरताः परद्रव्याभिलाषिणः ।
परस्त्रीसक्तमनसः परहिंसापरायणाः ॥ १० ॥
देहात्मदृष्टयो मूढा नास्तिकाः पशुबुद्धयः ।
मातापितृकृतद्वेषाः स्त्रीदेवाः कामकिङ्कराः ॥ ११ ॥
विप्रा लोभग्रहग्रस्ता वेदविक्रयजीविनः ।
धनार्जनार्थमभ्यस्तविद्यामदविमोहिताः ॥१२॥

एकमेव पुण्यहीनानां परलोकप्राप्त्युपायरूपम् तद्रहस्यमपि मत्पृष्टं ब्रूहि अनुग्रहः परोपकारकरणजपुण्येनायं पूज्यतामित्येवं कृपा दया यदि भवीत्यर्थः ॥ ८ ॥

दुराचाररताः निषिद्धकर्मनिरताः तस्यैव प्रपञ्चः सत्यवार्त्तेति "नानृतं वदेत्" इति निषिद्धानृतभाषणशीला इति यावत् ॥ ९ ॥ १० ॥

सर्वपापस्य मूलकारणमाह देहाऽऽत्मदृष्टय इति देहे एवात्मदृष्टिर्येषां ते इत्यर्थः एवं च देहनाशेनात्मनाशात् पापपुण्यफलभोक्तुरभावान्नास्ति कषाद-दीनां विहिताकरणनिषिद्धकरणयोः प्रवृत्तिरितिभावः स्थूलोऽहं गौरोऽहमिति प्रतीतिस्तु शुक्तौ रजतप्रतीतिवद्भ्रम इति तत्त्वं देहस्य परिणामित्वं तु प्रतिक्षणोपचयापचयाभ्यां प्रत्यक्षसिद्धमात्मनोऽविनाशित्वं तु "अविनाशी वारेऽयमात्मा" इति श्रुतिसिद्धम् अत एव नास्तिका नास्ति परलोक इति बुद्धिमन्तः पशुबुद्धयः आहारविहारमात्रपरा विधिनिषेधानभिज्ञा इत्यर्थः स्त्रीदेवाः स्त्रीजिता इत्यर्थः तेषामवश्याभोज्यत्वं च स्मृतिषूक्तम् कामकिङ्कराः काम्यकर्ममात्रपराः ॥ ११ ॥

लोभरूपग्रहेण भूतादिना ग्रस्ताः वेदविक्रयजीविनः भृतकाध्यापकाः

त्यक्तस्वजातिकर्म्माणः प्रायशः परवञ्चकाः ।
क्षत्रियाश्च तथा वैश्याः स्वधर्म्मत्यागशीलिनः ॥ १३ ॥
तद्वच्छूद्राश्च ये केचिद् ब्राह्मणाचारतत्पराः ।
स्त्रियश्च प्रायशो भ्रष्टा भर्त्तवज्ञाननिर्भयाः ॥ १४ ॥
श्वशुरद्रोहकारिण्यो भविष्यन्ति न संशयः ।
एतेषां नष्टबुद्धीनां परलोकः कथं भवेत् ॥ १५ ॥
इति चिन्ताकुलं चित्तं जायते मम सन्ततम् ।
लघूपायेन येनैषां परलोकगतिर्भवेत् ॥ १६ ॥
तमुपायमुपाख्याहि सर्वं वेत्ति यतो भवान् ।
इत्यृषेर्वाक्यमाकर्ण्य प्रत्युवाचाम्बुजासनः ॥ १७ ॥

धनार्जनफलकतयाऽभ्यस्ता या विद्या तन्मदेन तद्गर्वेण विमोहिताः इतरावज्ञाशीलाः ॥ १२ ॥

त्यक्तेति अत्र विप्र इत्यनुवर्त्तते त्यक्तं स्वजातिकर्म ब्राह्मणजात्युचितं कर्माध्ययनादि यैरतः परवञ्चका परवञ्चना एव धर्मानुष्ठानवन्तः क्षत्रियादयोऽप्येवमेवेत्याह क्षत्रिया इति स्वधर्मत्यागरूपं शीलं येषां न तु कदाचिदपि धर्मशीला इत्यर्थः ॥ १३ ॥

ब्राह्मणाचारतत्परा इत्यनेन धर्मसङ्करो दर्शितः स्त्रियश्चेत्यनेन वर्णसङ्करो दर्शितः भर्त्तुरवज्ञाने निर्भयाः निःशङ्काः भर्त्तवज्ञानेति पाठे 'वष्टि भागुरि' इत्यनेनावज्ञादेरकारस्य लोपः ॥ १४ ॥ १५ ॥

परलोकगतिः भूर्लोकगतिः भूर्लोकोर्ध्वं भुवर्लोकान्तगमनम् तच्च दुराचारादिजानर्थनिवृत्तिं विना चित्तशोधकसत्कर्मधर्मं विना च दुष्प्रापमिति भावः ॥ १६ ॥

नन्वीदृशोपायज्ञानं मम कथं स्यादिति चेत्तत्राह सर्वं वेत्तीति यतो भवान् सर्वज्ञ इति भावः ऋषेर्नारदस्य वाक्यमाकर्ण्य अम्बुजासनो ब्रह्मा प्रत्युवाचेति ॥ १७ ॥

ब्रह्मोवाच।

साधु पृष्टं त्वया साधो! वक्ष्ये तच्छृणु सादरम्।
पुरा त्रिपुरहन्तारं पार्वती भक्तवत्सला(१)॥ १८॥
श्रीरामतत्त्वं जिज्ञासुः पप्रच्छ विनयान्विता।
प्रियायै गिरिशस्तस्य गूढं व्याख्यातवान् स्वयम्॥१९॥
पुराणोत्तममध्यात्मरामायणमिति स्मृतम्।
तत् पार्वती जगद्धात्री पूजयित्वा दिवानिशम्॥२०॥
आलोचयन्ती स्वानन्दमग्ना तिष्ठति साम्प्रतम्।
प्रचरिष्यति तल्लोके प्रारब्धदृष्टवशाद् यदा॥ २१॥
तस्याध्ययनमात्रेण जना यास्यन्ति सद्गतिम्।
तावद्विजृम्भते पापं ब्रह्महत्यापुरःसरम्॥ २२॥

साधु सर्वजनहितं यतः पृष्टम् अतः सादरं वक्ष्ये तदुत्तरमिति शेषः तच्छृणु तदेवाह पुरेति त्रिपुरहन्तारं शिवं भक्तवत्सलेत्यनेन पार्वतीप्रश्नोऽपि स्वभक्तसकलजनकरुणया तदुद्धारार्थमिति सूचितम्॥ १८॥

गूढं स्वातिरिक्ताज्ञातं वक्ष्यमाणं वस्तु व्याख्यातवान् कथितवानित्यर्थः॥ १९॥

तत् किं तत्राह पुराणोत्तममिति पुराणमध्ये तच्च तत् उत्तमं च श्रवणेन सर्वधर्मजनकत्वाच्चित्तशुद्धिद्वारा तत्त्वज्ञानकरत्वाच्चेति भावः अध्यात्मरामायणमित्यन्वर्थं पत्यगात्म आत्मनीत्यध्यात्मम् आत्मनि चित्तेऽन्तर्यामितया वर्त्तमानो यो रामो रमन्ते योगिनोऽत्रेति व्युत्पत्त्याऽन्तर्यामी तस्यायनं चित्तशुद्धिद्वारा प्रापकं तत्प्रतिपादकत्वादिति तदध्यात्मरामायणमुत्तरश्लोकस्थे आलोचने इदमेव कर्म॥ २०॥

स्वानन्दमग्ना स्वस्वरूपानन्दमग्ना तिष्ठति यत्तस्मात्तं युक्तम् एतदालोचनेन स्वस्वरूपानन्दस्य जगदन्तर्यामिरूपस्य सम्यग्भानादिति भावः २१॥२२

(१) भक्तवत्सलं इत्यपि पाठः।

यावज्जगति नाध्यात्मरामायणमुदेष्यति ।
तावत्कलिर्महोत्साहो निःशङ्कं संप्रवर्त्तते ॥ २३ ॥
यावज्जगति नाध्यात्मरामायणमुदेष्यति ।
तावद् यमभटाः शूराः (१) संचरिष्यन्ति निर्भयाः ॥२४॥
यावज्जगति नाध्यात्मरामायणमुदेष्यति ।
तावत् सर्व्वाणि शास्त्राणि विवदन्ते परस्परम् ॥२५॥
तावत् स्वरूपं रामस्य दुर्व्बोधं महतामपि ।
यावज्जगति नाध्यात्मरामायण-मुदेष्यति ॥२६॥
अध्यात्मरामायणसङ्कीर्त्तनश्रवणादिजम् ।

श्लोकः 'अध्यात्मके तिष्ठति यः परात्मा रामोऽयते यत्र हि तत्त्वविद्भिः । अतोऽभिधानं कथितं भवान्यै अध्यात्मरामायणमस्य' मेन ॥ २२ ॥

मेन भवेन मः शिवश्चन्द्रमा वेध इत्यभिधानात् (अयते इत्यार्षम् अय्यते प्राप्यते इत्यर्थः) संप्रवर्त्तते जनेष्विति शेषः ॥ २३ ॥

निर्भयाः सञ्चरिष्यन्ति सर्व्वेषां पापग्रस्तत्वात्कत्वाविति भावः ॥ २४ ॥

शास्त्राणि न्यायादीनि विवदन्ते विवादं कुर्वते आत्मविषये इत्यर्थः कर्त्ता भोक्ता ज्ञानाश्रय आत्मा परस्परं भिन्न इति काणादा गौतमाश्च षोड़शादिपदार्थानां परस्परमात्मनि भेदज्ञानान्मुक्तिरित्यादि च ज्ञानस्वरूपा अनेके जीवास्तेषां प्रकृत्यादिभ्यो भेदज्ञानान्मोक्ष इति सांख्यादयः एक एव चेतन उपाधिभेदान्नानात्वं प्राप्तः तत्त्वमस्यादिवाक्यजश्रवणमनननिदिध्यासनैर्ब्रह्मैवाहमितिज्ञानादुपाधिविलये स्वस्वरूपेणावस्थानमेव मोक्ष इत्युपनिषत्सिद्धान्त अध्यात्मरामायणोदये स्फुटो भविष्यतीति तत्तच्छास्त्रवासनाजन्यो वादो लयमेष्यतीति भावः ॥ २५ ॥

रामस्य स्वरूपं सच्चिदानन्दाद्वयब्रह्मस्वरूपं महतामपि शास्त्रज्ञानामपि दुर्बोधं भवतीति शेषः ॥ २६ ॥ २७ ॥ २८ ॥

(१) क्रूरा इति वा पाठः ।

फलं वक्तुं न शक्नोमि कार्त्स्न्येन मुनिसत्तम ! ॥ २७ ॥
तथापि तस्य माहात्म्यं वक्ष्ये किञ्चित्तवानघ ! ।
शृणु चित्तं समाधाय शिवेनोक्तं पुरा मम ॥ २८ ॥
अध्यात्मरामायणतः श्लोकं श्लोकार्द्धमेव वा ।
यः पठेद्भक्तिसंयुक्तः स पापान्मुच्यते क्षणात् ॥ २९ ॥
यस्तु प्रत्यहमध्यात्मरामायणमनन्यधीः ।
यथाशक्ति वदेद्भक्त्या स जीवन्मुक्त उच्यते ॥ ३० ॥
यो भक्त्याऽर्चयतेऽध्यात्मरामायणमतन्द्रितः ।
दिने दिनेऽश्वमेधस्य फलं तस्य भवेन्मुने ! ॥ ३१ ॥
यदृच्छयाऽपि योऽध्यात्मरामायणमनादरात् ।
अन्यतः शृणुयान्मर्त्यः सोऽपि मुच्येत पातकात् ॥ ३२ ॥
नमस्करोति योऽध्यात्मरामायणमदूरतः ।
सर्ववेदार्चनफलं संप्राप्नोति न संशयः ॥ ३३ ॥
लिखित्वा पुस्तकेऽध्यात्मरामायणमशेषतः ।
यो दद्याद्रामभक्तेभ्यस्तस्य पुण्यफलं शृणु ॥ ३४ ॥
अधीतेषु च वेदेषु शास्त्रेषु व्याकृतेषु च ।
यत् फलं दुर्लभं लोके तत् फलं तस्य सम्भवेत् ॥ ३५ ॥

अध्यात्मरामायणतः 'सार्व्वविभक्तिकः षष्ठ्यन्तात्तसिः' ॥ २९ ॥

जीवन्मुक्त इति तल्लक्षणं च 'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते' इत्यादिना गीतायाम् उक्तं वासिष्ठेऽपि 'निद्रादौ जागरस्यान्ते यो भाव उपजायते । तं भावं भावयन् राम जीवन्मुक्तः सदा भवेत्' ॥ ३० ॥ ॥ ३१ ॥

अनादरात् यदृच्छयाऽपि न तु पुराणश्रवणविध्युक्तनियमेनेत्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥

एकादशीदिनेऽध्यात्मरामायणमुपोषितः ।
यो रामभक्तः सदसि व्याकरोति नरोत्तमः ।
तस्य पुण्यफलं वक्ष्ये शृणु वैष्णवसत्तम ! ॥ ३६ ॥
प्रत्यक्षरं तु गायत्रीपुरश्चर्य्याफलं भवेत् ।
उपवासव्रतं कृत्वा श्रीरामनवमीदिने ॥ ३७ ॥
रात्रौ जागरितोऽध्यात्मरामायणमनन्यधीः ।
यः पठेत् शृणुयाद्वापि तस्य पुण्यं वदाम्यहम् ॥ ३८ ॥
कुरुक्षेत्रादिनिखिलपुण्यतीर्थेष्वनेकशः ।
आत्मतुल्यं धनं सूर्य्यग्रहणे सर्वतोमुखे ॥ ३९ ॥
विप्रेभ्यो व्यासतुल्येभ्यो दत्त्वा यत् फलमश्नुते ।
तत् फलं सम्भवेत्तस्य सत्यं सत्यं न संशयः ॥ ४० ॥
यो गायते मुदाऽध्यात्मरामायणमहर्निशम् ।
आज्ञां तस्य प्रतीक्षन्ते देवा इन्द्रपुरोगमाः ॥ ४१ ॥
पठन् प्रत्यहमध्यात्मरामायणमनुव्रतः ।
यद्यत्करोति तत्कर्म ततः कोटिगुणं भवेत् ॥ ४२ ॥

अधीतेष्विति साङ्गवेदाध्ययने शास्त्रार्थाध्ययने च यत्पुण्यं दुर्लभं तत् फलं तस्मादध्यात्मरामायणपुस्तकदानाद्भवेदित्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥

जागरितः कृतजागरणः ॥ ३८ ॥

आत्मतुल्यं धनम् आत्मप्रियं वस्त्वित्यर्थः सर्व्वतोमुखे जले स्थित इति शेषः 'पुष्करं सर्व्वतोमुखम्' इति जलपर्य्यायेष्वभिधानात् ॥ ३९ ॥

व्यासतुल्येभ्य इत्यनेन देशप्रदेयवस्तुकालसम्प्रदानविशेषाणां पुण्यातिशयजनकत्वं सूचितम् ॥ ४० ॥

गायते इति पाठे तङार्षः यो गायति मुदेति पाठस्तु युक्त एव ॥ ४१ ॥

अनुव्रतः तत्परः ततः स्वभावक्रियमाणकर्मणः ॥ ४२ ॥

तत्र श्रीरामहृदयं यः पठेत् सुसमाहितः ।
स ब्रह्मघ्नोऽपि पूतात्मा त्रिभिरेव दिनैर्भवेत् ॥ ४३ ॥
श्रीरामहृदयं यस्तु हनूमत्प्रतिमाऽन्तिके ।
त्रिः पठेत्प्रत्यहं मौनी स सर्वेप्सितभाग्भवेत् ॥ ४४ ॥
पठन् श्रीरामहृदयं तुलस्यश्वत्थयोर्यदि ।
प्रत्यक्षरं प्रकुर्वीत ब्रह्महत्यां निवर्त्तयेत् ॥ ४५ ॥
श्रीरामगीतामाहात्म्यं कृत्स्नं जानाति शङ्करः ।
तदर्द्धं गिरिजा वेत्ति तदर्द्धं वेद्म्यहं मुने ! ॥४६ ॥
तत्ते किञ्चित् प्रवक्ष्यामि कृत्स्नं वक्तुं न शक्यते ।
यज्ज्ञात्वा तत्क्षणाल्लोकश्चित्तशुद्धिमवाप्नुयात् ॥ ४७ ॥
श्रीरामगीता यत् पापं न नाशयति नारद ! ।
तन्न नश्यति तीर्थादौ लोके क्वापि कदाचन ॥ ४८ ॥
तन्न पश्याम्यहं लोके मार्गमाणोऽपि सर्वदा ।
रामेणोपनिषत्सिन्धुमुन्मथ्योत्पादितां मुदा ॥ ४९ ॥

तत्राध्यात्मरामायणमध्ये सुसमाहितः स्थिरचित्तः ॥ ४३ ॥

प्रतिमान्तिके प्रतिमासमीपे ॥ ४४ ॥

यस्तु तुलस्यादिसन्निधौ रामहृदयं पठन् प्रकुर्वीत प्रदक्षिणादीतिशेषः स प्रत्यक्षरं प्रत्यक्षरोच्चारणे ब्रह्महत्यां तज्जन्यं पापं निवर्त्तयेत् आत्मनः श्रोतुश्चेति शेषः ॥ ४५॥

अहं ब्रह्मा ॥ ४६ ॥

यत् रामगीतामाहात्म्यम् ॥ ४७ ॥

रामगीता पठ्यमाना इति शेषः कदाचन रविग्रहादिकालेऽपि स्नानादिनेति शेषः ॥ ४८ ॥

मार्गमाणः अन्वेषयन्नपि तत् रामगीतातुल्यतया पापनाशकं वस्तु राम-

लक्ष्मणायार्पितां गीतासुधां पीत्वाऽमरो भवेत्।
जमदग्निसुतः पूर्वं कार्त्तवीर्य्यबधेच्छया ॥ ५० ॥
धनुर्विद्यामभ्यसितुं महेशस्यान्तिके वसन्।
अधीयमानां पार्वत्या रामगीतां प्रयत्नतः ॥ ५१ ॥
श्रुत्वा गृहीत्वाऽशु पठन्नारायणकलामगात्।
ब्रह्महत्यादिपापानां निष्कृतिं यदि वाञ्छति ॥ ५२ ॥
रामगीतां मासमात्रं पठित्वा मुच्यते नरः।
दुष्प्रतिग्रहदुर्भोज्यदुरालापादिसम्भवम् ॥ ५३ ॥
पापं यत्तत्कीर्त्तनेन रामगीता विनाशयेत्।
शालग्रामशिलाग्रे च तुलस्यश्वत्थसन्निधौ ॥ ५४ ॥
यतीनां पुरतस्तद्वद्रामगीतां पठेत्तु यः।
स तत्फलमवाप्नोति यद्वाचोऽपि न गोचरम् ॥ ५५ ॥
रामगीतां पठन् भक्त्या यः श्राद्धे भोजयेत् द्विजान्।
तस्य ते पितरः सर्वे यान्ति विष्णोः परं पदम् ॥ ५६ ॥
एकादश्यां निराहारो नियतो द्वादशीदिने।
स्थित्वाऽगस्त्यतरोर्मूले रामगीतां पठेत्तु यः ॥ ५७ ॥

गीतातिरिक्तं न पश्यामीत्यर्थः (ख्यादितां गीतासुधामिति परश्लोकस्ये-नान्वय एवमुत्तरेषु द्रष्टव्यम्) ॥ ४९ ॥

गीतासुधामिति रूपकं अमृतरूपां गीतामित्यर्थः अमरस्तत्तुल्यः ॥ ५० ॥

कार्त्तवीर्य्यः सहस्रबाहुरर्जुनः ॥ ५१ ॥

श्रवणोत्तरं ग्रहणम् नारायणकलां नारायणरूपत्वम् ॥ ५२ ॥ ५३ ॥

दुष्प्रतिग्रहः अतिदुष्प्रतिग्रहः "तिलधेनुर्गजो वाजी प्रेतान्नमाजनं मणिः मणिः शालग्रामः सुरभिः उभयतोमुखी सूयमाना च घोराः सम्प्रतिग्रहा" इत्यादि स्मृत्युक्ताः दुर्भोज्यं निषिद्धभक्षणम् दुरालापोऽनृत-भाषणादि ॥ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥

स एव राघवः साक्षात् सर्वदेवैश्च पूज्यते।
विना दानं विना ध्यानं विना तीर्थावगाहनम् ॥५८॥
रामगीतां नरोऽधीत्य तदनन्तफलं लभेत्।
बहुना किमिहोक्तेन शृणु नारद! तत्त्वतः ॥ ५९ ॥
श्रुतिस्मृतिपुराणेतिहासागमशतानि च।
अर्हन्ति नाल्पामध्यात्मरामायणकलामपि ॥ ६० ॥

अध्यात्मरामचरितस्य मुनीश्वराय
माहात्म्यमेतदुदितं कमलासनेन।
यः श्रद्धया पठति वा शृणुयात् स मर्त्यः
प्राप्नोति विष्णुपदवीं सुरपूज्यमानः ॥ ६१ ॥

इत्यध्यात्मरामायणे बालकाण्डे तन्माहात्म्यकथनं नाम
प्रथमः सर्गः।

तत् दानादि अनन्तफलं लभेत् अनन्तफलं दानादिफलं तदध्ययनमा-त्रेण भवेदित्यर्थः ॥ ५९ ॥

श्रुतिर्वेदः स्मृतिर्मन्वादिप्रणीता पुराणानि पाद्मादीन्यष्टादश इति-हासो भारतादिः आगमाः पञ्चरात्रादयः अध्यात्मरामायणस्य तदध्ययनस्य कलां षोडशांशमपि नार्हन्ति तदध्ययनानीत्यर्थः सर्वाध्ययनफलत्वादस्येति भावः ॥ ६० ॥

पठतीत्यन्त उक्तमाहात्म्याध्यायः कर्म ॥ ६१ ॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थत्वादिविरुदावलीविराज-
मानस्य हिम्मतिवर्मणः पुत्रस्य श्रीरामवर्मणः कृतौ
अध्यात्मरामायणे सेतौ बालकाण्डे तन्माहात्म्य-
कथनं नाम प्रथमः सर्गः।

———

# द्वितीयः सर्गः ।



यः पृथ्वीभरवारणाय दिविजैः सम्प्रार्थितश्चिन्मयः
संजातः पृथिवीतले रविकुले मायामनुष्योऽव्ययः ।
निश्चक्रं हतराक्षसः पुनरगाद् ब्रह्मत्वमाद्यं स्थिरां
कीर्त्तिं पापहरां विधाय जगतां तं जानकीशं भजे ॥ १ ॥

शिवपार्वतीसंवादरूपं अध्यात्मरामायणं वक्तुं भगवान् व्यासो निर्वि-घ्नार्थं भगवत्स्मरणरूपमङ्गलमाचरति य इति पृथ्व्या यो दुष्टराक्षसा-दिजनितो भरो भारस्तस्य वारणायेत्यर्थः 'परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे' इति भगवदुक्तेः दिविजैर्देवैः रावणपीड़ितैः सम्प्रार्थितः सन् चिन्मयोऽपि चिद्रूपोऽपि अव्ययोऽपि पृथ्वीतले रविकुले मायामनुष्यः संजातः तत्र देवप्रार्थनयाऽव-तार इत्यर्थो वाल्मीकीये बालकाण्डे पञ्चदशषोड़शसर्गयोः स्पष्ट एव अव्ययस्य चिन्मयस्य च कथं अव्ययत्वस्तत्स्वभावस्य मायावश्यं भावादत उक्तं मायेति माया ताम सत्वासत्वाभ्यामनिर्वाच्या सत्वरजस्तमो गुणघटितघटना-सामर्थ्यवती काचिदीश्वरशक्तिः 'देवात्मशक्तिं स्वगुणैर्निगूढ़ां' इति श्रुतेः 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति गीतोक्तेश्च एवं चिन्मय-स्याघटितोऽपि मनुष्यभावो जन्मव्यवहारश्च मायाकृत इति भावः तदुक्तं रामतापनीयोपनिषदि 'चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपा-सकानां कार्यार्थं ब्रह्मणो रूपकल्पना' इति निश्चक्रं निरवशेषं यथा तथा हतराक्षसः जगतां पापहरां स्थिरां कीर्त्तिं विधाय लोके स्थापयित्वा पुनराद्यं ब्रह्मत्वं निरुपाधिब्रह्मरूपमगात् ॥ १ ॥

अध्यात्मरामायणमेव नित्यं पठेद्यदीच्छेद्भवबन्धमुक्तिम्।
गवां सहस्रायुतकोटिदानात् फलं लभेद्यः शृणुयात् स नित्यम्॥ ४॥

पुरारिगिरिसम्भूता श्रीरामार्णवसङ्गता।
अध्यात्मरामगङ्गेयं पुनाति भुवनत्रयम्॥ ॥ ५॥

कैलासाग्रे कदाचिद्रविशतविमले मन्दिरे रत्नपीठे
संविष्टं ध्याननिष्ठं त्रिनयनमभयं सेवितं सिद्धसङ्घैः।
देवीवामाङ्कसंस्था गिरिवरतनया पार्वती भक्तिनम्रा
प्राहेदं देवमीशं सकलमलहरं वाक्यमानन्दकन्दम्॥६॥

पार्वत्युवाच।

नमोऽस्तु ते देव! जगन्निवास! सर्वात्मदृक् त्वं परमेश्वरोऽसि।
पृच्छामि तत्त्वं पुरुषोत्तमस्य सनातनं त्वञ्च सनातनोऽसि(१)॥ ७

यः शृणुयात् स सहस्रगुणितायुतगुणितकोटिसंख्यगोदाना-दर्जितफलं लभेदित्यन्वयः॥ ४॥

पुरारिगिरीति रामार्णवेति च रूपके अध्यात्मरामगङ्गेति अध्यात्मरामपाठो अध्यात्मरामायणपरस्तदेव गङ्गेति अनेन रूपकेण सर्वमहापातकारीनामपि नाश इतिसूचितं गङ्गायास्तन्नाशकत्वस्य सर्वस्मृतिस्मृतिसिद्धत्वात्॥५

सकलमलहरं वस्तु विषयत्वाद्वाक्यस्य सकलमलहरत्वम् आनन्दकन्दमितीयविशेषणम् 'एतस्यैवानन्दस्य मात्रामुपजीवन्ति' इति श्रुतेरस्य सर्वानन्दमूलत्वेनानन्दकन्दत्वम्॥ ६॥

देवो द्योतनात् जगन्निवासत्वमिव जगति निवसतीति वा जगन्निवासस्तस्य बुद्धिः ते तुभ्यं नमः अस्तु यतस्त्वं सर्वात्मदृक् सर्वस्वरूप आत्मा ब्रह्म 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः तमभिन्नमात्मरूपतया पश्यतीति सर्वात्मदृक् अतएव परमेश्वरोऽसि अतः पुरुषोत्तमस्य सर्वेभ्यः पुरुषेभ्य उत्तमस्य

---

(१) त्वां च सदातनोऽसि इति वा पाठः।

गोप्यं यदत्यन्तमनन्यवाच्यं वदन्ति भक्तेषु महानुभावाः ।
तदप्यहोऽहं तव देव ! भक्ता प्रियोऽसि मे त्वं वद यत्तु पृष्टम् ॥८
ज्ञानं सविज्ञानमथानुभक्ति वैराग्ययुक्तञ्च मितं विभास्वत् ।
जानाम्यहं योषिदपि त्वदुक्तं यथा तथा ब्रूहि तरन्ति येन ॥९॥
पृच्छामि चान्यच्च परं रहस्यं तदेव चाग्रे वद वारिजाक्ष ! ।
श्रीरामचन्द्रेऽखिललोकसारे भक्तिर्दृढा नौर्भवति प्रसिद्धा ॥ १० ॥

तस्यैव ब्रह्मणः सनातनं उपाधिरहितं सोपाधेरूपस्य ज्ञानोत्तरं नाशाच्च सनातनत्वं तत्वं पृच्छामि नन्वसनातनेन मया कथं तद्वक्तुं शक्यमत आह त्वञ्च सनातनोऽसि त्वमपि स एवासीति त्वदज्ञातं न किञ्चिदितिभावः ॥ ७ ॥

अत्यन्तगोप्यम् 'इदं तु ते गुह्यतमं' इतिगीतोक्तेः अनन्यवाच्यं भक्तान्येषु भक्तुमयोग्यम् अहो तदपि भक्तेषु वदन्ति अतो मे पृष्टं यत्तत् निश्चयेन वद हे देव! यतोऽहं तव भक्ता ननु मद्भक्ता त्वं कुतस्तत्राह यतस्त्वं मे प्रियोऽसि॥८

ज्ञानमिति येन ज्ञानेन जनास्तरन्ति पुनर्जन्मादिसंसारं न प्राप्नुवन्ति तत्सविज्ञानं ज्ञानं ब्रूहि विज्ञानं निदिध्यासनपरिपाकजमपरोक्षज्ञानं तत्सहितं तत्फलकमिति यावत् ज्ञानं श्रवणमननजं परोक्षं ब्रह्मैव सर्वं ब्रह्मैवाहमिति च इति 'तरति शोकमात्मवित्' इतिश्रुतेः तद्ब्रूहि तज्जनकवाक्यं ब्रूहीत्यर्थः तज्ज्ञानं न च वैराग्यं विना वैराग्यं च न भक्तिं विनेत्यत आह अनुभक्तिचेति भक्तेः पश्चादनुभक्ति जायमानं यद्वैराग्यं तद्युक्तम् तदुपायबोधकवाक्ययुक्तं वैराग्ययुक्तं चेत्यर्थः तथा च पातञ्जलसूत्रम् 'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यं' इति अनुश्रवो वेदस्तद्बोधितः स्वर्गादिरानुश्रविकः भक्तिरीश्वरानुरागः तथा मितं मितशब्दवत् विभास्वत् विशेषेण भास्वत् श्रुतिमात्रेण झटितीत्यर्थः प्रत्यायकमसन्देहबोधजनकवाक्ययुक्तं पुनः ब्रूहि यथा योषित् अप्यहं त्वदुक्तं जानामि ॥ ९ ॥

अग्रे प्रथमतः दृढा भक्तिः प्रसिद्धा नौर्भवति भवसागरतरणायेति शेषः ॥ १० ॥

भक्तिः प्रसिद्धा भवमोक्षणाय नान्यत्ततः साधनमस्ति किञ्चित् ।
तथापि हृत्संशयबन्धनं मे विभेत्तुमर्हस्यमलोक्तिभिस्त्वम् ॥११॥
वदन्ति रामं परमेकमाद्यं निरस्तमायागुणसंप्रवाहम् ।
भजन्ति चाहर्निशमप्रमत्ताः परं पदं यान्ति तथैव सिद्धाः ॥१२॥
वदन्ति केचित्परमोऽपि रामः स्वाविद्यया संवृतमात्मसंस्थम् ।
जानाति नात्मानमतः परेण संबोधितो वेद परात्मतत्त्वम् ॥१३॥

तदेवाह भक्तिरिति ततोऽन्यत्साधनं नास्ति अन्यत्कर्मादि तत्साधनं भवमोक्षजनकतत्त्वज्ञानसाधनं नास्तीत्यर्थः सा स्वस्येतरानपेक्षितत्वात् भक्तिः परानुरक्तिरीश्वर इति भक्तिमीमांसकशाण्डिल्यसूत्राभ्याम्" इतरेण ज्ञानेन स्वसाधनतयाऽपेक्षितत्वात् सा भक्तिर्मुख्या" इत्याद्यः सूत्रार्थः भक्तिलक्षणपरं च द्वितीयसूत्रम् 'हृत्संशयबन्धनं हृद्गतसंशयविषयं रामस्य जगदीश्वरत्वम्' ॥११॥

निरस्तस्त्यक्तो मायागुणकृतो रागद्वेषादिसंप्रवाहो येन तम् अप्रमत्ताः प्रमादोऽज्ञानं तद्रहिताः 'प्रमादं वै मृत्युमहं ब्रवीमि' इति सनत्सुजातीयोक्तेः तत्र हि 'मृत्युर्वै तमः' इति श्रुतेर्मृत्युपदेनाज्ञानमिति बोध्यम् तथैव तेन प्रकारेण भजनेनैव सिद्धास्तत्त्वज्ञाः सन्तः परं पदं मोक्षं यान्तीत्यर्थः ॥ १२ ॥

परमोऽपि रामः स्वाविद्यया मायया संवृतमावृतमात्मसंस्थं ब्रह्मरूपं आत्मानं स्वस्वरूपं न जानाति अतः परेण ब्रह्मणा सम्बोधितः परात्मा ईश्वरस्वरूपं स्वतत्त्वं वेद जानातीति केचिद्वदन्ति, तथाच वाल्मीकीये रावणवधानन्तरं ब्रह्मवाक्यम् 'तमुवाच ततो देवः स्वयम्भूरमितद्युतिः । प्रगृह्य रुचिरं बाहुं धारयन् पूर्वदक्षिणम् । भवान्नारायणो देवः श्रीमांश्चक्रायुधः प्रभुः' इत्यादि उपदेशसाहस्र्यां भगवत्पादैरप्युक्तं 'ब्रह्मा दाशरथेर्यद्वदुक्त्यैव र-वापानुदस्तमः । तस्य विष्णुत्वसम्बोधेन यथान्तरमास्थित' इति ॥ १३ ॥

---

( १ ) उक्तिः इति क्वचित् पाठः ।

यदि स जानाति कुतो विलापः सीताकृतेऽनेन कृतः परेश ।
जानाति नैवं यदि केन सेव्यः समोहि सर्वैरपि जीवजातैः ॥१४
अत्रोत्तरं किं विदितं ? भवद्भिस्तद्ब्रूत(१)मे संशयभेदि वाक्यम् ॥१५

श्रीमहादेव उवाच ।

धन्यासि भक्तासि परात्मनस्त्वं यज्ज्ञातुमिच्छा तव रामतत्त्वम् ।
पुरा न केनाप्यभिचोदितोऽहं वक्तुं रहस्यं परमं निगूढम् ॥१६
त्वयाद्य भक्त्या परिनोदितोऽहं वक्ष्ये नमस्कृत्य रघूत्तमन्ते ।
रामः परात्मा प्रकृतेरनादिरानन्द एकः पुरुषोत्तमो हि ॥१७
स्वमायया कृत्स्नमिदं हि सृष्ट्वा नभोवदन्तर्बहिरास्थितो यः ।

सीताकृते सीतानिमित्तं विलापः अरण्यकाण्डकिष्किन्धादौ वाल्मी-
कीये स्पष्ट एव केन सेव्यः अज्ञस्य जीववत्सेव्यत्वाभावादित्यर्थः ॥१४॥१५॥
परात्मनो ब्रह्मणः ॥ १६ ॥

एवं पार्वत्या पृष्टः शिवो रामस्वरूपमाह राम इति । रामः परात्मा
ब्रह्मैवेत्यर्थः प्रकृतेरित्यस्यान्वय इति असंसर्गीति च शेषः प्रकृतितत्कार्येभ्यो-
ऽन्यत्वात्तैरसंसर्गाच्च रामः परमेश्वर एवेत्यर्थः जीवस्तु तैरुपाधिभिः संसृष्ट
तद्धर्मकर्तृत्वाद्यभिमानवानिति भावः अतएवानादिरेक आनन्दः कार्या-
नन्दव्यावृत्तये अनादिरिति एकश्च "आनन्दं ब्रह्म एकमेवाद्वितीयं ब्रह्म"
इति श्रुतिसिद्धं ब्रह्मेत्यर्थः अतएव पुरुषोत्तमः पुरुषेभ्यो जीवेभ्य उत्त-
मः हि प्रसिद्धमेतदित्यर्थः ॥ १७ ॥

नन्वीदृशस्य मनुष्यादिदेहधारणं कथमत आह स्वमाययेति अघटित-
घटनापटीयसीरूपा माया 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं' इति
श्रुतिसिद्धात्मीया इदं कृत्स्नं दृश्यं सृष्ट्वान्तर्बहिरास्थितो यः 'तत् सृष्ट्वा त-
देवानुप्राविशत्' इतिश्रुतेः तादृशस्य मनुष्यशरीरपरिग्रहो नाश्चर्याय तदुक्तं गी-
तासु 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्' इत्यादि मुख्यस्वभावोऽपि स्वमायया देहवानिव जात

(१) मे हि इत्यपि पाठः ।

सर्वान्तरस्थोऽपि निगूढ आत्मा स्वमायया सृष्टमिदं विचष्टे ॥ १८
जगन्ति नित्यं परितोभ्रमन्ति यत्सन्निधौ चुम्बकलोहवद्धि।
एतन्नजानन्ति विमूढचित्ताः स्वाविद्यया संवृतमानसा ये ॥ १९

इत्यत्र लोकानुपक्रं कुर्वन् वञ्चते स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया' इति ननु एवं सर्वगतत्वे सर्वज्ञत्वं किमु नेत्यत आह सर्वान्तरस्थोऽपि निगूढ आत्मेति 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः' इत्यादि श्रुत्वा सर्वान्तरस्थत्वेनोक्तोऽपि निगूढः एषु सर्वेषु भूतेषु गूढात्मा न प्रकाशते। दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति श्रुतेः तादृशस्य सत्त्वे व्यवहारकालिकमपि मानमाह स्वमाययेति स्वाज्ञानकल्पितया माययेत्यर्थः अयं भावः नित्यशुद्धादिरूपेश्वरस्वरूपाज्ञानेन तस्याघटितघटनासामर्थ्यापरपर्याया मायाख्या त्रिगुणा शक्तिरूपाधिकल्पितावच्छेदैस्तत्स्वरूपैर्जीवैः कल्पिता सा च स्वसजातीयमेव संसारसृष्ट्यादि प्रसूते अतएव तत्स्वरूपज्ञाने तत्कार्यासहिता नाशः रज्जुज्ञानेनैव रज्जुकल्पितभुजङ्गस्य भयकम्पादिकार्यसहितस्य न च जीवैस्तत्कल्पना तत्कृष्टोपाधिभिश्च जीवते इत्यन्योन्याश्रयः अनादित्वेनापि परिहारात् ननु कस्य तत्त्वज्ञानेन तन्नाशे संसारोच्छेदापत्तिः एकरज्जौ युगपत् दशानां सर्पभ्रमे एकस्य रज्जुज्ञानेन तस्य सर्पभ्रमकार्यं भयकम्पादौ निवृत्तेऽपि अन्येषां तद्दर्शनेन तदनिवृत्तिवदुपपत्तेरिति तथा सृष्टमिदं विचष्टे पश्यति एवं च द्रष्टृत्वेन तत्सिद्धिः नान्योऽतोऽस्ति द्रष्टा' इति श्रुतेः एकेनैवाकाशेनोपाधिभेदात् घटाकाशादिव्यवहार वत् एकेनैव चेतनेनोपाधिभेदादनेकजीवव्यवहारोपपत्तौ चेतनानेकत्वेमानाभावात् द्रष्टृत्वेन तत्सिद्धिरिति भावः नच तत्तदज्ञानरूपोपाधिविशिष्टस्यैव जीवत्वे जीवस्याज्ञानमिति व्यवहारानापत्तिः भार्याविशिष्टस्यैव गृहस्थत्वेऽपि गृहस्थभार्येतिवदुपपत्तेरिति दिक् ॥ १८ ॥

चेतनस्थोऽक्षरे मानात्मकमाह जगन्तीति जगन्ति जगदन्तःकरणानि यत्सन्निधौ नित्यं परितो भ्रमन्ति स्वस्य चेष्टां कुर्वन्ति अन्यथा सर्वस्य जडत्वात्तदभावे जगदान्ध्यप्रसङ्ग इति भावः नतु 'निष्कलं निष्क्रियं शान्तं' इति श्रुतेः तस्य निष्क्रियतया कथं तेनान्येषां व्यापारसम्पादनमत आह

स्वाज्ञानमप्यात्मनि शुद्धबुद्धे स्वारोपयन्तीह निरस्तमाये ।
संसारमेवानुसरन्ति ते वै पुत्रादिसक्ताः पुरुकर्मयुक्ताः ॥२० ॥
जानन्ति नैवं हृदये स्थितं वै चामीकरं कण्ठगतं यथाऽज्ञाः ॥२१॥
यथाऽप्रकाशो न तु विद्यते रवौ ज्योतिःस्वभावे परमेश्वरे तथा ।
विशुद्धविज्ञानघने रघूत्तमे विद्या कथं स्यात्परतः परात्मनि ॥२२

चुम्बकलोहवदीति यथा निष्क्रियोऽपि चुम्बकमणिर्लौहं शक्तिविशेषात्सन्निधिमात्रेण चालयति तथा चेतनो निष्क्रियोऽपि स्वमायया वैचित्र्यादेव तानि सन्निधिमात्रादृव्यापारयतीत्यर्थः तदुक्तमाचार्यैः 'अनापन्नविकारः सन्नयस्कान्तवदेव यः । बुद्ध्यादींश्चालयेत् प्रत्यक् सोऽहमित्यवधारयेत्' इति एतन्मायागुणास्सत्त्वादिरूपं रामस्वरूपं ये जीवा न जानन्ति अज्ञाने हेतुर्विमूढचेतसः विमूढचेतस्त्वे हेतुः स्वाविद्यया संवृतमानसा इति स्वोपाधिभूतया अविद्यया विद्याविरोधिभावदार्ढ्यरूपया संवृतान्तःकरणाः ॥१९॥

अतस्ते जीवाः शुद्धबुद्धे शुद्धत्वं मायादोषानाक्रान्तत्वेन बुद्धे ज्ञानस्वरूपे निरस्तमाये स्वज्ञानवतां निरस्ता माया येन तादृशे 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति गीतोक्तेः ईदृशे रामे स्वाज्ञानं सुतरामारोपयन्ति स्वस्याज्ञत्वाद्राममज्ञमिति जानन्तीत्याशयः तेषां दुष्फलमाह संसारमिति ते पुत्रादिसक्ताः पुरुकर्मयुक्ताः भूरियज्ञादिकर्मयुक्ताः संसारमेवानुसरन्ति ॥ २० ॥

यतस्ते यथाऽज्ञाः कण्ठगतं चामीकरं स्वर्णालङ्कारं यथा न जानन्ति एवं हृदये स्थितं रामं ते न जानन्ति अतः संसारमेवानुसरन्तीत्यर्थः ॥२१॥

किञ्च परमात्मन्यज्ञानासम्भव इति दृष्टान्तेनाह यथेति अप्रकाशस्तमो यथा रवौ ज्योतिःस्वभावे ज्योतिःस्वरूपे न विद्यते तथा विशुद्धविज्ञानेन निर्विशेषापरोक्षज्ञानेन घने निबिडे परतः परमात्मनि उत्कृष्टेभ्योऽप्युत्कृष्टे रामे अविद्या कथं स्यात् तादृशे वस्तुन्यविद्यानवकाशादिति भावः तदुक्तमाचार्यैः 'अप्रकाशो यथादित्ये नास्ति ज्योतिःस्वभावतः । नित्यबोधस्वरूपत्वान्नाज्ञानं तद्वदात्मनि' इति ॥ २१ ॥

यथा हि चाक्ष्णा भ्रमता गृहादिकं विनष्टदृष्टेर्भ्रमतीव दृश्यते।
तथैव देहेन्द्रियकर्त्तुरात्मनः कृतं परेऽध्यस्य जनो विमुह्यति॥२२

नाहो न रात्रिः सवितुर्यथा भवेत्
प्रकाशरूपाव्यभिचारतः क्वचित्।
ज्ञानं तथाज्ञानमिदं द्वयं हरौ
रामे कथं स्थास्यति शुद्धचिद्घने ॥ २३ ॥

तस्मात् परानन्दमये रघूत्तमे
विज्ञानरूपे हि न विद्यते तमः।
अज्ञानसाक्षिण्यरविन्दलोचने
मायाश्रयत्वान्न हि मोहकारणम् ॥ २४ ॥

ननु स्वाज्ञानेन राममज्ञं व्यवहरति जन इत्युक्तमयुक्तम् अन्यगतस्यान्यत्रारोपासम्भवादित्याशङ्क्य सदृष्टान्ततया मोहं जीव उपपादयति यथा विनष्टदृष्टेर्दोषयुक्तदृष्टेः पुरुषस्य भ्रमताक्ष्णा गृहादिकं भ्रमतीवोत्प्रेक्ष्यम् भ्रमतीवेति दृश्यते तेनैव नष्टदृष्टिना पुरुषेणेति शेषः तथैव देहेन्द्रियावच्छिन्नस्य कर्त्तुरात्मनोऽन्तःकरणस्याहङ्कारात्मकस्य कृतं परे सर्वधर्माऽविशिष्टे तदनवच्छिन्ने चेतनेऽध्यस्य जनो जीवो मुह्यति अहं कर्त्तेति मोहं प्राप्नोति एवं च यथाऽक्षिगतभ्रमणस्य गृहादावारोपः यथा चान्तःकरणधर्मस्य कर्तृत्वादेरात्मन्यारोपस्तथा स्वाज्ञानस्य रामे आरोप इत्याशयः॥२२॥

भगवति रामे स्वतो ज्ञानमज्ञानं नास्तीति पुनरपि दार्ष्टान्तिकोक्तं युक्तमेवाह नाह इति सूर्यं प्रति रात्रिदिवसविभागाभावे हेतुः प्रकाशरूपाव्यभिचारतः क्वचित् क्वापीत्यर्थः ज्ञानाज्ञानयोर्भगवत्यनवस्थितौ हेतुः शुद्धचिद्घनत्वम्॥२२॥

उपसंहरति तस्मादिति परानन्दमये सर्वभूतैरेवहानन्दमात्राया उपजीवनात् विज्ञानरूपे निर्विकल्पकज्ञानरूपे तमोऽज्ञानरूपम् तत्र हेतुः सम्बन्धे हेतुद्वयम् अज्ञानसाक्षित्वं मायाधिष्ठातृत्वरूपं मायाश्रयत्वं च मोहकारणं तमोऽज्ञानम् यो ह्यमायाधिष्ठाता स तद्विषयाज्ञानहीन इति लोके दर्शना-

अथ ते कथयिष्यामि रहस्यमपि दुर्लभम् ।
सीतारामरुत्सूनुसंवादं मोक्षसाधनम् ॥ २५ ॥
पुरा रामायणे रामो रावणं देवकण्टकम् ।
हत्वा रणे रणश्लाघी सपुत्रबलवाहनम् ॥ २६ ॥
सीतया सह सुग्रीवलक्ष्मणाभ्यां समन्वितः ।
अयोध्यामगमद्रामो हनूमत्प्रमुखैर्वृतः ॥ २७ ॥
अभिषिक्तः परिवृतो वसिष्ठाद्यैर्महात्मभिः ।
सिंहासने समासीनः कोटिसूर्यसमप्रभः ॥ २८ ॥
दृष्ट्वा तदा हनूमन्तं प्राञ्जलिं पुरतःस्थितम् ।
कृतकार्यं निराकाङ्क्षं ज्ञानापेक्षं महामतिम् ॥ २९ ॥
रामः सीतामुवाचेदं ब्रूहि तत्त्वं हनूमते ।

दिति भावः नन्वेवं सति “ब्रह्मा दाशरथेर्यदुक्तं चापायुरंसम” इत्याद्या-चार्योक्तेः का गतिरिति चेत् शृणु रावणवधार्थं मनुष्यत्वनाटनाय भगवता सङ्कल्पपूर्वं कृतस्य स्वमाहात्म्याच्छादनस्य तत्र तत्रः सङ्केतोक्तेः अदोषात् उक्तं हि संक्षेपशारीरके ‘सङ्कल्पपूर्वकमभूद्भुवनस्य नाहं विजान इति बन्धनकारणमेतत् ब्रह्मोपदेशमुपलभ्य निमित्तमात्रम् तथो-त्सर्जं च कृते सति देवकार्ये’ इति भागवतेऽप्युक्तम् ‘सौमित्रिणां गति-रिति प्रकथं चकार’ इति ॥ २४ ॥

अञ्जनासूनुर्वायुपुत्रो हनूमान् ॥ २५ ॥

रामायणे रामायणप्रवर्त्तके रामावतारकाण्डे इत्यर्थः देवकण्टकं देवद्रोहिणम् ॥ २६ ॥ २७ ॥

परिवृतः सीतादिभिरिति शेषः ॥ २८ ॥

पुरतः स्थितं अग्रे स्थितम् अनेन गुरूपसदनं दर्शितम् निराकांक्षं ज्ञानेतरधनादिनिरपेक्षम् ॥ २९ ॥

निष्कल्मषोऽयं ज्ञानस्य पात्रं नो नित्यभक्तिमान् ॥ २० ॥
तथेति जानकी प्राह तत्त्वं रामस्य निश्चितम् ।
हनूमते प्रपन्नाय सीता लोकविमोहिनी ॥ २१ ॥

सीतोवाच ।

रामं विद्धि परं ब्रह्म सच्चिदानन्दमद्वयम् ।
सर्वोपाधिविनिर्मुक्तं सत्तामात्रमगोचरम् ॥ २२ ॥
आनन्दं निर्मलं शान्तं निर्विकारं निरञ्जनम् ।

तत्त्वं मत्स्वरूपतत्त्वं निष्कल्मषोऽयमित्यनेन ज्ञानाधिकारित्वं सूचितम् नौ आवयोः ॥ २० ॥

रामस्य तत्त्वं श्रोतुर्निश्चितं यथा भवति तथा प्राह लोकविमोहिनीत्यनेन ब्रह्मनकर्तुरेव मत्कर्तृत्वं सामर्थ्यमिति दर्शितम् रामाज्ञया यतो हि तदाज्ञयैव मुच्यत इति लोके प्रसिद्धम् एवं च भगवतीकृपैव मुख्यं मोक्षकारणमिति दर्शितम् ॥ २१ ॥

जानकी प्राहेत्युक्तं तदाह राममिति रामं परं ब्रह्म विद्धि 'रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि । इतिरामपदेनेदं परं ब्रह्माभिधीयते' इति तापनीये पाद्मे चोक्तेः सत् बाधहीनं 'सत्यत्वं बाधराहित्यं जगद्बाधैकसाक्षिणः बाधः किं साक्षिको ब्रूहि नत्वसाक्षिक ईष्यते' इत्युक्तेः चित् ज्ञानस्वरूपमानन्दं तद्रूपमद्वयम् 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतेः सर्वोपाधिविनिर्मुक्तम् स्थूलसूक्ष्मं सकलोपाधिनिर्मुक्तं विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः । ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्पदं विदुः' इति वार्त्तिकम् किंच सर्वोपाधिभिर्धर्मैर्विनिर्मुक्तमसत्त्वमित्यर्थः सत्तामात्रं वस्तुमात्रे सदिति व्यवहारनिर्वाहकमित्यर्थः एतत्सम्बन्धादेव सर्वत्र सदिति व्यवहार इति भावः अगोचरं मनोवचसोरप्यविषयमित्यर्थः 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुतेः ॥ २२ ॥

आनन्दं तत्त्वेन विपुलत्वमुपलक्ष्यते 'यो वै भूमा तत् सुखं नाल्पे सुखमस्ति' इति श्रुतेः निर्मलं रजोहीनं शान्तम् प्रपञ्चोपशमत्वात् 'प्रपञ्चोप-

सर्वव्यापिनमात्मानं स्वप्रकाशमकल्मषम् ॥ २३ ॥
मां विद्धि मूलप्रकृतिं सर्गस्थित्यन्तकारिणीम्।
तस्य सन्निधिमात्रेण सृजामीदमतन्द्रिता ॥ २४ ॥

शमं शिवं शान्तम्' इति श्रुतेः निर्विकारं जायतेऽस्ति वर्द्धते विपरिणमते अपक्षीयते नश्यतीति षड्भावविकारहीनम् "न जायते म्रियते वा" इति गीतोक्तेः अनेनापरिणामित्वं सूचितम् निरञ्जनं अविद्यातत्का-र्य्यरूपतमोहीनम् 'आदित्यवर्णं तमसः परस्तात्' इत्युक्तेः सर्वव्यापित्वा-देवात्मानं अतति व्याप्नोतीत्यात्मा 'सर्वव्यापी सर्वभूतान्तरात्मा' इति श्रुतेः स्वप्रकाशम् 'अत्रायं पुरुषः स्वयं ज्योतिः' इति 'यस्य भासा सर्वमिदं विभाति' इति श्रुतेः अकल्मषम् 'आत्मापहतपाप्मा' इति श्रुतेः घटा-दिशब्दानां कल्पितप्रवृत्तिनिमित्तभेदादिपर्य्यायत्वेन सह प्रयोगः यानि स्वभाववचनेन बोधकानि तेषु न काप्यनुपपत्तिः एवं चापाततः कल्पित-प्रवृत्तिनिमित्तप्रकारकबोधे इत्थं पुनर्विचारस्य श्रुतौ सर्वधर्मरहितत्वेन प्रज्ञोपात्ता धर्मांशे कल्पितत्वग्रहे शुद्धनिर्धर्मकब्रह्मबोधः सर्वैः पदैर्भवतीति बोध्यम् तत्र दुर्बोधत्वात्तत्त्वस्य बोधार्थं पुनःपुनः यत्नतोऽर्थतत्त्व पर-मकरुणावती भगवती सीता हनूमते बोधयामासेति द्रष्टव्यम् ॥ २२ ॥

नन्वेवंविधो रामश्चेज्जगत्कारणत्वाद्यनवच्छिन्नस्थितिरिति कुतो जगदु-त्पत्त्यादि इत्यत आह। मामिति। मूलप्रकृतिं सर्वजगदुपादानकारण-मित्यर्थः प्रकृतिशब्दस्योपादानकारणप्रसिद्धेः तत्तदुपादानकारणानां मह-दादीनामप्युपादानकारणत्वात् मूलप्रकृतित्वमस्याः मां मायान्तु प्रकृतिं वि-द्यात् इति श्रुतिप्रसिद्धं ब्रह्मण्यध्यस्ताम् ततो भेदाभेदाभ्यां सत्त्वासत्त्वा-भ्याञ्च अनिर्वचनीयामनादिमैश्वरीं मायामैश्वरीत्वं चास्या ईश्वरसङ्कल्पा-धानरूपत्वेनेति बोध्यम् एषा च जीवात्मितैवेश्वरसन्निधानात्तद्रूपेण वि-वर्त्तते इति बोध्यम् मूलप्रकृतित्वमेव स्फुटयति सर्गस्थित्यन्तकारिणीमिति उत्पत्तिस्थितिप्रलयकर्त्रीम् नन्वेवं 'तदैक्षत बहु स्यां प्रजायेय' इति श्रुतेः 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभि-संविशन्ति' इति मन्त्रान्तरश्रुतेश्च ब्रह्मणो जगत्कारणत्वं कथं प्रकृते-

तत्सान्निध्यान्मया सृष्टं तस्मिन्नारोप्यतेऽबुधैः ।
अयोध्यानगरे जन्म रघुवंशेऽतिनिर्मले ॥ २५ ॥
विश्वामित्रसहायत्वं मखसंरक्षणं ततः ।
अहल्याशापशमनं चापभङ्गो महेशितुः ॥ २६ ॥
मत्पाणिग्रहणं पश्चाद्भार्गवस्य मदक्षयः ।
अयोध्यानगरे वासो मया द्वादशवार्षिकः ॥ २७ ॥
दण्डकारण्यगमनं विराधवध एव च ।

कथमेतत्तत्राह तस्य सन्निधीति यथेन्द्रजालिकमायायाः स्वतन्त्रनिष्ठायाः ऐन्द्रजालिकं विना न स्वकार्यसामर्थ्यं तथास्याः मम सान्निध्यमेव जगत्स्रष्टृत्वमिति तत्र तदुपचारः यथा मणिसन्निधौ विद्युन्मेघ सिद्धस्वरूपस्य स्फटिकस्य स्वच्छत्वजवाकुसुमसम्पर्कितो लक्षितो तथा मायाविशिष्टे नैव चिद्रूपेश्वरस्य स्वरूपतत्तज्जगत्कर्तृत्वमित्याह अतन्द्रिता तत्सम्पत्तिर्नैव निराकरणीयार्थः तदुक्तं वाल्मीकीये रामं प्रति ब्रह्मवचनेन 'संक्षिप्येह पुरान् लोकान्मायया स्वयमेव हि । भार्यया शुभया देव्या मां त्वं पूर्वमजीजनः' इति एवञ्च मम तज्जगत् स्रष्टृत्वादेस्तत्रारोप इति भावः ॥ २४ ॥

यद्यपि मायाशबले ईश्वरे एव जगदुपादानत्वं निमित्तं च 'जगदुपादानं मायामादाय तामसीम् । निमित्तं शुद्धसत्त्वां तामुच्यते ब्रह्म तद्गिरा' इति अभियुक्तोक्तेः तथाऽपि विशिष्टस्य विशेषणविशेष्योभयात्मकत्वे नैव मायागतस्य तस्य भगवत्यारोपेणैव तथा व्यवहार इत्याह तदिति यतः तत्सान्निध्यान्मया सृष्टमतस्तत्स्रष्टृत्वादि अबुधैस्तत्स्वरूपानभिज्ञैस्तस्मिन्नारोप्यते रज्जौ सर्प इवेति भावः एतदेव द्रढयितुं कानिचित्स्वचरितानि समारोप्याणि दर्शयति अयोध्येत्यादि ॥ २५ ॥ २६ ॥ २७ ॥

मायामारीचमरणं मायामृगीभूतमृगरूपमारीचमरणमित्यर्थः मायासीताहृतिरिति तदुक्तं कूर्मपुराणे उत्तरखण्डे चतुस्त्रिंशेऽध्याये रामस्य रमणीं भार्यां रावणो राक्षसेश्वरः । सीतां विशालनयनां चकमे कालनोदितः । गृहीत्वा मायया वेशं चरन्तीं विजने वने । समाहर्तुं मनश्चक्रे

मायामारीचमरणं मायासीताहृतिस्तथा ॥ ३८ ॥
जटायुषो मोक्षलाभः कबन्धस्य तथैव च ।
शबर्याः पूजनं पश्चात् सुग्रीवेण समागमः ॥ ३९ ॥
वालिनश्च वधः पश्चात् सीतान्वेषणमेव च ।
सेतुबन्धश्च जलधौ लङ्कायाश्च निरोधनम् ॥ ४० ॥

किल कामिनीम् । विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम् । जगाम शरणं वह्निमावसथ्यं शुचिस्मिता । प्रपद्ये पावकं देवं साक्षिणं विश्वतोमुखम् आत्मानं दीप्तवपुषं सर्वभूतहृदिस्थितम्' इत्याद्यष्टश्लोकात्मकं 'इति यक्ष्याष्टकं जप्त्वा रामपत्नी यशस्विनी । ध्यायन्ती मनसा तस्थौ राममुन्मीलितेक्षणा । अथावसथ्याद्भगवान् हव्यवाहो महेश्वरः । आविरासीत् सुदीप्तात्मा तेजसा निर्दहन्निव । सृष्ट्वा मायामयीं सीतां स रावणवधेच्छया । सीतामादाय रामेष्टां पावकोऽन्तरधीयत । हत्वा तु रावणवधं रामो लक्ष्मणसंयुतः । समादायाभवत्सीतां शङ्काकुलितमानसः । सा प्रत्ययाय भूतानां सीता मायामयी पुनः । विवेश पावकं दीप्तं ददाह ज्वलनोऽपि ताम् । दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः । रामायादर्शयत् सीतां पावकोऽसौ सुरप्रियः । एतत्पतिव्रतानां वै माहात्म्यं कथितं मया । स्त्रीणां सर्वाघशमनं प्रायश्चित्तं परं स्मृतं' इति अनेन स्त्रीणामेवंविधोऽग्निप्रवेशो न दोषाय विपरीतं सर्वपापहरश्चेति सूचितम् वाल्मीकीयेऽपि मारीचवधार्थं गते रामे रामकृतेन रामशब्दसदृशशब्देन आक्रोशे कृते लक्ष्मणस्य राम सहायार्थं गमनाय प्रेषणावसरे अरण्यकाण्डे 'अपि त्वा सह रामेण पश्येयं पुनरागतः । लक्ष्मणेनैव मुक्ता तु रुदन्ती जनकात्मजा । प्रत्युवाच ततो वाक्यं तीव्रबाष्पपरिप्लुता । गोदावरीं प्रवेक्ष्यामि हीना रामेण लक्ष्मण ! आबन्धिष्येऽथवा त्यक्ष्ये विषमे देहमात्मनः' विषमे भृग्वादौ स्थित्वा ततः प्रपातेनेत्यर्थः 'पिबामि वा विषं तीक्ष्णं प्रवेक्ष्यामि हुताशनम् । नत्वहं राघवादन्यं कदाऽपि पुरुषं स्पृशे' इति सीतोक्त्या सूचितोऽयमर्थः अन्यथैवं प्रतिज्ञाय रावणशरीरस्पर्शानन्तरं गमनात् प्रतिज्ञाहानिः स्यात् तस्मात् 'प्रवेक्ष्यामि हुताशनं' इत्यनेन स्वकर्तव्यार्थ एवोक्त इति मन्तव्यम् एतत्प्रमाणादेव हनूमत्प्रमुखसकलवा-

रावणस्य वधो युद्धे सपुत्रस्य दुरात्मनः ।
विभीषणे राज्यदानं पुष्पकेण मया सह ॥ ४१ ॥
अयोध्यागमनं पश्चाद्राज्ये रामाभिषेचनम् ।
एवमादीनि कर्माणि मयैवाचरितान्यपि ।
आरोपयन्ति रामेऽस्मिन् निर्विकारेऽखिलात्मनि ॥ ४२ ॥

रामो न गच्छति न तिष्ठति नानुशोच-
त्याकाङ्क्षते त्यजति नो न करोति किञ्चित् ।
आनन्दमूर्त्तिरचलः परिणामहीनो
मायागुणाननुगतो हि तथा विभाति ॥ ४३ ॥

श्रीमहादेव उवाच ।

ततो रामः स्वयं प्राह हनूमन्तमुपस्थितम्

त्मना लङ्कादाहोपपत्तिः अन्यथा रावणवशीकृतेन लोकपालाग्निना कथं तन्नगरदाहः स्यात् एतच्छक्तिप्रवेशे तु तस्य स्वातन्त्र्यहान्या तदुपपत्तिरित्यवधेयम् ॥ २८—४१ ॥

एवमादीनि ब्राह्मणेभ्यो दानादीन्यादिशब्दात् याज्ञादीनि निर्विकारे जन्मादिरहिते आरोपयन्ति एवं जगत्कर्तृत्वादिकमपि मन्निष्ठमेव रामे आरोपयन्तीत्यर्थः ॥ ४२ ॥

निर्विकारत्वमेव रामस्योपपादयति राम इति 'निष्कलं निष्क्रियं शान्तम्' इत्यादि श्रुतेः आनन्दमूर्त्तिरानन्दस्वरूपः अचलः कूटस्थोऽतएव परिणामहीनः मायागुणान् मायया सृष्टपदार्थाननुगतः तदधिष्ठानत्वेन स्थितस्तथा विभाति सर्वादिरूपो भाति यथा रज्ज्ववच्छेदेन सर्पाकारोऽन्तःकरणपरिणाम इति रज्जुः सर्पात्मना भाति एतदेव विवर्त्तोपादानत्वमित्याहुः स च सर्पाकारोऽन्तःकरणपरिणामः सत्त्वासत्त्वाभ्यामनिर्वचनीय इत्युच्यते एवं प्रपञ्चोऽप्यनिर्वचनीय इति दिक् ॥ ४२ ॥

उपस्थितमात्मनोऽद्वितीयत्वे जीवेश्वरादिव्यवस्था कथमिति जिज्ञासु-

शृणु तत्त्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मनाम् ॥ ४४ ॥
आकाशस्य यथा भेदस्त्रिविधो दृश्यते महान् ।
जलाशये महाकाशस्तदवच्छिन्न एव हि ।
प्रतिबिम्बाख्यमपरं दृश्यते त्रिविधं नभः ॥ ४५ ॥
बुद्ध्यवच्छिन्नचैतन्यमेकं पूर्णमथापरम् ।
आभासस्त्वपरं बिम्बभूतमेवं त्रिधा चितिः ॥ ४६ ॥
साभासबुद्धेः कर्तृत्वमविच्छिन्ने विकारिणि ।

थोपपन्नम् आत्मा ईश्वरः अनात्मा चिदाभासो जीवः परमात्मा शुद्धचैतन्यम् ॥ ४४ ॥

तेषां तत्त्वमेव दृष्टान्तमाह आकाशस्येति एकस्याकाशस्य त्रिविधो भेदः महाकाशो जलाशयावच्छिन्न आकाशः प्रतिबिम्बाकाशश्चेति भेदात् तदेवाह महानिति महाकाश इत्यर्थः स एव महाकाशो जलाशये तदवच्छिन्न एव भवति तत्रैव जलाशये परं प्रतिबिम्बाख्यं दृश्यते एवं नभस्त्रिविधं इत्यर्थः ॥ ४५ ॥

एवं दृष्टान्तमुपपाद्य दार्ष्टान्तिकमाह बुद्धीति सर्वबुद्धिसाक्षितया बुध्द्युपहितं चैतन्यं पूर्णमुपाधिमतश्चलस्य विभुत्वाद्विभुः सकलबुद्धिसमष्टिरेव मायेति तदवच्छिन्नचैतन्यमीश्वर इत्यर्थः अथापरमाभासस्तत्तद्बुद्धिप्रतिबिम्बभूतो जीव इत्यर्थः अपरं बिम्बभूतं एवं चितिस्त्रिधा इत्यर्थः आभासस्त्वपरं बिम्बभूतमिति पाठे बुद्ध्यवच्छिन्नं चैतन्यमेकमित्यनेनेश्वरः पूर्णमथापरं इत्यनेन शुद्धमाभासस्त्वपरमिति जीवः जीवत्वमेव स्फुटयति बिम्बभूतमिति विश्वशब्देन जाग्रदवस्थाभिमानी विशति देहेन्द्रियादिष्विति व्युत्पत्तेः एतत् प्रतिबिम्बाकाशस्थानीयमिति त्रिधा चितिरित्यर्थं इत्याहुः तत्र द्वौ मिथ्याभूतौ उपाध्योर्मिथ्यात्वात् ॥ ४६ ॥

नन्वेवं शुद्धचैतन्ये साक्षीति व्यवहारानुपपत्तिः साक्षाद् द्रष्टा हि साक्षी न च शुद्धचैतन्ये द्रष्टृत्वमित्यत आह साभासेति आभासेन चेतनप्रतिबिम्बेन सहितायाः बुद्धेरन्तःकरणस्येत्यर्थः तत्कृतं कर्तृत्वमनुभव

साक्षिण्यारोप्यते भ्रान्त्या जीवत्वञ्च तथाऽबुधैः ॥ ४७ ॥
आभासस्तु मृषा बुद्धिरविद्याकार्य्यमुच्यते ।
अविच्छिन्नन्तु तद्ब्रह्म विच्छेदस्तु विकल्पतः ॥ ४८ ॥
अवच्छिन्नस्य पूर्णेन एकत्वं प्रतिपाद्यते ।
तत्त्वमस्यादिवाक्यैश्च साभासस्याहमस्तथा ॥ ४९ ॥

साक्षिणि आरोप्यते तेनायं साक्षिपदवाच्य इत्यर्थः अयमाशयः जानातीत्यादावन्तःकरणवृत्तिविशेषरूपा क्रिया धात्वर्थवाच्या आभासविशिष्टस्य तिङर्थ आश्रयः परस्पराध्यासेनाभासबुद्ध्योर्विवेकाग्रहात् तदुक्तमाचार्य्यैः 'आत्माभासस्तु तिङ्वाच्यो धात्वर्थश्च धियः क्रिया । उभयश्चाविवेकेन जानातीत्युच्यते मृषा । बुद्धेः कर्तृत्वमध्यस्य जानातीति स उच्यते । तथा चैतन्यमध्यस्य सत्वं बुद्धेरिहोच्यत' इति आत्माभास इति बहुव्रीहिः धियोऽन्तःकरणस्य तदेवाह उभयञ्चेति मृषेति आभासबुद्धितत्क्रियाणां मिथ्यात्वात् अयं व्यवहारोऽपि मिथ्येत्यर्थः एवञ्च साभासबुद्धिगतकर्तृत्वस्याविच्छिन्ने परिच्छिन्ने निर्विकारिणि साक्षिणि बुद्धितादात्म्यापन्नाभासतादात्म्याध्यासेनारोपः तथा जीवो नित्यः सत्य इत्यादिव्यवहारात् जीवत्वमपि तत्रारोप्यत इत्यर्थः ॥ ४७ ॥

आत्माभासमादाय नूनं तथा व्यवहारसम्भव इत्याह आभासस्त्विति तस्य मृषात्वादविद्याकार्य्यत्वाच्च तथा व्यवहारस्य तमादाय नोपपत्तिरित्यर्थः न दर्पणे मुखमस्ति मिथ्यैवात्र दर्पणे मुखमभादित्येवं सर्वसिद्धबाधानुभवात् अतएवासावविद्याकार्य्यं ग्रीवास्थमुखे आदर्शस्थत्वं त्वाध्यासिकम् न तु वास्तवमिति बोध्यम् आभासासत्यत्वञ्चाकरे प्रपञ्चितम् विस्तरभयान्नेहोच्यते ननूक्तं त्रैविध्यं किञ्चितेर्वास्तवं नेत्याह अविच्छिन्नं विच्छेदो भेदस्तद्रहितम् नन्वेवं त्रिधा चितिरित्यसङ्गतं तत्राह विच्छेद इति भेद इत्यर्थः विकल्पतः उपाध्यध्यासकृत इत्यर्थः एवं जीवानां परस्परं भेदोऽप्यध्यासकृत एवेति बोध्यम् ॥ ४८ ॥

कल्पितभेदसत्त्वे प्रमाणमाह अवच्छिन्नस्येति अवच्छेदो भेदस्तद्वतः प्रातिभासिकभेदवतः साभासस्याहमस्त्वमस्यादिवाक्यैः पूर्णेनेश्वरेण एकत्वं

ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनोः ।
तदा विद्या स्वकार्य्यैश्च नश्यत्येव न संशयः ॥ ५० ॥
एतद्विज्ञाय मद्भक्तो मद्भावायोपपद्यते ।

प्रतिपाद्यते तथा सति कल्पितभेदे सति उपपद्यत इति शेषः सर्वथा-भेदाभावे तदानर्थक्यं वास्तवेऽपि भेदे तदानर्थक्यं वास्तवस्य वचनशते-नाप्यनिवृत्तिरिति भावः अनवच्छिन्नस्य साभासस्याहम इत्यनेन त्व-पदार्थो दर्शितः पूर्णेनेत्यनेन तत्पदार्थो दर्शितः ॥ ४९ ॥

एतदेव स्पष्टयन् तदुपदेशफलमाह ऐक्येति आत्मनोर्जीवेश्वरयोरै-क्यज्ञानमहं ब्रह्मेति ज्ञानं यदेति कर्मानुष्ठानात्पापक्षये समुत्पन्ने 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते' इति स्मृतेः अयं भावः जीवेश्वरयोरु-पाधिभिन्नयो रैक्यमुत्योच्यमानं बाधितं सत्तत्त्वं पदयोरुपाधिरहिते लक्षणया बिम्बभूतं शुद्धब्रह्मैक्यपरतया पर्य्यवस्यतीति बोध्यम् एतच्चाकरे विस्तरेण प्रपञ्चितं ब्रह्मैक्यज्ञानफलमाह तदेति तादृशज्ञाने सति निर्द्ध-र्मकत्वेन चिन्मात्रतया तत् स्वरूपज्ञानात् तत् स्वरूपाज्ञानरूपा विद्या स्वकार्य्यैः प्रपञ्चैः सह नश्यत्येव न संशय एतेन भ्रष्टबीजवत् कार्य्यजन-नासामर्थ्यमेव तस्यास्त्यागेन क्रियत इति पक्षोऽपास्तः तदुक्तमाचार्य्यैः 'सो-ऽयमित्यादिवाक्येषु विरोधात् तदिदं तयोः । त्यागेन भागयोरेक आश्रयो लक्ष्यते यथा । मायाविद्ये विहायैवमुपाधी परजीवयोः । अखण्डसच्चिदानन्दं परं ब्रह्मैव लक्ष्यते' यथा सोऽयं देवदत्त इत्यादौ पूर्वानुभूतत्वरूपतत्ताया इदानीमनुभूयमानत्वरूपेदन्तायाश्च त्यागेन देवद-त्तस्वरूपमात्रं लक्ष्यते मायाबुद्धिसमष्टिरविद्या व्यष्टिरूपेति बोध्यम् अप-रोक्षज्ञानं मननादिसंस्कृतान्तःकरणादेव 'दृश्यते त्वग्र्यया बुद्ध्या' इति स्मृतेः अग्र्ययामननादिसंस्कृतया 'शास्त्राचार्य्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने कारणं' इति गीताभाष्योक्तश्चेति दिक् उक्तञ्च भार-द्वाजे 'तत्त्वमस्यादिवाक्योत्थज्ञानं मोक्षस्य साधनम्' इति श्रुतिरपि 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति ॥ ५० ॥

ऐक्यज्ञानस्य मुख्यं साधनमाह एतदिति मद्भक्त इति हेतुगर्भं विशेषणम् मद्भावो मत्सायुज्यं भक्तः कारणतद्भावाव भक्तिव्यतिरेके

मद्भक्तिविमुखानां हि शास्त्रगर्त्तेषु मुह्यताम् ।
न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि ॥ ५१ ॥

इदं रहस्यं हृदयं ममात्मनो
मयैव साक्षात्कथितं तवानघ ! ।
मद्भक्तिहीनाय शठाय न त्वया
दातव्यमैन्द्रादपि राज्यतोऽधिकम् ॥ ५२ ॥

श्रीमहादेव उवाच ।

एतत्तेऽभिहितं देवि ! श्रीरामहृदयं मया ।
अतिगुह्यतमं हृद्यं पवित्रं पापशोधनम् ॥ ५३ ॥
साक्षाद्रामेण कथितं सर्ववेदान्तसंग्रहम् ।
यः पठेत् सततं भक्त्या स मुक्तो नात्र संशयः ॥ ५४ ॥
ब्रह्महत्यादिपापानि बहुजन्मार्जितान्यपि ।
नश्यन्त्येव न सन्देहो रामस्य वचनं यथा ॥ ५५ ॥
(१)योऽतिभ्रष्टोऽतिपापी परधनपरदारेषु नित्योद्यतो वा
स्तेयी ब्रह्मघ्न मातापितृवधनिरतो योगिवृन्दापकारी ।
यः सम्पूज्याभिरामं पठति च हृदयं रामचन्द्रस्य भक्त्या

कार्यव्यतिरेकमाह मद्भक्तीति शास्त्रगर्त्तेषु शास्त्रबोधितक्रियाकलापरूपगर्त्तेषु ॥ ५१ ॥

ममात्मनः मद्रूपस्य चेतनस्य ॥ ५२ । ५३ ॥

सर्ववेदान्तसंग्रहं सर्ववेदान्तप्रतिपाद्यार्थसारसंग्रहरूपम् ॥५४।५५॥

---

(१) जातिभ्रष्टो इत्यपि पाठः ।

योगीन्द्रैरप्यलभ्यं पदमिह लभते सर्वदेवैः सपूज्यम् ॥ ५६ ॥

इत्यध्यात्मरामायणे उमामहेश्वरसंवादे बालकाण्डे श्रीरामहृदयं
नाम द्वितीयः सर्गः ।

अतिभ्रष्टत्वोपपादकमतिपापीत्यादि सर्वदेवैः पूज्यं पदं ब्रह्मलोकं स
लभत इत्यन्वयः ॥ ५६ ॥

इति श्रीमत्सकलराजविपद्दुद्धरणसमर्थेत्यादिविरुदावलीविराज-
मानस्य हिम्मतिवर्मणः पुत्रस्य श्रीरामवर्मणः कृतौ
अध्यात्मरामायणसेतौ बालकाण्डे
श्रीरामहृदयकथनं नाम
द्वितीयः सर्गः ।

तृतीयः सर्गः ।

पार्वत्युवाच ।

धन्यास्म्यनुगृहीतास्मि कृतार्थास्मि जगत्प्रभो ! ।
विच्छिन्नो मेऽतिसन्देहग्रन्थिर्भवदनुग्रहात् ॥ १ ॥
त्वन्मुखाद्गलितं रामतत्त्वामृतरसायनम् ।
पिबन्त्या मे मनो देव ! न तृप्यति भवापहम् ॥ २ ॥
श्रीरामस्य कथा त्वत्तः (१) श्रुता संक्षेपतो मया ।
इदानीं श्रोतुमिच्छामि विस्तरेण स्फुटाक्षरम् ॥ ३ ॥

श्रीमहादेव उवाच ।

शृणु देवि ! प्रवक्ष्यामि गुह्याद्गुह्यतरं महत् ।
अध्यात्मरामचरितं रामेणोक्तं पुरा मम ॥ ४ ॥

अथ पार्वती प्रियोक्तमभिनन्दति धन्यास्मीति अतिसन्देहग्रन्थिः यदि रामः परं ब्रह्म तर्हि कथं तस्य शोकादि यदि शोकादिमत्त्वाज्जीवः कथं तदोपास्यत्वमित्याकारो महान् सन्देहरूपो ग्रन्थिः विच्छिन्नः निवृत्तः ॥ १ ॥

भवः संसारस्तमपहन्ति नाशयति तादृशरामतत्त्वामृतरसायनं रामतत्त्वरूपममृतजनकं रसायनं पिबन्त्या मे मनो न तृप्यति ॥ २ ॥

पुनर्विस्तरेण रामकथां पृच्छति श्रीरामस्येति स्फुटाक्षरमिति क्रियाविशेषणम् ॥ ३ ॥

अथ महादेवस्तां कथां विवक्षुस्तस्य श्रोतृप्रवृत्तये तत्प्रशंसामाह

(१) कथा तत्त्वं इति पाठे कथायास्तत्त्वं इत्यर्थः ।

तदद्य कथयिष्यामि शृणु तापत्रयापहम्।
यच्छ्रुत्वा मुच्यते जन्तुरज्ञानोत्थमहाभयात्।
प्राप्नोति परमामृद्धिं दीर्घायुः पुत्त्रसन्ततिम्॥ ५॥
भूमिर्भारेण मग्ना दशवदनमुखाशेषरक्षोगणानां
धृत्वा गोरूपमादौ दिविजमुनिजनैः साकमब्जासनस्य।
गत्वा लोकं रुदन्ती व्यसनमुपगतं ब्रह्मणे प्राह सर्वं
ब्रह्मा ध्यात्वा मुहूर्त्तं सकलमपि हृदा वेद शेषात्मकत्वात्॥
तस्मात् क्षीरसमुद्रतीरमगमद्ब्रह्माथ देवैर्वृतो
देव्या चाखिललोकहृत्स्थमजरं सर्वज्ञमीशं हरिम्।
अस्तौषीच्छ्रुतिसिद्धनिर्मलपदैः स्तोत्रैः पुराणोद्भवै-
र्भक्त्या गद्गदया गिरातिविमलैरानन्दबाष्पैर्वृतः॥ ७॥

इत्थमिति आत्मस्थं इत्यध्यात्मं सर्वात्मसु अन्तर्यामितया स्थितस्य रामस्य चरितं तद्वर्णनरूपं काव्यम्॥ ४॥

तापत्रयं आध्यात्मिकाधिभौतिकाधिदैविकाख्यदुःखत्रयम् तत्राद्यं रोगादिजं कामक्रोधादिजं च द्वितीयम् चोरादिनिमित्तं तृतीयं ग्रहा-द्यावेशनिमित्तम्॥ ५॥

कथां प्रस्तौति भूमिरिति। रक्षोगणानां भारेण मग्ना स्वाधारजले इति शेषः मग्ना गोरूपं धृत्वा देवादिभिः सहाब्जासनस्य ब्रह्मणो लोकं गत्वा ब्रह्मणे उपगतं स्वयं प्राप्तं सर्वं व्यसनं प्राह स च मुहूर्त्तं ध्यात्वा सकलं दुःखकारणं तन्निवृत्तिकारणञ्च हृदा वेद अजानात् तत्र हेतुः शेषात्मकत्वात् सर्वसत्त्वस्य तल्लिङ्गरूपत्वादित्यर्थः॥ ६॥

तस्मादिति अनन्तरमिति शेषः तदनन्तरं ध्यानानन्तरमित्यर्थः देव्या च भूम्या च सहित इति शेषः अखिललोकहृत्स्थं सर्वान्तर्यामिणमित्यर्थः 'स वा एष आत्मा हृदि' इति श्रुतेः अजरं 'एष महानात्मा अजर' इति श्रुतेः सर्वज्ञं 'यः सर्वज्ञः सर्ववित्' इति श्रुतेः ईशं 'एष सर्वेश्वर' इति श्रुतेः

ततः स्फुरत्सहस्रांशुसहस्रसदृशप्रभः ।
आविरासीद्धरिः प्राच्यांदिशो व्यपनयंस्तमः ॥ ८ ॥
कथञ्चिद्दृष्टवान् ब्रह्मा दुर्दर्शमकृतात्मनाम् ॥
इन्द्रनीलप्रतीकाशं स्मितास्यं पद्मलोचनम् ॥ ९ ॥
किरीटहारकेयूरकुण्डलैः कटकादिभिः ।
विभ्राजमानं श्रीवत्सकौस्तुभप्रभयान्वितम् ॥ १० ॥
स्तुवद्भिः सनकाद्यैश्च पार्षदैः परिवेष्टितम् ।
शङ्खचक्रगदापद्मवनमालाविराजितम् ॥ ११ ॥
स्वर्णयज्ञोपवीतेन स्वर्णवर्णाम्बरेण च ॥ १२ ॥
श्रिया भूम्या च सहितं गरुडोपरिसंस्थितम् ।
हर्षगद्गदया वाचा स्तोतुं समुपचक्रमे ॥ १३ ॥

ब्रह्मोवाच ।

नतोऽस्मि ते पदं देव ! प्राणबुद्धीन्द्रियात्मभिः ।
यच्चिन्त्यते कर्मपाशात् हृदि नित्यं मुमुक्षुभिः ॥ १४ ॥

हरिं 'कार्यमर्थं विभर्त्तृणां हविर्भागं क्रतौ तथा। वर्णश्च मे हरिर्यस्मात्तस्माद्धरिरहं स्मृत' इति श्रुतेः स्तुतिसिद्धनिर्मलहरिविष्णुप्रभृतिपदयुक्तैः पुराणोद्भवैः स्तोत्रैरित्यर्थः भक्तिमूर्त्तिश्चैव च गद्गदवाणी भक्तित्वादेवामन्त्रत्वाख्याणी विमलत्वम् ॥ ७ ॥

सहस्रांशुसहस्रं सूर्य्यसहस्रम् ॥ ८ ॥

अकृतात्मनां ध्यानहीनानां तेजोराशित्वात् कथञ्चिद्दृगंगम् ॥ ९।१०॥

पार्षदगणाः ॥ ११ ॥

स्वर्णवर्णाम्बरं पीताम्बरम् ॥ १२ । १३ ॥

प्राणः क्रियाशक्तिप्रधानोऽयः तेन कर्मेन्द्रियसंघकः बुद्धीन्द्रियाणि श्रोत्रादीनि आत्मा मनस्तैः कारणभूतैर्नतोऽस्मि कर्मपाशान्मुमुक्षुभिर्यदं हृदि चिन्त्यते इत्यन्वयः ॥ १४ ॥

मायया गुणमय्या त्वं सृजस्यवसि लुम्पसि ।
जगत्तेन न ते लेप आनन्दानुभवात्मनः ॥ १५ ॥
तथा शुद्धिर्न दुष्टानां दानाध्ययनकर्मभिः ।
शुद्धात्मता ते यशसि सदा भक्तिमतां यथा ॥ १६ ॥
अतस्तवाङ्घ्रिर्मे दृष्टश्चित्तदोषापनुत्तये ।
सद्योऽन्तर्हृदये नित्यं मुनिभिः सात्वतैर्वृतः ॥ १७ ॥
ब्रह्माद्यैः स्वार्थसिद्ध्यर्थमस्माभिः पूर्वसेवितः ।
अपरोक्षानुभूत्यर्थं ज्ञानिभिर्हृदि भावितः ॥ १८ ॥
तवाङ्घ्रिपूजानिर्माल्यतुलसीमालया विभो ! ।
स्पर्द्धते वक्षसि पदं लब्ध्वापि श्रीः सपत्निवत् ॥ १९ ॥
अतस्त्वत्पादभक्तेषु तव भक्तिः श्रियोऽधिका ।
भक्तिमेवाभिवाञ्छन्ति त्वद्भक्ताः सारवेदिनः ॥ २० ॥

गुणमय्या सत्त्वरजस्तमोगुणयुक्तया मायया अविद्यया जगत् सृजसि तेन स्रष्टृत्वादिना ते लेपोऽहं स्रष्टेत्याद्यभिमानो न तत्र हेतुगर्भं विशेषणम् आनन्दानुभवात्मनः आनन्दाभिन्नानुभवरूप आत्मा यस्य तस्य एवं च स्वस्वरूपापरोक्ष्येण सर्वं मिथ्या दृष्ट्वा तदभिमानरहित इति भावः ॥ १५ ॥

दुष्टानां मलिनान्तःकरणानां शुद्धात्मता शुद्धान्तःकरणता ते यशसि तव गुणकीर्त्तने ॥ १६ ॥

सात्वतैर्भक्तैः वृतोऽन्तर्हृदये सद्यो दृष्टस्तवाङ्घ्रिर्मे चित्तदोषापनुत्तये अस्त्विति शेषः ॥ १७ ॥

स्वार्थसिद्ध्यर्थं स्वकर्त्तव्यसृष्ट्यादिसिद्ध्यर्थं ज्ञानिभिः ज्ञानेच्छुभिः ॥ १८ ॥

सपत्निवत् आर्षो ह्रस्वः सपत्नीवदित्यर्थः ॥ १९ ॥

अतः त्वच्चरणभक्तेषु तव श्रीतोऽप्यधिका भक्तिः प्रीतिः अतः सारवेदिनस्त्वद्भक्तास्त्वच्चरणयोर्भक्तिमेव वाञ्छति ॥ २०

अतस्त्वत्पादकमले भक्तिरेव सदाऽस्तु मे।
संसारामयतप्तानां भेषजं भक्तिरेव ते॥ २१॥
इति ब्रुवन्तं ब्रह्माणं बभाषे भगवान् हरिः।
किं करोमीति तं वेधाः प्रत्युवाचातिहर्षितः॥ २२॥

ब्रह्मोवाच।

भगवन्! रावणो नाम पौलस्त्यतनयो महान्।
राक्षसानामधिपतिर्मद्दत्तवरदर्पितः॥ २३॥
त्रिलोकीं लोकपालांश्च बाधते विश्वबाधकः।
मानुषेण मृतिस्तस्य मया कल्याणकल्पिता।
अतस्त्वं मानुषो भूत्वा जहि देव! रिपुं प्रभो!॥ २४॥

श्रीभगवानुवाच।

कश्यपस्य वरो दत्तस्तपसा तोषितेन मे॥ २५॥
याचितः पुत्रभावाय तथेत्यङ्गीकृतं मया।
स इदानीं दशरथो भूत्वा तिष्ठति भूतले॥ २६॥

अत इति यतस्ते भक्तिरेव संसाररोगभेषजमत इत्यन्वयः॥ २१॥

ब्रह्माणं हरिः किं करोमीति बभाषे अथ तं हरिं वेधाः प्रत्युवाचेति सम्बन्धः॥ २२॥

रावण इति 'रावयामास लोकान्यस्तस्माद्रावण उच्यते' इति भारतोक्तेः मया ब्रह्मणा दत्तेन वरेण दर्पितोऽहंकृतः वरश्च मनुष्यातिरिक्तावध्यत्वरूपः॥ २३॥

तदेवाह मानुषेणेति॥ २४॥

कश्यपस्य तपसा तोषितेन मे मया तस्मै वरो दत्तः यत्त्वं याचिष्यसि तत्तुभ्यं दास्यामीति कृतवरदानप्रतिज्ञ इत्यर्थः॥ २५॥

ततस्तेनाहं पुत्रभावाय याचितो मया च तत्तथेत्यङ्गीकृतमित्यर्थः॥ २६॥

तस्याहं पुत्रतामेत्य कौशल्यायां शुभे दिने (१) ।
चतुर्धात्मानमेवाहं सृजामीतरयोः पृथक् ॥ २७ ॥
योगमायापि सीतेति जनकस्य गृहे तदा ।
उत्पत्स्यते तया सार्द्धं सर्वं सम्पादयाम्यहम् ।
इत्युक्त्वान्तर्दधे विष्णुर्ब्रह्मा देवानथाऽब्रवीत् ॥ २८ ॥

ब्रह्मोवाच ।

विष्णुर्मानुषरूपेण भविष्यति रघोः कुले ॥ २९ ॥
यूयं सृजध्वं सर्वेऽपि वानरेष्वंशसम्भवान् ।
विष्णोः सहायं कुरुत यावत् स्थास्यति भूतले ॥ ३० ॥
इति देवान् समादिश्य समाश्वास्य च मेदिनीम् ।
ययौ ब्रह्मा स्वभवनं विज्वरः सुखमास्थितः ॥ ३१ ॥
देवाश्च सर्वे हरिरूपधारिणः
स्थिताः सहायार्थमितस्ततो हरेः ।

अहं तस्य पुत्रतामेत्य पुत्रतां प्राप्स्यामीति यावत् कौशल्याया-मितरयोः सुमित्राकैकेय्योरहमेवात्मानं चतुर्द्धा चतुःप्रकारावयवसंस्थानै रामलक्ष्मणभरतशत्रुघ्नेतिचतुःप्रकारनामभिश्च सृजामि स्रक्ष्यामि वर्त्त-मानसामीप्ये लट् ॥ २७ ॥

योगमायेति योगो मल्लक्षणसहवर्त्तिनी मायेत्यर्थः 'नाहं प्रकाशः सर्वस्य योगमायासमावृत' इति गीतोक्तेः तया सार्द्धं तां सहकारिणीं प्राप्य ॥ २८ । २९ ॥

अंशसम्भवान् स्वस्वांशसम्भवान् वानरानित्यर्थः ॥ ३० । ३१ ॥

( १ ) शुभोदये इति केचित् पठन्ति ।

महाबलाः पर्वतवृक्षयोधिनः
प्रतीक्षमाणा भगवन्तमीश्वरम् ॥ ३२ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे बालकाण्डे

तृतीयः सर्गः।

इतस्ततः पर्व्वतवनेषु ॥ ३२ ॥

इति श्रीमत्त्रुक्करराजविपद्भुरचकनर्थेत्वादिवि० श्रीराम-
वर्मणः कृतौ अध्यात्मरामायणे सेतौ
बालकाण्डे तृतीयः सर्गः।

---

चतुर्थः सर्गः ।

श्रीमहादेव उवाच ।

अथ राजा दशरथः श्रीमान् सत्यपरायणः(१) ।
अयोध्याधिपतिर्वीरः सर्वलोकेषु विश्रुतः ॥ १ ॥
सोऽनपत्यत्वदुःखेन(२) पीड़ितो गुरुमेकदा ।
वशिष्ठं स्वकुलाचार्यमभिवाद्येदमब्रवीत् ॥ २ ॥
स्वामिन् ! पुत्राः कथं मे स्युः ? सर्वलक्षणलक्षिताः ।
पुत्रहीनस्य मे राज्यं सर्वं दुःखाय कल्पते । ३ ॥
ततोऽब्रवीद्वशिष्ठस्तं भविष्यन्ति सुतास्तव ।
चत्वारः सत्त्वसंपन्ना लोकपाला इवापराः ॥ ४ ॥
शान्ताभर्त्तारमानीय (३) ऋष्यशृङ्गं तपोधनम् ।
अस्माभिः सहितः पुत्रकामेष्टिं शीघ्रमाचर ॥ ५ ॥
तथेति मुनिमानीय मन्त्रिभिः सहितः शुचिः ।

अथ रामजन्माह अथेति ॥ १ । २ ॥

सर्वं दुःखायेति 'मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा' इति श्रुतेः ॥ २ । ४ ॥

शान्ताभर्त्तारं शान्ता लोमपाददशरथसखाङ्गपतेरेतद्दशरथमित्रस्य कन्या तेन राज्ञा अपत्याभावात् स्वदुहितृत्वेन कल्पितेत्यस्याविका पुत्रकामस्य कर्त्तव्येष्टिः पुत्रकामेष्टिः ॥ ५ ॥

(१) सत्यपराक्रम इत्यपि पाठः ।

(२) अनपत्यः स दुःखेन इति केचित् पठन्ति ।

(३) शान्तं ऋषिं समानीय इति पाठः पुस्तकान्तरे ।

यज्ञकर्म समारेभे मुनिभिर्वीतकल्मषैः ॥ ६ ॥
श्रद्धया हूयमानेऽग्नौ तप्तजाम्बूनदप्रभः ।
पायसं स्वर्णपात्रस्थं गृहीत्वोवाच हव्यवाट् ॥ ७ ॥
गृहाण पायसं दिव्यं पुत्रीयं देवनिर्मितम् ।
लप्स्यसे परमात्मानं पुत्रत्वेन न संशयः ॥ ७ ॥
इत्युक्त्वा पायसं दत्वा राज्ञे सोऽन्तर्दधेऽनलः ।
ववन्दे मुनिशार्दूलौ राजा लब्धमनोरथः ॥ ८ ॥
वशिष्ठऋष्यशृङ्गाभ्यामनुज्ञातो ददौ हविः ।

मुनिं ऋष्यशृङ्गं मुनिभिर्वशिष्ठाद्यैः ॥ ६ ॥

तप्तजाम्बूनदं कृतमलापहरणं स्वर्णं तद्वत्कान्तिर्हव्यवाडग्निः स्वयमेव 'प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप' इति वाल्मीकीये प्राजापत्यशब्देनोक्तः ॥ ७ ॥

पुत्रीयं पुत्राय हितम् ॥ ८ ॥

मुनिशार्दूलौ वशिष्ठऋष्यशृङ्गौ ॥ ९ । १० ॥

अश्नयुः अशनं तदिच्छावती अधु अभिकाङ्क्षायामित्यतो यङ्लुगन्ता-दागमशास्त्रानित्यत्वेन इडभावे लसिन्दधिदधिषिचिपेः क्रुरिति क्रौञ्चं पौत्रिकं चरुमिति शब्दभावः आर्थः पुत्रः प्रयोजनं यस्य तादृशं चरुमित्यर्थः स्वभागार्द्धं स्वशब्द आत्मीयवाची स्वीयस्य भागः स्वभागस्तदर्द्धं स्वद-त्तस्य चतुर्थांशमित्यर्थः एवमग्रेऽपि वाल्मीकीयेऽपि 'कौशल्यायै नरपतिः पायसार्द्धं ददौ तदा । अर्द्धादर्द्धं ददौ चापि सुमित्रायै नराधिपः । कैके-य्यै चावशिष्टार्द्धं ददौ पुत्रार्थकारणात् । प्रददौ चावशिष्टार्द्धं पायसस्या-मृतोपमम् । अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः' इति श्लोकयोः कौशल्यायै दत्तार्द्धस्यार्द्धादर्द्धं चतुर्थांशरूपं सुमित्रायै ददौ कौशल्यया दापितवानित्यर्थः कार्य्यः अर्द्धादित्यत्र कस्यार्द्धादित्याकाङ्क्षायामुपस्थित-कौशल्यादत्तपायसार्द्धस्यैवौचित्यात् अनन्तर्भावितण्यर्थत्वे भागश्चैतदेक-

कौशल्यायै स कैकेय्यै अर्द्धमर्द्धं प्रयत्नतः ॥ १० ॥
ततः सुमित्रा सम्प्राप्ता जगृहुः पौत्रिकं चरुम् ।
कौशल्या तु स्वभागार्द्धं ददौ तस्यै मुदान्विता ॥ ११ ॥
कैकेयी च स्वभागार्धं ददौ प्रीतिसमन्विता ।
उपभुज्य चरुं सर्वाः स्त्रियो गर्भसमन्विताः ॥ १२ ॥
देवता इव रेजुस्ताः स्वभासा राजमन्दिरे ।
दशमे मासि कौशल्या सुषुवे पुत्रमद्भुतम् ॥ १३ ॥

वाक्यतैव एवं कैकेय्यै कौशल्यादत्तार्द्धादवशिष्टमर्द्धं ददौ ततः कौशल्यादत्तावशिष्टस्य कैकेय्यै दत्तस्य यदर्द्धं तदर्द्धं विचार्य पुनरपि सुमित्रायै ददौ प्रापयामास इत्यर्थः अत्र चार्द्धपदावृत्तिर्बोध्या एवं हि एतद्ग्रन्थेन तस्यैकवाक्यता भवति तत्तद्दत्तभागजन्यस्य तत्तत्पुत्राधीनतौचित्ये नैवमेवोचितं सेव्यसेवकभावलाभार्थं ततस्ततो न्यूनांशत्वस्य लक्ष्मणशत्रुघ्नयोरौचित्यात्स्वात्मस्वभागार्द्धमिति यथाश्रुतं न व्याख्यातम् कालिदासोऽपि 'स तेजो वैष्णवं पत्न्योर्विभेजे चरुसंज्ञितम् । द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् । अर्चिता तस्य कौशल्या प्रिया केकयवंशजा । अतः सम्भावितां ताभ्यां सुमित्रामैच्छदीश्वरः । ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः । चरोरर्द्धार्द्धभागाभ्यां तामयोजयतामुभे । सा हि प्रणयवत्यासीत्सपत्न्योरुभयोरपि' इत्याह चरोरर्द्धार्द्धभागाभ्यामित्यस्य स्व स्व लब्धचरुभागाभ्यामित्यर्थः एवं च रामभरतौ त्र्यंशौ लक्ष्मणशत्रुघ्नावष्टमांशाविति सिद्धम् वाल्मीकीयव्याख्यातारौ कतकाचार्यश्रीरामाचार्यावप्येवमेवोचतुः अन्ये तु तद्व्याख्यातारः कौशल्यायै सम्पूर्णं पायसार्द्धं ददौ ततः पात्रस्थादर्धादर्द्धं सर्वपायसचतुर्थांशं सुमित्रायै दत्तवान् स्वयमेव ततः पात्रेऽवशिष्टस्य चतुर्थांशस्यार्द्धमष्टमांशं कैकेय्यै दत्तवान् ततः पुनरवशिष्टमर्द्धमष्टमांशरूपं पुनरपि सुमित्रायै दत्तवानिति यथाश्रुतग्राहिणो व्याचक्षते तेषामेतद्विरोधो रामलक्ष्मणयोरेव भरतशत्रुघ्नयोरेवैकवाक्यताया बीजालाभश्चावशिष्टार्धपदे क्वचित् षष्ठीतत्पुरुषः क्वचित्कर्मधारय इति वैषम्यञ्च ॥ ११॥

स्वभागार्द्धमिति प्राग्वत् ॥ १२ । १३ ॥

मधु मासे सिते पक्षे नवम्यां कर्कटे शुभे ।
पुनर्वस्वृक्षसहिते उच्चस्थे ग्रहपञ्चके ॥ १४ ॥
मेषं पूषणि संप्राप्ते पुष्पवृष्टिसमाकुले ।
आविरासीज्जगन्नाथः परमात्मा सनातनः ॥ १५ ॥
नीलोत्पलदलश्यामः पीतवासाश्चतुर्भुजः ।
जलजारुणनेत्रान्तः स्फुरत्कुण्डलमण्डितः ॥ १६ ॥
सहस्रार्कप्रतीकाशः किरीटी कुञ्चितालकः ।
शङ्खचक्रगदापद्मवनमालाविराजितः ॥ १७ ॥
अनुग्रहाख्यहृत्स्थेन्दुसूचितस्मितचन्द्रिकः ।
करुणारससम्पूर्णविशालोत्पललोचनः ।
श्रीवत्सहारकेयूरनूपुरादिविभूषणः ॥ १८ ॥
दृष्ट्वा तं परमात्मानं कौशल्या विस्मयाकुला ।
हर्षाश्रुपूर्णनयना नत्वा प्राञ्जलिरब्रवीत् ॥ १९ ॥

मधुमासे चैत्रे सिते शुक्ले कर्कटे कर्कलग्ने पुनर्वस्वृक्षसहिते पुनर्वसुनक्षत्रसहिते इति कर्कलग्नविशेषणम् ग्रहपञ्चके चन्द्रबुधव्यतिरिक्ते रविभौमशुक्रगुरुशनिरूपे तदुच्चस्थानानि च क्रमेण मेषमकरकर्कमीनतुलाख्यानि ॥ १४ ॥

सर्वपद्मोदयस्य रव्यधीनत्वात् तदुच्चं स्थानं स्फुटयति मेषमिति तेन सर्वेषामनन्तमतत्वं सूचितम् पुष्पवृष्टिसमाकुले काले इत्यर्थः ॥१५॥

तत्र कौशल्यानुग्रहाय प्रथमं येन रूपेण प्रादुर्भूतस्तद्रूपमाह नीलोत्पलेति ॥ १६ । १७ ॥

अनुग्रहाख्येति भक्तानुग्रहाख्यो यो हृदयस्य इन्दुस्तस्य सूचिका स्मितरूपा चन्द्रिका यस्य सः स्मितं च ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः 'अलक्षितद्विजं धीरस्योत्तमानां स्मितं भवेत्' इति लक्षणम् ॥१८।१९

कौशल्योवाच ।

देवदेव ! नमस्तेऽस्तु शङ्खचक्रगदाधर ! ।
परमात्माच्युतोऽनन्तः पूर्णस्त्वं पुरुषोत्तमः ॥ २० ॥
वदन्त्यगोचरं वाचां बुद्ध्यादीनामतीन्द्रियम् ।
त्वां वेदवादिनः सत्तामात्रं ज्ञानैकविग्रहम् ॥ २१ ॥
त्वमेव मायया विश्वं सृजस्यवसि हंसि च ।
सत्त्वादिगुणसंयुक्तस्तुर्य एवामलः सदा ॥ २२ ॥

परमात्मा शुद्धबुद्धमुक्तस्वभावः अच्युतः स्वस्वरूपात्कदाऽपि न च्युतः 'शाश्वतं शिवमच्युतं' इति श्रुतेः अनन्तः अनन्तगुणः नित्यत्वादन्तरहित इति पूर्णः देशकालापरिच्छेद्यः पुरुषेभ्य उत्तमः सर्वाधिष्ठानत्वात् ॥ २० ॥

वाचां बुद्ध्यादीनामिन्द्रियाणां चागोचरं वदन्ति 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इत्यादि श्रुतयः वागादिसर्वद्रष्टृत्वाच्च न तासां विषयः न हि घटादिप्रकाशको दीपो घटादिविषयो भवति अतएव त्वामतीन्द्रियं वेदवादिनो वेदज्ञा वदन्ति ते त्वां सत्तामात्रं सर्वत्र सत्सम्बन्धात् सदिति व्यवहारोपपादकं 'सर्वाः प्रजाः सदायतना' इति श्रुतेः ज्ञानैकविग्रहं सत्यं ज्ञानं इति श्रुतेः वदन्ति ॥ २१ ॥

त्वमिति त्वमेव मायया सत्त्वादिगुणसंयुक्तः तत्तद्गुणसंयुक्तब्रह्मविष्णुरुद्रात्मकः सन् सृष्ट्यादि करोषि तत्र रजःप्रधानो ब्रह्मा सत्त्वप्रधानो विष्णुः तमःप्रधानो रुद्रः विष्णोर्दैत्यादिहन्तृत्वमपि पालनार्थमेव दुष्टनिग्रहं विना शिष्टपालनायोगात् परमार्थतस्तु निर्गुण एव त्वमित्याह तुर्य एवेति तत्तद्गुणसंयुक्तोक्तमूर्त्तित्रयापेक्षया चतुर्थः इत्यर्थः यद्वा जाग्रत्स्वप्नसुषुप्त्यवस्थात्रय विश्वतैजसप्राज्ञेभ्यस्तुर्य्य इत्यर्थः 'न बहिःप्रज्ञं नान्तःप्रज्ञं नानुभयतः प्रज्ञं'' इति श्रुतेः इयं हि क्रमेण जाग्रत्स्वप्नसुषुप्त्यवस्थाः निरूपयति अतएव सदामलः मायागुणास्पृष्टत्वादित्यर्थः ॥२२॥

करोषीव न कर्त्ता त्वं गच्छसीव न गच्छसि ।
न शृणोषि शृणोषीव पश्यसीव न पश्यसि ॥ २३ ॥
अप्राणो ह्यमनाः शुद्ध इत्यादि श्रुतिरब्रवीत् ।
समः सर्वेषु भूतेषु तिष्ठन्नपि न लक्ष्यसे ॥ २४ ॥
अज्ञानध्वान्तचित्तानां व्यक्त एव सुमेधसाम्
जठरे तव दृश्यन्ते ब्रह्माण्डाः परमाणवः ॥ २५ ॥
त्वं ममोदरसम्भूत इति लोकान् विडम्बसे ।
भक्तेषु पारवश्यन्ते दृष्टं मेऽद्य रघूत्तम ! ॥ २६ ॥

अमत्वं सूचितं निर्विकारत्वमेव स्फुटयति करोषीवेति माया-गतकृतिगत्यादिभिस्तद्वानिव भासि वस्तुतो विकारहीनत्वान्न कर्त्त्रेत्यादि 'अकुर्वन् सर्वकृच्छुद्धस्तिष्ठन्त्वेति धावतः । मायया सर्वशक्तित्वादजः स बहुधा मत' इति अभियुक्तिः ॥ २३ ॥

निर्विकारत्वे हेतुः श्रुतिदर्शित इत्याह अप्राण इति 'दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रोऽक्षरात्परतः पर' इति मुण्डकश्रुतिः प्राणाद्युपाधिरहितः अतएव कृतिगत्यादिरहित इति भावः अक्षरमत्र माया ततः परतरः तद्गुणास्पृष्टः सर्वतः पर उत्कृष्ट इति श्रुत्यर्थः सर्वभूतेषु समः सन् घट इत्यादि प्रतीतेः सर्वत्रानुस्यूतत्वात् अतः सर्वत्र तिष्ठन्नपि ॥ २४ ॥

अज्ञानध्वान्तचित्तानां अज्ञानरूपान्धकारवच्चित्तैः शेषे षष्ठी तैर्न लक्ष्यसे सुमेधसान्तत्त्वज्ञानां व्यक्त एव 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि' इति श्रुतेः यस्य तव जठरे ब्रह्माण्डाः परमाणव इव दृश्यन्ते ॥ २५ ॥

स त्वं ममोदरसम्भूत इति लोकान् मम माहात्म्यं विडम्बसे ख्यापयसि एतत्सर्वं भक्तपारवश्यादित्याह भक्तेष्विति ॥ २६ ॥

संसारसागरे मग्ना पतिपुत्रधनादिषु ।
भ्रमामि मायया तेऽद्य पादमूलमुपागता ॥ २७ ॥
देव ! त्वद्रूपमेतन्मे सदा तिष्ठतु मानसे ।
आवृणोतु न मां माया तव विश्वविमोहिनी ॥ २८ ॥
उपसंहर विश्वात्मन्नदो रूपमलौकिकम् ।
दर्शयस्व महानन्द ! बालभावं सुकोमलम् ॥ २९ ॥
ललितालिङ्गनालापैस्तरिष्याम्युत्कटं तमः ।

श्रीभगवानुवाच ।

यद्यदिष्टं तवास्त्यम्ब ! तत्तद्भवतु नान्यथा ॥ ३० ॥
अहन्तु ब्रह्मणा पूर्वं भूमेर्भारापनुत्तये ।
प्रार्थितो रावणं हन्तुं मानुषत्वमुपागतः ॥ ३१ ॥
त्वया दशरथेनाहं तपसाऽऽराधितः पुरा ।
मत्पुत्रत्वाभिकाङ्क्षिण्या तथा कृतमनिन्दिते ! ॥ ३२ ॥

यद्यपि ते माययाऽपत्यादिषु मग्ना तद्विषयोत्कटेच्छावती संसारसागरे भ्रमामि तथाप्यद्य ते पादमूलमागता तरिष्यामीति मन्ये इति शेषः ॥ २७ ॥

एतत्स्वरूपं शङ्खचक्रगदाधरत्वविशिष्टम् आवरणान्तरमाह आवृणोत्विति ॥ २८ ॥

उपसंहारे हेतुरलौकिकमिति सर्वलोकैर्दुर्दर्श्यं तेजोमयत्वादित्यर्थः ॥ २९ ॥

ननु त्वत्तारणार्थमेवं रूपपरिग्रह इति चेत्तत्राह ललितेति तमः अज्ञानमूलं संसारम् ॥ ३० ॥

तदिष्टरूपधारणे हेतुमाह अहं त्विति मानुषत्वमुपागतः मानुषत्वं प्राप्तुं कृतमतिः ॥ ३१ ॥

तर्हि प्रथममेव किं तथा रूपं न कृत मत आह त्वयेति अहं पुत्रो यस्मात्सञ्जातो मत्पुत्रत्वमतस्तत्प्रकटीकर्त्तुं तथा कृतमित्यर्थः ॥ ३२ ॥

रूपमेतत्त्वया दृष्टं प्राप्तनं तपसः फलम् ।
मद्दर्शनं विमोक्षाय कल्पते ह्यन्यदुर्लभम् ॥ ३३ ॥
संवादमावयोर्यस्तु पठेद्वा शृणुयादपि ।
स याति मम सारूप्यं मरणे मत्स्मृतिं लभेत् ॥ ३४ ॥
इत्युक्ता मातरं रामो बालो भूत्वा रुरोद ह ।
बालत्वेऽपीन्द्रनीलाभो विशालाक्षोऽतिसुन्दरः ॥ ३५ ॥
बालारुणप्रतीकाशो लालिताखिललोकपः ।
अथ राजा दशरथः श्रुत्वा पुत्रोद्भवोत्सवम् ।
आनन्दार्णवमग्नोऽसावाययौ गुरुणा सह ॥ ३६ ॥
रामं राजीवपत्राक्षं दृष्ट्वा हर्षाश्रुसंप्लुतः ।
गुरुणा जातकर्माणि कर्तव्यानि चकार सः ॥ ३७ ॥
कैकेयी चाथ भरतमसूत कमलेक्षणा ।
सुमित्रायां यमौ जातौ पूर्णेन्दुसदृशाननौ ॥ ३८ ॥
तदा ग्रामसहस्राणि ब्राह्मणेभ्यो मुदा ददौ ।
सवर्णानि च रत्नानि वासांसि सुरभीः शुभाः ॥ ३९ ॥

प्राप्तनं तपसः फलभूतमेतद्रूपं त्वया दृष्टम् ननु त्वद्दर्शनमात्रं न पुरुषार्थोऽत आह मदिति एवं रूपस्य मम दर्शनमन्यैस्तपोभिर्दुर्लभं विमोक्षाय कल्पते चित्तशुद्धिद्वारा तत्त्वमस्यादिवाक्यज्ञानसम्पादकत्वेनेति भावः ॥ ३३ । ३४ ॥

भक्तानुग्रहार्थं तद्दृश्येयं मायिकं भगवतो रूपमाह बालत्वेऽपीति॥३
लालिताखिललोकपः स्वावतरणेन लालिता लोभिता अखिललोकपा इन्द्रादयो येन सः पुत्रोद्भवः पुत्रोत्पत्तिस्तद्रूपमुत्सवम् ॥ ३६ ॥
राजीवं कमलं गुरुणेति करणे तृतीया जातकर्माणि बहुवचनेन नामकरणपर्यन्तकर्तव्यषष्ठीपूजादिसंग्रहः ॥ ३८ । ३८ ॥
सुरभीर्गाः ॥ ३९

यस्मिन् रमन्ते मुनयो विद्यया ज्ञानविप्लवे ।
तं गुरुः प्राह रामेति रमणाद्राम इत्यपि ॥ ४० ॥
भरणाद्भरतो नाम लक्ष्मणं लक्षणान्वितम् ।
शत्रुघ्नं शत्रुहन्तारमेवं गुरुरभाषत ॥ ४१ ॥
लक्ष्मणो रामचन्द्रेण शत्रुघ्नो भरतेन च ।
द्वन्द्वीभूय चरन्तौ तौ पायसांशानुसारतः ॥ ४२ ॥
रामस्तु लक्ष्मणेनाथ विचरन् बाललीलया ।
रमयामास पितरौ चेष्टितैर्मुग्धभाषितैः ॥ ४३ ॥
भाले स्वर्णमयाश्वत्थपर्णमुक्ताफलप्रभम् ।
कण्ठे रत्नमणिव्रातमध्यद्वीपिनखाञ्चितम् ॥ ४४ ॥
कर्णयोः स्वर्णसम्पक्वरत्नार्जुनसटालुकम् ।

अथ नामकरणे नाम्नामन्वर्थत्वं दर्शयति यस्मिन्निति विद्यया तत्त्वज्ञानेन अज्ञानविप्लवे अज्ञाननाशे तन्निमित्तं यस्मिन् योगिनो रमन्ते इत्येकः योगान्तरमाह रमणात् भक्तानां वपुःसौन्दर्येण रमणाद्राम इत्यपि योग इति शेषः रमणं रामः भावे घञ् तं करोति रामयति तत्करोतीति णिच् रमयतीति रामः णिजन्तादच् तथा च भक्तान् रमयतीति फलितोऽर्थः ॥ ४० । ४१ ॥

पायसांशानुसारतः कौशल्यापायसांशत्वाल्लक्ष्मणो रामानुचरः कैकेयीपायसांशत्वाच्छत्रुघ्नो भरतानुचर इत्यर्थः ॥ ४२ । ४३ ॥

स्वर्णमयाश्वत्थपर्णस्य प्रान्ते संयुक्तानि यानि मुक्ताफलानि तैः प्रभा शोभा यस्य तम् रत्नमणीनां व्रातः समूहस्तन्मध्ये वर्त्तमानं द्वीपिनखं व्याघ्रनखं तेनाञ्चितं भूषितम् यत्तु 'व्याघ्रव्यालगजान् सिंहानश्वोष्ट्रमहिषान् इभम् । भूषणेषु न्यसेदष्टौ यदीच्छेच्चिरजीवितं' इति तत्तु भूषणेषु व्याघ्राद्याकारचित्रनिषेधपरम् नतु तत्तद्व्याघ्राद्यवयवनिषेधकमित्याहुः ॥ ४४ ॥

स्वर्णे सम्पृक्तानि घटितानि रत्नानि यस्मिन् तत् अर्जुनस्य सटालुकमपक्वफलं तदाकारं भूषणं यस्य रत्नार्जुनघटालुकमिति पाठान्त-

सिञ्जानमणिमञ्जीरकटिसूत्राङ्गदैर्वृतम् ॥ ४५ ॥
स्मितवक्त्राल्पदशनमिन्द्रनीलमणिप्रभम्।
अङ्गणे रिङ्गमाणन्तं तर्णकाननु सर्वतः ॥ ४६ ॥
दृष्ट्वा दशरथो राजा कौशल्या मुमुदे तदा।
भोक्ष्यमाणो दशरथो राममेहीति चासकृत् ॥ ४७ ॥
आह्वयत्यतिहर्षेण प्रेम्णा नायाति लीलया।
आनयेति च कौशल्यामाह सा सस्मिता सुतम् ॥ ४८ ॥
धावत्यपि न शक्नोति स्प्रष्टुं योगिमनोगतिम्।
प्रहसन् स्वयमायाति कर्दमाङ्कितपाणिना ॥ ४९ ॥
किञ्चिद्गृहीत्वा कवलं पुनरेव पलायते।
कौशल्या जननी तस्य मासि मासि प्रकुर्वती ॥ ५० ॥
वायनानि विचित्राणि समलङ्कृत्य राघवम्।
अपूपान् मोदकान् कृत्वा कर्णशष्कुलिकास्तथा।
कर्णपूरांश्च विविधा वर्षवृद्धौ च वायनम् ॥ ५१ ॥

रम् अर्थस्तुल्यः सिञ्जानाः शब्दयुक्ताः ये मणयस्तद्युक्तैः मञ्जीरकटिसूत्राङ्गदैर्वृतं मञ्जीरः पादभूषणं अङ्गदो बाहुभूषणम्। ४५ ॥

स्मितं स्मितयुक्तं वक्त्रं यस्य स चासावल्पदशनश्च तं तर्णकान् गोवत्सानन्तु तत्पुच्छग्रहणपूर्वं सर्वतोरिङ्गमाणं परितो बालगत्या खेलन्तम् ॥ ४६ ॥

इहेति तादर्थ्यां तस्य क्रोडामीत्यर्थः ॥ ४७ ॥

प्रेम्णा आहूतोऽपीति शेषः लीलया क्रीडावशात्रा नायातीत्यर्थः ॥ ४८ ॥

योगिमनोगतिं योगिमनोविषयं कर्दमाङ्कितपाणिनोपलक्षित इति शेषः ॥ ४९ । ५० ॥

पुत्रादिकल्याणमुद्दिश्य सधवाभ्यो दीयमानभक्ष्यविशेषवायनानि प्रकुर्वतीव बभूवेतिशेषः कर्णशष्कुलीः कर्णपूरादयो भक्ष्यविशेषाः वर्षवृद्धिः सर्वारम्भादिनकर्त्तव्यं कर्म ॥ ५१ ॥

स्नेहकृत्यं तया त्यक्तं तस्य चापल्यकारणात् ।
एकदा रघुनाथोऽसौ गतो मातरमन्तिके ॥ ५२ ॥
भोजनं देहि मे मातः ! न श्रुतं कार्यसक्तया ।
ततः क्रोधेन भाण्डानि लगुडेनाहनत्तदा ॥ ५३ ॥
शिक्यस्थं पातयामास गव्यं च नवनीतकम् ।
लक्ष्मणाय ददौ रामो भरताय यथाक्रमम् ॥ ५४ ॥
शत्रुघ्नाय ददौ पश्चाद्दधिदुग्धं तथैव च ।
सूदेन कथितं मात्रे हास्यं कृत्वा प्रधावति ॥ ५५ ॥
आगतां तां विलोक्याथ ततः सर्वैः पलायितम् ।
कौशल्या धावमानापि प्रस्खलन्ती पदे पदे ॥ ५६ ॥
रघुनाथं करे धृत्वा किञ्चिन्नोवाच भामिनी ।
बालभावं समाश्रित्य मन्दं मन्दं रुरोद ह ॥ ५७ ॥
ते सर्वे लालिता मात्रा गाढमालिङ्ग्य यत्नतः ।
एवमानन्दसन्दोहजगदानन्दकारकः ॥ ५८ ॥
मायाबालवपुर्धृत्वा रमयामास दम्पती ।
अथ कालेन ते सर्वे कौमारं प्रतिपेदिरे ॥ ५९ ॥
उपनीता वशिष्ठेन सर्वविद्याविशारदाः ।
धनुर्वेदे च निरताः सर्वशास्त्रार्थवेदिनः ॥ ६० ॥

स्नेहत्यागकारणं चापल्यमेव दर्शयति एकदेति मातरमन्तिके
मातुःसमीपे इत्यर्थः द्वितीया छान्दसी ॥ ५२ ॥
अहनत् अहन्नित्यर्थः गणकार्य्यस्यानित्यत्वात्शब्लुक् ॥ ५३ ॥
गव्यं दधिदुग्धम् ॥ ५४ ॥
सूदः सूपकारः मात्रे कौशल्यायै ॥ ५५—५८ ॥
दम्पती कौशल्यादशरथौ कौमारं पञ्चवर्षाधिकत्वम् ॥ ५९—६१ ॥

बभूवुर्जगतां नाथा लीलया नररूपिणः ।
लक्ष्मणस्तु सदा राममनुगच्छति सादरम् ॥ ६१ ॥
सेव्यसेवकभावेन शत्रुघ्नो भरतं तथा ।
रामश्चापधरो नित्यं तूणीबाणान्वितः प्रभुः ॥ ६२ ॥
अश्वारूढो वनं याति मृगयायै सलक्ष्मणः ।
हत्वा दुष्टमृगान् सर्वान् पित्रे सर्वं न्यवेदयत् ॥ ६३ ॥
प्रातरुत्थाय सुस्नातः पितरावभिवाद्य च ।
पौरकार्याणि सर्वाणि करोति विनयान्वितः ॥ ६४ ॥
बन्धुभिः सहितो नित्यं भुक्त्वा मुनिभिरन्वहम् ।
धर्मशास्त्ररहस्यानि शृणोति व्याकरोति च ॥ ६५ ॥
एवं परात्मा मनुजावतारो मनुष्यलोकाननुसृत्य सर्वं ।
चक्रेऽविकारी परिणामहीनो विचार्यमाणो न करोति किञ्चित् ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे बालकाण्डे
चतुर्थः सर्गः ।

न करोतीत्यत्र हेतुरविकारी परिणामहीन इति अविकारीत्यस्यैव
व्याख्यानं परिणामहीन इति ॥ ६६ ॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिवि० श्रीरामवर्मणः कृतौ
अध्यात्मरामायणे सेतौ बालकाण्डे
चतुर्थः सर्गः ।

---

अथ पञ्चमः सर्गः ।

श्रीमहादेव उवाच ।

कदाचित्कौशिकोऽभ्यागादयोध्यां ज्वलनप्रभः(१) ।
द्रष्टुं रामं परात्मानं जातं ज्ञात्वा स्वमायया ॥ १ ॥
दृष्ट्वा दशरथो राजा प्रत्युत्थायाचिरेण तु ।
वशिष्ठेन समागम्य पूजयित्वा यथाविधि ॥ २ ॥
प्रत्युवाच(२) मुनिं राजा प्राञ्जलिर्भक्तिनम्रधीः ।
कृतार्थोऽस्मि मुनीन्द्राहं त्वदागमनकारणात् ॥ ३ ॥
त्वद्विधा यद्गृहं यान्ति तत्रैवायान्ति सम्पदः ।
यदर्थमागतोऽसि त्वं ब्रूहि सत्यं करोमि तत् ॥ ४ ॥
विश्वामित्रोऽपि तं प्रीतः प्रत्युवाच महामतिः ।
अहं पर्व्वणि संप्राप्ते दृष्ट्वा यष्टुं सुरान् पितॄन् ॥ ५ ॥
यदारभे तदा दैत्या विघ्नं कुर्व्वन्ति नित्यशः ।
मारीचश्च सुबाहुश्च परे चानुचरास्तयोः ॥ ६ ॥

अथ रामं नेतुं विश्वामित्रागमनमाह कदाचिदिति रामं स्वमायया जातं ज्ञात्वा तं द्रष्टुमभ्यगात् इत्यन्वयः ॥ १ ॥

अचिरेण शीघ्रं तद्दर्शनाव्यवहितोत्तरकाले प्रत्युत्थाय वशिष्ठेन समागम्य सहितो भूत्वेति यावत् पूजने मुनिः कर्म ॥ २ ॥

भक्त्यशरीरत्वेन भक्तिनम्रत्वानुमानं त्वदागमनरूपात्कारणादित्यर्थः ॥ ३ ॥

तत्रैव तद्गृह एव भवदाद्यागमनस्य सकलसम्पत्प्रतिबन्धकदुरितनाशकत्वादिति भावः तत्करोमीति सत्यं ब्रवीमीति शेषः ॥ ४ ॥

दृष्ट्वा पर्वप्राप्तिं ज्ञात्वा सुरादीन्यष्टुम् ॥ ५ ॥

यदारभे तदेत्यन्वयः ॥ ६ ॥

---

(१) ज्वलद्दहनप्रभां इत्यपि पाठः । (२) अभिवाद्य इति वा पाठः ।

अतस्त्वयोर्वधार्थाय ज्येष्ठं रामं प्रयच्छ मे।
लक्ष्मणेन सह भ्राता तव श्रेयो भविष्यति॥ ७॥
वशिष्ठेन सहामन्त्र्य दीयतां यदि रोचते।
पप्रच्छ गुरुमेकान्ते राजा चिन्तापरायणः॥ ८॥
किं करोमि? गुरो! रामन्त्यक्तुं नोत्सहते मनः।
बहुवर्षसहस्रान्ते कष्टेनोत्पादिताः सुताः॥ ९॥
चत्वारोऽमरतुल्यास्ते तेषां रामोऽतिवल्लभः।
रामस्त्वितो गच्छति चेन्न जीवामि कथञ्चन॥ १०॥
प्रत्याख्यातो? यदि मुनिः शापं दास्यत्यसंशयम्।
कथं श्रेयो भवेन्मह्यमसत्यञ्चापि न स्पृशेत्॥ ११॥

वशिष्ठ उवाच।

शृणु राजन्! देवगुह्यं गोपनीयं प्रयत्नतः।
रामो न मानुषो जातः परमात्मा सनातनः॥ १२॥
भूमेर्भारावताराय ब्रह्मणा प्रार्थितः पुरा।
स एव जातो भवने कौशल्यायां तवानघ!॥ १३॥

तवेति तदैव तव श्रेय इत्यर्थः॥ ७॥
पप्रच्छेत्यस्य विश्वामित्रवचोऽनन्तरमित्यादि॥ ८। ९
इतः मत्सन्निधानात्॥ १०॥
प्रत्याख्यातो यदीति भविष्यतीति शेषः श्रेयो रामवियोगकृतमरणा-भावरूपं असत्यं मुनिप्रत्याख्यानरूपापं तन्मूलशापं च॥ ११॥
इत्थमिति रामः पूर्वमपि मानुष एवेदानीं पुनरपि मानुषो जात इति न किन्तु सनातनो निर्विकारत्वादेकरूपो यः परमात्मा स एव ब्रह्मणा पुरा प्रार्थितः सन् तव भवने जात इत्यन्वयः॥ १२। १३॥

त्वन्तु प्रजापतिः पूर्वं कश्यपो ब्रह्मणः सुतः।
कौशल्या चादितिर्देवमाता पूर्वं यशस्विनी।
भवन्तौ तप उग्रं वै तेपाथे बहुवत्सरम्॥ १४॥
अग्राम्यविषयौ विष्णुपूजाध्यानैकतत्परौ।
तदा प्रसन्नो भगवान् वरदो भक्तवत्सलः॥ १५॥
वृणीष्व वरमित्युक्ते त्वं मे पुत्रो भवामल!।
इति त्वया याचितोऽसौ भगवान् भूतभावनः॥ १६॥
तथेत्युक्त्वाद्य पुत्रस्ते जातो रामः स एव हि।
शेषस्तु लक्ष्मणो राजन्! राममेवान्वपद्यत॥ १७॥
जातौ भरतशत्रुघ्नौ शङ्खचक्रगदाभृतः।
योगमायापि सीतेति जाता जनकनन्दिनी॥ १८॥
विश्वामित्रोऽपि रामाय तां योजयितुमागतः।
एतद्गुह्यतमं राजन वक्तव्यं कदाचन॥ १९॥
अतः प्रीतेन मनसा पूजयित्वाथ कौशिकम्।
प्रेषयस्व रमानाथं राघवं सहलक्ष्मणम्॥ २०॥
वशिष्ठेनैव मुक्तस्तु राजा दशरथस्तदा।
कृतकृत्यमिवात्मानं मेने प्रमुदितान्तरः॥२१॥

भगवदवतारयोग्यतामाह त्वन्त्विति भवन्तौ तेपाथे तपः कृतवन्तौ॥१४।
अग्राम्यविषयौ ग्राम्यविषयाभावन्तौ तेन ब्रह्मचर्यं सूचितम्॥।१५।१६।
शेषो लक्ष्मणः शेषांशो लक्ष्मणः इत्यर्थः॥ १७॥
शङ्खचक्रगदाभृतः चक्रांशिनौ चक्रगदांशाविति शेषः तौ भरतशत्रुघ्नौ
जातावित्यर्थः॥ १८। १९। २०॥
प्रमुदितान्तरः हृष्टचित्तः॥ २१॥

आहूय रामरामेति लक्ष्मणेति च सादरम् ।
आलिङ्ग्य मूर्ध्न्यवघ्राय कौशिकाय समर्पयत् ॥ २२ ॥
ततोऽतिहृष्टो भगवान्विश्वामित्रः प्रतापवान् ।
आशीर्भिरभिनन्द्याथ आगतौ रामलक्ष्मणौ ॥ २३ ॥
गृहीत्वा चापतूणीरबाणखड्गधरौ ययौ ।
किञ्चिद्देशमतिक्रम्य राममाहूय भक्तितः ॥ २४ ॥
ददौ बलां चातिबलां विद्ये द्वे देवनिर्मिते ।
ययोर्ग्रहणमात्रेण क्षुत्क्षामादि न जायते ॥ २५ ॥
तत उत्तीर्य गङ्गां ते ताडकावनमागमन् ।
विश्वामित्रस्तदा प्राह रामं सत्यपराक्रमम् ॥ २६ ॥
अत्रास्ति ताडका नाम राक्षसी कामरूपिणी ।
बाधते लोकमखिलं जहि तामविचारयन् ॥ २७ ॥
तथेति धनुरादाय सगुणं रघुनन्दनः ।
टङ्कारमकरोत्तेन शब्देनापूरयद्वनम् ॥ २८ ॥

मूर्ध्न्यवघ्रायेति 'प्रजापतेस्त्वा हिङ्कारेणावजिघ्रामि सहस्रायुषो-ऽसौ जीव शरदः शतम्' इत्यवघ्राणमन्त्रलिङ्गेन तस्य पुत्राद्याघ्राणे विकर-ण्या तत्कारयणमिति बोध्यम् ॥ २२ ॥

आगतौ समीपं प्राप्तौ रामलक्ष्मणौ ॥ २३ ॥

गृहीत्वा ययौ जगामेत्यर्थः ॥ २४ ॥

बलामिति बला विद्या शरीरसामर्थ्यसम्पादनद्वारेणबलाधिका 'बल-मेंऽह तनूषु न' इति मन्त्रलिङ्गात् अतिबला तु बहुत्त्वकालादिरुपनि-क्ताच्छः ॥ २५ । २६ ॥

अविचारयन् क्रिया अकथ्यमविचारयन्नित्यर्थः ॥ २७ ॥

सगुणं आरूढज्यम् तेन शब्देन धनुःशब्देन ॥ २८ ॥

तच्छ्रुत्वासहमाना सा ताड़का घोररूपिणी ।
क्रोधसंमूर्च्छिता राममभिदुद्राव मेघवत् ॥ २९ ॥
तामेकेन शरेणाशु ताड़यामास वक्षसि ।
पपात विपिने घोरा वमन्ती रुधिरं बहु ॥ ३० ॥
ततोऽतिसुन्दरी यक्षी सर्वाभरणभूषिता ।
शापात्पिशाचतां प्राप्ता मुक्ता रामप्रसादतः ॥ ३१ ॥
नत्वा रामं परिक्रम्य गता रामाज्ञया दिवम् ॥ ३२ ॥
ततोऽतिहृष्टः परिरभ्य रामं मूर्द्धन्यवघ्राय विचिन्त्य किञ्चित् ।
सर्वास्त्रजालं सरहस्यमन्त्रं प्रीत्याऽभिरामाय ददौ मुनीन्द्रः ३३

इत्यध्यात्मरामायणे उमामहेश्वरसंवादे बालकाण्डे
पञ्चमः सर्गः ।

असहमानेति छेदः क्रोधसंमूर्च्छिता अतिक्रुद्धा ॥ २९—३२ ।
ततस्ताड़कावधकर्मवशादतिहृष्टो विश्वामित्रः किञ्चिद्विचिन्त्य रामगुरुत्वेन स्वस्यान्तकाले मुक्तिपदप्राप्तियोग्यतालाभं विचार्य्येत्यर्थः अभिरामाय रामाय सरहस्यमन्त्रमस्त्रजालं ददावित्यन्वयः ॥ ३३ ॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिवि॰ श्रीरामवर्मणः
कृतौ अध्यात्मरामायणे सेतौ बालकाण्डे
पञ्चमः सर्गः ।

षष्ठः सर्गः ।

श्रीमहादेव उवाच ।

तत्र कामाश्रमे रम्ये कानने मुनिसङ्कुले ।
उषित्वा रजनीमेकां प्रभाते प्रस्थिताः शनैः ॥ १ ॥
सिद्धाश्रमं गताः सर्वे सिद्धचारणसेवितम् ।
विश्वामित्रेण सन्दिष्टा मुनयस्तन्निवासिनः ॥ २ ॥
पूजां च महतीं चक्रू रामलक्ष्मणयोर्द्रुतम् ।
श्रीरामः कौशिकं प्राह मुने ! दीक्षां प्रविश्यताम् ॥ ३ ॥
दर्शयस्व महाभाग ! कुतस्तौ राक्षसाधमौ ।
तथेत्युक्त्वा मुनिर्यष्टुमारेभे मुनिभिः सह ॥ ४ ॥
मध्याह्ने दृश्याते तौ राक्षसौ कामरूपिणौ ।
मारीचश्च सुबाहुश्च वर्षन्तौ रुधिरास्थिनी ॥ ५ ॥
रामोऽपि धनुरादाय द्वौ बाणौ सन्दधे सुधीः ।
आकर्णान्तं समाकृष्य विससर्ज तयोः पृथक् ॥ ६ ॥

तत्र कामाश्रमे ताड़कावधस्थानभूते कामाश्रमाख्ये कामस्य रुद्रे-णानङ्गतायास्मारके वने ताड़काभयादेव मुनिसङ्कुले ॥ १ ॥

सिद्धाश्रमं विश्वामित्रवासस्थानं वामनाश्रमाख्यं तन्निवासिनः सिद्धाश्रमवासिनः ॥ २ । ३ ॥

कुतः आगच्छतः कस्मिन् काले इति शेषः ॥ ४ ॥

दृश्याते दृष्टौ ॥ ५ ॥

द्वौ बाणौ सन्दधे ईषत्कालान्तरत्वेऽपि युगपदिव ॥ ६ ॥

तत्रैकेषुस्तु मारीचं भ्रामयन् शतयोजनम्।
पातयामास जलधौ तदद्भुतमिवाभवत्॥ ७॥
द्वितीयोऽग्निमयो बाणः सुबाहुमजयत् क्षणात्।
अपरे लक्ष्मणेनाशु हतास्तदनुयायिनः॥ ८॥
पुष्पौघैराकिरन् देवा राघवं सहलक्ष्मणम्।
देवदुन्दुभयो नेदुस्तुष्टुवुः सिद्धचारणाः॥ ९॥
विश्वामित्रस्तु संपूज्य पूजार्हं रघुनन्दनम्।
अङ्के निवेश्य चालिङ्ग्य भक्त्या बाष्पाकुलेक्षणः॥ १०॥
भोजयित्वा सह भ्रात्रा रामं पक्वफलादिभिः।
पुराणवाक्यैर्मधुरैर्निनाय दिवसत्रयम्॥ ११॥
चतुर्थेऽहनि सम्प्राप्ते कौशिको राममब्रवीत्।
राम! राम! महायज्ञं द्रष्टुं गच्छामहे वयम्॥ १२॥
विदेहराजनगरे जनकस्य महात्मनः।
तत्र माहेश्वरं चापमस्ति न्यस्तं पिनाकिना॥ १३॥
द्रक्ष्यसि त्वं महासत्त्वं पूज्यसे जनकेन च।
इत्युक्त्वा मुनिभिस्ताभ्यां ययौ गङ्गासमीपगम्॥ १४॥
गौतमस्याश्रमं पुण्यं यत्राहल्या स्थिता तपः।

जलधौ तत्समीपे सम्पूर्णं शतयोजनम् 'क्षिप्तः सागरतोयषु' इति वाल्मीक्युक्तेः॥ ७॥
अग्निमयः आग्नेयास्त्रयुक्तः अजयत् हतवानिति यावत्॥ ८–१२॥
न्यस्तं तन्नगराधिपे राज्ञि कस्मिंश्चित् न्यासत्वेन स्थापितम्॥ १३॥
महासत्त्वमिति इदं गङ्गासमीपमिति गौतमाश्रमविशेषणम्॥ १४॥

दिव्यपुष्पफलोपेतपादपैः परिवेष्टितम् ॥ १५ ॥
मृगपक्षिगणैर्हीनं नानाजन्तुविवर्जितम् ।
दृष्ट्वोवाच मुनिं श्रीमान् रामो राजीवलोचनः ॥ १६ ॥
कस्यैतदाश्रमपदं भाति भास्वच्छुभं महत् ।
पत्रपुष्पफलैर्युक्तं जन्तुभिः परिवर्जितम् ॥ १७ ॥
आह्लादयति मे चेतो भगवन् ! ब्रूहि तत्त्वतः ॥ १८ ॥

विश्वामित्र उवाच ।

शृणु राम ! पुरावृत्तं गौतमो लोकविश्रुतः ।
सर्वधर्मभृतां श्रेष्ठस्तपसाराधयन् हरिम् ॥ १९ ॥
तस्मै ब्रह्मा ददौ कन्यामहल्यां लोकसुन्दरीम् ।
ब्रह्मचर्येण सन्तुष्टः शुश्रूषणपरायणाम् ॥ २० ॥
तया सार्द्धमिहावात्सीत् गौतमस्तपतां वरः ।
शक्रस्तु तां धर्षयितुमन्तरं प्रेप्सुरन्वहम् ॥ २१ ॥
कदाचिन्मुनिवेशेन गौतमे निर्गते गृहात् ।
धर्षयित्वाऽथ निरगात्त्वरितं मुनिरप्यगात् ॥ २२ ॥
दृष्ट्वा यान्तं स्वरूपेण मुनिः परमकोपनः ।

यत्राहल्या तप आस्थितेत्यन्वयः ॥ १५ ॥

नानाजन्तुभिः नानाप्रकारैः क्षुद्रप्राणिभिरपि हीनं गौतमशापादिति भावः ॥ १६ ॥ १७ । १८ ॥

तपसा हरिमाराधयन् स्थित इति शेषः ॥ १९ । २० ॥

अवात्सीत् वासं कृतवान् तामहल्यां धर्षयितुमुपभोक्तुमन्तरं छिद्रमवसरं प्रेप्सुरासीदिति शेषः ॥ २१ ॥

गौतमे गृहान्निर्गते सति मुनिवेशेन तद्गृहं प्रविश्य तामहल्यां धर्षयित्वोपभुज्य निरगात् मुनिरपि स्वगृहमगात् ॥ २२ ॥

पप्रच्छ कस्त्वं? दुष्टात्मन्! मम रूपधरोऽधमः।॥ २३॥
सत्यं ब्रूहि न चेद्भस्म करिष्यामि न संशयः।
सोऽब्रवीद्देवराजोऽहं पाहि मां कामकिङ्करम्॥ २४॥
कृतं जुगुप्सितं कर्म मया कुत्सितचेतसा।
गौतमः क्रोधताम्राक्षः शशाप त्रिदिवाधिपम्॥ २५॥
योनिसहस्रभट! दुष्टात्मन्! सहस्रभगवान् भव।
शप्त्वा तं देवराजानं प्रविश्य स्वाश्रमं द्रुतम्॥ २६॥
दृष्ट्वाऽहल्यां वेपमानां प्राञ्जलिं गौतमोऽब्रवीत्।
दुष्टे! त्वं तिष्ठ दुर्वृत्ते! शिलायामाश्रमे मम॥ २७॥
निराहारा दिवारात्रं तपः परममास्थिता।
आतपानिलवर्षादिसहिष्णुः परमेश्वरम्॥ २८॥
ध्यायन्ती राममेकाग्रमनसा हृदि संस्थितम्।
नानाजन्तुविहीनोऽयमाश्रमो मे भविष्यति॥ २९॥
एवं वर्षसहस्रेषु ह्यनेकेषु गतेषु च।
रामो दाशरथिः श्रीमानागमिष्यति सानुजः॥ ३०॥
यदा त्वदाश्रयशिलां पादाभ्यामाक्रमिष्यति।
तदैव धूतपापा त्वं रामं संपूज्य भक्तितः॥ ३१॥
परिक्रम्य नमस्कृत्य स्तुत्वा शापाद्विमोक्ष्यसे।
पूर्ववन्मम शुश्रूषां करिष्यसि यथा सुखम्॥ ३२॥

स्वरूपेण स्वस्यात्मनो गौतमस्य रूपेण इन्द्रात्वं ज्ञेतमेद्रूपधरत्वम्॥ २२॥

कामकिङ्करं कामपरवशतयाऽयुक्तकर्मकरमित्यर्थः॥ २४। २५।२६॥
शिलायामिति लीना भूत्वेति शेषः॥ २७। २८। २९॥
इयता समयेन शापान्तमाह एवमिति॥ ३०॥
त्वदाश्रयशिलां त्वदाश्रयभूतशिलाम्॥ ३१। ३२॥

इत्युक्त्वा गौतमः प्रागाद्धिमवन्तं नगोत्तमम् ।
तदाप्रभृत्यहल्या भूतानामदृश्या स्वाश्रमे शुभे ॥ ३३ ॥
तव पादरजःस्पर्शं काङ्क्षते पवनाशना ।
आस्तेऽद्यापि रघुश्रेष्ठ ! तपो दुष्करमास्थिता ॥ ३४ ॥
पावयस्व मुनेर्भार्यामहल्यां ब्रह्मणः सुताम् ।
इत्युक्त्वा राघवं हस्ते गृहीत्वा मुनिपुङ्गवः ॥ ३५ ॥
दर्शयामास चाहल्यामुग्रेण तपसा स्थिताम् ।
रामः शिलां पदा स्पृष्ट्वा तां चापश्यत्तपोधनाम् ॥ ३६ ॥
ननाम राघवोऽहल्यां रामोऽहमिति चाब्रवीत् ।
ततो दृष्ट्वा रघुश्रेष्ठं पीतकौशेयवाससम् ॥ ३७ ॥
चतुर्भुजं शङ्खचक्रगदापङ्कजधारिणम् ।
धनुर्बाणधरं रामं लक्ष्मणेन समन्वितम् ॥ ३८ ॥
स्मितवक्त्रं पद्मनेत्रं श्रीवत्साङ्कितवक्षसम् ।
नीलमाणिक्यसङ्काशं द्योतयन्तं दिशो दश ॥ ३९ ॥
दृष्ट्वा रामं रमानाथं हर्षविस्फारितेक्षणा ।
गौतमस्य वचः स्मृत्वा ज्ञात्वा नारायणं परम् ॥ ४० ॥
सम्पूज्य विधिवद्राममर्घ्यादिभिरनिन्दिता ।
हर्षाश्रुजलनेत्रान्ता दण्डवत्प्रणिपत्य सा ॥ ४१ ॥

तदादि तत्प्रभृति शुभे स्वाश्रमे अदृश्या आस्ते इति शेषः ॥ ३३ । ३४ ॥

चतुर्भुजमिति स्वस्य भगवत्त्वज्ञापनाय मध्ये मध्ये चतुर्भुजरूपं कौशल्यामिव दर्शयित्वा पुनर्द्विभुजरूपेणैव स्थित इत्याह धनुरिति ॥ ३८ । ३९ । ४० ॥

हर्षजन्यं यदश्रुरूपं जलं तद्युक्तौ नेत्रान्तौ यस्याः सा ॥ ४१ ॥

उत्थाय च पुनर्दृष्ट्वा रामं राजीवलोचनम्।
पुलकाङ्कितसर्वाङ्गा गिरा गद्गदयैलत ॥ ४२ ॥

अहल्योवाच।

अहो! कृतार्थाऽस्मि जगन्निवास! ते
पादाब्जसंलग्नरजःकणादहम्।
स्पृशामि यत्पद्मजशङ्करादिभि-
र्विमृग्यते रन्धितमानसैः सदा ॥ ४३ ॥
अहो! विचित्रं तव राम! चेष्टितं
मनुष्यभावेन विमोहयन्(१) जगत्।
चलस्यजस्रं चरणादिवर्जितः
सम्पूर्ण आनन्दमयोऽतिमायिकः ॥ ४४ ॥

ऐलत अस्तौषीत् ईड स्तुताविव्यस्माल्लङि व्यत्ययेन शपो लुगभावः डलयोरेकश्रुतित्वाड्डकारोच्चारणम् ॥ ४२ ॥

अहो इति ते तव पादाब्जसंलग्नरजःकणात् तत्सम्बन्धादहं कृतार्थाऽस्मि मुक्तपापाऽस्मि अहो इत्याश्चर्यं अपरं स्वस्य कृतार्थत्वे हेतुमाह यत्ते पादपद्मं पद्मजशङ्करादिभिस्तदलाभात् रन्धितमानसैः पीडितमानसैः सदा स्प्रष्टुं विमृग्यते तदहं स्पृशामि च कृतार्थाऽस्मि ॥ ४२ ॥

अहो इति आश्चर्यं विचित्रम् वास्तवस्वरूपाननुगुणं तव चेष्टितं यतः 'अपाणिपादो जवनो ग्रहीता' इति श्रुतेर्वस्तुतः चरणादिवर्जितोऽपि सन् संपूर्णः सर्वव्याप्तोऽपि सन् आनन्दमयः तत्स्वरूपोऽपि सन् जगत् आत्मनि मनुष्यगुणत्वादिमेन विमोहयन् मनुष्यभावेन चलसि क्रियामात्रोपलक्षणमिदम् विरोधाभासोऽत्र औपाधिकत्वेन तत्परिहारात् नन्वीदृशस्य मनुष्य भावः कथं तत्राह अतिमायिक इति सकलमायावञ्चकोऽत्युत्कृष्टः सकलजगद्रूपेण परिणमनसमर्थः महामायावानित्यर्थः एवं च शुद्धमायिकमेवेदं तव शरीरं चलनादिकं च नेतरवदिति भावः ॥ ४४ ॥

(१) विमोहितम् इत्यपि पाठः।

यत्पादपङ्कजपरागपवित्रगात्रा
भागीरथी भवविरिञ्चिमुखान् पुनाति ।
साक्षात् स एव मम दृग्विषयो यदास्ते
किं वर्ण्यते मम पुराकृतभागधेयम् ॥ ४५ ॥
मर्त्यावतारे मनुजाकृतिं हरिं
रामाभिधेयं रमणीयदेहिनम् ।
धनुर्धरं पद्मविशाललोचनं
भजामि नित्यं न परान् भजिष्ये ॥ ४६ ॥
यत्पादपङ्कजरजः श्रुतिभिर्विमृग्यं
यन्नाभिपङ्कजभवः कमलासनश्च ।
यन्नामसाररसिको भगवान् पुरारिः
तं रामचन्द्रमनिशं हृदि भावयामि ॥ ४७ ॥
यस्यावतारचरितानि विरिञ्चिलोके
गायन्ति नारदमुखा भवपद्मजाद्याः ।

यत्पादेति विष्णोः पादप्रसूतेति पुराणोक्तेः ॥ ४५ ॥

रमणीयदेहिनमित्यार्षम् ॥ ४६ ॥

यस्य पादो विश्वं 'पादोऽस्य विश्वाभूतानि' इतिश्रुतेः तदेव पङ्कजं तस्य रजः रजइव सारांशः यथा कमले सौगन्ध्यसम्पादकतयान्तर्विद्यमानरजः एव सारं एवं विश्वस्य सत्ताभानसम्पादकतया ब्रह्मैव सारांशत्वाद्रजस्त-च्छ्रुतिभिर्विमृग्यम् श्रुति शिरोरूपोपनिषद्गम्यत्वात्तस्येति भावः यन्नाम्नां मध्ये सारं नाम रामेति तस्य रसिकस्तद्विषयप्रीतिमान् भगवान् ऐश्वर्य-धर्मयशोलक्ष्मीज्ञानवैराग्यवान् षण्णामेषाम् 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भगइतीरणा' इत्युक्तेः 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्याञ्च स वाच्यो भग-वानिति' उक्तो वा ॥ ४७ ॥

विरिञ्चिलोके ब्रह्मलोके नारदमुखा ऋषयः भवपद्मजाद्या देवाश्च त्वद्-

आनन्दजाश्रुपरिषिक्तकुचाग्रसीमा
वागीश्वरी च तमहं शरणं प्रपद्ये ॥ ४८ ॥
सोऽयं परात्मा पुरुषः पुराण
एषः स्वयं ज्योतिरनन्त आद्यः ।
मायातनुं लोकविमोहिनीं यो
धत्ते परानुग्रह एष रामः ॥ ४९ ॥
अयं हि विश्वोद्भवसंयमाना-
मेकः स्वमायागुणबिम्बितो यः ।
विरिञ्चिविष्णीश्वरनामभेदान्
धत्ते स्वतन्त्रः परिपूर्ण आत्मा ॥ ५० ॥
नमोऽस्तु ते राम ! तवाङ्घ्रिपङ्कजं
श्रिया धृतं वक्षसि लालितं प्रियात् ।

रितश्चरणजानन्दाश्रुभिः सिक्ते कुचाग्रे चूचुके तथा सीमनि प्रान्तभागे च यया वागीश्वरी सरस्वती च गायतीति विपरिणामेनान्वयः ॥ ४८ ॥

सोऽयं रामः परात्मा परः सर्वजीवेभ्यः प्रकृतेश्च अधिक आत्मा पुरुषः पुरिशयनात्पुरुषः पुराणः सर्वदा विद्यमान इत्यर्थः एषः स्वयं ज्योतिः स्वप्रकाशः अनन्तोऽविनाशी आद्यः सर्वकारणं यः परानुग्रहे परेषां मादृशजनानामनुग्रहे कर्त्तव्यतया बुद्धिस्थे सति परमसुन्दरत्वादिगुणैर्लोकविमोहिनीं मायातनुं भक्तिरजनवत्माश्चभौतिकीं धत्ते स एव एषः राम 'उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पना' इति श्रुतेः ॥ ४९ ॥

अयं हीति विश्वस्य जगत उद्भव उत्पत्तिः संयमो नाशः ताभ्यां पालनमप्युपलक्ष्यते तेषां 'स्वतन्त्रः कर्त्ता' इति पाणिन्युक्तेः य एक एव परिपूर्णो व्यापक आत्मा स्वमायागुणेषु रजःसत्त्वतमःसु बिम्बितः प्रतिबिम्बितः सन् विरिञ्च्यादिनामभेदान् धत्ते रजगुणोपहितचैतन्यमेव ब्रह्मा सत्त्वगुणोपहितं विष्णुः तमोगुणयुक्तं रुद्र इति भावः ॥ ५० ॥

आक्रान्तमेकेन जगत्त्रयं पुरा
ध्येयं मुनीन्द्रैरभिमानवर्जितैः ॥ ५१ ॥

जगतामादिभूतस्त्वं जगत्त्वं जगदाश्रयः ।
सर्वभूतेष्वसंयुक्त एको भाति भवान् परः ॥ ५२ ॥

ओङ्कारवाच्यस्त्वं राम ! वाचामविषयः पुमान् ।
वाच्यवाचकभेदेन भवानेव जगन्मयः ॥ ५३ ॥

हे राम ! यत्तवांघ्रिपङ्कजं प्रियात् प्रियतयाच्छ्रिया वक्षसि धृतं लालितं च येनैकेन जगत्त्रयमाक्रान्तम् 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं' इति श्रुतेः यच्च त्यक्ताभिमानैर्मुनिभिर्ध्येयम् 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय' इति श्रुतेः तस्मै नमोऽस्त्वित्यर्थः ॥ ५१ ॥

जगतामिति आदिभूतः कारणत्वादिति भावः जगत्त्वं जगदनुवादेन त्वत्पदोपात्तब्रह्मात्मत्वं विधीयते 'सर्वं खल्विदं ब्रह्म' इति वत् तत्र जगतो मिथ्याभूतत्वेन ब्रह्मसामानाधिकरण्यानुपपत्तावपि तस्य बाध्यत्वेन ज-गद्बाधफलकत्वान्न दोषः एवञ्च जगदारोपाधिष्ठानं त्वमित्यर्थः तदेवाह जगदाश्रय इति 'इमाः प्रजाः सदायतनाः सत्प्रतिष्ठा' इति श्रुतेः वास्तव आश्रयाश्रयिभावो नास्त्येवेत्याह सर्वभूतेष्वसंयुक्त इति एवं च श्रुत्युक्तं तदधिष्ठानत्वमध्यारोपितमेवेति भावः अतएव भवानेकोऽद्वितीयो भाति प्रकाशते ॥ ५२ ॥

'ओंकारवाच्यस्त्वं तस्य वाचकः प्रणव' इति पातञ्जलसूत्रात् अव-तीत्योमिति निरुपाधिकरक्षकत्वगुणेन स तद्वाच्यः यद्वा अव ऊव मव ओमिति ब्रह्मविष्णुशिवात्मत्वेन स तद्वाच्यः तुर्यस्य नादास्यध्वनिना च शुद्धं ब्रह्मस्वरूपमत एव तत्र निबद्धं पक्षद्वयेऽपि यदापि सोऽहमिति शब्दे 'सकारार्थं हकारार्थं लोपयित्वा ततः परम् । सन्धिं कुर्यात्स्वरूपं ततोऽसौ प्रणवो भवेत्' इति रीत्या प्रणवसाधनं तदापि सोऽहमनुवादेन तत्तादिविधिष्ठान्तर्याम्यभेदप्रतिपादनात् सगुण एव तदर्थः यद्वा सकारहका-रलोपेन तत्त्वाहंत्वयोस्त्यागादखण्डमेव ब्रह्म तदर्थः अत्र पञ्चीकरणादिप्रका-रोऽन्यत्र विस्तरेण प्रपञ्चितः तर्हि किं सगुण एवाहं नेत्याह वाचाम-

कार्यकारणकर्त्तृत्वं फलसाधनभेदतः।
एको विभासि राम! त्वं मायया बहुरूपया ॥ ५४ ॥
त्वन्मायामोहितधियस्त्वां न जानन्ति तत्त्वतः।
मानुषं त्वाभिमन्यन्ते मायिनं परमेश्वरम् ॥ ५५ ॥
आकाशवत्त्वं सर्वत्र वहिरन्तर्गतोऽमलः।
असङ्गो ह्यचलो नित्यः शुद्धो बुद्धः सदव्ययः ॥ ५६ ॥
योषिन्मूढाऽहमज्ञा ते तत्त्वं जाने कथं? विभो!।
तस्मात्ते शतशो राम! नमस्कुर्य्यामनन्यधीः ॥ ५७ ॥

विषय इति निर्धर्मकत्वाच्छक्त्याद्यसम्भवेन स्वरूपतस्तज्जन्यबोधाविषय इत्यर्थः नन्वेवं 'तस्य वाचकः प्रणव' इति पातञ्जलसूत्रासङ्गतिस्तत्राह वाच्येति वाच्यवाचकभेदेन तत्कल्पनया भवानेव मायया जगन्मय इति कल्पितभेदेन कल्पितगुणैश्च तव वाच्यत्वं गृहीत्वा पारमर्षसूत्रोपपत्तिरिति भावः ॥ ५३ ॥

उक्तं जगन्मयत्वं मायिकमित्याह कार्येत्यादि कार्यं महत्तत्त्वादि कारणं मायारूपा मूलप्रकृतिः कर्तृत्वं तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम् फलं स्वर्गनरकादिसाधनं क्रत्वादि वेदादि एतद्भेदतः एकोऽपि त्वं बहुरूपया मायया उक्तभेदैर्युक्त इव भासि उक्तञ्च विष्णुपुराणे 'स एव मूलप्रकृतिर्व्यक्तरूपी जगच्च सः। तस्मिन्नेव लयं सर्वं याति तत्र च तिष्ठति। कर्त्ता क्रियाणां स च ईज्यते क्रतुः स एव तत्कर्मफलञ्च तस्य यत्। स्रगादिवत्साधनमप्यशेषतो हरेर्न किञ्चिद्व्यतिरिक्तमस्ति' इति ॥ ५४ ॥

नन्वीदृशो यद्यहं तर्हि लोको मां तथा किमिति न जानातीत्यत्राह त्वन्मायेति त्वद्विषयया माययेत्यर्थः तदुक्तं विष्णुपुराणे 'सोऽहं सत्त्वं जगच्चेदं सदेवासुरमानुषम्। अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिन' इति ॥ ५५ ॥

ननु तर्हि तादृश एवाहं नेत्याह आकाशवदिति अचलोऽक्रियः बुद्धो ज्ञानरूपः सत् सत्तारूपः नित्यत्वमनादित्वं अव्ययत्वमनन्तत्वम् ॥ ५६ ॥

देव ! मे यत्र कुत्रापि स्थिताया अपि सर्वदा ।
त्वत्पादकमले सक्ता भक्तिरेव सदास्तु मे ॥ ५८ ॥
नमस्ते पुरुषाध्यक्ष ! नमस्ते भक्तवत्सल ! ।
नमस्तेऽस्तु हृषीकेश ! नारायण ! नमोऽस्तु ते ॥ ५९ ॥
भवभयहरमेकं भानुकोटिप्रकाशं
करधृतशरचापं कालमेघावभासम् ।
कनकरुचिरवस्त्रं रत्नवत्कुण्डलाढ्यं
कमलविशदनेत्रं सानुजं राममीडे ॥ ६० ॥
स्तुत्वैवं पुरुषं साक्षाद्राघवं पुरतः स्थितम् ।
परिक्रम्य प्रणम्याशु सानुज्ञाता ययौ पतिम् ॥ ६१ ॥
अहल्यया कृतं स्तोत्रं यः पठेद्भक्तिसंयुतः ।
स मुच्यतेऽखिलैः पापैः परं ब्रह्माधिगच्छति ॥ ६२ ॥

मूढाः तमोगुणप्रधाना अतएवाज्ञा नमस्कुर्यां त्वद्रूपज्ञानायेति भावः ॥ ५७ ॥

सक्ता निरन्तरा ॥ ५८ ॥

पुरुषाध्यक्ष ! सकलपुरुषसाक्षिन् हृषीकेश हृषीकाणामिन्द्रियाणामधिष्ठातः हृष्यन्ति विषयैरिति 'हृषीकाणि इन्द्रियाणि हृषीकेशं भवेत्तु च' इति विष्णुधर्मोक्तेः ततोऽहल्ययैतन्नाम स्मृतं नारं जीवसमूहोऽयनं स्थानम् यस्यान्तर्यामित्वात्तत्रस्थितत्वात् नारायणः 'नयतीति नरः प्रोक्तः परमात्मा सनातनः । नराज्जातानि तत्त्वानि नाराणीति ततो विदुः । तान्येव चायनं तस्य तेन नारायणः स्मृत' इति तु मनुः आपो नारास्तत्र स्थितत्वाद्वा नारायणः अस्य मन्त्रस्य संसारभयनाशकत्वात् स्मरणम् तदुक्तं नृसिंहपुराणे 'नारायणाय नम इत्ययमेव सत्यः संसारघोरविषसंहरणाय मन्त्र' इति ॥ ५९ ॥

तदेवाह भवभयेति भवभयं संसारभयम् कालमेघो नीलमेघः ॥ ६० ॥

साऽहल्या पृतिं गौतमम् ॥ ६१ । ६२ । ६३ । ६४ ॥

पुत्रार्थी पठेद्भक्त्या रामं हृदि निधाय च।
संवत्सरेण लभते वन्ध्या अपि सुपुत्रकम्॥ ६३ ॥
सर्वान् कामानवाप्नोति रामचन्द्रप्रसादतः॥ ६४ ॥
ब्रह्मघ्नो गुरुतल्पगोऽपि पुरुषः स्तेयी सुरापोऽपि वा
मातृभ्रातृविहिंसकोऽपि सततं भोगैकबद्धातुरः।
नित्यं स्तोत्रमिदं जपन् रघुपतिं भक्त्या हृदिस्थं स्मरन्
ध्यायन्मुक्तिमुपैति किं पुनरसौ स्वाचारयुक्तो नरः॥६५॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे बालकाण्डे
षष्ठः सर्गः।

मातृभ्रात्रित्यत्रानङ्भाव आर्षः भोगैकबद्धः आतुर इति च्छेदः सन्धिरार्षः॥ ६५॥

इति श्रीमत्युवराजविपद्धरणसमर्थत्वादिवि० श्रीरामवर्मणः
कृतावध्यात्मरामायणसेतौ बालकाण्डे
षष्ठः सर्गः।

---

सप्तमः सर्गः ।

सूत उवाच ।

विश्वामित्रोऽथ तं प्राह राघवं सहलक्ष्मणम् ।
गच्छामो वत्स ! मिथिलां जनकेनाभिपालिताम् ॥१॥
दृष्ट्वा क्रतुवरं पश्चादयोध्यां गन्तुमर्हसि ।
इत्युक्त्वा प्रययौ गङ्गामुत्तर्तुं सहराघवः ।
तस्मिन् काले नाविकेन निषिद्धो रघुनन्दनः ॥ २ ॥

नाविक उवाच ।

क्षालयामि तव पादपङ्कजं नाथ ! दारुदृषदोः किमन्तरम् ।
मानुषीकरणचूर्णमस्ति ते पादयोरिति कथा प्रथीयसी ॥३॥
पादाम्बुजं ते विमलं हि कृत्वा पश्चात्परन्तीरमहं नयामि ।
नोचेत्तरिः सद्युवती मलेन स्याच्चेद्विभो ! विद्धि कुटुम्बहानिः(१)
इत्युक्त्वा क्षालितौ पादौ परं तीरं ततो गताः ।
कौशिको रघुनाथेन सहितो मिथिलां ययौ ॥ ५ ॥
विदेहस्य पुरं प्रातर्क्ष्ये षिवाटं समाविशत् ।

विश्वामित्र इति । वयं गच्छाम इति प्राहेत्यन्वयः बहुवचनादेव रामलक्ष्मणयोरपि गमनकर्तृत्वम् ॥ १ ॥

उत्तर्तुमित्यागमशासनानित्यत्वादिड़भावः नाविकेन नौतारकेण ॥२

दारुदृषदोः काष्ठपाषाणयोः मानुषीकरणचूर्णमिति शिलारूपाऽहल्यायाः पादस्पर्शमात्रेण मानुषदेहसम्पादनात् ॥ ३—५ ॥

प्रातर्विदेहस्य पुरं गत्वेति शेषः कृषिवाटं कृषिवासस्थानमार्गम् ॥६॥

---

(१) श्लोकोऽयमधिकः कुत्रचित् दृश्यते ।

प्राप्तं कौशिकमाकर्ण्य जनकोऽतिमुदान्वितः ॥ ६ ॥
पूजाद्रव्याणि संगृह्य सोपाध्यायः समाययौ ।
दण्डवत्प्रणिपत्याथ पूजयामास कौशिकम् ॥ ७ ॥
पप्रच्छ राघवौ दृष्ट्वा सर्वलक्षणसंयुतौ ।
द्योतयन्तौ दिशः सर्वाश्चन्द्रसूर्याविवापरौ ॥ ८ ॥
कस्यैतौ नरशार्दूलौ पुत्रौ देवसुतोपमौ ।
मनः प्रीतिकरौ मेऽद्य नरनारायणाविव ॥ ९ ॥
प्रत्युवाच मुनिः प्रीतो हर्षयन् जनकं तदा ।
पुत्रौ दशरथस्यैतौ भ्रातरौ रामलक्ष्मणौ ॥ १० ॥
मखसंरक्षणार्थाय मया नीतौ पितुः पुरात् ।
आगच्छन् राघवो मार्गे ताड़कां विघ्नघातिनीम् ॥ ११ ॥
शरेणैकेन हतवान्नोदितो मेऽतिविक्रमः ।
ततो ममाश्रमं गत्वा मम यज्ञविहिंसकान् ॥ १२ ॥
सुबाहुप्रमुखान् हत्वा मारीचं सागरेऽक्षिपत् ।
ततो गङ्गातटे पुण्ये गौतमस्याश्रमे शुभे ॥ १३ ॥
गत्वा तत्र शिलारूपा गौतमस्य वधूः स्थिता ।
पादपङ्कजसंस्पर्शात् कृता मानुषरूपिणी ॥ १४ ॥
दृष्ट्वाऽहल्यां नमस्कृत्य तया सम्यक् प्रपूजितः ।
इदानीं द्रष्टुकामस्ते गृहे माहेश्वरं धनुः ॥ १५ ॥

सोपाध्यायः गौतमपुत्रशतानन्दसहितः ॥ ७-११ ॥
मे नोदितः मया प्रेरित इत्यर्थः ॥ १२—१४ ॥
ते गृहे पूजितं धनुर्द्रष्टुकाम इदानीमागत इत्यन्वयः ॥ १५ ॥
तत्र सर्वैः राजभिर्दृष्टं दृष्टमेव मत्वाह दृष्टं कृतमित्यनुषज्यते अनेन श्रुतमित्यर्थः ॥ १६ ॥

पूजितं राजभिः सर्वैर्दृष्टमित्यनुशुश्रुवे।
अतो दर्शय राजेन्द्र ! शैवञ्चापमनुत्तमम् ॥ १६ ॥
दृष्ट्वाऽयोध्यां जिगमिषुः पितरं द्रष्टुमिच्छति।
इत्युक्तो मुनिना राजा पूजार्हाविति पूजया ॥ १७ ॥
पूजयामास धर्मज्ञो विधिदृष्टेन कर्मणा।
ततः संप्रेषयामास मन्त्रिणं बुद्धिमत्तरम् ॥ १८ ॥

जनक उवाच।

शैवमानाय विश्वेशचापं रामाय दर्शय।
ततो गते मन्त्रिवरे राजा कौशिकमब्रवीत्।
यदि रामो धनुर्धृत्वा कोट्यामारोपयेद्गुणम् ॥ १९ ॥
तदा मयाऽऽत्मजा सीता दीयते राघवाय हि।
तथेति कौशिकोऽप्याह रामं संवीक्ष्य सस्मितम् ॥ २० ॥
शीघ्रं दर्शय चापाग्र्यं रामायामिततेजसे।
एवं ब्रुवति मौनीशे आगताश्चापवाहकाः ॥ २१ ॥
चापं गृहीत्वा बलिनः पञ्चसाहस्रसंख्यकाः।
घण्टाशतसमायुक्तं मणिवज्रादिभूषितम् ॥ २२ ॥
दर्शयामास रामाय मन्त्री मन्त्रवतां वरः।
दृष्ट्वा रामः प्रहृष्टात्मा बध्वा परिकरं दृढम् ॥ २३ ॥

दृष्ट्वास्य धनुः कर्म यतः पितरं द्रष्टुमिच्छत्यतोऽयोध्यां जिगमिषुरित्यन्वयः ॥ १७ ॥

मन्त्रिणं सुदामाख्यम् ॥ १८ । १९ ॥

कौशिकोऽपि तथेति उक्त्वा वक्ष्यमाणमाहेत्यन्वयः ॥ २० ॥

मौनीशे ऋषिश्रेष्ठे ॥ २१ । २२ ॥

परिकरं कटिवस्त्रबन्धम् ॥ २३ ॥

गृहीत्वा वामहस्तेन लीलया तोलयन् धनुः।
आरोपयामास गुणं पश्यत्स्वखिलराजसु ॥ २४ ॥
ईषदाकर्षयामास पाणिना दक्षिणेन सः।
बभञ्जाखिलहृत्सारो दिशः शब्देन पूरयन् ॥ २५ ॥
दिशश्च विदिशश्चैव स्वर्गं मर्त्यं रसातलम्।
तदद्भुतमभूत्तत्र देवानां दिवि पश्यताम् ॥ २६ ॥
आच्छादयन्तः कुसुमैर्देवाः स्तुतिभिरीडिरे।
(१)देवदुन्दुभयो नेदुः नन्नृतुश्चाप्सरोगणाः ॥ २७ ॥
द्विधा भग्नं धनुर्दृष्ट्वा राजालिङ्ग्य रघूद्वहम्।
विस्मयं लेभिरे सीतामातरोऽन्तःपुराजिरे ॥ २८॥
सीता स्वर्णमयीं मालां गृहीत्वा दक्षिणे करे।
स्मितवक्त्रा स्वर्णवर्णा सर्वाभरणभूषिता ॥ २९ ॥
मुक्ताहारैः कर्णपत्रैः क्वणच्चरणनूपुरा।
दुकूलपरिसंवीता वस्त्रान्तर्व्यञ्जितस्तनी ॥ ३० ॥

गुणं ज्याम् ॥ २४ ॥

अखिलहृत्सारः अखिलप्राणिनां हिरण्यगर्भादीनां सकलब्रह्माण्ड-स्थानां हृत्सारो बलं यस्य सः ॥ २५ ॥

मर्त्यं मनुष्यलोकम् ॥ २६ । २७ ॥

रघूद्वहमालिङ्ग्य राजाऽतिहृष्टो जात इति शेषः सीतामातरो जनकपत्न्यः अन्तःपुराजिरे तदङ्गणे आगताः किमिदमिति विस्मयवशा-दिति भावः विस्मयमद्भुतरसं लेभिरे प्राप्ताः ॥ २८ ॥

स्मितवक्त्रा स्मितपदे अर्शाद्यच् स्मितयुक्तं वक्त्रं यस्याः सा ॥ २९ ॥

कर्णपत्रैः कर्णभूषणैः उपलक्षितेति शेषः चलितेन क्वणत् नूपुरं यस्याः सा आर्षः समासः ॥ ३० ॥

---

(१) देवाः इत्यशुद्धः पाठः क्वचिद् दृश्यते।

रामस्योपरि निक्षिप्य स्मयमाना मुदं ययौ ।
ततो मुमुदिरे सर्वे राजदाराः स्वलङ्कृतम् ॥ ३१ ॥
गवाक्षजालरन्ध्रेभ्यो दृष्ट्वा लोकविमोहनम् ।
ततोऽब्रवीन्मुनिं राजा सर्वशास्त्रविशारदः ॥ ३२ ॥
भो ! कौशिक मुनिश्रेष्ठ ! पत्रं प्रेषय सत्वरम् ।
राजा दशरथः शीघ्रमागच्छतु सपुत्रकः ॥ ३३ ॥
विवाहार्थं कुमाराणां सदारः सह मन्त्रिभिः ।
तथेति प्रेषयामास दूतांस्त्वरितविक्रमान् ॥ ३४ ॥
ते गत्वा राजशार्दूलं रामश्रेयो न्यवेदयन् ।
श्रुत्वा रामकृतं राजा हर्षेण महताप्लुतः ॥ ३५ ॥
मिथिलागमनार्थाय त्वरयामास मन्त्रिणः ।
गच्छन्तु मिथिलां सर्वे गजाश्वरथपत्तयः ॥ ३६ ॥
रथमानय मे शीघ्रं गच्छाम्यद्यैव मा चिरम् ।
वशिष्ठस्त्वग्रतो यातु सदारः सहितोऽग्निभिः ॥ ३७ ॥
राममातृः समादाय मुनिर्मे भगवान् गुरुः ।

निक्षिप्येत्यस्य मालाकर्मस्वलंकृतं लोकविमोहनं रामं दृष्ट्वा मुमुदिरे इत्यन्वयः ॥ ३१ । ३२ ॥

पत्रं सन्देशप्रापकलेखवत्पत्रसहितं दूतमित्यर्थः शीघ्रं यथागच्छति तथा पत्रं प्रेषयेत्यन्वयः सपुत्रकः भरतादिसहितः ॥ ३३ । ३४ ॥

राजशार्दूलं दशरथं रामश्रेयः विवाहरूपम् रामकृतं धनुर्भङ्गम् ॥ ३५ ॥

गजाश्वरथपत्तय इति 'मध्यमपदलोपी समासः द्वन्द्वश्च' इति सूत्रे सेनाङ्गशब्देन रथिकादीनामेव ग्रहणं न रथादीनामतोऽत्र न दोषः अतएव 'संग्रामं हस्त्यश्वरथपदातिभिः' इति श्रुत्वाच् तरञ्जलस्य भाष्यप्रयोगः सङ्गच्छत इत्यन्ये ॥ ३६ । ३७ ॥

एवं प्रस्थाप्य सकलं राजर्षिर्विपुलं रथम् ॥ ३८ ॥
महत्या सेनया सार्द्धमारुह्य त्वरितो ययौ ।
आगतं राघवं श्रुत्वा राजा हर्षसमाकुलः ॥ ३९ ॥
प्रत्युज्जगाम जनकः शतानन्दपुरोधसा ।
यथोक्तपूजया पूज्यं पूजयामास सत्कृतम् ॥ ४० ॥
रामस्तु लक्ष्मणेनाशु ववन्दे चरणौ पितुः ।
ततो हृष्टो दशरथो रामं वचनमब्रवीत् ॥ ४१ ॥
दिष्ट्या पश्यामि ते राम ! मुखं फुल्लाम्बुजोपमम् ।
मुनेरनुग्रहात् सर्वं सम्पन्नं मम शोभनम् ॥ ४२ ॥
इत्युक्त्वाघ्राय मूर्द्धानमालिङ्ग्य च पुनः पुनः ।
हर्षेण महता विष्टो ब्रह्मानन्दं गतो यथा ॥ ४३ ॥
ततो जनकराजेन मन्दिरे सन्निवेशितः ।
शोभने सर्वभोगाढ्ये सदारः ससुतः सुखी ॥ ४४ ॥
ततः शुभे दिने लग्ने सुमुहूर्त्ते रघूत्तमम् ।
आनयामास धर्मज्ञो रामं सभ्रातृकं तदा ॥ ४५ ॥
रत्नस्तम्भसुविस्तारे सुविताने सुतोरणे ।
मण्डपे सर्वशोभाढ्ये मुक्तापुष्पफलान्विते ॥ ४६ ॥

राममातॄः कौशल्याद्याः प्रस्थाप्य नगराद्बहिः संप्रेष्य रथमारुह्य तत्रैव सेनया सार्द्धं ययावित्यन्वयः ॥ ३८ ॥ ॥ ३९ ॥

शतानन्दपुरोधसा सहित इति शेषः यथोक्तपूजया यथाशास्त्रोक्तपूजया ॥ ४० ॥ ४१ ॥

फुल्लाम्बुजोपमं विकसितकमलसदृशम् ॥ ४२ ॥

ब्रह्मानन्दं गतः प्राप्तः समाधाविति शेषः ॥ ४३ ॥ ४४ ॥ ४५ ॥

वितानं नाम ततकुथाच्छादनं मण्डपोऽत्र विवाहशाला ॥ ४६ ॥

वेदविद्भिः सुसम्बाधे ब्राह्मणैः स्वर्णभूषितैः ।
सुवासिनीभिः परितो निष्ककण्ठीभिरावृते ॥ ४७ ॥
भेरीदुन्दुभिनिर्घोषैर्गीतनृत्यैः समाकुले ।
दिव्यरत्नान्विते स्वर्णपीठे रामं न्यवेशयत् ॥ ४८ ॥
वशिष्ठं कौशिकं चैव शतानन्दः पुरोहितः ।
यथाक्रमं पूजयित्वा रामस्योभयपार्श्वयोः ॥ ४९ ॥
स्थापयित्वा स तत्राग्निं ज्वालयित्वा यथाविधि ।
सीतामानीय शोभाढ्यां नानारत्नविभूषिताम् ॥ ५० ॥
सभार्य्यो जनकः प्रायाद्रामं राजीवलोचनम् ।
पादौ प्रक्षाल्य विधिवत्तदपो मूर्ध्न्यधारयत् ॥ ५१ ॥
या धृता मूर्ध्नि शर्वेण ब्रह्मणा मुनिभिः सदा ।
ततः सीतां करे धृत्वा साक्षतोदकपूर्वकम् ॥ ५२ ॥
रामाय प्रददौ प्रीत्या पाणिग्रहविधानतः ।
सीता कमलपत्राक्षी स्वर्णमुक्तादिभूषिता ॥ ५३ ॥

सुसम्बाधे संकीर्णे सुवासिन्यो जीवद्भर्तृकाः 'पदकोऽस्त्रीयथोरक्को निष्क वक्षोविभूषणे' इति कोशाद्वक्षोविभूषणं निष्कं तत्कण्ठे यासां ताभिः ॥ ४० ॥

भेरीदुन्दुभी वाद्यविशेषौ विततस्विततयदीर्घा ताम्रनिर्मिता चर्मच्छन्ना चतुर्विंशत्यङ्गुलवदनद्वया भेरी वस्तुतस्समवन्द्वकाननो दुन्दुभिरिति वदन्ति रत्नान्विते रत्नघटिते ४८ ॥

रामस्योभयपार्श्वयोः स्थितं वशिष्ठं कौशिकं च यथाक्रमं पूर्वं वशिष्ठं ततः कौशिकमिति क्रमेण पूजयित्वेत्यन्वयः ॥ ४९ ॥

सीतामानीय अग्रे कृत्वा ॥ ५० ॥

सभार्य्यो जनको रामं प्रति प्रायात् इत्यन्वयः ॥ ५१ ॥

याः गङ्गारूपाः ॥ ५२ ॥

दीयते मे सुता तुभ्यं प्रीतो भव रघूत्तम!।
इति प्रीतेन मनसा सीतां रामकरेऽर्पयन् ॥ ५४ ॥
मुमोद जनको लक्ष्मीं क्षीराब्धिरिव विष्णवे।
ऊर्मिलां चौरसीं कन्यां लक्ष्मणाय ददौ मुदा ॥ ५५ ॥
तथैव श्रुतकीर्त्तिञ्च माण्डवीं भ्रातृकन्यके।
भरताय ददावेकां शत्रुघ्नायापरां ददौ ॥ ५६ ॥
चत्वारो दारसम्पन्ना भ्रातरः शुभलक्षणाः।
विरेजुः प्रभया सर्वे लोकपाला इवापरे ॥ ५७ ॥
ततोऽब्रवीद्वशिष्ठाय विश्वामित्राय मैथिलः।
जनकः स्वसुतोदन्तं नारदेनाभिभाषितम् ॥ ५८ ॥
यज्ञभूमिविशुद्ध्यर्थं कर्षतो लाङ्गलेन मे।
सीतामुखात् समुत्पन्ना कन्यका शुभलक्षणा ॥ ५९ ॥
तामहं प्राक्षमहं प्रीत्या पुत्रिकाभावभाविताम्।
अर्पिता प्रियभार्य्यायै शरच्चन्द्रनिभानना ॥ ६० ॥
एकदा नारदोऽभ्यागाद्विविक्ते मयि संस्थिते।
रणयन्महतीं वीणां गायन्नारायणं विभुम् ॥ ६१ ॥

सीतानाम्नी मे सुता तुभ्यं दीयते प्रीतो भवेति अनेन निष्कामतया भगवत्प्रीतये दानं कृतवानिति सूच्यते ॥ ५४ ॥

रामकरे सीतामर्पयन् जनको लक्ष्मीं विष्णवेऽर्पयन् समुद्र इव मुमोद ॥ ५५ ॥

भ्रातृकन्यके कुशध्वजकन्यके ॥ ५६ ॥ ५७ ॥ ५८ ॥

सीतामुखात् लाङ्गलाग्रकृतभूविवरात् ॥ ५९ ॥

पुत्रिकाभावेन भावितां ध्याताम् ॥ ६० ॥

महतीं महतीसंज्ञां "विश्वावसोस्तु बृहती तुम्बरोस्तु कलावती महती

पूजितः सुखमासीनो मामुवाच सुखान्वितः ।
शृणुष्व वचनं गुह्यं तवाभ्युदयकारणम् ॥ ६२ ॥
परमात्मा हृषीकेशो भक्तानुग्रहकाम्यया ।
देवकार्य्यार्थसिद्ध्यर्थं रावणस्य बधाय च ॥ ६३ ॥
जातो राम इति ख्यातो मायामानुषवेशधृक् ।
आस्ते दाशरथिर्भूत्वा चतुर्धा परमेश्वरः ॥ ६४ ॥
योगमायापि सीतेति जाता वै तव वेश्मनि ।
अतस्त्वं राघवायैव देहि सीतां प्रयत्नतः ॥ ६५ ॥
नान्येभ्यः पूर्वभार्य्यैषा रामस्य परमात्मनः ।
इत्युक्त्वा प्रययौ देवगतिं देवमुनिस्तदा ॥ ६६ ॥
तदारभ्य मया सीता विष्णोर्लक्ष्मीर्विभाव्यते ।
कथं मया राघवाय दीयते जानकी शुभा ॥ ६७ ॥
इति चिन्तासमाविष्टः कार्य्यमेकमचिन्तयम् ।
मत्पितामहगेहे तु न्यासभूतमिदं धनुः ॥ ६८ ॥
ईश्वरेण पुरा क्षिप्तं पुरदाहादनन्तरम् ।
धनुरेतत्पणं कार्य्यमितिचिन्त्य कृतं तथा ॥ ६९ ॥
सीतापाणिग्रहार्थाय सर्वेषां माननाशनम् ।

नारदस्य स्यात् रखल्वास्तु कष्वपि" इत्युक्तेः ॥ ६१ ॥ ६२ ॥ ६३ ॥

चतुर्धा रामलक्ष्मणभरतशत्रुघ्नरूपेण ॥ ६४ ॥ ६५ ॥

पूर्वभार्य्या अनादिशक्तिः सैव विराड्रूपभरणादस्य भार्या देवगतिं देवलोकमार्गम् ॥ ६६ ॥ ६७ ॥

पितामहशब्देन तदादयो वंश्याः ॥ ६८ ॥

इतिचिन्त्येत्येकं पदमिति लयपो नानुपपत्तिः इति विचार्य्य तथाकृतं पणभूतं तत्कृतमित्यर्थः ॥ ६९ ॥ ७० ॥

त्वत्प्रसादान्मुनिश्रेष्ठ ! रामो राजीवलोचनः ॥ ७० ॥
आगतोऽत्र धनुर्द्रष्टुं फलितो मे मनोरथः ।
अद्य मे सफलं जन्म राम ! त्वां सह सीतया ॥ ७१ ॥
एकासनस्थं पश्यामि भ्राजमानं रविं यथा ।
त्वत्पादाम्बुधरो ब्रह्मा सृष्टिचक्रप्रवर्त्तकः ॥ ७२ ॥
बलिस्त्वत्पादसलिलं धृत्वाभूद्दिविजाधिपः ।
त्वत्पादपांशुसंस्पर्शादहल्या भर्तृशापतः ॥ ७३ ॥
सद्य एव विनिर्मुक्ता कोऽन्यस्त्वत्तोऽधिरक्षिता ॥ ७४ ॥

यत्पादपङ्कजपरागसुरागयोगि-
वृन्दैर्जितं भवभयं जितकालचक्रैः ।
यन्नामकीर्त्तनपराजितदुःखशोकाः
देवास्तमेव शरणं सततं प्रपद्ये ॥ ७५ ॥

इति स्तुत्वा नृपः प्रादाद्राघवाय महात्मने ।
दीनाराणां कोटिशतं रथानामयुतं तदा ॥ ७६ ॥

यत्पश्यामि तन्मे जन्मसफलमित्यन्वयः ॥ ७१ ॥

त्वत्पादाम्बु गङ्गारूपम् ॥ ७२ ॥ ७३ ॥

अधिरक्षिता अधिको रक्षितेत्यर्थः ॥ ७४ ॥

यस्य रामस्य पादपङ्कजपरागेषु सुतरां रागो येषां तैर्योगिवृन्दैर्भवभयं संसारभयं जितं देवाः यन्नामकीर्त्तनपराजितदुःखशोकाः जाता इति शेषः ॥ ७५ ॥

दीनाराणामिति 'दीनारो रूपकैरष्टाभिर्मत्या परिकीर्त्तितः । सुवर्णसप्ततितमो भागो रूपक ईष्यत' इति विष्णुगुप्तोक्तेः कात्यायनस्तु 'कार्षापणैः सप्तभिस्तु विज्ञेयो धान्यको बुधैः । ते द्वादश सुवर्णस्तु दीनारस्तु त्रिकः स्मृतं' इति 'कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तते । पणैर्निबद्धः

अश्वानां नियुतं प्रादात् गजानां षट्शतं तथा ।
पत्तीनां लक्षमेकं तु दासीनां त्रिशतं ददौ ॥ ७७ ॥
दिव्याम्बराणि हारांश्च मुक्तारत्नमयोज्ज्वलान् ।
सीतायै जनकः प्रादात्प्रीत्या दुहितृवत्सलः ॥ ७८ ॥
वशिष्ठादीन् सुसम्पूज्य भरतं लक्ष्मणं तथा ।
पूजयित्वा यथा न्यायं तथा दशरथं नृपम् ॥ ७९ ॥
प्रस्थापयामास नृपो राजानं रघुसत्तमम् ।
सीतामालिङ्ग्य रुदतीं मातरः साश्रुलोचनाः ॥ ८० ॥
श्वश्रुशुश्रूषणपरा नित्यं राममनुव्रता ।
पातिव्रत्यमुपालम्ब्य तिष्ठ वत्से ! यथासुखम् ॥ ८१ ॥
प्रयाणकाले रघुनन्दनस्य भेरीमृदङ्गानकतूर्य्यघोषः ।
स्वर्वासिभेरीघनतूर्य्यशब्दैः संमूर्च्छितो भूतभयङ्करोऽभूत् ॥८२॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
बालकाण्डे सप्तमः सर्गः ।

पूर्वस्यां षोडशैवपण्याः स तु' इति षोडशपणरूप्य' दशिणस्यः कार्षापण इत्यर्थः अयुतं दशसहस्रम् ॥ ७६ ॥

नियुतं दशलक्षम् ॥ ७७ ॥

मुक्तारत्नमयोज्ज्वलान् हारानित्यन्वयः ॥ ७८ ॥

पूजयित्वा यथोचितधनदानैरित्यर्थः ॥ ७९ ॥ ८० ॥

पातिव्रत्यं पुराणाद्युक्तपतिव्रताधर्मम् भर्त्रादिवाक्यानुल्लङ्घनादिरूपम् तत्र तिष्ठ त्वेवं शिक्षयामासुरित्यर्थः ॥ ८१ ॥

आनको दुन्दुभिः तत्प्रभृतितूर्य्यसम्बन्धिघोषः स्वर्वासिभेर्य्यादिशब्दैः संमूर्च्छितो मिश्रितः सन् प्राणिनां भयङ्करोऽभूत् एवं कांस्यतालादि ॥ ८२॥

बालकाण्डे सप्तमः सर्गः ।

———

# अष्टमः सर्गः ।

---

सूत उवाच ।

अथ गच्छति श्रीरामे मैथिल्याद्योजनत्रयम् ।
निमित्तान्यतिघोराणि ददर्श नृपसत्तमः ॥ १ ॥
नत्वा वशिष्ठं पप्रच्छ किमिदं ? मुनिपुङ्गव !
निमित्तानीह दृश्यन्ते विषमाणि समन्ततः ॥ २ ॥
वशिष्ठस्तमथो प्राह भयमागामि सूच्यते ।
पुनरप्यभयं तेऽद्य शीघ्रमेव भविष्यति ॥ ३ ॥
मृगाः प्रदक्षिणं यान्ति पश्य त्वां शुभसूचकाः ।
इत्येवं वदतस्तस्य ववौ घोरतरोऽनिलः ॥ ४ ॥
मुष्णंश्चक्षूंषि सर्वेषां पांशुवृष्टिभिरर्दयन् ।
ततो व्रजन्ददर्शाग्रे तेजोराशिमुपस्थितम् ॥ ५ ॥
कोटिसूर्य्यप्रतीकाशं विद्युत्पुञ्जसमप्रभम् ।
तेजोराशिं ददर्शाथ जामदग्न्यं प्रतापवान् ॥ ६ ॥
नीलमेघनिभं पांशुं जटामण्डलमण्डितम् ।
धनुःपरशुपाणिं च साक्षात्कालमिवान्तकम् ॥ ७ ॥
कार्त्तवीर्य्यान्तकं रामं दृप्तक्षत्रियमर्दनम् ।
प्राप्तं दशरथस्याग्रे कालमृत्युमिवापरम् ॥ ८ ॥

मैथिलात् मैथिलपुरात् घोराणि निमित्तानि अशुभसूचका उत्पाताः ॥ १ ॥ २ ॥ ३ ॥

मृगास्त्वां प्रदक्षिणं यान्ति पश्येत्यन्वयः ॥ ४ ॥

मुष्णन् दर्शनशक्तिरहितानि कुर्वन् ॥ ५ ॥ ६ ॥ ७ ॥

तं दृष्ट्वा भयसंत्रस्तो राजा दशरथस्तदा ।
अर्घ्यादिपूजां विस्मृत्य त्राहि त्राहीति चाब्रवीत् ॥ ९ ॥
दण्डवत्प्रणिपत्याह पुत्रप्राणं प्रयच्छ मे ।
इति ब्रुवन्तं राजानमनादृत्य रघूत्तमम् ॥ १० ॥
उवाच निष्ठुरं वाक्यं क्रोधात्प्रचलितेन्द्रियः ।
त्वं राम इति नाम्ना मे चरसि क्षत्रियाधम ! ॥ ११ ॥
द्वन्द्वयुद्धं प्रयच्छाशु यदि त्वं क्षत्रियोऽसि वै ।
पुराणं जर्जरं चापं भङ्क्त्वा त्वं कत्थसे मुधा ॥ १२ ॥
अस्मिंस्तु वैष्णवे चापे आरोपयसि चेद् गुणम् ।
तदा युद्धं त्वया सार्द्धं करोमि रघुवंशज ! ॥ १३ ॥
नोचेत् सर्वान् हनिष्यामि क्षत्रियान्तकरोऽस्म्यहम् ।
इति ब्रुवति वै तस्मिन् चचाल वसुधा भृशम् ॥ १४ ॥
अन्धकारो बभूवाथ सर्वेषामपि चक्षुषाम् ।
रामो दाशरथिर्वीरो वीक्ष्य तं भार्गवं रुषा ॥ १५ ॥
धनुराच्छिद्य तद्धस्तादारोप्य गुणमञ्जसा ।
तूणीराद्बाणमादाय सन्धायाकृष्य वीर्य्यवान् ॥ १६ ॥

अन्तकं अन्तकर्त्तारं कालमिव ॥ ८ ॥ ९ ॥ १० ॥

राजानमनादृत्य रघूत्तममुवाचेत्यन्वयः मे नाम्ना मदीयनाम्ना प्रसिद्धः सन् पृथ्वीं चरसि अतो मन्नामधारकत्वात्क्षत्रियत्वाभिमानश्चेत् द्वन्द्वयुद्धं प्रयच्छ ॥ ११ ॥ १२ ॥

त्वयि कृतायोद्यतेऽपि तावन्न योत्स्ये यावत्ते परीक्षां न प्राप्नुयां वै धनुश्चापारोपणेन तु त्वद्बलं विज्ञाय त्वया योत्स्यामीत्याह तदा युद्धमिति तत्र तवासामर्थ्ये तु त्वदीयसकलवधः प्रयत्न इति भावः ॥ १३ ॥ १४ ॥

सर्वेषामपि [illegible] सर्वसम्बन्धिचक्षुषामित्यर्थः ॥ १५ ॥ १६ ॥

उवाच भार्गवं रामं शृणु ब्रह्मन्! वचो मम।
लक्ष्यं दर्शय बाणस्य ह्यमोघो मम सायकः॥ १७॥
लोकान् पादयुगं वापि वद शीघ्रं ममाज्ञया।
अयं लोकः परो वाथ त्वया गन्तुं न शक्यते॥ १८॥
एवं त्वां हि प्रकर्त्तव्यं वद शीघ्रं ममाज्ञया।
एवं वदति श्रीरामे भार्गवो विकृताननः॥ १९॥
संस्मरन् पूर्ववृत्तान्तमिदं वचनमब्रवीत्।
राम! राम! महाबाहो! जाने त्वां परमेश्वरम्॥२०॥
पुराणपुरुषं विष्णुं जगत्सर्गलयोद्भवम्।
बाल्येऽहं तपसा विष्णुमाराधयितुमञ्जसा॥ २१॥
चक्रतीर्थं शुभं गत्वा तपसा विष्णुमन्वहम्।
अतोषयं महात्मानं नारायणमनन्यधीः॥ २२॥
ततः प्रसन्नो देवेशः शङ्खचक्रगदाधरः।
उवाच मां रघुश्रेष्ठ! प्रसन्नमुखपङ्कजः॥ २३॥

लक्ष्यं भेद्यम्॥ १७॥

लोकान् तपोऽर्जितान् परलोकगतिमिति यावत् पादयुगं चरणयुगलम् इह लोके तीर्थादिगतिमिति यावत् ममाज्ञयैतेनैव स्वस्य स्वरूपाविर्भावं सूचयति उक्तमेवार्थं स्फुटमाह अयमिति यथा त्वया अथैतदनन्तरमयं लोकः परो वा गन्तुं न शक्यते एवं तथा त्वां प्रतिकर्त्तव्यं मम वर्त्तते तच्छीघ्रं वदेत्यर्थः॥ १८॥

विकृताननः प्राप्तपराभवत्वादिति शेषः॥ १९॥ २०॥

पुराणपुरुषम् अनादित्वात् नवद्वारात् सर्वपूर्षु शयनाच्च विष्णुं व्यापकम् अन्तर्बहिश्च सर्वत्र प्रविष्टं वा जगत्सर्गलयोद्भवं जगतः सृष्टिसंहारस्थितयो यस्मात्तम्॥ २१॥ २२॥ २३॥

श्रीभगवानुवाच।

उत्तिष्ठ तपसो ब्रह्मन्! फलितं ते तपो महत्।
मच्चिदंशेन युक्तस्त्वं जहि हैहयपुङ्गवम्॥ २४॥
कार्त्तवीर्य्यं पितृहणं यदर्थं तपसः श्रमः।
ततस्त्रिःसप्तकृत्वस्त्वं हत्वा क्षत्रियमण्डलम्॥ २५॥
कृत्स्नां भूमिं कश्यपाय दत्त्वा शान्तिमुपावह।
त्रेतामुखे दाशरथिर्भूत्वा रामोऽहमव्ययः॥ २६॥
उत्पत्स्ये परया शक्त्या तदा द्रक्ष्यसि मां ततः।
मत्तेजः पुनरादास्ये त्वयि दत्तं मया पुरा॥ २७॥
तदा तपश्चरंल्लोके तिष्ठ त्वं ब्रह्मणो दिनम्।
इत्युक्त्वान्तर्दधे देवस्तथा सर्वं कृतं मया॥ २८॥
स एव विष्णुस्त्वं राम! जातोऽसि ब्रह्मणार्थितः।
मयि स्थितं तु त्वत्तेजस्त्वयैव पुनराहृतम्॥ २९॥
अद्य मे सफलं जन्म प्रतीतोऽसि मम प्रभो!।
ब्रह्मादिभिरलभ्यस्त्वं प्रकृतेः पारगो मतः॥ ३०॥

फलितं फलवदर्थं जातं मच्चिदंशेन मद्रूपचिदाभवयशक्त्यंशेन॥ २४॥

कार्त्तवीर्य्यं पितृहणमिति तपसः श्रमः तपोरूपश्रमः राज्ञोः शिर इति वत्॥ २५॥ २६॥

परया शक्त्या त्वयि विद्यमानशक्त्यंशादधिकया शक्त्या ततो दर्शनानन्तरं मया त्वयि दत्तं मत्तेजः पुरा यदा पुनरादास्ये तदेत्यन्वयः॥ २७॥

ब्रह्मणो दिनं चतुर्युगसहस्राख्यम्॥ २८॥

स एव पुरा मम वरद एव॥ २९॥

मम प्रतीतोऽसि मया प्रत्यभिज्ञातोऽसीत्यर्थः नतु मत्प्रत्यभिज्ञायाः किमेतः दौर्लभ्यं येनैवं संभ्रमस्तत्राह ब्रह्मादिभिरिति तदलभ्यत्वे हेतुः प्रकृतेः पारग इति॥ ३०॥

त्वयि जन्मादिषड्भावा न सन्त्यज्ञानसम्भवाः ।
निर्विकारोऽसि पूर्णस्त्वं गमनादिविवर्जितः ॥ ३१ ॥
यथा जले फेनजालं धूमो वह्नौ तथा त्वयि ।
त्वदाधारा त्वद्विषया माया कार्यं सृजत्यहो ॥ ३२ ॥
यावन्मायावृता लोकास्तावत्त्वां न विजानते ।
अविचारितसिद्धैषाविद्या विद्याविरोधिनी ॥ ३३ ॥
अविद्याकृतदेहादिसंघाते प्रतिबिम्बिता ।
चिच्छक्तिर्जीवलोकेऽस्मिन् जीव इत्यभिधीयते ॥ ३४ ॥
यावद्देहमनःप्राणबुद्ध्यादिष्वभिमानवान् ।

जन्मादिषड्भावाः जायतेऽस्ति विपरिणमतेऽपक्षीयते वर्द्धते नश्यतीत्येवंरूपाः षड्भावविकारास्ते यतस्त्वं पूर्णो ज्ञानेनातोऽज्ञानसम्भवास्ते त्वयि न सन्ति अतस्त्वं निर्विकारो गमनादिविवर्जितश्चासि ॥ ३१ ॥

ननु तेजोहरणादिक्रियाया इदानीमेवोक्तेः कथं निष्क्रियत्वमत आह यथेति यथा शुद्ध एव जलादौ फेनजालादि औपाधिकं तथा त्वयि क्रियौपाधिकीत्यर्थः उपाधिमेवाह त्वदाधारेति अन्यान् प्रति त्वामावृणोतीति त्वद्विषया अस्वतन्त्रतया त्वदधीनत्वात् त्वदधारा च सेति भावः ॥ ३२ ॥

उक्तं त्वद्विषयत्वमेव दर्शयति यावदिति सा कुतस्तत्राह अविचारितसिद्धेति अनादिसिद्धा विचारेणैव सिद्धेति अनादिः सेति भावः सैव माया-विद्या अन्यज्ञानं तद्विरोधिनी तस्मिन् सति नश्यति तदुत्पत्तिं प्रतिबध्नाति च अतोऽविद्यापदेनोच्यते इत्यर्थः 'विद्याविद्ये श्रुतिप्रोक्ते एकत्वान्यधियौ हि ते' इति अभियुक्ताः ॥ ३३ ॥

कार्यं सृजत्यहो इत्युक्तं तत्कार्यं दर्शयति अविद्येति देहादिसङ्घाते देहादिनेन्द्रियादितत्सङ्घातावच्छिन्नेऽन्तःकरणे प्रतिबिम्बिता अनिर्वाच्यसम्बन्धेन सम्बद्धा चिच्छक्तिः प्राणादिप्रेरकत्वेन प्राणधारकतया जीव इत्युच्यते जीवप्राणधारणे इति धातोः ॥ ३४ ॥

ननु चिच्छक्तेरक्रियत्वेन जीवे कर्तृत्वादिव्यवहारः कथमत आह याव-

तावत्कर्तृत्वभोक्तृत्वसुखदुःखादिभाग्भवेत् ॥ २५ ॥
आत्मनः संसृतिर्नास्ति बुद्धेर्ज्ञानं न जात्विति ।
अविवेकाद्द्वयं युंक्त्वा संसारीति प्रवर्त्तते ॥ २६ ॥
जडस्य चित्समायोगाच्चित्त्वं भूयाच्चितेस्तथा ।
जडसंगाज्जडत्वं हि जलाग्न्योर्मेलनं यथा ॥ २७ ॥
यावत् त्वत्पादभक्तानां सङ्गसौख्यं न विन्दति ।
तावत् संसारदुःखौघान्न निवर्त्तेन्नरः सदा ॥ २८ ॥

दिति अभिमानोऽहमिति बुद्धिः यावद्विवेकाभावमूलको देहादिसङ्घाते-ऽहमिति अभिमानस्तावत्कर्त्तृत्वाद्यारोपेण तद्धर्मभागित्यर्थः ॥ २५ ॥

चिदचिद्द्वयोरेव कर्त्तृत्वादीत्युक्तमर्थं प्रत्येकं तन्निषेधेन द्रढयति आत्मन इति संसृतिः कर्त्तृत्वभोक्तृत्वाद्यभिमानकृतः संसारो नास्ति अपरिणामित्वा-दिति भावः एवं बुद्धेर्ज्ञानं न जडत्वादिति भावः तस्मात्तत् द्वयं युक्त्वाह-मिति बुद्ध्या गृहीत्वा तत्र हेतुरविवेकः संसारी जीव इति अहं कर्त्ता भोक्तेत्यादिरूपेण प्रवर्त्तते व्यवहरति तदुक्तम् "न बुद्धेर्बोधोऽस्ति नात्मनो विद्यते क्रिया । अतो नान्यतरस्यापि जानातीति तु युज्यते" इति ॥ २६ ॥

नन्वेवं बुद्धेश्चितोर्भेदाग्रह इति धातुनिष्पन्नाचित्त्वव्यवहारानुपपत्तिरत आह जडस्येति नन्वेवं "अहमज्ञ" इति व्यवहारानुपपत्तिरत आह तथा चितेर्जडसंयोगाज्जडत्वम् संमेलने मिथोऽन्योन्यधर्मतिरोभावे दृष्टान्त-माह जलाग्न्योर्मेघे विद्युज्जलयोर्यथेत्यर्थः विद्युतः प्रकाशं जातमपि जलं आवृणोति जलस्वरूपं जडमपि अग्निसंयोगाद्विद्युद्रूपेण प्रकाशरूपतां प्राप्नोतीत्यर्थः ॥ २७ ॥

नन्वेवं यदि संसृतस्तर्हि कथं मुच्यते तत्राह यावदिति सङ्गसौख्यं सङ्गाज्जायमानं सुखं न विन्दति न प्राप्नोति तावदित्यर्थः सौख्यमिति छान्दसं च्यन्_निवर्त्तेदिति परस्मैपदमार्षम् ॥ २८ ॥

सत्सङ्गलब्धया भक्त्या यदा त्वां समुपासते ।
तदा माया शनैर्याति तानवं प्रतिपद्यते ॥ ३९ ॥
ततस्त्वज्ज्ञानसम्पन्नः सद्गुरुस्तेन लभ्यते ।
वाक्यज्ञानं गुरोर्लब्ध्वा त्वत्प्रसादाद्विमुच्यते ॥ ४० ॥
तस्मात् त्वद्भक्तिहीनानां कल्पकोटिशतैरपि ।
न मुक्तिशङ्का विज्ञानशङ्का नैव सुखं तथा ॥ ४१ ॥
अतस्त्वत्पादयुगले भक्तिर्मे जन्मजन्मनि ।
स्यात् त्वद्भक्तिमतां सङ्गोऽविद्या याभ्यां विनश्यति ॥ ४२ ॥
लोके त्वद्भक्तिनिरताः त्वद्धर्मामृतवर्षिणः ।
पुनन्ति लोकमखिलं किं पुनः स्वकुलोद्भवान् ॥ ४३ ॥
नमोऽस्तु जगतां नाथ ! नमस्ते भक्तिभावन ! ।
नमः कारुणिकानन्त ! रामचन्द्र ! नमोस्तु ते ॥ ४४ ॥

सतां सङ्गेन लब्धया भक्त्या त्वां यदा जनाः समुपासते तदा तेभ्यः माया शनैर्मन्दं याति अपसरति विक्षेपशक्तिं त्यजतीत्यर्थः अतएव सा तानवं प्रतिपद्यते ॥ २९ ॥

तव ज्ञानमभेदेन यत् तद्युक्तः सद्गुरुस्त्वद्भक्तियोगात्तेन लभ्यते तदनन्तरं तादृशगुरोः सकाशाद्वाक्यज्ञानं तत्त्वमसीतिवाक्यार्थावबोधरूपं ज्ञानं त्वत्प्रसादाल्लब्ध्वा विमुच्यते 'आचार्यवान् पुरुषो वेद' इति 'श्रुतेः उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इति स्मृतेश्च ॥ ४० ॥

मुक्तिशङ्का मुक्तिप्राप्तिसम्भावनापि न तथा सुखं नैवेत्यर्थः ॥ ४१ ॥

भक्तिकारणं भक्तिमत्सङ्गः याभ्यां भक्तिमत्सङ्गतज्जन्यभक्तिभ्यामविद्या साक्षात्परम्परया च मिलित्वा नश्यति ॥ ४२ ॥

त्वद्धर्मस्तत्त्वज्ञानं तद्रूपामृतवर्षणशीलास्तदुपदेष्टारस्तेन तेषां तत्त्वमर्थविदम् ॥ ४२ ॥

कारुणिकेति सम्बोधनम् प्रकृतोपयोगाय ॥ ४४ ॥

देव ! यद्यत् कृतं पुण्यं मया लोकजिगीषया ।
तत्सर्वं तव बाणाय भूयाद्राम ! नमोऽस्तु ते ॥ ४५ ॥
ततः प्रसन्नो भगवान् श्रीरामः करुणामयः ।
प्रसन्नोऽस्मि तव ब्रह्मन् ! यत्ते मनसि वर्त्तते ॥ ४६ ॥
दास्ये तदखिलं कामं मा कुरुष्वात्र संशयम् ।
ततः प्रीतेन मनसा भार्गवो राममब्रवीत् ॥ ४७ ॥
यदि मेऽनुग्रहो राम ! तवास्ति मधुसूदन ! ।
त्वद्भक्तसङ्गस्त्वत्पादे दृढ़ाभक्तिः सदास्तु मे ॥ ४८ ॥
स्तोत्रमेतत्पठेद्यस्तु भक्तिहीनोऽपि सर्वदा ।
त्वद्भक्तिस्तस्य विज्ञानं भूयादन्ते स्मृतिस्तव ॥ ४९ ॥
तथेति राघवेणोक्तः परिक्रम्य प्रणम्य तम् ।
पूजितस्तदनुज्ञातो महेन्द्राचलमन्वगात् ॥ ५० ॥
राजा दशरथो हृष्टो रामं मृतमिवागतम् ।

तव बाणाय भूयात् त्वद्बाणनाश्यं भूयादित्यर्थः अनेन सर्वकर्मक्षयेण मुक्तिं देहीति व्यङ्ग्यम् ॥ ४५ ॥

तद्व्यङ्ग्यं बुद्ध्वा तद्दानं भगवान् प्रतिजानीते तत इत्यादि ॥ ४६ ॥

अत्र त्वत्कामदाने ॥ ४७ ॥

सोऽपि मुक्तिकारणमस्मदं प्रार्थयते यदीति मधुसूदनेत्यनेन मोक्षप्रति-बन्धकमत्कर्मनाशने त्वं समर्थ इति व्यज्यते ॥ ४८ ॥

विज्ञानं त्वदभेदसाक्षात्कारः इदं भक्तिफलं यदि कदाचिदिदं न स्यात्तर्हि अन्ते मरणकाले तव स्मृतिरवश्यं भूयादिति लोकोपकाराय प्रार्थयते अन्ते या मतिः सा गतिरिति न्यायात्तत्स्मृतौ तल्लाभोऽवश्यं भावीति भावः ॥ ४९ ॥ ५० ॥

मृतमिवागतं क्षत्रियकुलान्तकाग्नरावर्त्तनेन तथा सम्भावना उत्पन्न-

आलिङ्ग्यालिङ्ग्य हर्षेण नेत्राभ्यां जलमुत्सृजत्॥ ५१॥
ततः प्रीतेन मनसा स्वस्थचित्तः पुरं ययौ।
रामलक्ष्मणशत्रुघ्नभरता देवसम्मिताः॥ ५२॥
स्वां स्वां भार्य्यामुपादाय रेमिरे स्वस्वमन्दिरे।
मातापितृभ्यां संहृष्टो रामः सीता समन्वितः॥ ५३॥
रेमे वैकुण्ठभवने श्रिया सह यथा हरिः।
युधाजिन्नाम कैकेयीभ्राता भरतमातुलः।
भरतं नेतुमागच्छत् स्वराज्यं प्रीतिसंयुतः॥ ५४॥
प्रेषयामास भरतं राजा स्नेहसमन्वितः।
शत्रुघ्नञ्चापि सम्पूज्य युधाजितमरिन्दमः॥ ५५॥
कौशल्या शुशुभे देवी रामेण सह सीतया।
देवमातेव पौलोम्या शच्या शक्रेण शोभना॥ ५६॥

साकेते लोकनाथप्रथितगुणगणो लोकसङ्गीतकीर्त्तिः
श्रीरामः सीतयास्तेऽखिलजननिकरानन्दसन्दोहमूर्त्तिः।
नित्यश्रीर्निर्विकारो निरवधिविभवो नित्यमायानिरासो

दिव्यवर्षः अब्भाव आर्षः॥ ५१॥

देवसंमिता देवतुल्याः॥ ५२॥ ५३॥ ५४॥

युधाजितं सम्पूज्य भरतं शत्रुघ्नं चापि प्रेषयामासेत्यन्वयः॥ ५५॥

पौलोम्या पुलोमापत्यभूतया शच्या शक्रेण च देवमातेवेत्यर्थः॥ ५६॥

साकेते अयोध्यायाम् लोकनाथेषु प्रथिताः प्रसिद्धगुणगणा यस्य सः लोकैः सम्यग्गीता कीर्त्तिर्यस्य सकलजनसमूहस्यानन्दसमूहरूपा मूर्त्तिर्यस्य अनन्तगुणानन्दत्वात्तस्येति भावः नित्यं श्रीः पराशक्तिर्यस्य अतएव निरवधि-विभवः नित्यं मायाया आवरणशक्तिरूपाया निरासो यस्मात् माया सर्वथा

मायाकार्य्यानुसारी मनुज इव सदा भाति देवोऽखिलेशः ॥५७

इति श्रीमदध्यात्मरामायणे बालकाण्डे
अष्टमः सर्गः ।

## अर्थ काण्डः समाप्तः ।

---

यं प्रत्यगात्मरिक्तेति भावः माया कार्य्यं सर्वमनुसरति सत्तास्फूर्त्तिभ्यां व्याप्नोति तादृशः देवोऽपि अखिलेशोऽपि माययैव यो मनुज इव भाति ॥ ५७ ॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थ त्यादिविरुदावलिविराजमानस्य
श्रीहिम्मतिवर्मणः पुत्त्रस्य श्रीरामवर्मणः कृतावध्यात्मरामायणे
सेतौ बालकाण्डे अष्टमः सर्गः ।

---

# अयोध्याकाण्डम् ।



## प्रथमः सर्गः ।

---

श्रीमहादेव उवाच ।

एकदा सुखमासीनं रामं स्वान्तःपुराजिरे ।
सर्वाभरणसम्पन्नं रत्नसिंहासने स्थितम् ॥ १ ॥
नीलोत्पलदलश्यामं कौस्तुभामुक्तकन्धरम् ।
सीतया रत्नदण्डेन चामरेणाथ वीजितम् ॥ २ ॥
विनोदयन्तं ताम्बूलचर्वणादिभिरादरात् ।
नारदोऽवातरत्(१) द्रष्टुमम्बराच्च राघवः ॥ ३ ॥

प्रथमे त्वत्र सर्गेऽत्र रामो नारदसंस्तुतः प्रतिज्ञां रावणवधे कृतवानिति वर्ण्यते ॥ १ ॥

अथ काण्डे द्वितीये नारदस्तुतेन रावणवधप्रवृत्तिरित्याह भगवान् शिवः । श्रीमहादेव उवाच

एकदेति ॥ १ ॥

कौस्तुभेनामुक्ताः युक्ताः भूषिताः वा कन्धराः यस्य तम् कौस्तुभशब्दं नाम तन्नामकतदाकारो भूषणविशेषः ॥ २ ॥

ताम्बूलचर्वणादिभिर्विनोदयन्तं क्रीडयन्तं सीतामिति शेषः द्रष्टुमर्था-

---

(१) अवतरत् इत्यसङ्गतः पाठः ।

शुद्धस्फटिकसङ्काशः शरच्चन्द्र इवामलः ।
अतर्कितमुपायातो नारदो दिव्यदर्शनः ॥ ४ ॥
तं दृष्ट्वा सहसोत्थाय रामः प्रीत्या कृताञ्जलिः ।
ननाम शिरसा भूमौ सीतया सह भक्तिमान् ॥ ५ ॥
उवाच नारदं रामः प्रीत्या परमया युतः ।
संसारिणां मुनिश्रेष्ठ ! दुर्लभं तव दर्शनम् ॥ ६ ॥
अस्माकं विषयासक्तचेतसां नितरां मुने ! ।
अवाप्तं मे पूर्वजन्मकृतपुण्यमहोदयैः ।
संसारिणापि हि मुने ! लभ्यते सत्समागमः ॥ ७ ॥
अतस्त्वद्दर्शनादेव कृतार्थोऽस्मि मुनीश्वर ! ।
किं कार्य्यं? ते मया कार्य्यं ब्रूहि तत्करवाणि भो ! ॥८॥
अथ तं नारदोऽप्याह राघवं भक्तवत्सलम् ।
किं मोहयसि मां राम ! वाक्यैर्लोकानुसारिभिः ॥९॥
संसार्य्यहमिति प्रोक्तं सत्यमेतत्त्वया विभो ! ।
जगतामादिभूता या सा माया गृहिणी तव ॥ १० ॥

राघवम् यत्र राघवस्तत्र देशेऽम्बरात् आकाशात् अवातरदित्यर्थः ॥३॥४॥५॥

संसारिणामेव दुर्लभम् ॥ ६ ॥

तत्रापि विषयासक्तचेतसां नितरामित्यर्थः तादृशमपि तव दर्शनं पूर्वजन्मकृतानि यानि पुण्यानि पुण्यकर्माणि तज्जन्यमहोदयैः शुभादृष्टैरवाप्तमित्यर्थः महतः फलस्योदयो येभ्यस्तैरिति वाच्योऽर्थः ननु संसारिणां दुर्लभं वस्तु कथं त्वया लब्धं तत्राह संसारिणेति काकतालीयन्यायेनेति भावः ॥ ८ ॥ ९ ॥

आदिभूता मूलप्रकृतिः 'मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतेः ॥ १० ॥

त्वत्सन्निकर्षाज्जायन्ते तस्यां ब्रह्मादयः प्रजाः।
त्वदाश्रया सदा भाति माया या त्रिगुणात्मिका ॥११॥
सूतेऽजस्रं शुक्लकृष्णलोहिताः सर्वदा प्रजाः।
लोकत्रयमहागेहे गृहस्थस्त्वमुदाहृतः ॥ १२ ॥
त्वं विष्णुर्जानकी लक्ष्मीः शिवस्त्वं जानकी शिवा।
ब्रह्मा त्वं जानकी वाणी सूर्य्यस्त्वं जानकी प्रभा ॥ १३ ॥
भवान् शशाङ्कः सीता तु रोहिणी शुभलक्षणा।
शक्रस्त्वमेव पौलोमी सीता स्वाहानलो भवान् ॥ १४ ॥
यमस्त्वं कालरूपश्च सीता संयमनी प्रभो!।
निर्ऋतिस्त्वं जगन्नाथ! तामसी जानकी शुभा ॥ १५
राम! त्वमेव वरुणो भार्गवी जानकी शुभा।
वायुस्त्वं राम! सीता तु सदागतिरितीरिता ॥ १६॥
कुवेरस्त्वं राम! सीता सर्वसम्पत्प्रकीर्त्तिता।
रुद्राणी जानकी प्रोक्ता रुद्रस्त्वं लोकनाशकृत् ॥ १७ ॥
लोके स्त्रीवाचकं यावत्तत्सर्वं जानकी शुभा।
पुन्नामवाचकं यावत्तत् सर्वं त्वं हि राघव! ॥ १८ ॥

त्वत्सन्निकर्षादिति अचेतनत्वेन तस्याश्चेतनसन्निकर्षापेक्षत्वादिति भावः अतएव सा त्वदाश्रयेति त्वत्सन्निकर्षेण तस्याः सद्भूतत्वात्सा त्वदाश्रयेत्यर्थः त्रिगुणात्मिका सुखदुःखमोहस्वभावा सत्त्वरजस्तमोरूपगुणत्रयात्मिका ॥ ११॥

अतएव स्वगुणानुरूपास्तथा गुणाः प्रजाः सूते तादृश्या मायाविशिष्टस्त्वं लोकत्रयरूपगेहे गृहस्थस्त्वमित्युदाहृतः ॥ १२ ॥

इदानीं एवं स्त्रीरूपं सीतैव सर्वं पुंरूपं त्वमेवेति सर्वात्मत्वेन स्तुवन् त्वमेव गृहस्थ इत्यर्थमुपपादयति त्वमित्यादिना ॥ १३ ॥

पौलोमी शची अनलोऽग्निः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

विशिष्य किञ्चिदुक्त्वा सामान्येनोपसंहरति लोके इति ॥ १८ ॥

तस्माल्लोकत्रये देव ! युवाभ्यां नास्ति किञ्चन ॥ १९ ॥
त्वदाभासोदिताज्ञानमव्याकृतमितीर्य्यते ।
तस्मान्महांस्ततः सूत्रं लिङ्गं सर्वात्मकं ततः ॥ २० ॥
अहङ्कारश्च बुद्धिश्च पञ्चप्राणेन्द्रियाणि च ।
लिङ्गमित्युच्यते प्राज्ञैर्जन्ममृत्युसुखादिमत् ॥ २१ ॥
स एव जीवसंज्ञश्च लोके भाति जगन्मयः ।
अवाच्यानाद्यविद्यैव कारणोपाधिरुच्यते ॥ २२ ॥
स्थूलं सूक्ष्मं कारणाख्यमुपाधित्रितयं चितेः ।
एतैर्विशिष्टो जीवः स्याद्वियुक्तः परमेश्वरः ॥ २३ ॥

लोकत्रयस्य द्वयस्थत्वमुपसंहरति तस्मादिति युवाभ्यामन्यदिति शेषः 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुत्या सर्वत्रेश्वरचैतन्येनैव चेतनत्वमिति भावः ॥ १९ ॥

तदेवोपपादयति त्वदिति त्वदाभासेन तत्सम्बन्धेनोदितं सृष्ट्युन्मुखत्वप्राप्तमीदृशमज्ञानं मायैवाव्याकृतपदेनोच्यते महान् बुद्धितत्त्वं ततः सूत्रमहङ्कारः ततः सर्वात्मकं सर्वकार्य्यात्मकं लिङ्गं लिङ्गदेहः ॥ २० ॥

सर्वात्मकत्वमाह अहङ्कारश्च बुद्धिश्चेत्यादि पञ्चेत्यस्य सूक्ष्मभूतानीति शेषः प्राणेन्द्रियाणि पञ्च प्राणाः पञ्चेन्द्रियाणि मनस्त्वहङ्कारेणैव संगृहीतम् तत्राहङ्कारोऽहमित्याकारवृत्तिविशेषः बुद्धिरध्यवसायात्मकं महत्तत्त्वम् कर्म्मेन्द्रियाणि भूतेष्वन्तर्भूतानि तल्लिङ्गं लिङ्गदेह एव प्राज्ञैः जन्ममृत्युसुखादिमदुच्यते इत्यर्थः ॥ २१ ॥

स एव लिङ्गदेहाभिमान्येवेत्यर्थः जगन्मयो हिरण्यगर्भः तत्समष्टिरूपत्वात्तस्येत्यर्थः अवाच्या सत्त्वासत्त्वाभ्यामनिर्वाच्याऽनादिरुत्पत्तिरहिता कारणोपाधिः संसारकारणरूपकूटस्थस्य ब्रह्मण उपाधिः ॥ २२ ॥

स्थूलं स्थूलदेहः तत्समष्ट्युपाधिर्विराट् सूक्ष्मं लिङ्गदेहस्तत्समष्ट्युपाधिर्हिरण्यगर्भः कारणोपाधिरीश्वरः एतैर्विशिष्टो जीवः अन्तर्यामिन्या

जाग्रत्स्वप्नसुषुप्त्याख्या संसृतिर्या प्रवर्त्तते ।
तस्या विलक्षणः साक्षी चिन्मात्रस्त्वं रघूत्तम ! ॥ २४ ॥
त्वत्त एव जगज्जातं त्वयि सर्वं प्रतिष्ठितम् ।
त्वय्येव लीयते कृत्स्नं तस्मात् त्वं सर्वकारणम् ॥ २५ ॥
रज्जावहिमिवात्मानं जीवं ज्ञात्वा भयं भवेत् ।
परात्माऽहमिति ज्ञात्वा भयदुःखैर्विमुच्यते ॥ २६ ॥
चिन्मात्रज्योतिषा सर्वाः सर्वदेहेषु बुद्धयः ।
त्वया यस्मात्प्रकाश्यन्ते सर्वस्यात्मा ततो भवान् ॥ २७ ॥

ईश्वरस्यापि तत्त्वान्तर्भावात् उपाधित्रयविमुक्तो यः सः परमेश्वरः तुरीय इत्यर्थः 'विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः । ईशस्य यस्त्रिभिर्हीनं तुरीयं तत्पदं विदुः' इति वार्त्तिकोक्तेः ॥ २३ ॥

तत्र स्थूलसूक्ष्मोपाधिभ्यां कारणोपाधेः साक्षिणो भेदकमाह जाग्रदिति इन्द्रियादिवृत्तिमती जाग्रदवस्था विश्वसाक्षिणी इन्द्रियवृत्त्यभावकालिकी अन्तःकरणवासनानिमित्तार्थोपलम्भरूपा तैजससाक्षिणी स्वप्नावस्था प्राज्ञसाक्षिणी निद्रावृत्त्यतिरिक्तसर्ववृत्त्यभावरूपा सुषुप्त्यवस्था एतत्त्रयात्मिकायाः संसृतेरविद्यात्मकत्वात् ततो विलक्षणचिन्मात्ररूपः साक्षी कारणोपाधिस्त्वमित्यर्थः ॥ २४ ॥

जगज्जन्मादिकारणमपि त्वमेवेत्याह त्वत्त इति कर्तृत्वमविद्यावच्छिन्नम् ॥ २५ ॥

रज्जाविति रज्जोरहित्वेन ज्ञानाद्यथा भयं तथात्मानं जीवत्वेन जानतो भयं संसाररूपम् तस्या एव रज्जो रज्जुत्वेन ज्ञानाद्यथा भयनिवृत्तिः तथा स्वस्य परमात्मत्वेन ज्ञानात्संसृतिनिवृत्तिरित्यर्थः ॥ २६ ॥

चिन्मात्रज्योतिरूपेण भवता सर्वदेहेषु वर्त्तमानाः सर्वाः बुद्धयोऽन्तःकरणानि यस्मात्प्रकाश्यन्ते तत्तद्वृत्तिमन्ति सम्पाद्यन्ते अतो भवान् सर्वस्यात्माऽन्तर्यामीत्यर्थः ॥ २७ ॥

अज्ञानान्न्यस्यते सर्वं त्वयि रज्जौ भुजङ्गवत्।
त्वज्ज्ञानाल्लीयते सर्वं तस्मात् ज्ञानं सदाऽभ्यसेत् ॥ २८ ॥
त्वत्पादभक्तियुक्तानां विज्ञानं भवति क्रमात्।
तस्मात्त्वद्भक्तियुक्ता ये मुक्तिभाजस्त एव हि ॥ २९ ॥
अहं त्वद्भक्तभक्तानां तद्भक्तानां च किङ्करः।
अतो मामनुगृह्णीष्व मोहयस्व न मां प्रभो! ॥ ३० ॥
त्वन्नाभिकमलोत्पन्नो ब्रह्मा मे जनकः प्रभो!।
अतस्तवाहं पौत्रोऽस्मि भक्तं मां पाहि राघव! ॥ ३१ ॥
इत्युक्त्वा बहुशो नत्वा स्वानन्दाश्रुपरिप्लुतः।
उवाच वचनं राम! (१) ब्रह्मणा नोदितोऽस्म्यहम् ॥ ३२ ॥

अज्ञानात्त्वत्स्वरूपाज्ञानात्त्वयि इदं सर्वं जगत् न्यस्यते आरोप्यते जगद्रूपेण त्वं दृश्यसे इत्यर्थः यथा च रज्जुतत्त्वाज्ञानाद्भासमानस्य भुजङ्गस्य रज्जुज्ञानाल्लयः एवं त्वत्स्वरूपज्ञानाज्जगतो लयः अतस्त्वज्ज्ञानं सदाभ्यसेत् 'तच्चिन्तनं तत्कथनमन्योऽन्यं तत्प्रबोधनम्। एकान्ते तत्परत्वं च तदभ्यासं विदुर्बुधाः' इत्युक्तमभ्यासं कुर्यात् ॥ २८ ॥

त्वत्पादभक्तियुक्तानाम् 'श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्' इत्येवं नवविधा भक्तियुक्तानां क्रमात् वैराग्यश्रवणादिक्रमेण विज्ञानमपरोक्षसाक्षात्कारो भवत्यतस्त एव मुक्तिभाज इत्यर्थः ॥ २९ ॥

न मोहयस्व स्वमाययेत्यर्थः ॥ ३० ॥ ३१ ॥

नोदितोऽस्मि त्वन्निकटे सन्देशं वक्तुं प्रेरितोऽस्मि ॥ ३२ ॥ ३३ ॥

---

(१) रामं इति केचित् पठन्ति।

रावणस्य वधार्थाय जातोऽसि रघुसत्तम ! ।
इदानीं राज्यरक्षार्थं पिता त्वामभिषेक्ष्यति ॥ ३३ ॥
यदि राज्याभिसंसक्तो रावणं न हनिष्यसि ।
प्रतिज्ञा ते कृता राम ! भूभारहरणाय वै ॥ ३४ ॥
तत् सत्यं कुरु राजेन्द्र ! सत्यसन्धस्त्वमेव हि ।
श्रुत्वैतद्गदितं रामो नारदं प्राह सस्मितम् ॥ ३५ ॥
शृणु नारद मे किञ्चिद्विद्यतेऽविदितं क्वचित् ? ।
प्रतिज्ञातं च यत्पूर्वं करिष्ये तन्न संशयः ॥ ३६ ॥
किन्तु कालानुरोधेन तत्तत्प्रारब्धसंक्षयात् ।
हरिष्ये सर्वभूभारं क्रमेणासुरमण्डलम् ॥ ३७ ॥
रावणस्य विनाशार्थं श्वोगन्ता दण्डकाननम् ।
चतुर्दशसमास्तत्र ह्युषित्वा मुनिवेशधृक् ॥ ३८ ॥
सीतामिषेण तं दुष्टं सकुलं नाशयाम्यहम् ।
एवं रामे प्रतिज्ञाते नारदः प्रमुमोद ह ॥ ३९ ॥
प्रदक्षिणत्रयं कृत्वा दण्डवत्प्रणिपत्य तम् ।
अनुज्ञातश्च रामेण ययौ देवगतिं मुनिः ॥ ४० ॥

भूभारहरणाय कृता ते प्रतिज्ञा अयी स्यादिति शेषः ॥ ३४ ॥

तस्मात् तत् प्रतिज्ञातं वधः सत्यं कुरु यतस्त्वमेव सत्यसन्धः सत्यप्रतिज्ञः ॥ ३५ ॥

अविदितमिति छेदः विद्यते इत्यत्र काकुः । क्वचिद्देशे काले वा किञ्चिदस्तु मेऽविदितं विद्यते अपि तु नेत्यर्थः सर्वं विदितमेवास्ते इत्यर्थः ॥३६॥

कालानुरोधेनेति कालस्य सुक्ष्मतया मयैव स्वाभिमतत्वादिति भावः असुरमण्डलं रक्षोमण्डलरूपं भूभारम् ॥ ३७ ॥ ३८ ॥ ३९ ॥

देवगतिं देवलोकमार्गम् ॥ ४० ॥

संवादं पठति शृणोति संस्मरेद्वा
यो नित्यं मुनिवररामयोः स भक्त्या ।
संप्राप्नोत्यमरसुदुर्लभं विमोक्षं
कैवल्यं विरति पुरःसरं क्रमेण ॥ ४१ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
अयोध्याकाण्डे प्रथमः सर्गः ।

कैवल्यं विमोक्षम् अमृतत्वरूपं मोक्षम् विरतिर्वैराग्यम् ॥ ४१ ॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थ त्यादिवि० श्रीरामवर्म्मणः
कृतौ अध्यात्मरामायणसेतौ अयोध्याकाण्डे
प्रथमः सर्गः ।

---

# द्वितीयः सर्गः ।



श्रीमहादेव उवाच ।

अथ राजा दशरथः कदाचिद्रहसि स्थितः ।
वशिष्ठं स्वकुलाचार्य्यमाहूयेदमभाषत ॥ १ ॥
भगवन् ! राममखिलाः प्रशंसन्ति मुहुर्मुहुः ।
पौराश्च नैगमा वृद्धा मन्त्रिणश्च विशेषतः ॥ २ ॥
ततः सर्वगुणोपेतं रामं राजीवलोचनम् ।
ज्येष्ठं राज्येऽभिषेक्ष्यामि वृद्धोऽहं मुनिपुङ्गव ! ॥ ३ ॥
भरतो मातुलं द्रष्टुं गतः शत्रुघ्नसंयुतः ।
अभिषेक्ष्ये श्व एवाशु भवांस्तच्चानुमोदताम् ॥ ४ ॥
सम्भाराः सम्भ्रियन्तां च गच्छ मन्त्रय राघवम् ।
उच्छ्रीयन्तां पताकाश्च नाना वर्णाः समन्ततः ॥ ५ ॥

द्वितीये राज्ञि रामस्याभिषेकं कर्त्तुमुद्यते। मन्थरामोहिता राज्ञी विघ्नं चक्र इतीर्यते ॥ १ ॥

अथ राजेति रहसि एकान्ते ॥ १ ॥

नैगमाः निगमे वणिक्पथे भवाः यद्वा निगमं वेदं तदर्थं वा विन्दति ते नैगमाः ॥ २ ॥

ततः सर्वप्रजानुरागात् ॥ ३ ॥

भरतो मातुलमिति अनेन कैकेयीप्रतिबन्धशङ्कानिरासः भरतागमनपर्यन्तमेनमभिषेचे तदागमनोत्तरमुभयोर्विभागं करिष्यामीत्येवं तां समाधास्य इति भावः ॥ ४ ॥

सम्भारोऽभिषेकसामग्री मन्त्रयेति अधिवासनार्थमिति शेषः उच्छ्रीयन्तामुत्थाप्यन्तामित्यर्थः ॥ ५ ॥

तोरणानि विचित्राणि स्वर्णमुक्तामयानि वै ।
आहूय मन्त्रिणं राजा सुमन्त्रं मन्त्रिसत्तमम् ॥ ६ ॥
आज्ञापयति यद्यत्त्वां मुनिस्तत्तत् समानय ।
यौवराज्येऽभिषेक्ष्यामि श्वोभूते रघुनन्दनम् ॥ ७ ॥
तथेति हर्षात् स मुनिं किङ्करोमीत्यभाषत ।
तमुवाच महातेजा वशिष्ठो ज्ञानिनां वरः ॥ ८ ॥
श्वःप्रभाते मध्यकक्षे कन्यकाः स्वर्णभूषिताः ।
तिष्ठन्तु षोडश गजः स्वर्णरत्नादिभूषितः ॥ ९ ॥
चतुर्दन्तः समायातु ऐरावतकुलोद्भवः ।
नाना तीर्थोदकैः पूर्णाः स्वर्णकुम्भाः सहस्रशः ॥ १० ॥
स्थाप्यन्तां नव वै व्याघ्रचर्माणि त्रीणि चानय ।
श्वेतच्छत्रं रत्नदण्डं मुक्तामणिविराजितम् ॥ ११ ॥
दिव्यमाल्यानि वस्त्राणि दिव्यान्याभरणानि च ।
मुनयः सत्कृतास्तत्र तिष्ठन्तु कुशपाणयः ॥ १२ ॥
नर्तक्यो वारमुख्याश्च गायका वेणुकास्तथा ।
नाना वादित्रकुशला वादयन्तु नृपाङ्गणे ॥ १३ ॥

तोरणानि उच्छ्रीयन्तामित्यनुकर्षः ॥ ६ ॥ ७ ॥ ८ ॥

मध्यकक्षे मध्यद्वारे षोडशेति कन्यकास्वपि माङ्गल्योक्त्यापि कन्यानामष्टसंख्या हि उक्ता 'अष्टौ कन्याश्च रुचिरा मत्तश्च वरवारणः अष्टौ कन्याश्च माङ्गल्याः सर्वाभरणभूषिता' इति गज इत्युत्तरान्वयि ॥ ९ ॥

नानातीर्थोदकैः प्रयागादितीर्थोदकैः ॥ १० ॥

व्याघ्रचर्माणि नव वा त्रीणि वा भद्रपीठास्तरणार्थमित्यर्थः ॥ ११ ॥

दिव्यान्याभरणानि चेत्यत्र स्थाप्यन्तामित्यनुकर्षः ॥ १२ ॥

वारमुख्याः वारः वक्ष्येतद्दिनमेव मुख्यं भर्तृनियमे यासां ताः वेश्या इत्यर्थः वेणुकाः वेणुवादनशीलाः ॥ १२ ॥

हस्त्यश्वरथपादाता बहिस्तिष्ठन्तु सायुधाः ।
नगरे यानि तिष्ठन्ति देवतायतनानि च ॥ १४ ॥
तेषु प्रवर्त्ततां पूजा नानाबलिभिरादृता ।
राजानः शीघ्रमायान्तु नानोपायनपाणयः ॥ १५ ॥
इत्यादिश्य मुनिः श्रीमान् सुमन्त्रं नृपमन्त्रिणम् ।
स्वयं जगाम भवनं राघवस्यातिशोभनम् ॥ १६ ॥
रथमारुह्य भगवान् वशिष्ठो मुनिसत्तमः ।
त्रीणि कक्षाण्यतिक्रम्य रथात् क्षितिमवातरत् ॥ १७ ॥
अन्तःप्रविश्य भवनं स्वाचार्यत्वादवारितः ।
गुरुमागतमाज्ञाय रामस्तूर्णं कृताञ्जलिः ॥ १८ ॥
प्रत्युद्गम्य नमस्कृत्य दण्डवद्भक्तिसंयुतः ।
स्वर्णपात्रेण पानीयमानिनायाशु जानकी ॥ १९ ॥
रत्नासने समावेश्य पादौ प्रक्षाल्य भक्तितः ।
तदपः शिरसा धृत्वा सीतया सह राघवः ॥ २० ॥
धन्योऽस्मीत्यब्रवीद्रामस्तव पादाम्बुधारणात् ।
श्रीरामेणैवमुक्तस्तु प्रहसन्मुनिरब्रवीत् ॥ २१ ॥

हस्त्यश्वरथपादाता दन्तुपर्यन्तिरक्षा ॥ १४ ॥
नानाबलिभिः पूजोपकरणैः ॥ १५ ॥ १६ ॥ १७ ॥
आचार्यत्वादतिवल्लभत्वाच्च द्वारपालैरवारितो भवनं प्रविश्यान्तः अन्तःपुरं प्रविष्ट इति शेषः ॥ १८ ॥
पानीयमानिनाय अर्घ्यपाद्याद्यर्थमिति भावः ॥ १९ ॥
तदपः तत्पादप्रक्षालनजलम् ॥ २० ॥
अब्रवीत् वशिष्ठमिति शेषः ॥ २१ ॥

त्वत्पादसलिलं धृत्वा धन्योऽभूद् गिरिजापतिः ।
ब्रह्माऽपि मत्पिता ते हि पादतीर्थहताशुभः ॥ २२ ॥
इदानीं भाषसे यत्त्वं लोकानामुपदेशकृत् ।
जानामि त्वां परात्मानं लक्ष्म्या सञ्जातमीश्वरम् ॥२३॥
देवकार्य्यार्थसिद्ध्यर्थं भक्तानां भक्तिसिद्धये ।
रावणस्य बधार्थाय जातं जानामि राघव ! ॥ २४ ॥
तथाऽपि देवकार्य्यार्थं गुह्यं नोद्घाटयाम्यहम् ।
यथा त्वं मायया सर्वं करोषि रघुनन्दन ! ॥ २५ ॥
तथैवानुविधास्येऽहं शिष्यस्त्वं गुरुरप्यहम् ।
गुरुर्गुरूणां त्वं देव ! पितॄणां त्वं पितामहः ॥ २६ ॥
अन्तर्यामी जगद्यात्रावाहकस्त्वमगोचरः ।
शुद्धसत्त्वमयं देहं धृत्वा स्वाधीनसम्भवम् ॥ २७ ॥
मनुष्य इव लोकेऽस्मिन् भासि त्वं योगमायया ।
पौरोहित्यमहं जाने विगर्ह्यं दुष्यजीवनम् ॥ २८ ॥

त्वत्पादसलिलं गङ्गारूपं जलम् ॥ २२ ॥

उपदेशकृद् ब्राह्मणेष्वेवं भक्तिः कार्य्येति लोकानुपदिशसित्यर्थः ॥२३॥

भक्तिसिद्धये इत्यनेन सर्वेतरस्वरूपापेक्षया रामस्वरूपे भक्तिरेव सर्वेष्ट-साधनमिति सूचितम् ॥ २४ ॥

त्वं माययेति मायया कार्यादिस्वस्वरूपो यथा व्यवहरसि तथैव त्वयि शिष्यत्वेन गुरुर्भूत्वाऽहं व्यवहरिष्यामीत्यर्थः ॥ २५ ॥

वास्तवमर्थमाह गुरुरिति गुरूणामित्यत्र गुरूणां ब्रह्मादीनाम् ॥ २६ ॥

तत्रैव हेतुमाह अन्तर्यामीति अन्तःस्थित्वा सर्वनियामकः अगोचरः वाङ्मनसयोरप्यविषयः स्वाधीनसम्भावत्वं मायाधिष्ठातृत्वात् ॥ २७ ॥

दुष्यजीवनं दुष्टजीविकारूपं पौरोहित्यं राजपुरोहितत्वम् ॥ २८-।२९॥

इक्ष्वाकूणां कुले रामः परमात्मा जनिष्यते ।
इति ज्ञातं मया पूर्वं ब्रह्मणा कथितं पुरा ॥ २९ ॥
ततोऽहमाशया राम ! तव सम्बन्धकाङ्क्षया ।
अकार्षं गर्हितमपि तवाचार्यत्वसिद्धये ॥ ३० ॥
ततो मनोरथो मेऽद्य फलितो रघुनन्दन ! ।
त्वदधीना महामाया सर्वलोकैकमोहिनी ॥ ३१ ॥
मां यथा मोहयेन्नैव तथा कुरु रघूद्वह ! ।
गुरुनिष्कृतिकामस्त्वं यदि देह्येतदेव मे ॥ ३२ ॥
प्रसङ्गात् सर्वमप्युक्तं न वाच्यं कुत्रचिन्मया ।
राज्ञा दशरथेनाहं प्रेषितोऽस्मि रघूद्वह ! ॥ ३३ ॥
त्वामामन्त्रयितुं राज्ये श्वोऽभिषेक्ष्यति राघव ! ।
अद्य त्वं सीतया सार्द्धमुपवासं यथाविधि ॥ ३४ ॥
कृत्वा शुचिर्भूमिशायी भव राम ! जितेन्द्रियः ।
गच्छामि राजसान्निध्यं त्वं तु प्रातर्गमिष्यसि ॥ ३५ ॥
इत्युक्त्वा रथमारुह्य ययौ राजगुरुर्द्रुतम् ।
रामोऽपि लक्ष्मणं दृष्ट्वा प्रहसन्निदमब्रवीत् ॥ ३६ ॥

त्वत्सम्बन्धाकाङ्क्षारूपायाः सम्बन्धमाह आचार्यत्वसिद्धय इति ॥ ३० ॥
तस्याचार्यत्वात् गुरुदक्षिणाम् याचते त्वदधीनेत्यादि ॥ ३१ ॥
गुरुनिष्कृतिकामः गुरौ प्रत्युपकारकरणेच्छुः ॥ ३२ ॥
एवमयं मत्स्वरूपमन्यत्रापि प्रकटयिष्यतीति यच्छङ्कनीयमाह प्रसङ्गादिति ॥ ३३ ॥
आमन्त्रयितुं बोधयितुम् ॥ ३४ ॥
प्रातर्गमिष्यसि राजसान्निध्यं वनं चेति भावः ॥ ३५ ॥ ३६ ॥

सौमित्रे ! यौवराज्ये मे श्वोऽभिषेको भविष्यति ।
निमित्तमात्रमेवाहं कर्त्ता भोक्ता त्वमेव हि ॥ ३७ ॥
मम त्वं हि बहिः प्राणो नात्र कार्य्या विचारणा ।
ततो वशिष्ठेन यथा भाषितं तत्तथाऽकरोत् ॥ ३८ ॥
वशिष्ठोऽपि नृपं गत्वा कृतं सर्वं न्यवेदयत् ।
वशिष्ठस्य पुरो राज्ञा ह्युक्तं रामाभिषेचनम् ॥ ३९ ॥
यदा तदैव नगरे श्रुत्वा कश्चित् पुमान् जगौ ।
कौशल्यायै राममात्रे सुमित्रायै तथैव च ॥ ४० ॥
श्रुत्वा ते हर्षसम्पूर्णे ददतुर्हारमुत्तमम् ।
तस्मै ततः प्रीतमनाः कौशल्या पुत्रवत्सला ॥ ४१ ॥
लक्ष्मीं पर्य्यचरद्देवीं रामस्यार्थप्रसिद्धये ।
सत्यवादी दशरथः करोत्येव प्रतिश्रुतम् ४२ ॥
कैकेयीवशगः किन्तु कामुकः किं करिष्यति ।
इति व्याकुलचित्ता सा दुर्गां देवीमपूजयत् ॥ ४३ ॥

एतद्राज्यप्राप्तिफलं तवैवेत्याह निमित्तमात्रमिति कर्त्ता राज्यकर्त्ता भोक्ता राज्यसुखभोक्ता अनेन स्वस्य कर्तृत्वादिराहित्यमपि ध्वनितम् ॥ ३७ ॥

मम त्वं हि बहिः प्राण इति अनेन शेषांशरूपत्वात्तस्य प्राणधारकत्वरूपं जीवत्वं दर्शितम् ॥ ३८ ॥

पुरः अग्रे ॥ ३९ ॥

नगरे विद्यमानः कश्चित्पुमान् राममात्रे सुमित्रायै च न्यवेदयत् ॥ ४० ॥

तस्मै तद्वार्त्ताहराय ॥ ४१

प्रतिश्रुतं प्रतिज्ञातम् ॥ ४२ ॥

दुर्गां देवीं सकलदुःखहरणक्षमत्वादिति भावः ॥ ४३ ॥

एतस्मिन्नन्तरे देवा देवीं वाणीमचोदयन्।
गच्छ देवि! भुवो लोकमयोध्यायां प्रयत्नतः॥ ४४॥
रामाभिषेकविघ्नार्थं यतस्व ब्रह्मवाक्यतः।
मन्थरां प्रविशस्वादौ कैकेयीं च ततः परम्॥ ४५॥
ततो विघ्ने समुत्पन्ने पुनरेहि दिवं शुभे!।
तथेत्युक्त्वा तथा चक्रे प्रविवेशाथ मन्थराम्॥ ४६॥
साऽपि कुब्जा त्रिवक्रा तु प्रासादाग्रमथारुहत्।
नगरं परितो दृष्ट्वा सर्वतः समलङ्कृतम्॥ ४७॥
नानातोरणसम्बाधं पताकाभिरलङ्कृतम्।
सर्वोत्सवसमायुक्तं विस्मिता पुनरागतम्॥ ४८॥
धात्रीं पप्रच्छ मातः किं? नगरं समलङ्कृतम्।
नानोत्सवसमायुक्ता कौशल्या चाति हर्षिता॥ ४९॥
ददाति विप्रमुख्येभ्यो वस्त्राणि विविधानि च।
तामुवाच तदा धात्री रामचन्द्राभिषेचनम्॥ ५०॥
श्वोभविष्यति तेनाद्य सर्वतोऽलङ्कृतं पुरम्।

देवीं कुम्भकर्णस्य निद्रावरव्याहारादिना देवानामुपकर्त्रीमयोध्याप्रदेशावच्छिन्नं भुवो लोकं गच्छेत्यन्वयः॥ ४४॥

आदौ मन्थरां प्रविशस्व कैकेयीप्रेरणार्थम् आर्षस्तङ् ततः परं राजप्रेरणार्थं कैकेयीं प्रविश॥ ४५॥

विघ्ने अभिषेकविघ्ने तथा चक्रे अयोध्यागमनं चक्रे दैवीवाणीति शेषः॥ ४६॥

सा वाण्याविष्टा त्रिषु कटाग्रुरसि कण्ठे च वक्रा॥ ४७॥ ४८॥

किं केन हेतुना नगरमलङ्कृतम् केन च हेतुना कौशल्योत्सवयुक्ता ददाति॥ ४९॥ ५०॥ ५१॥

तच्छ्रुत्वा त्वरितं गत्वा कैकेयीं वाक्यमब्रवीत् ॥ ५१ ॥
पर्य्यङ्कस्थां विशालाक्षीमेकान्ते पर्य्यवस्थिताम् ।
किं शेषे दुर्भगे ! मूढ़े महद्भयमुपस्थितम् ॥ ५२ ॥
न जानीषेऽतिसौन्दर्य्यमानिनी मत्तगामिनी ॥ ५३ ॥
रामस्यानुग्रहाद्राज्ञः श्वोऽभिषेको भविष्यति ।
तच्छ्रुत्वा सहसोत्थाय कैकेयी प्रियवादिनी ॥ ५४ ॥
तस्यै दिव्यं ददौ स्वर्णनूपुरं रत्नभूषितम् ।
हर्षस्थाने किमिति मे कथ्यते ? भयमागतम् ॥ ५५ ॥
भरतादधिको रामः प्रियकृन्मे प्रियंवदः ।
कौशल्यां मां समं पश्यन् सदा शुश्रूषते हि माम् ॥५६॥
रामाद्भयं किमापन्नं तव मूढ़े ! वदस्व मे ।
तच्छ्रुत्वा विषसादाथ कुब्जा कारणवैरिणी ॥ ५७ ॥
शृणु मद्वचनं देवि ! यथार्थं ते महद्भयम् ।
त्वां तोषयन् सदा राजा प्रियवाक्यानि भाषते ॥ ५८ ॥
कामुकोऽतथ्यवादी च त्वां वाचा परितोषयन् ।
कार्य्यं करोति तस्या वै राममातुः सुपुष्कलम् ॥ ५९ ॥

पुत्रस्य राज्याप्राप्त्या दुर्भगे तच्चिन्तारहितत्वाच्च मूढे ॥ ५२ ॥ ५३ ॥

राज्ञोऽनुग्रहाद्रामस्याभिषेको भविष्यतीत्यन्वयः ॥ ५४ ॥ ५५ ॥ ५६ ॥

कारणेन वाणीप्रवेशरूपेण वैरिणी वैरमापन्ना अकारणवैरिणीति च्छेद इति कश्चित् ॥ ५७ ॥

यथार्थं सत्यमेव मयोच्यते ते महद्भयमागतमिति ॥ ५८ ॥

अतथ्यवादीति च्छेदः त्वमेव मे प्रियेत्यादिवाक्यं मिथ्या प्रलाप एव तस्येत्यर्थः कार्य्यं हितम् ॥ ५९ ॥

मनस्येतन्निधायैव प्रेषयामास ते सुतम् ।
भरतं मातुलकुले प्रेषयामास सानुजम् ॥ ६० ॥
सुमित्रायाः समीचीनं भविष्यति न संशयः ।
लक्ष्मणो राममन्वेति राज्यं सोऽनुभविष्यति ॥ ६१ ॥
भरतो राघवस्याग्रे किङ्करो वा भविष्यति ।
विवास्यते वा नगरात् प्राणैर्वा हास्यतेऽचिरात् ॥ ६२ ॥
त्वं तु दासीव कौशल्यां नित्यं परिचरिष्यसि ।
ततोऽपि मरणं श्रेयो यत् सपत्न्याः पराभवः ॥ ६३ ॥
अतः शीघ्रं यतस्वाद्य भरतस्याभिषेचने ।
रामस्य वनवासार्थं वर्षाणि नवपञ्च च ॥ ६४ ॥
ततो रूढोऽभये पुत्रस्तव राज्ञि ! भविष्यति ।
उपायन्ते प्रवक्ष्यामि पूर्वमेव सुनिश्चितम् ॥ ६५ ॥
पुरा देवासुरे युद्धे राजा दशरथः स्वयम् ।
इन्द्रेण याचितो धन्वी सहायार्थं महारथः ॥ ६६ ॥
जगाम सेनया सार्द्धं त्वया सह शुभानने ! ।
युद्धं प्रकुर्वतस्तस्य राक्षसैः सह धन्विनः ॥ ६७ ॥

अतिदुःखावेशात् प्रेषयामासेति पुनरुक्तिर्न दोषाय ॥ ६० ॥ ६१ ॥

प्राणैर्वा हास्यते त्याज्यते वधो भविष्यतीत्यर्थः ॥ ६२ ॥

सपत्न्याः सकाशाद्यत्पराभवः तस्माद्विरूपस्ततो मरणं श्रेय इत्यर्थः ॥ ६२ ॥

अभिषेचने विषयसप्तमी नवपञ्च चतुर्दश ॥ ६४ ॥

हे राज्ञि अभये अभयस्थाने भयरहिते तव पुत्रो रूढो राज्ये दृढो भविष्यतीत्यर्थः ननु वयसा सर्वगुणैश्च, ज्येष्ठे विद्यमाने कथं कनीयसो मे पुत्रस्य राज्यमत आह उपायमिति ॥ ६५

इन्द्रेण स्वयं याचित इत्यन्वयः ॥ ६६ ॥ ६७ ॥

तदाक्षकीलो न्यपतच्छिन्नस्तस्य न वेद सः ।
त्वं तु हस्तं समावेश्य कीलरन्ध्रेऽतिधैर्य्यतः ॥ ६८ ॥
स्थितवत्यस्मितापाङ्गी पतिप्राणपरीप्सया ।
ततो हत्वाऽसुरान् सर्वान् ददर्श त्वामरिन्दमः ॥ ६९ ॥
आश्चर्य्यं परमं लेभे त्वामालिङ्ग्य मुदान्वितः ॥
वृणीष्व यत्ते मनसि वाञ्छितं वरदोऽस्म्यहम् ॥ ७० ॥
वरद्वयं वृणीष्व त्वमेवं राजाऽवदत् स्वयम् ।
त्वयोक्तो वरदो राजन्! यदि दत्तं वरद्वयम् ॥ ७१ ॥
त्वय्येव तिष्ठतु चिरं न्यासभूतं ममानघ ! ।
यदा मेऽवसरो भूयात्तदा देहि वरद्वयम् ॥ ७२ ॥
तथेत्युक्त्वा स्वयं राजा मन्दिरं व्रज सुव्रते ! ।
त्वत्तः श्रुतं मया पूर्वमिदानीं स्मृतिमागतम् ॥ ७३ ॥
अतः शीघ्रं प्रविश्याद्य क्रोधागारं रुषान्विता ।
विमुच्य सर्वाभरणं सर्वतो विनिकीर्य च ।
भूमावेव शयाना त्वं तूष्णीमातिष्ठ भामिनी ॥ ७४ ॥

अक्षकीलः रथाक्षकील इत्यर्थः स तस्य छिन्नो न्यपतत् स दशरथो न वेद तत्कीलरन्ध्रे कीलस्थाने स्वहस्तं दत्त्वा त्वं स्थितवतीत्यन्वयः ॥ ६८ ॥ ६९ ॥ ७० ॥

राजा अवदत् ततो वरदो राजा त्वयोक्तः किमुक्तस्तदाह राजन्नित्यादि ॥ ७१ ॥

ममेति वरद्वयमिति शेषः त्वया मह्यं दत्तं वरद्वयमित्यर्थः ॥ ७२ ॥

तथेत्युक्त्वा हे सुव्रते ! मन्दिरं व्रज युद्धभूमेः शिबिरं व्रजेति स्वयमुक्तवानिति शेषः एतत्सर्वं त्वत्त एव श्रुतम् ॥ ७३ ॥

तूष्णीमातिष्ठ मौनं कुरु यतः प्रार्थिताऽपि त्वदुक्तं करिष्यामीति प्रतिज्ञापर्य्यन्तं राज्ञा सह मा वदेत्यर्थः ॥ ७४ ॥

यावत् सत्यं प्रतिज्ञाय राजाऽभीष्टं करोति ते।
श्रुत्वा शिवज्ञयोक्तं तत्तदा कैकयनन्दिनी ॥ ७५ ॥
तथ्यमेवाखिलं मेने दुःसङ्गाहितविभ्रमा।
तामाह कैकयी हृष्टा कुतस्ते बुद्धिरीदृशी ॥ ७६ ॥
एवं त्वां बुद्धिसम्पन्नां न जाने वक्रसुन्दरि!।
भरतो यदि राजा मे भविष्यति सुतः प्रियः ॥ ७७ ॥
ग्रामान् शतं प्रदास्यामि मम त्वं प्राणवल्लभा।
इत्युक्त्वा कोपभवनं प्रविश्य सहसा रुषा ॥ ७८ ॥
विमुच्य सर्वाभरणं परिकीर्य समन्ततः।
भूमौ शयाना मलिना मलिनाम्बरधारिणी ॥ ७९ ॥
प्रोवाच शृणु मे कुब्जे यावद्रामो वनं व्रजेत्।
प्राणांस्त्यक्ष्येऽथ वा वक्रे शयिष्ये तावदेव हि ॥ ८० ॥
निश्चयं कुरु कल्याणि! कल्याणं ते भविष्यति।
इत्युक्त्वा प्रययौ कुब्जा गृहं साऽपि तथाऽकरोत् ॥ ८१ ॥

तदेवाह यावदिति वचनम् सत्यं पूर्वं शपथपूर्वकमिति यावत्तथा प्रतिज्ञाय राजा तेऽभीष्टं यावत्करोति तावन्मौनं कुर्वित्यर्थः ॥ ७५ ॥

दुःसङ्गेन जातविभ्रमा आहितेऽपि हितबुद्धिमती हृष्टा दुष्टभावा ॥७६॥

वक्राऽपि मतिमत्त्वात्त्वं सुन्दरी तत्सम्बोधनं वक्रसुन्दरि! ॥ ७७ ॥ ७८ ॥

समन्ततः परिकीर्य इतस्ततः प्रक्षिप्य मलिनभूमिशयना मलिनवस्त्रा ॥ ७९ ॥

यावद्रामगमनं तावदेवं शयनमेव सर्वथा तदगमने तु प्राणांस्त्यक्ष्ये इत्यर्थः ॥ ८० ॥

निश्चयस्तत्रार्थ विषयम् ॥ ८१ ॥

धीरोऽत्यन्तदयान्वितोऽपि सुगुणाचारान्वितोवाऽथ वा
नीतिज्ञो विधिवाददेशिकपरो विद्याविवेकोऽथ वा ।
दुष्टानामतिपापभावितधियां सङ्गं सदा चेद्भजेत्
तद्बुद्ध्या परिभावितो व्रजति तत्साम्यं क्रमेण स्फुटम् ८२
अतः सङ्गः परित्याज्यो दुष्टानां सर्वदैव हि ।
दुःसङ्गी च्यवते स्वार्थाद्यथेयं राजकन्यका ॥ ८३ ॥
इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
अयोध्याकाण्डे द्वितीयः सर्गः ।

अथ कैकेय्याः कुब्जासङ्गादिदमविचार्यकारित्वमित्यर्थः विशेषं सामान्य-रूपेणार्थान्तरन्यासेन दर्शयति धीर इति धर्म्मात्मना इत्यर्थः सुगुणस्वाचा-राचारान्वित इत्यर्थः वायन्स्वार्थे विधिवादेति तात्पर्ये यो देशिको गुरुः तत्परस्तत्स्वादरः गुरुसेवया सकलविधिनिषेधार्थज्ञः इत्यर्थः विद्या वस्तुत स्वज्ञानं तेन विवेकः कर्त्तव्यविचारो यस्य सः ॥ ८२ ॥ ८३ ॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थत्वादिवि० श्रीरामवर्म्मणः कृतावध्यात्मरामायणसेतौ अयोध्याकाण्डे द्वितीयः सर्गः ।

---

# तृतीयः सर्गः ।

## श्रीमहादेव उवाच ।

ततो दशरथो राजा रामाभ्युदयकारणात् ।
आदिश्य मन्त्रिप्रकृतीः सानन्दो गृहमाविशत् ॥ १ ॥
तत्रादृष्ट्वा प्रियां राजा किमेतदिति विह्वलः ।
या पुरा मन्दिरं तस्याः प्रविष्टे मयि शोभना ॥ २ ॥
हसन्ती मामुपायाति सा किं नैवाद्य दृश्यते ।
इत्यात्मन्येव संचिन्त्य मनसाऽतिविदूयता ॥ ३ ॥
पप्रच्छ दासीनिकरं कुतो वः स्वामिनी शुभा ? ।
नायाति मां यथा पूर्वं मत्प्रिया प्रियदर्शना ॥ ४ ॥
ता ऊचुः क्रोधभवनं प्रविष्टा नैव विद्महे ।
कारणं तत्र देव ! त्वं गत्वा निश्चेतुमर्हसि ॥ ५ ॥
इत्युक्तो भयसन्त्रस्तो राजा तस्याः समीपगः ।
उपविश्य शनैर्देहं स्पृशन्वै पाणिनाऽब्रवीत् ॥ ६ ॥
किं शेषे वसुधापृष्ठे ? पर्यङ्कादीन् विहाय च ।
मां त्वं खेदयसे भीरु ! यतो मां नावभाषसे ॥ ७ ॥
अलङ्कारं परित्यज्य भूमौ मलिनवाससा ।

तत इति मन्त्रिणः सुमन्त्रादयः प्रकृतयो जनपौराः ॥ १ ॥
तस्याः कैकेय्या मन्दिरं प्रविष्टे मयि कैकेयी हसन्ती मामुपायाति साद्य किं न दृश्यते एतत्किमित्यन्वयः ॥ २ ॥ ३ ॥
वः युष्माकम् ॥ ४ ॥ ५ ॥ ६ ॥
मां किं खेदयसे तत्र हेतुर्वद इति ॥ ७ ॥
किमर्थं तिष्ठसीति शेषः ॥ ८ ॥

किमर्थं ब्रूहि सकलं विधास्ये तव वाञ्छितम् ॥ ८ ॥
को वा तवाहितं कर्त्ता नारी वा पुरुषोऽपि वा।
स मे दण्ड्यश्च वध्यश्च भविष्यति न संशयः ॥ ९ ॥
ब्रूहि देवि! यथाप्रीतिस्तदवश्यं ममाग्रतः।
तदिदानीं साधयिष्ये सुदुर्लभमपि क्षणात् ॥ १० ॥
जानासि त्वं मम स्वान्तं प्रियं मां स्ववशे स्थितम्।
तथाऽपि मां खेदयसे वृथा तव परिश्रमः ॥ ११ ॥
ब्रूहि? कन्धनिनं कुर्य्यां दरिद्रं ते प्रियङ्करम्।
धनिनं क्षणमात्रेण निर्धनं च तवाहितम् ॥ १२ ॥
ब्रूहि? कं वा वधिष्यामि वधार्हो वा विमोक्ष्यते।
किमत्र बहुनोक्तेन प्राणान्दास्यामि ते प्रिये! ॥ १३ ॥
मम प्राणात्प्रियतरो रामो राजीवलोचनः।
तस्योपरि शपे ब्रूहि त्वद्धितं तत्करोम्यहम् ॥ १४ ॥
इति ब्रुवाणं राजानं शपन्तं राघवोपरि।

वाञ्छितविधानप्रकारमेवाह को वेति ॥ ९ ॥

यथा येन प्रकारेण दण्डनेन वधेन वा तदवश्यं ब्रूहि ॥ १० ॥

मम स्वान्तं जानासि त्वदुक्ताःसहिष्णु त्वमेति शेषः प्रियं मां स्वाधीनं जानासि एवं परिश्रमं विनापि त्वदुक्तार्थानुष्ठानं मया कर्त्तव्यमेवेति वृथायं परिश्रम इति भावः ॥ ११ ॥

ते प्रियङ्करं कं धनिनं कुर्य्याम् अप्रियङ्करं च दरिद्रं कुर्य्याम् धनिनं कुबेरतुल्यधनवन्तमपि क्षणेन त्वदहितं निधनं करिष्यामीति शेषः ॥ १२ ॥

कं ब्रह्मतुल्यमपि वधिष्यामि वधार्हश्चौरादिरपि त्वत्प्रियो विमोक्ष्यते मयेति शेषः ॥ १३ ॥ १४ ॥

यत्तव हितं तत्करोमीति शपे रामशपथपूर्वकं प्रतिजाने, इत्यर्थः

शनैर्विमृज्य नेत्रे सा राजानं प्रत्यभाषत ॥ १५ ॥
यदि सत्यप्रतिज्ञोऽसि शपथं कुरुषे यदि ।
याच्ञां मे सफलां कर्त्तुं शीघ्रमेव त्वमर्हसि ॥ १६ ॥
पूर्वं देवासुरे युद्धे मया त्वं परिरक्षितः ।
तदा वरद्वयं दत्तं त्वया मे तुष्टचेतसा ॥ १७ ॥
तद्द्वयं न्यासभूतं मे स्थापितं त्वयि सुव्रत ! ।
तत्रैकेन वरेणाशु भरतं मे प्रियं सुतम् ॥ १८ ॥
एभिः सम्भृतसम्भारैर्यौवराज्येऽभिषेचय ।
अपरेण वरेणाशु रामो गच्छतु दण्डकान् ॥ १९ ॥
मुनिवेशधरः श्रीमान् जटावल्कलभूषणः ।
चतुर्दशसमास्तत्र कन्दमूलफलाशनः ॥ २० ॥
पुनरायातु तस्यान्ते वने वा तिष्ठतु स्वयम् ।
प्रभाते गच्छतु वनं रामो राजीवलोचनः ॥ २१ ॥
यदि किञ्चिद्विलम्बेत प्राणांस्त्यक्ष्ये तवाग्रतः ।
भव सत्यप्रतिज्ञस्त्वमेतदेव मम प्रियम् ॥ २२ ॥
श्रुत्वेतद्दारुणं वाक्यं कैकेय्या रोमहर्षणम् ।
निपपात महीपालो वज्राहत इवाचलः ॥ २३ ॥
शनैरुन्मील्य नयने विमृज्य परया भिया ।

॥ १५ । १६ । १७ । १८ । १९ । २० । २१ ॥

किञ्चिद्विलम्बेत प्रातःकालोत्तरं क्षणमपि विलम्बं तदा प्राणत्यागः कर्त्तव्य इत्यर्थः ॥ २२ ॥

रोमहर्षणं हृष्यतां रोमाञ्चोत्पादकमतिक्रूरत्वात् ॥ २२ ॥

परया उत्कृष्टया कैकेयीभिया नेत्रे विमृज्याश्रुरहिते कृत्वा चक्षुर्ने-

दुःस्वप्नो वा मया दृष्टो ह्यथ वा चित्तविभ्रमः ॥ २४ ॥
इत्यालोक्य पुरःपत्नीं व्याघ्रीमिव पुरःस्थिताम्।
किमिदं भाषसे ? भद्रे ! मम प्राणहरं वचः ॥ २५ ॥
रामः कमपराधं ते कृतवान् कमलेक्षणः।
ममाग्रे राघवगुणान् वर्णयस्यनिशं शुभान् ॥ २६ ॥
कौशल्यां मां समं पश्यन् शुश्रूषां कुरुते सदा।
इति ब्रुवन्ती त्वं पूर्वमिदानीं भाषसेऽन्यथा ॥ २७ ॥
राज्यं गृहाण पुत्राय रामस्तिष्ठतु मन्दिरे।
अनुगृह्णीष्व मां वामे ! रामान्नास्ति भयं तव ॥ २८ ॥
इत्युक्त्वाऽश्रुपरीताक्षः पादयोर्निपपात ह।

त्वं हहाऽतिक्रोधेन राघवधं प्रार्थयेदिति अधिका भीः निहतेति पाठे पतनवेलायां पराङ्मुखपतनादुन्नरीत्या भित्त्वैव झटिति तत्र सुखीभूवेत्यर्थः पुनर्मनुष्यदेहधरायां मन्नार्य्यायां एवं क्रौर्य्यं सम्भवं पर्य्यालोच्य दुःस्वप्न इति तर्कः आप्ततः स्वप्नानुभवासम्भवादाह अथ वा ममैव चित्तस्य विभ्रमः अन्यार्थकस्यान्यार्थकत्वग्रहः ॥ २४ ॥

इति विचार्य्येति शेषः पुरःस्थितां व्याघ्रीमिव पुरः पत्नीं कैकेयीमालोक्य हहा तद्वस्तुतत्त्वनिर्णयाय तामाहेति शेषः किमाहेत्यत आह किमिदमिति मम प्राणहरमित्यनेन स्ववैधव्यसम्पादकत्वेनात्यन्तं स्वानिष्टं कथं भाषस इत्यर्थः ॥ २५ ॥

ननु रामकृतातिदुःसहापराधवशात् स्वानिष्टे मे प्रवृत्तिस्तत्राह राम इति अपराधाकरणं प्रागुक्तात्वद्वाक्येनैव निर्णीतमित्याह ममेति ॥ २६ ॥

इदानीमन्यथा भाषसे अतः पूर्वापरविरोधादिदं त्वद्वचोऽश्रद्धेयमित्यर्थः ॥ २७ ॥

यदि राज्यलोभस्ते तत्राह राज्यमिति रामस्त्वेह स्थितावपि न ते भयमित्यर्थः वामे ! वक्रिव्यवहारपरायणे ! ॥ २८ ॥

कैकेयी प्रत्युवाचेदं सापि रक्तान्तलोचना ॥ २९ ॥
राजेन्द्र ! किं त्वं भ्रान्तोऽसि उक्तं तद्भाषसेऽन्यथा।
मिथ्या करोषि चेत् स्वीयं भाषितं नरको भवेत् ॥ ३० ॥

वनं न गच्छेत् यदि रामचन्द्रः
प्रभातकालेऽजिनचीरयुक्तः।
उद्बन्धनं वा विषभक्षणं वा
कृत्वा मरिष्ये पुरतस्तवाहम् ॥ ३१ ॥
सत्यप्रतिज्ञोऽहमितीह लोके
विडम्बसे सर्वसभान्तरेषु।
रामोपरि त्वं शपथं च कृत्वा
मिथ्याप्रतिज्ञो नरकं प्रयाहि ॥ ३२ ॥

इत्युक्तः प्रियया दीनो मग्नो दुःखार्णवे नृपः।
मूर्च्छितः पतितो भूमौ विसंज्ञो मृतको यथा ॥ ३३ ॥
एवं रात्रिर्गता तस्य दुःखात् संवत्सरोपमा।
अरुणोदयकाले तु वन्दिनो गायका जगुः ॥ ३४ ॥
निवारयित्वा तान् सर्वान् कैकेयी रोषमास्थिता।
ततः प्रभातसमये मध्यकक्षमुपस्थिता ॥ ३५ ॥

सापि कैकेयी पूर्वं तादृशभाषणशीलाऽतिक्रुद्धरपि कैकेयी देववाण्या-वेशवशाद्रक्तान्तलोचना सती राजानं प्रत्युवाच ॥ २९ ॥

उक्तं प्रतिज्ञापूर्वमुक्तम् ॥ ३० ॥

मिथ्याभाषणजन्यो नरकोऽस्त्येव पुनः पापान्तरजनरकमपि दर्शयति वनमिति अजिनमेव चीरं तुणिवस्त्रं तेन युक्तः ॥ ३१ ॥

विडम्बसे शापसे रामोपरीत्यनेन भगवच्छपथो मिथ्या त्वया कृत इति ध्वनयति ॥ ३२ । ३३ । ३४ ॥

ब्राह्मणाः क्षत्रिया वैश्याः ऋषयः कन्यकास्तथा ।
छत्रञ्च चामरं दिव्यं गजो वाजी तथैव च ॥ ३६ ॥
अन्याश्च वारमुख्या याः पौरजानपदास्तथा ।
वशिष्ठेन यथाज्ञप्तं तत्सर्वं तत्र संस्थितम् ॥ ३७ ॥
स्त्रियो बालाश्च वृद्धाश्च रात्रौ निद्रां न लेभिरे ।
कदा द्रक्ष्यामहे रामं पीतकौशेयवाससम् ॥ ३८ ॥
सर्वाभरणसम्पन्नं किरीटकटकोज्ज्वलम् ।
कौस्तुभाभरणं श्यामं कन्दर्पशतसुन्दरम् ॥ ३९ ॥
अभिषिक्तं समायातं गजारूढं स्मिताननम् ।
श्वेतच्छत्रधरं तत्र लक्ष्मणं लक्षणान्वितम् ॥ ४० ॥
रामं कदा वा द्रक्ष्यामः प्रभातं वा कदा भवेत् ।
इत्युत्सुकधियः सर्वे बभूवुः पुरवासिनः ॥ ४१ ॥
नेदानीमुत्थितो राजा किमर्थं चेति चिन्तयन् ।
सुमन्त्रः शनकैः प्रायाद्यत्र राजाऽवतिष्ठते ॥ ४२ ॥
वर्धयन् जयशब्देन प्रणमन् शिरसा नृपम् ।
अतिखिन्नं नृपं दृष्ट्वा कैकेयीं समपृच्छत ॥ ४३ ॥
देवि ! कैकेयि ! वर्धस्व किं ? राजा दृश्यतेऽन्यथा ।
तमाह कैकेयी राजा रात्रौ निद्रां न लब्धवान् ॥ ४४ ॥

तान् मन्थरादीन् गणान्निवर्त्य रोषं रोषातिशयं चास्थिता प्राप्ता प्रातःसमये जातेऽपि रामप्रावासार्थं वनाय न प्रेषयतीत्यधिको रोषः ॥ ३५ । ३६ । ३७ । ३८

किरीटकटकानि उज्ज्वलानि शोभावन्ति यस्य तम् । ३९ । ४० । ४१

सुमन्त्र इति प्रजानां तादृशीं चिन्तां ज्ञात्वा स्वयमपि चिन्तयन्नित्यर्थः ॥ ४२ । ४३ ॥

अन्यथा शोकवान् अप्रसन्नश्च ॥ ४४ । ४५ ।

राम रामेति रामेति राममेवानुचिन्तयन्।
प्रजागरेण वै राजा ह्यस्वस्थ इव लक्ष्यते।
राममानय शीघ्रं त्वं राजा द्रष्टुमिहेच्छति ॥ ४५ ॥

सुमन्त्र उवाच।

अश्रुत्वा राजवचनं कथं गच्छामि भामिनि!।
तच्छ्रुत्वा मन्त्रिणो वाक्यं राजा मन्त्रिणमब्रवीत् ॥४६॥
सुमन्त्र! रामं द्रक्ष्यामि शीघ्रमानय सुन्दरम्।
इत्युक्तस्त्वरितं गत्वा सुमन्त्रो राममन्दिरम् ॥ ४७ ॥
अवारितः प्रविष्टोऽयं त्वरितं राममब्रवीत्।
शीघ्रमागच्छ भद्रं ते राम! राजीवलोचन! ॥ ४८ ॥
पितुर्गेहं मया सार्द्धं राजा त्वां द्रष्टुमिच्छति।
इत्युक्तो रथमारुह्य सम्भ्रमात्त्वरितो ययौ ॥ ४९ ॥
रामः सारथिना सार्द्धं लक्ष्मणेन समन्वितः।
मध्यकक्षे वशिष्ठादीन् पश्यन्नेव त्वरान्वितः ॥ ५० ॥
पितुः समीपं सङ्गम्य ननाम चरणौ पितुः।
राममालिङ्गितुं राजा समुत्थाय ससम्भ्रमः ॥ ५१ ॥
बाहू प्रसार्य्य रामेति दुःखान्मध्ये पपात ह।
हाहेति रामस्तं शीघ्रमालिङ्ग्याङ्के न्यवेशयत् ॥ ५२ ॥

भामिनि कोपने इत्यर्थः कोपना सैव भामिनीति निघण्टुः ॥ ४६ । ४७
अतिवल्लभत्वात् शिवत्वाच्च द्वारपालैरवारितः ॥ ४८ । ४९ ॥
पश्यन्नेव पितृदर्शनत्वरया दर्शनमात्रेण चक्षुषैव तेषां शिष्टाचारं कुर्वन्नित्यर्थः ॥ ५० ॥
ससम्भ्रमः सादरः ॥ ५१ ॥
दुःखात् भाविरामविरहदुःखात् ॥ ५२ ॥

राजानं मूर्च्छितं दृष्ट्वा चुक्रुशुः सर्वयोषितः।
किमर्थं रोदनमिति(१) वशिष्ठोऽपि समाविशत् ॥५३॥
रामः पप्रच्छ किमिदं राज्ञो दुःखस्य कारणम्।
एवं पृच्छति रामे सा कैकेयी राममब्रवीत् ॥ ५४ ॥
त्वमेव कारणं ह्यत्र राज्ञो दुःखोपशान्तये।
किञ्चित्कार्य्यं त्वया राम! कर्त्तव्यं नृपतेर्हितम् ॥ ५५ ॥
कुरु सत्यप्रतिज्ञस्त्वं राजानं सत्यवादिनम्।
राज्ञा वरद्वयं दत्तं मम सन्तुष्टचेतसा ॥ ५६ ॥
त्वदधीनं तु तत्सर्वं वक्तुं त्वां लज्जते नृपः।
सत्यपाशेन सम्बद्धं पितरं त्रातुमर्हसि ॥ ५७ ॥
पुत्त्रशब्देन चैतद्धि नरकात्त्रायते पिता।
रामस्तयोदितं श्रुत्वा शूलेनाभिहतो यथा ॥ ५८ ॥
व्यथितः कैकयीं प्राह किं मामेवं प्रभाषसे।
पित्रर्थे जीवितं दास्ये पिबेयं विषमुल्बणम् ॥ ५९ ॥

समाविशत् प्राविशत् राजगृहमिति शेषः ॥ ५३ । ५४ ॥

राजदुःखोपशान्तये तदर्थं त्वमेव कारणम् तदेव कारणत्वं समर्थयति किञ्चिदिति ॥ ५५ ॥

कार्य्यमेवाह सत्यप्रतिज्ञ इति त्वं दण्डकगमनविषये सत्यप्रतिज्ञो भूत्वा इत्यर्थः ॥ ५६ ॥

तत्सर्वं तद्वरद्वयानुष्ठानं त्वदधीनम् अतः सत्यपाशेनेति ॥ ५७ ॥

पुत्त्रशब्देनैतदुच्यते तदेव दर्शयति पुन्नाम्नो नरकात् पिता त्रायते येन स पुत्त्र इत्यर्थः ॥ ५८ ॥

पिबेयं विषं पित्राज्ञया इति शेषः ॥ ५९ ॥

---

(१) किमेतद्रोदनमिति इति वा पाठः।

सीतां लक्ष्मणोऽथ कौशल्यां राज्यं चापि त्यजाम्यहम्।
अनाज्ञप्तोऽपि कुरुते पितुः कार्य्यं स उत्तमः ॥ ६० ॥
उक्तः करोति यः पुत्त्रः स मध्यम उदाहृतः।
उक्तोऽपि कुरुते नैव स पुत्त्रो मल उच्यते ॥ ६१ ॥
अतः करोमि तत्सर्वं यन्मामाह पिता मम।
सत्यं सत्यं करोम्येव रामो द्विर्नाभिभाषते ॥ ६२ ॥
इति रामप्रतिज्ञां सा श्रुत्वा वक्तुं प्रचक्रमे।
राम! त्वदभिषेकार्थं सम्भाराः सम्भृताश्च ये ॥ ६३ ॥
तैरेव भरतोऽवश्यमभिषेच्यः प्रियो मम।
अपरञ्च वरेणाशु चीरवासा जटाधरः ॥ ६४ ॥
वनं प्रयाहि शीघ्रं त्वमद्यैव पितुराज्ञया।
चतुर्दशसमास्तत्र वस मुन्यन्नभोजनः ॥ ६५ ॥
एतदेव पितुस्तेऽद्य कार्य्यं त्वं कर्त्तुमर्हसि।
राजा तु लज्जते वक्तुं त्वामेवं रघुनन्दन! ॥ ६६ ॥

श्रीराम उवाच।

भरतस्यैव राज्यं स्यादहं गच्छामि दण्डकान्।
किन्तु राजा न वक्तीह मां न जानेऽत्रकारणम् ॥६७॥

यः कुरुते स उत्तम इत्यर्थः ॥ ६० ॥
मलो मलसदृशः ॥ ६१ । ६२ । ६३ ॥
तैर्भरतोऽवश्यमभिषेच्य एवेत्यन्वयः ॥ ६४ ॥
समाः वर्षाणि ॥ ६५ । ६६ ॥
राजा किं केन कारणेनेह विषये मां न वक्ति तत्कारणं न जाने
अकर्त्तव्यतापत्त्यावनायासस्य भावादिति भावः ॥ ६७ ॥

श्रुत्वैतद्रामवचनं दृष्ट्वा रामं पुरःस्थितम् ।
प्राह राजा दशरथो दुःखितो दुःखितं वचः ॥ ६८ ॥
स्त्रीजितं भ्रान्तहृदयमुन्मार्गपरिवर्त्तिनम् ।
निगृह्य मां गृहाणेदं राज्यं पापं न तद्भवेत् ॥ ६९ ॥
एवं चेदनृतं नैव मां स्पृशेद्रघुनन्दन ! ।
इत्युक्त्वा दुःखसन्तप्तो विललाप नृपस्तदा ॥ ७० ॥
हा राम ! हा जगन्नाथ ! हा मम प्राणवल्लभ ! ।
मां विसृज्य कथं घोरं विपिनं गन्तुमर्हसि ॥ ७१ ॥
इति रामं समालिङ्ग्य मुक्तकण्ठो रुरोद ह ।
विसृज्य नयने रामः पितुः सजलपाणिना ॥ ७२ ॥
आश्वासयामास नृपं शनैः स नयकोविदः ।
किमत्र दुःखेन विभो ! राज्यं शास्तु मेऽनुजः ॥ ७३ ॥
अहं प्रतिज्ञां निस्तीर्य्य पुनर्यास्यामि ते पुरम् ।

दुःखितं राज्ञोऽवचनेनेति शेषः ॥ ६८ ॥

ज्येष्ठादाक्षिप्य कनिष्ठाय राज्यदानरूपे उन्मार्गे वर्त्तमानमत एव भ्रान्तहृदयं स्त्रीजितं च पापं न तद्भवेदिति 'गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः । उत्पथं प्रतिपन्नस्य दण्ड एव विधीयते' इति नीत्युक्तेः त्वया बलात्कारेण गृहीतात् ममाप्येतद्वरदानात्ततो न दोष इत्याह एवं चेदिति ॥ ७० ॥

यद्यपि तव जगन्नाथत्वाद्राज्यविपिनयोः समतैव तथाऽपि त्वद्वियोगे मम प्राणास्त्वद्वल्लभत्वात् त्वया सह गमिष्यन्तीत्याह मम प्राणवल्लभेति ॥ ७१ ॥

विसृज्य निरस्ताश्रुके कृत्वा ॥ ७२ ॥

प्राप्तविलासार्थम् मदनुजेनापि राज्यकरणे तस्यापि त्वत्परत्वात् त्वद्भक्तत्वाच्चान दुःखं कार्यमिति भावः ॥ ७२ । ७३ ॥

राज्यात्कोटिगुणं सौख्यं मम सञ्जवने सत: ॥ ७४ ॥
त्वत्सत्यपालनं देव! कार्य्यं चापि भविष्यति ।
कैकेय्याश्च प्रियो राजन्वनवासो महागुण: ॥ ७५ ॥
इदानीं गन्तुमिच्छामि व्येतु मातुश्च हृज्ज्वर: ।
सम्भाराश्चोपह्रियन्तामभिषेकार्थमागता: ॥ ७६ ॥
मातरं च समाश्वास्य अनुनीय च जानकीम् ।
आगत्य पादौ वन्दित्वा तव यास्ये सुखं वनम् ॥ ७७ ॥
इत्युक्त्वा तु परिक्रम्य मातरं द्रष्टुमाययौ ।
कौशल्याऽपि हरे: पूजां कुरुते रामकारणात् ॥ ७८ ॥
होमं च कारयामास ब्राह्मणेभ्यो ददौ धनम् ।
ध्यायते विष्णुमेकाग्रमनसा मौनमास्थिता ॥ ७९ ॥
अन्तस्थमेकं घनचित्प्रकाशं
निरस्तसर्वातिशयस्वरूपम् ।

मम सुखं तु विशिष्टं हे देव त्वत्सत्यपालनरूपं कार्य्यञ्च भविष्यतीति अधिको लाभ इति शेषेण देवानां कार्य्यं च रक्षोनाशरूपं भविष्यतीति ध्वनितम् कैकेय्याश्च प्रियोऽतो महागुण: बहुगुण इत्यर्थ: ॥ ७५ ॥

इदानीमेवेत्यर्थ: उपह्रियन्तां दूरीक्रियन्ताम् ॥ ७६ ॥

सुखमित्यनेन मम वनगमने दु:खलेशोऽपि नास्ति इति ध्वनितम् ॥ ७७ ॥

रामकारणात् रामाभिषेकविघ्ननिवृत्तिनिमित्तम् ॥ ७८ ॥

एकाग्रमनसोक्तफलार्थमेव विष्णुं ध्यायते च आर्षमात्मनेपदम् ॥ ७९ ॥

अन्तस्थमन्तर्यामितया हृदये स्थितम् ध्येयं रूपमाह घनेत्यादि निरस्तेत्यादिना निर्विकल्पसमाधिस्थे युक्तं सकलविशेषरहितध्यानस्यैव निर्वि-

विष्णुं सदानन्दमयं हृदब्जे
सा भावयन्ती न ददर्श रामम् ॥ ८० ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वर-
संवादे अयोध्याकाण्डे
तृतीयः सर्गः ।

कस्मकस्मात् निरस्तानि सर्वाणि अतिशयस्वरूपाणि भेदकस्वरूपाणि येने-
त्यर्थः ॥ ८० ॥

इति श्रीमत्ककवराजविपद्धरणसमर्थत्वादिवि० श्रीरामवर्मणः
कृतावध्यात्मरामायणसेतौ अयोध्याकाण्डे
तृतीयः सर्गः

———

# चतुर्थः सर्गः ।

ततः सुमित्रा दृष्ट्वैनं रामं राज्ञीं ससम्भ्रमा ।
कौसल्यां बोधयामास रामोऽयं समुपस्थितः ॥ १ ॥
श्रुत्वैव रामनामैषा बहिर्दृष्टिप्रवाहिता ।
रामं दृष्ट्वा विशालाक्षमालिङ्ग्याङ्के न्यवेशयत् ॥ २ ॥
मूर्ध्न्यवघ्राय पस्पर्श गात्रं नीलोत्पलच्छविम् ।
भुंक्ष्व पुत्रेति च प्राह मिष्टमन्नं क्षुधार्दितः ॥ ३ ॥
रामः प्राह न मे मातर्भोजनावसरः कृतः ।
दण्डकागमने शीघ्रं मम कालोऽद्य निश्चितः ॥ ४ ॥
कैकेयीवरदानेन सत्यसन्धः पिता मम ।
भरताय ददौ राज्यं ममाप्यारण्यमुत्तमम् ॥ ५ ॥
चतुर्दशसमास्तत्र ह्युषित्वा मुनिवेशधृक् ।
आगमिष्ये पुनः शीघ्रं न चिन्तां कर्त्तुमर्हसि ॥ ६ ॥
तच्छ्रुत्वा सहसोद्विग्ना मूर्च्छिता पुनरुत्थिता ।
आह रामं सुदुःखार्त्ता दुःखसागरसंप्लुता ॥ ७ ॥

चतुर्थे लक्ष्मणं क्रुद्धं सान्त्वयित्वोपदेशतः सीतया सहितोऽगच्छद्दण्डकं चेति वर्ण्यते ॥ १ ॥

ससम्भ्रमा सादरा सुमित्रा राज्ञीं कौसल्यां बोधयामासेत्यन्वयः ॥ १ ॥

बहिर्दृष्टिप्रवाहिता त्वरमाणाभिरित्यर्थः ॥ २ ॥

भुंक्ष्व पुत्रेति इति अत्र सवर्णाभावात्सन्धिः ॥ ३ ॥

भोजनावसरो न कृतः पित्रेति शेषः निश्चितः कृतः पित्रेति शेषः ॥ ४।५

मुनिवेशः चीरवासस्त्वादिकं चिन्तां मद्विषयां कर्त्तुं नार्हसि ॥ ६ ॥

संप्लुता मग्ना ॥ ७ ॥

यदि राम! वनं सत्यं यासि चेन्नय मामपि।
त्वद्विहीना क्षणार्द्धं वा जीवितं धारये कथम्॥ ८॥
यथा गौर्बालकं वत्सं त्यक्त्वा तिष्ठेन्न कुत्रचित्।
तथैव त्वां न शक्नोमि त्यक्तुं प्राणात्प्रियं सुतम्॥ ९॥
भरताय प्रसन्नश्चेद्राज्यं राजा प्रयच्छतु।
किमर्थं वनवासाय त्वामाज्ञापयति प्रियम्॥ १०॥
कैकेय्या वरदो राजा सर्वस्वं वा प्रयच्छतु।
त्वया किमपराद्धं हि कैकेय्या वा नृपस्य वा॥ ११॥
पिता गुरुर्यथा राम! तवाहमधिका ततः।
पित्राज्ञप्तो वनं गन्तुं वारयेयमहं सुतम्॥ १२॥
यदि गच्छसि मद्वाक्यमुल्लङ्घ्य नृपवाक्यतः।
तदा प्राणान् परित्यज्य गच्छामि यमसादनम्॥ १३॥
लक्ष्मणोऽपि ततः श्रुत्वा कौशल्यावचनं रुषा।
उवाच राघवं वीक्ष्य दहन्निव जगत्त्रयम्॥ १४॥

क्षणार्द्धं वा क्षणार्द्धमपि॥ ८॥

बालकमत्यन्तबालं वत्सशब्दो हि गवापत्ये रूढः॥ ९॥

राजा राज्यं प्रयच्छतु तस्यात्यन्तमिच्छाविषयत्वात् किमर्थमिति न हि तेन किञ्चिद्भरतेष्टमिति भावः॥ १०॥

त्वया किमपराद्धम् यत्त्वां वनाय प्रस्थापयतीति शेषः॥ ११॥

यथा पिता गुरुस्तथाऽहमपि तव गुरुः यद्वा ततोऽधिका 'पितुर्दशगुणं माता गौरवेणातिरिच्यते' इति स्मृतेः एवं च मदाज्ञया वनागमनमेवोचितमिति भावः॥ १२॥

तदा प्राणानिति एवं च मातृवधदोषो वनगमनेऽधिक इति भावः॥ १३॥

रुषा दहन्निवेत्यन्वयः॥ १४॥

उन्मत्तं भ्रान्तमनसं कैकेयीवशवर्त्तिनम्।
बद्ध्वा निहन्मि भरतं तद्बन्धून्मातुलानपि ॥ १५ ॥
अद्य पश्यन्तु मे शौर्य्यं लोकान् प्रदहतः पुरा।
राम! त्वमभिषेकाय कुरु यत्नमरिन्दम! ॥ १६ ॥
धनुःपाणिरहं तत्र निहन्म्यां विघ्नकारिणः।
इति ब्रुवन्तं सौमित्रिमालिङ्ग्य रघुनन्दनः ॥ १७ ॥
शूरोऽसि रघुशार्दूल! ममात्यन्तं हितेरतः।
जानामि सर्वं ते सत्यं किन्तु ते समयो न हि ॥ १८ ॥
यदिदं दृश्यते सर्वं राज्यं देहादिकं च यत्।
यदि सत्यं भवेत्तत्र आयासः सफलश्च ते ॥ १९ ॥
भोगा मेघवितानस्थविद्युल्लेखेव चञ्चलाः।
आयुरप्यग्निसन्तप्तलोहस्थजलविन्दुवत् (१) ॥ २० ॥

भ्रान्तमनसं राज्यलोभेन अतएव कैकेयीवशवर्त्तिनम् ॥ १५ ॥

पुरा लोकान् प्रदहतः कालाग्निरुद्रस्येवेत्यर्थः अनेन तदवतारत्वं स्वस्य सूचितम् ॥ १६ ॥

तत्राभिषेके विघ्नकारिणो निहन्म्यामित्यर्थः ॥ १७ ॥

ते सर्वं कालाग्निरुद्रतुल्यत्वं तद्रूपत्वञ्च सत्यमेव जानामि किन्तु तस्य पराक्रमस्य समय इदानीं न किन्तु चतुर्दशवर्षे इति व्यङ्ग्यम् ॥ १८ ॥

अथ तत्र त्वजनप्रतारणाय संसारानित्यत्वप्रदर्शनेन रोषान्निवर्त्तयति यदिदमिति सर्वं जगत् राज्यमन्तःस्वदेहेन्द्रियादिकं च न सत्यम् तथा च किं कस्यार्थे उपादेयं येनैवं रोषः कार्य्य इति भावः यदि सत्यं भवेत्तदा ते आयासः सफलो भवेदित्यन्वयः ॥ १९ ॥

मेघवितानं मेघसमूहः एवं च भोग्यभोक्त्रोरुभयोरप्यस्थिरत्वात् सर्वं व्यर्थमिति भावः ॥ २० ॥

(१) लोहस्य जलविन्दुवत् इत्यपि पाठः।

यथा व्यालगलस्थोऽपि भेको दंशानपेक्षते।
तथा कालाहिना ग्रस्तो लोको भोगानशाश्वतान् ॥२१॥
करोति दुःखेन हि कर्मतन्त्रं
शरीरभोगार्थमहर्निशं नरः।
देहस्तु भिन्नः पुरुषात् समीक्ष्यते
को वात्र भोगः पुरुषेण भुज्यते ॥ २२ ॥
पितृमातृसुतभ्रातृदारबन्ध्वादिसङ्गमः।
प्रपायामिव जन्तूनां नद्यां काष्ठौघवच्चलः ॥ २३ ॥
छायेव लक्ष्मीश्चपला प्रतीता तारुण्यमम्बूर्मिवदध्रुवं च।
स्वप्नोपमं स्त्रीसुखमायुरल्पं तथापि जन्तोरभिमान एषः ॥२४

यथेति यथा सर्पगलवर्त्ती भेकस्तद्वदनवर्त्तिकोमलमांसभोगायात्ममृत्युमपि स्वमृत्युमजानन् तद्दन्तमांसदंशनमपेक्षते इच्छति तथा कालाहिग्रस्तो लोको भोगानिच्छति इत्यर्थः ॥ २१ ॥

कर्मतन्त्रं धनार्जनादिव्यापारं काम्यं वैदिकं कर्म च नन्वत्र कस्य भोगः शरीरस्य उतात्मनः नाद्य इत्याह देहस्त्विति पुरुषाद्भेदवतस्तस्यात्मत्वाभावात् सुखादिसाक्षात्काररूपभोगस्य तत्रासम्भव इति भावः नान्त्य इत्याह को वात्रेति तस्य शुद्धस्वभावत्वेनापरिणामित्वात्तस्य भोगासम्भव इति भावः अत्र देहशब्देन चित्तमपि उपलक्ष्यते यद्यपि तयोः परस्परं विवेकग्रहात् चित्तस्य भोगस्तथापि स भ्रान्तिमूलक इति हेय एवेति तात्पर्य्यम् ॥ २२ ॥

एवं भोगस्यापारमार्थिकत्वमुक्त्वेदानीं वैराग्याय पुत्रादिसङ्गस्यास्थिरत्वमाह पित्रिति प्रपा पानीयशाला काष्ठौघयोरिव काष्ठौघवत् ॥ २३ ॥

प्रतीता निश्चिता एष अभिमानः मम धनादि अनेन च मम चिरं भोग इत्यादिः ॥ २४ ॥

संसृतिः स्वप्नसदृशी सदा रोगादिसङ्कुला।
गन्धर्वनगरप्रख्या मूढस्तामनुवर्तते॥ २५॥
आयुष्यं क्षीयते यस्मादादित्यस्य गतागतैः।
दृष्ट्वान्येषां जरामृत्यू कथञ्चिन्नैव बुध्यते॥ २६॥
स एव दिवसः सैव रात्रिरित्येव मूढधीः।
भोगाननुपतत्येव कालवेगं न पश्यति॥ २७॥
प्रतिक्षणं क्षरत्येतदायुरामघटाम्बुवत्।
सपत्ना इव रोगौघाः शरीरं प्रहरन्त्यहो॥ २८॥
जरा व्याघ्रीव पुरतस्तर्जयन्त्यवतिष्ठते।
मृत्युः सहैव यात्येष समयं सम्प्रतीक्षते॥ २९॥
देहेऽहंभावमापन्नो राजाऽहं लोकविश्रुतः।
इत्यस्मिन्मनुते जन्तुः कृमिविड्भस्मसंज्ञिते॥ ३०॥

संसृतिः संसारस्थितिः स्वप्नसदृशी अल्पकाला अनुवर्तते तामुपादेयत्वेन मनुत इत्यर्थः॥ २५॥

कथञ्चिदिति कथमपीत्यर्थः न बुध्यते ममापि जरामृत्यू स्त इति कथमपि न बुध्यत इत्यर्थः॥ २६॥

पूर्वपूर्वभुक्तदिनरात्र्यपेक्षयोत्तरोत्तरस्य विशेषमपश्यन् अतो मूढमतिः कालवेगं पूर्वपूर्वावस्थापहारकं न पश्यति अतो भोगाननुपतति तेष्वासज्जते॥ २७॥

आमघटः अपक्वघटः सपत्नाः शत्रवः॥ २८॥

आगतप्रायाहं किं मूढोऽसीति तर्जयन्ती मृत्युः समयं प्रहर्तुं सम्प्रतीक्षते सह तिष्ठन्नपि॥ २९॥

देहे उपचयादिविशिष्टे कृमिविड्भस्मसंज्ञिते भूम्यां आद्या संज्ञा जन्तुभिर्भक्षिते मध्या संज्ञा दग्धे अन्त्या तादृशे देहेऽहम्भावं प्राप्तोऽहं राजेति अस्मिन् लोके मनुते॥ ३०॥

त्वगस्थिमांसविण्मूत्ररेतोरक्तादिसंयुतः।
विकारी परिणामी च देह आत्मा कथं वद ॥ २१ ॥
यमास्थाय भवाल्लोकं दग्धुमिच्छति लक्ष्मण!।
देहाभिमानिनः सर्वे दोषाः प्रादुर्भवन्ति हि ॥ २२ ॥
देहोऽहमिति या बुद्धिरविद्या सा प्रकीर्त्तिता।
नाहं देहश्चिदात्मेति बुद्धिर्विद्येति भण्यते ॥ २३ ॥
अविद्या संसृतेर्हेतुर्विद्या तस्या निवर्त्तिका।
तस्माद्यत्नः सदा कार्य्यो विद्याभ्यासे मुमुक्षुभिः।
कामक्रोधादयस्तत्र शत्रवः शत्रुसूदन ॥ २४ ॥
तत्रापि क्रोध एवालं मोक्षविघ्नाय सर्वदा।
येनाविष्टः पुमान् हन्ति पितृभ्रातृसुहृत्सखीन् ॥ २५ ॥
क्रोधमूलो मनस्तापः क्रोधः संसारबन्धनम्।

अथ देहस्यात्मत्वं खण्डयति त्वगिति त्वगादिसंयुतत्वाद्विकारी रसादिधातुविकारवान् परिणामी बाल्याद्यवस्थापरिणामवान् आत्मा त्वविकारी अपरिणामी चेति विपरीतः सत्यादिभिन्न इति भावः ॥२१॥

यं रागादिदोषसमूहम् ते दोषा देहाभिमानिनः प्रादुर्भवन्ति तस्मात्तमत्यजेति भावः ॥ २२ ॥

देहाभिमानिनोऽस्य रागादिदोषप्रादुर्भावकत्वं तत्कारणाविद्यारूपत्वात् तदेवाह देहोऽहमिति देह इत्युपलक्षणम् अन्तःकरणादेरपि तदाह चिदात्मेति ॥ २३ ॥

संसृतेः संसारमूलस्य रागादिदोषस्य मूलम् इति सनातनाविद्योच्छेदकत्वाद्विद्याभ्यासे कामादयः शात्रवं कुर्वन्तीत्यर्थः ॥ २४ ॥

प्रकृतोपयोगितया क्रोधस्यैव सर्वविघाते प्राधान्यमाह तत्रापीति पित्रादिवधेन पातित्वं प्राप्तो न श्रवणाद्यधिकारीति भावः ॥ २५ ॥

धर्मक्षयकरः क्रोधस्तस्मात्क्रोधं परित्यज ॥ ३६ ॥
क्रोध एष महान् मृत्युस्तृष्णा वैतरणी नदी ।
सन्तोषो नन्दनवनं शान्तिरेव हि कामधुक् ॥ ३७ ॥
तस्माच्छान्तिं भजस्वाद्य शत्रुरेवं भवेन्न ते ।
देहेन्द्रियमनःप्राणबुद्ध्यादिभ्यो विलक्षणः ॥ ३८ ॥
आत्मा शुद्धः स्वयं ज्योतिरविकारी निराकृतिः ।
यावद्देहेन्द्रियप्राणैर्भिन्नत्वं नात्मनो विदुः ॥ ३९ ॥
तावत्संसारदुःखौघैः पीड्यन्ते मृत्युसंयुताः ।
तस्मात्त्वं सर्वदा भिन्नमात्मानं हृदि भावय ॥ ४० ॥
बुद्ध्यादिभ्यो बहिः सर्वमनुवर्तस्व मा खिद ।
भुञ्जन् प्रारब्धमखिलं सुखं वा दुःखमेव वा ॥ ४१ ॥

मनस्तापः तज्जनकं हननाद्युपायान्वेषणमित्यर्थः ॥ ३६ ॥

महान् मृत्युः परिणामे स्वप्राणापहारकत्वात् क्रोध एव यमः साक्षा-दिति पाठान्तरम् वैतरणी नदी दुस्तरत्वात् विषयलाभैः क्षयमप्यनपगमा-दिति भावः 'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णव-र्त्मेव भूय एवाभिवर्द्धते' इत्युक्तेः नन्दनवनमानन्दजनकत्वात् ॥ ३७ ॥

एवं शान्तिसेवने ॥ ३८ ॥

तेभ्यो वैलक्षण्यमेवाह अविकारी निराकृतिः देहादिस्तु साकार इति भावः ॥ ३९ ॥

तावदिति अहं ममेत्यभिमानसत्त्वादिति भावः भिन्नं बुद्ध्यादिभ्य इत्यर्थः ॥ ४० ॥

बुद्ध्यादिभ्यः ल्यब्लोपे पञ्चमी तदतिरिक्तो ऽहमिति ज्ञानेनैव तानाश्रित्य बहिर्लोकव्यवहारः सर्वं लोकव्यवहारं लोकवदेवानुवर्तस्व कुरु परन्तु तत्र मा खिद खेदं न कुरु ननु लोकवत्कार्यकरणे तद्वत् खेदोऽवश्यं भावी वेत्यत आह भुञ्जन्निति अखिलं सुखं दुःखं वा प्रारब्धमित्येवं भुक्तं त्वया भावयन् ॥ ४१ ॥

प्रवाहपतितः कार्य्यं कुर्व्वन्नपि न लिप्यते।
बाह्ये सर्व्वत्र कर्त्तृत्वमावहन्नपि राघव! ॥ ४२ ॥
अन्तःशुद्धस्वभावस्त्वं लिप्यसे न च कर्मभिः।
एतन्मयोदितं तत्त्वं हृदि भावय सर्वदा ॥ ४३ ॥
संसारदुःखैरखिलैर्बाध्यसे न कदाचन।
त्वमप्यम्ब! मयादिष्टं हृदि भावय नित्यदा ॥ ४४ ॥
समागमं प्रतीक्षस्व न दुःखैः पीड्यसेऽचिरम्।
न सदैकत्र संवासः कर्ममार्गानुवर्त्तिनाम् ॥ ४५ ॥
यथा प्रवाहपतितप्लवानां सरितां तथा।
चतुर्दशसमासंख्या क्षणार्द्धमिव जायते ॥ ४६ ॥
अनुमन्यस्व मामम्ब! दुःखं सन्त्यज्य दूरतः।
एवं चेत् सुखसंवासो भविष्यति वने मम ॥ ४७ ॥
इत्युक्ता दण्डवन्मातुः पादयोरपतच्चिरम्।

प्रवाहपतितोऽपि संसारप्रवाहस्थोऽपि कार्य्यं व्यवहारं कुर्व्वन्नपि तज्ज न्यपापपुण्याभ्यां न लिप्यते पृथग्जनोऽपि एवं च तव तथाभावयतः सर्वथा तदलेप इत्याह बाह्येति ॥ ४२ ॥

तदेवाह एतदिति ॥ ४३ ॥ ४४ ॥

समागमं मे पुनरागमं एवं भावयन्ती प्रतीक्षस्वेत्यर्थः ॥ ४५ ॥

यथा सरितां प्रवाहे पतितप्लवानां न सदैकत्र संवासः किन्तु क्षणमात्रम् तथा कर्ममार्गे संसारे वर्त्तमानानां पितृपुत्रादीनामपीत्यर्थः एवं भावनायां चतुर्दशवर्षाणां संख्यादिवसगणना क्षणार्द्धवत् अत्यल्पकालेनैव समाप्ता भवतीत्यर्थः ॥ ४६ ॥

एवं चेत् त्वदनुज्ञया गमनं चेत् तदा मम वने सुखजनकः संवासो भविष्यतीत्यर्थः ॥ ४७ ॥

उत्थाप्याङ्के समावेश्य आशीर्भिरभिनन्दयत् ॥ ४८ ॥
सर्वे देवाः सगन्धर्वा ब्रह्मविष्णुशिवादयः ।
रक्षन्तु त्वां सदा यान्तं तिष्ठन्तं निद्रया युतम् ॥४९॥
इति प्रस्थापयामास समालिङ्ग्य पुनःपुनः ।
लक्ष्मणोऽपि तदा रामं नत्वा हर्षाश्रुगद्गदः ॥ ५० ॥
आह राम ! ममान्तस्थः संशयोऽयं त्वया हृतः ।
यास्यामि पृष्ठतो राम ! सेवां कर्तुं तदादिश ॥५१॥
अनुगृह्णीष्व मां राम ! नोचेत्प्राणांस्त्यजाम्यहम् ।
तथेति राघवोऽप्याह लक्ष्मणं याहि मा चिरम् ॥५२॥
प्रतस्थे तां समाधातुं गतः सीतापतिर्विभुः ।
आगतं पतिमालोक्य सीता सुस्मितभाषिणी ॥ ५३ ॥
स्वर्णपात्रस्थसलिलैः पादौ प्रक्षाल्य भक्तितः ।
पप्रच्छ पतिमालोक्य देव किं सेनया विना ॥ ५४ ॥
आगतोऽसि गतः कुत्र श्वेतच्छत्रं च ते कुतः ।
वादित्राणि न वाद्यन्ते किरीटादिविवर्जितः ॥ ५५ ॥
सामन्तराजसहितः सम्भ्रमादागतोऽसि किम् ।

चिरं यावदनुमतिपर्य्यन्तमभिनन्दयत् अभ्यनन्दयत् अडभाव आर्षः ॥ ४८ ॥

तदेवाह सर्वे इति यदेतस्य विवरणं यान्तमित्यादि ॥ ४९ ॥ ५० ॥

रामेति पुनरुक्तिर्हर्षातिशयात् ॥ ५१ ॥ ५२ ॥

एवं लक्ष्मणमुक्त्वा प्रतस्थे मातृसदनादिति शेषः ततस्तामपि प्रियां सीतां समाधातुं विभुर्जगतः पतिर्गतः सद्मनिति शेषः ॥ ५३ ॥ ५४ ॥

सेनया विना कुत्र गत आगतोऽसीत्यन्वयः कुतः कुतो हेतोर्न दृश्यत इत्यर्थः वादित्राणि न वाद्यन्ते कुत इत्यनुकर्षः एवमग्रेऽपि ॥ ५५ ॥

इति स्म सीतया पृष्टो रामः सस्मितमब्रवीत् ॥ ५६ ॥
राज्ञा मे दण्डकारण्ये राज्यं दत्तं शुभेऽखिलम्।
अतस्तत्पालनार्थाय शीघ्रं यास्यामि भामिनि! ॥५७॥
अद्यैव यास्यामि वनं त्वन्तु श्वश्रूसमीपगा।
शुश्रूषां कुरु मे मातुर्न मिथ्यावादिनो वयम् ॥ ५८ ॥
इति ब्रुवन्तं श्रीरामं सीता भीताऽब्रवीद्वचः।
किमर्थं वनराज्यन्ते पित्रा दत्तं महात्मना ॥ ५९ ॥
तामाह रामः कैकेय्यै राजा प्रीतो वरं ददौ।
भरताय ददौ राज्यं वनवासं ममानघे! ॥ ६० ॥
चतुर्दशसमास्तत्र वासो मे किल याचितः।
तया देव्या ददौ राजा सत्यवादी दयापरः ॥ ६१ ॥
अतः शीघ्रं गमिष्यामि मा विघ्नं कुरु भामिनि!।
श्रुत्वा तद्रामवचनं जानकी प्रीतिसंयुता ॥ ६२ ॥
अहमग्रे गमिष्यामि वनं पश्चात्त्वमेष्यसि।
इत्याह मां विना गन्तुं तव राघव! नोचितम् ॥ ६३॥

आगन्तराजेति एकाकी किमित्यागत इत्यर्थः पर्य्यायोक्तमलङ्कारः ॥ ५६ ॥ ५७ ॥

अद्यैव यास्यामीति नोपहासोऽयमित्याह न मिथ्येति ॥ ५८ ॥ ५९ ॥

वरस्वरूपमाह भरतायेति ॥ ६० ॥

तया देव्या याचितोऽतो मयि दयापरोऽपि राजा सत्यवादी अवश्यं त्वदुक्तं दास्यामीति प्रतिज्ञावाक्यस्य सत्यत्वं कर्त्तुं मे वनवासं ददौ ॥ ६१ ॥ ६२ ॥

नोचितं युक्तस्य तव मया विना कार्य्याक्षमत्वात् विवाहकाले नातिचरिष्यामीति प्रतिज्ञातत्वाच्च ॥ ६३ ॥

तामाह राघवः प्रीतः स्वप्रियां प्रियवादिनीम्।
कथं वनं त्वां नेष्येऽहं बहुव्याघ्रमृगाकुलम्॥ ६४॥
राक्षसा घोररूपाश्च सन्ति मानुषभोजिनः।
सिंहव्याघ्रवराहाश्च सञ्चरन्ति समन्ततः॥ ६५॥
कट्वम्लफलमूलानि भोजनार्थं सुमध्यमे।
अपूपानि व्यञ्जनानि विद्यन्ते न कदाचन॥ ६६॥
काले काले फलं वापि विद्यते कुत्र सुन्दरि!।
मार्गो न दृश्यते क्वापि शर्कराकण्टकान्वितः॥ ६७॥
गुहागह्वरसम्बाधं झिल्लीदंशादिभिर्युतम्।
एवं बहुविधं दोषं वनं दण्डकसंज्ञितम्॥ ६८॥
पादचारेण गन्तव्यं शीतवातातपादिमत्।
राक्षसादीन् वने दृष्ट्वा जीवितं हास्यसे चिरात्॥ ६९॥
तस्माद्भद्रे! गृहे तिष्ठ शीघ्रं द्रक्ष्यसि मां पुनः।
रामस्य वचनं श्रुत्वा सीता दुःखसमन्विता॥ ७०॥
प्रत्युवाच स्फुरद्वक्त्रा किञ्चित्कोपसमन्विता।

वननयनाभावे हेतुगर्भं विशेषणं बहुव्याघ्रेत्यादि॥ ६४॥ ६५॥ ६६॥

फलादिकमपि समये दुर्लभमित्याह काले इत्यादि न दृश्यते वनेषु तृणाद्याच्छादनात् जनसञ्चाराभावाच्च यत्रापि दृश्यते तत्रापि शर्कराद्यन्वितः॥ ६७॥

वासस्थानमप्यतिदुःखजनकमित्याह गुहेत्यादि सम्यक् बाध्यन्ते रिपवो यत्रेति सम्बाधं दुर्गमवासस्थानं गुहा गह्वररूपं तद्यद्यपि रिपुपीडारहितं तथाऽपि झिल्लीदंशादियुतत्वात्तत्र स्थातुमशक्यमिति भावः॥ ६८॥

तत्रापि पद्भ्यां गमनमतिदुःखमित्याह पादेति॥ ६९॥ ७०॥

स्फुरद्वक्त्रा अन्तर्गतक्रोधवशात्तत्स्फुरणम् तदेवाह किञ्चित्कोपेति अत्यागे हेतवो धर्मपत्नीत्वादयः॥ ७१॥

कथं मामिच्छसे त्यक्तुं धर्मपत्नीं पतिव्रताम् ॥ ७१ ॥
त्वदनन्यामदोषां मां धर्मज्ञोऽसि दयापरः।
त्वत्समीपे स्थितां राम ! को वा मां धर्षयेद्वने ॥७२॥
फलमूलादिकं यद्यत्तव भुक्तावशेषितम्।
तदेवामृततुल्यं मे तेन तृप्ता रमाम्यहम् ॥ ७३ ॥
त्वया सह चरन्त्या मे कुशाः काशाश्च कण्टकाः।
पुष्पास्तरणतुल्या मे भविष्यन्ति न संशयः ॥ ७४ ॥
अहं त्वां क्लेशये नैव भवेयं कार्य्यसाधिनी।
बाल्ये मां वीक्ष्य कश्चिद्वै ज्योतिःशास्त्रविशारदः ॥७५॥
प्राह ते विपिने वासः पत्या सह भविष्यति।
सत्यवादी द्विजो भूयाद्गमिष्यामि त्वया सह ॥ ७६ ॥
अन्यत्किञ्चित्प्रवक्ष्यामि श्रुत्वा मां नय काननम्।
रामायणानि बहुशः श्रुतानि बहुभिर्द्विजैः ॥ ७७ ॥
सीतां विना वनं रामो गतः किं कुत्रचिद्वद ?।

पतिव्रतात्वमेवोपपादयति त्वदनन्यामिति त्वत्तोऽन्यः पुरुषो न विद्यते यस्यास्ताम् यद्वा त्वत्तो भेदरहिता शक्तिशक्तिमतोरभेदात् अतएवादोषाम् यापि रक्षोधर्षणा विभीषिका सापि मिथ्येत्याह त्वत्समीप इति यद्वामस्मरणेन रक्षांसि पलायन्तेतस्य तवेत्यर्थः ॥ ७१ ॥

यदपि फलादीनां कटुत्वाद्युक्तं तत्परिहरति फलेति त्वद्भुक्तावशिष्टं विषयत्वादमृततुल्यमित्यर्थः रमामीत्यार्षं परस्मैपदम् ॥ ७३ ॥

चरन्त्याः गच्छन्त्याः अत्र त्वत्सङ्ग एव हेतुरिति भावः ॥ ७४ ॥

कार्य्यसाधिनी रक्षोवधादिकार्य्यसाधिकेति व्यङ्ग्यम् वनगमनं च मेऽवश्यं भावीति इतिहासकथनेन द्रढयति बाल्ये इति ॥ ७५ ॥ ७६ ॥ ७७ ॥

अतस्त्वया गमिष्यामि सर्वथा त्वत्सहायिनी ॥ ७८ ॥
यदि गच्छसि मां त्यक्त्वा प्राणांस्त्यक्ष्यामि तेऽग्रतः।
इति तं निश्चयं ज्ञात्वा सीताया रघुनन्दनः ॥ ७९ ॥
अब्रवीद्देवि! गच्छ त्वं वनं शीघ्रं मया सह।
अरुन्धत्यै प्रयच्छाशु हारानाभरणानि च ॥ ८० ॥
ब्राह्मणेभ्यो धनं सर्वं(१)दत्त्वा गच्छामहे वनम्।
इत्युक्त्वा लक्ष्मणेनाशु द्विजानाहूय भक्तितः ॥ ८१ ॥

दद्दौ गवां वृन्दशतं धनानि
वस्त्राणि दिव्यानि विभूषणानि।
कुटुम्बवद्भ्यः श्रुतशीलवद्भ्यो
मुदा द्विजेभ्यो रघुवंशकेतुः ॥ ८२ ॥

अरुन्धत्यै ददौ सीता मुख्यान्याभरणानि च।
रामो मातुः सेवकेभ्यो ददौ धनमनेकधा ॥ ८३ ॥
स्वकान्तःपुरवासिभ्यः सेवकेभ्यस्तथैव च।
पौरजानपदेभ्यश्च ब्राह्मणेभ्यः सहस्रशः ॥ ८४ ॥

त्वत्सहायिनी त्वच्छारीरसर्वकार्येष्वहमेव ते सहायेति व्यक्तम् ।७८।७९

गच्छ गमनं कुरु तत्र वने तपस्विवेशेन हारादीनां क्वचित् स्थापनमावश्यकम् तत्र सर्वस्थलेषु अपायसम्भावनासत्त्वान्निरपायं स्थानं ब्राह्मणेषु दानमित्याहारुन्धत्यै इति वशिष्ठपत्न्यै तत्र स्थापितमेतद्धारादिकमपि रक्ष्यमिति भावः ॥ ८० ॥

वयमपि तथैव कुर्म इत्याह ब्राह्मणेभ्य इति ॥ ८१ ॥

श्रुतं वेदाध्ययनं कुटुम्बवत्त्वमिदं दानपात्रतासम्पादकं विशेषणम् ॥ ८२ ॥

मातृसेवकेभ्यो दानं मातृसन्तोषेण ॥ ८३ ॥ ८४ ॥

(१) सर्वमिति वा पाठः।

लक्ष्मणोऽपि सुमित्रां तु कौशल्यायै समर्पयत् ।
धनुष्पाणिः समागत्य रामस्याग्रे व्यवस्थितः ॥ ८५ ॥
रामः सीता लक्ष्मणश्च जग्मुः सर्वे नृपालयम् ॥ ८६ ॥
श्रीरामः सह सीतया नृपपथे गच्छन् शनैः सानुजः
पौरान् जानपदान् कुतूहलदृशः सानन्दमुद्दीक्षयन् ।
श्यामः कामसहस्रसुन्दरवपुः कान्त्या दिशो भासयन्
पादन्यासपवित्रिताखिलजगत्प्रापालयन्तत्पितुः ॥८७॥
इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
अयोध्याकाण्डे
चतुर्थः सर्गः ।

समर्पयत् ततः इत्यध्याहारः समागत्य रामस्य अग्रे स्थित इत्य-न्वयः ॥ ८५ ॥

ततः राम इति ॥ ८६ ॥

नृपपथे राजमार्गे कुतूहलेन पश्यन्ति तान् कुतूहलदृशः पौरान् सानन्दं पश्यन् तेन तेषां दुःखनिरासः पितुस्तत्कैकेय्याधिष्ठितमालयं गृहं प्राप । ८७

इति श्रीमदध्यात्मरामायणे सेतौ अयोध्याकाण्डे
चतुर्थः सर्गः ।

---

## पञ्चमः सर्गः ।

श्रीमहादेव उवाच ।

आयान्तं नागरा दृष्ट्वा मार्गे रामं सजानकिम् ।
लक्ष्मणेन समं वीक्ष्य ऊचुः सर्वे परस्परम् ॥ १ ॥
कैकेय्या वरदानादि श्रुत्वा दुःखसमावृताः ।
बत राजा दशरथः सत्यसन्धं प्रियं सुतम् ॥ २ ॥
स्त्रीहेतोरत्यजत्कामी तस्य सत्यवता कुतः ।
कैकेयी वा कथं दुष्टा रामं सत्यं प्रियङ्करम् ॥ ३ ॥
विवासयामास कथं क्रूरकर्मातिमूढधीः ।
हे जना! नात्र वस्तव्यं गच्छामोऽद्यैव काननम् ॥ ४ ॥
यत्र रामः सभार्य्यश्च सानुजो गन्तुमिच्छति ।
पश्यन्तु जानकीं सर्वे पादचारेण गच्छतीम् ॥ ५ ॥

सजानकिं जानक्या सहितम् लक्ष्मणेन समम् आयान्तमित्यन्वयः तादृशं दृष्ट्वा परस्परं वीक्ष्योचुः परस्परमित्येव ॥ १ ॥

सत्यसन्धं सत्यप्रतिज्ञम् ॥ २ ॥

अत्यजत् वनवासमाज्ञापितवान् सत्यवता सत्यवत्ता वर्यन्तोप आर्य! कैकेयी वा पूर्वमत्यन्तं रामे प्रीतिमती कथं दुष्टा जातेति शेषः यद्भरतस्य राज्यं रामस्य वनवासं च वृतवतीति भावः याचतां वा लोभाद्भरतस्य राज्यं रामस्तुच्यमानगुणं कथं कुतो हेतोर्विवासयामास अत्र हेतुं न पश्यामः अतो निष्प्रयोजनदुष्टत्ववज्जनवत्यस्मिन्देशे न वस्तव्यमित्याहुः हे जना इति ॥ ३ । ४ ॥

यत्र कानने पश्यन्त्विति तेन सर्वथा दैवप्राबल्यं जानन्त्विति अकृतम् ॥ ५ ॥

पुम्भिः कदाचिद्दृष्टा वा जानकी लोकसुन्दरी ।
सापि पादेन गच्छन्ती जनसङ्घेष्वनावृता ॥ ६ ॥
रामोऽपि पादचारेण गजाश्वादिविवर्जितः ।
गच्छति द्रक्ष्यथ विभुं सर्वलोकैकसुन्दरम् ॥ ७ ॥
राक्षसी कैकयी नाम्नी जाता सर्वविनाशिनी ।
रामस्यापि भवेद्दुःखं सीतायाः पादयानतः ॥ ८ ॥
बलवान्विधिरेवात्र पुंप्रयत्नो हि दुर्बलः ।
इति दुःखाकुले वृन्दे साधूनां मुनिपुङ्गवः ॥ ९ ॥
अब्रवीद्वामदेवोऽथ साधूनां सङ्घमध्यगः ।
मानुशोचथ रामं वा सीतां वा वच्मि तत्त्वतः ॥१०॥
एष रामः परो विष्णुरादिनारायणः स्मृतः ।
एषा सा जानकी लक्ष्मीर्योगमायेति विश्रुता ॥ ११ ॥
असौ शेषस्तमन्वेति लक्ष्मणाख्यश्च साम्प्रतम् ।

तदेवोपपादयति पुम्भिरिति गच्छन्तीत्यस्य दृश्यतामिति शेषः ॥ ६ ॥

द्रक्ष्यथ अस्याप्युक्तलक्ष्य एव तात्पर्यम् ॥ ७ ॥

राक्षसीति यत्कृत्या रामस्य स्ववनवासादिकृतदुःखाभावेऽपि सीतायाः पादगमनकृतं दुःखं तस्यापि भवेदित्यन्वयः ॥ ८ ॥

उपसंहरति बलवानिति पर्यायोक्तमलङ्कारः साधूनां वृन्दे समूहे ॥ ९ ॥

तत्त्वतः तेषां तत्त्वं वच्मीत्यर्थः ॥ १० ॥

परो अजेयः विष्णुर्व्यापकः वैकुण्ठनिलयो वा आदिनरं जीवसमूहस्तद्रूपो हिरण्यगर्भस्तस्याप्ययनः परायणः वेदव्यासद्वारा सृष्ट्यादिसामर्थ्यदः योगमाया योगेन स्वसम्बन्धेन परिच्छिन्नापि अतिपरिच्छिन्नेति सा ॥ ११ ॥

एष मायागुणैर्युक्तस्तत्तदाकारवानिव ॥ १२ ॥
एष एव रजोयुक्तो ब्रह्माऽभूद्विश्वभावनः ।
सत्त्वाविष्टस्तथा विष्णुस्त्रिजगत्प्रतिपालकः ॥ १३ ॥
एष रुद्रस्तामसोऽन्ते जगत्प्रलयकारणम् ।
एष मत्स्यः पुरा भूत्वा भक्तं वैवस्वतं मनुम् ॥ १४ ॥
नाव्यारोप्य लयस्यान्तं पालयामास राघवः ।
समुद्रमथने पूर्वं मन्दरे सुतलङ्गते ॥ १५ ॥
अधारयत् स्वपृष्ठेऽद्रिं कूर्मरूपी रघूत्तमः ।
मही रसातलं याता प्रलये शूकरोऽभवत् ॥ १६ ॥
तोलयामास दंष्ट्राग्रे तां क्षोणीं रघुनन्दनः ।
नारसिंहं वपुः कृत्वा प्रह्लादवरदः पुरा ॥ १७ ॥
त्रिलोककण्टकं रक्षः पाटयामास तन्नखैः ।
पुत्रराज्यं हृतं दृष्ट्वा ह्यदित्या याचितः पुरा ॥ १८ ॥
वामनत्वमुपागम्य याञ्चया चाहरत्पुनः ।
दुष्टक्षत्रियभूभारनिवृत्त्यै भार्गवोऽभवत् ॥ १९ ॥
स एव जगतां नाथ इदानीं रामतां गतः ।

एष मायागुणैरिति एतेन मायिक एवायमाकारो न तु पाञ्चभौतिक इत्युक्तम् ॥ १२ ॥

मायागुणैस्तत्तदाकारवत्त्वमेव विवृणोति एष एवेति विश्वभावनो विश्वस्रष्टा ॥ १३ ॥ १४ ॥

लयस्यान्तं लयस्य दैनन्दिनप्रलयस्य अन्तं समाप्तिपर्यन्तम् ॥ १५ ॥

अद्रिं मन्दरम् याता यदेत्यादि प्रलये शूकरस्तदेत्यादि ॥ १६ । १७ ॥

तद्रक्षः प्रह्लादपीडकं रक्षः पुत्रराज्यमिन्द्रराज्यं हृतं बलिना ॥ १८ ॥

याच्ञया बलेः सकाशाद्भिक्षाव्याजेनाहरत् परावर्त्तितवान् ॥ १९ । २० ॥

रावणादीनि रक्षांसि कोटिशो निहनिष्यति ॥ २० ॥
मानुषेणैव मरणं तस्य दृष्टं दुरात्मनः।
राज्ञा दशरथेनापि तपसाराधितो हरिः ॥ २१ ॥
पुत्रत्वाकाङ्क्षया विष्णोस्तदा पुत्रोऽभवद्धरिः।
स एव विष्णुः श्रीरामो रावणादिवधाय हि ॥ २२ ॥
गत्वाऽद्यैव वनं रामो लक्ष्मणेन सहायवान्।
एषा सीता हरेर्माया सृष्टिस्थित्यन्तकारिणी ॥ २३ ॥
राजा वा कैकयी वापि नात्र कारणमण्वपि।
पूर्वेद्युर्नारदः प्राह भूभारहरणाय च ॥ २४ ॥
रामोऽप्याह स्वयं साक्षात् श्वो गमिष्याम्यहं वनम्।
अतो रामं समुद्दिश्य चिन्तां त्यजत बालिशाः ॥ २५ ॥
रामरामेति ये नित्यं जपन्ति मनुजा भुवि।
तेषां मृत्युभयादीनि न भवन्ति कदाचन ॥ २६ ॥
का पुनस्तस्य रामस्य दुःखशङ्का महात्मनः।
रामनाम्नैव मुक्तिः स्यात्कलौ नान्येन केनचित् ॥२७॥

तस्य रावणस्य नन्वेवं दशरथस्यगृहे एवावतारकरणे किं बीजं तत्राह राज्ञेति ॥ २१ ॥

पुत्रत्वाकाङ्क्षया विष्णोरिति विष्णुर्मे पुत्रो भवत्वितीच्छयेत्यर्थः ।२२।२३॥

नारदः प्राह भूभारहरणोद्देश्यकं अस्माकं सन्देशवच इत्यर्थः ।२४।२५।

रामो दुःखितो भविष्यतीत्यपि वृथा शङ्केत्याह रामेति मृत्युभयाभावे इतरभयाभावः कैमुतिकन्यायसिद्धः तन्नामजापकस्तत्स्मरणादेरिति भावः ॥ २६ ॥

तस्य दुःखशङ्का कोऽन्वयः कलौ तु नाम्नैव नामाभिधानेनैव मुक्तिसत्वकं तत्स्मरणं नान्येन योगादिनेत्यर्थः ॥ २७ ॥

मायामानुषरूपेण विडम्बयति लोककृत् ।
भक्तानां भजनार्थाय रावणस्य वधाय च ॥ २८ ॥
राज्ञोभीष्टसिद्ध्यर्थं मानुषं वपुराश्रितः ।
इत्युक्त्वा विररामाथ वामदेवो महामुनिः ॥ २९ ॥
श्रुत्वा तेऽपि द्विजाः सर्वे रामं ज्ञात्वा हरिं विभुम् ।
जहुर्हृत्संशयग्रन्थिं राममेवान्वचिन्तयन् ॥ ३० ॥
य इदं चिन्तयेन्नित्यं रहस्यं रामसीतयोः ।
तस्य रामे दृढा भक्तिर्भवेद्विज्ञानपूर्विका ॥ ३१ ॥
रहस्यं गोपनीयं वो यूयं वै राघवप्रियाः ।
इत्युक्त्वा प्रययौ विप्रस्तेऽपि रामं परं विदुः ॥ ३२ ॥
ततो रामः समाविश्य पितृगेहमवारितः ।
सानुजः सीतया गत्वा कैकेयीमिदमब्रवीत् ॥ ३३ ॥
आगतास्मो वयं मातस्त्रयस्ते सम्मतं वनम् ।
गन्तुं कृतधियः शीघ्रमाज्ञापयतु नः पिता ॥ ३४ ॥

ईदृशस्य किमर्थो देहपरिग्रहस्तत्राह मायेत्यादि विडम्बयति लोकाचारेण सदाचारं लोकान् शिक्षयति मातापितरौ पुत्रानिव फलान्तरमाह भक्तानामिति ॥ २८ ॥

राज्ञोऽभीष्टं विष्णोः स्वपुत्रत्वम् ॥ २९ ॥

हृत्संशयग्रन्थिं हृदि विद्यमानं रामे मनुष्यत्वादिविषयं च संशयग्रन्थिम् ॥ ३० ॥ ३१ ॥

गोपनीयं पृथग्जनेभ्य इति शेषः ॥ ३२ ॥

अवारितः द्वास्थैः द्वारपालैरिति शेषः गत्वा कैकेयीसमीपमिति शेषः ॥ ३३ ॥

ते सम्मतं वनं दण्डकारण्यं गन्तुं कृतधियो निश्चिता इत्यन्वयः

इत्युक्त्वा सहसोत्थाय चीराणि प्रददौ स्वयम्।
रामाय लक्ष्मणायाथ सीतायै च पृथक् पृथक्॥ ३५॥
रामस्तु वस्त्राण्युत्सृज्य वन्यचीराणि पर्यधात्।
लक्ष्मणोऽपि तथा चक्रे सीता तन्न विजानती॥ ३६॥
हस्ते गृहीत्वा रामस्य लज्जया मुखमैक्षत।
रामो गृहीत्वा तच्चीरमंशुके पर्यवेष्टयत्॥ ३७॥
तद्दृष्ट्वा रुरुदुः सर्वे राजदाराः समन्ततः।
वशिष्ठस्तु तदाकर्ण्य रुदितं भर्त्सयन् रुषा॥ ३८॥
कैकेयीं प्राह दुर्वृत्ते! राम एव त्वया वृतः।
वनवासाय दुष्टे! त्वं सीतायै किं प्रयच्छसि?॥ ३९॥
यदि रामं समन्वेति सीता भक्त्या पतिव्रता।
दिव्याम्बरधरा नित्यं सर्वाभरणभूषिता॥ ४०॥
रमयत्वनिशं रामं वनदुःखनिवारिणी।
राजा दशरथोऽप्याह सुमन्त्रं रथमानय॥ ४१॥

आज्ञापयतु पितेत्यनेन तदाज्ञां विना गमने तस्य दुःखादौ अहं दोषभाक् स्यामिति सूचितम्॥ ३४॥

इत्युक्त्वा रामेण कैकेयी सहसा झटिति उत्थाय रामायेत्यन्वयः चीराणि वन्यपरिधेयानि वल्कलादीनि जीर्णवासांसि वा॥ ३५॥

तत् चीरपरिधानप्रकारस्वरूपम्॥ ३६॥

हस्ते गृहीत्वा चीरमिति शेषः तच्चीरं कैकेयीदत्तं चीरम्॥ ३७॥

भर्त्सयन् कैकेयीमिति शेषः॥ ३८॥

किं प्रयच्छसि चीरमिति शेषः॥ ३९॥

यदीति त्वद्वराविषयभर्तापि यदि स्वेच्छया समन्वेति सम्यक्त्वानिरूहितमनुपश्चात् गच्छतीत्यर्थः॥ ४०॥

वनदुःखं वनवासजं दुःखम्॥ ४१॥

रथमारुह्य गच्छन्तु वनं वनचरप्रियाः ।
इत्युक्त्वा राममालोक्य सीतां चैव सलक्ष्मणम् ॥ ४२ ॥
दुःखान्निपतितो भूमौ रुरोदाश्रुपरिप्लुतः ।
आरुरोह रथं सीता शीघ्रं रामस्य पश्यतः ॥ ४३ ॥
रामः प्रदक्षिणं कृत्वा पितरं रथमारुहत् ।
लक्ष्मणः खड्गयुगलं धनुस्तूणीयुगं तथा ॥ ४४ ॥
गृहीत्वा रथमारुह्य नोदयामास सारथिम् ।
तिष्ठ तिष्ठ सुमन्त्रेति राजा दशरथोऽब्रवीत् ॥ ४५ ॥
गच्छ गच्छेति रामेण नोदितोऽचोदयद्रथम् ।
रामे दूरं गते राजा मूर्च्छितः प्राप तद्भुवि ॥ ४६ ॥
पौरास्तु बालवृद्धाश्च वृद्धा ब्राह्मणसत्तमाः ।
तिष्ठ तिष्ठेति रामेति क्रोशन्तो रथमन्वयुः ॥ ४७ ॥
राजा रुदित्वा सुचिरं मानयन्तु गृहं प्रति ।
कौशल्याया राममातुरित्याह परिचारकान् ॥ ४८ ॥
किञ्चित्कालं भवेत्तत्र जीवनं दुःखितस्य मे ।

वनचरा मुनयः प्रिया येषां ते ॥ ४१ ॥

सीता शीघ्रमारुरोहेत्यनेन तस्याः कार्यसाधक उत्साहः सूचितः ॥ ४३ ॥ ४४ ॥ ४५ ॥

रथमनोदयत् राज्ञा रामाधीनत्वात्तदाज्ञामपेक्ष्य वा तदाज्ञैव मवलेति मत्वेति ध्येयम् दूरं गते दृष्टिपथमतिक्रान्ते ॥ ४६ ॥

वृद्धा वृत्तयः ज्ञानवृद्धा वृत्तयः ॥ ४७ ॥

राममातुरित्यादरसूचकं विशेषणम् ॥ ४८ ॥

दुःखितस्य मे यदि किञ्चित्कालं जीवनं भवेत्तदा तत्र राममातृमन्दिरे एवान्यत्र तु क्षणमात्रमपि तन्न भविष्यति राममातृमन्दिरेऽपि चिरं नैव

अत अहं न जीवामि चिरं रामं विना कृतः ॥ ४९ ॥
ततो गृहं प्रविश्यैव कौशल्यायाः पपात ह।
मूर्च्छितश्च चिराद् बुद्धा तूष्णीमेवावतस्थिवान् ॥ ५० ॥
रामस्तु तमसातीरं गत्वा तत्रावसत् सुखी।
जलं प्राश्य निराहारो वृक्षमूलेऽस्वपद्विभुः ॥ ५१ ॥
सीतया सह धर्मात्मा धनुःपाणिस्तु लक्ष्मणः।
पालयामास धर्मज्ञः सुमन्त्रेण समन्वितः ॥ ५२ ॥
पौराः सर्वे समागत्य स्थितास्तस्या विदूरतः।
शक्ता रामं पुरं नेतुं नोचेद् गच्छामहे वनम् ॥ ५३ ॥
इति निश्चयमाज्ञाय तेषां रामोऽतिविस्मितः।
नाहं गच्छामि नगरमेते वै क्लेशभागिनः ॥ ५४ ॥
भविष्यन्तीति निश्चित्य सुमन्त्रमिदमब्रवीत्।
इदानीमेव गच्छामः सुमन्त्र! रथमानय ॥ ५५ ॥
इत्याज्ञप्तः सुमन्त्रोऽपि रथं वाहैरयोजयत्।
आरुह्य रामः सीता च लक्ष्मणोऽपि ययुर्द्रुतम् ॥ ५६ ॥
अयोध्याभिमुखं गत्वा किञ्चिद्दूरं ततो ययुः।

तदित्याह अत इति विना कृतः दैवेनेति शेषः अनेन दैवसम्पादितं मरणं दुर्वारमिति ध्वनितम् ॥ ४९ ॥

तूष्णीमेव स्वकृतापराधेन लज्जयेति भावः ॥ ५० ॥ ५१ ॥

सीतया सहास्वपदित्यन्वयः पालयामास जाग्रद्रामं ररक्षेत्यर्थः ॥ ५२ ॥

रामं पुरं नेतुं यदि शक्तास्तदा परावृत्य नेष्यामो नोचेत् वनमेव गमिष्याम इति निश्चयमित्यर्थः ॥ ५३ ॥

क्लेशभागिनो वनगमनादिति भावः ॥ ५४ ॥ ५५ ॥

इत्याज्ञप्तः सुमन्त्रो रथं वाहैरयोजयत् ॥ ५६ ॥

तेऽपि राममदृष्ट्वैव प्रातरुत्थाय दुःखिताः ॥ ५७ ॥
रथनेमिगतं मार्गं पश्यन्तस्ते पुरं ययुः ।
हृदि रामं ससीतं ते ध्यायन्तस्तस्थुरन्वहम् ॥ ५८ ॥
सुमन्त्रोऽपि रथं शीघ्रं नोदयामास सादरम् ।
स्फीतान् जनपदान् पश्यन् रामः सीतासमन्वितः ॥५९॥
गङ्गातीरं समागच्छत् शृङ्गिवेराविदूरतः (१) ।
गङ्गां दृष्ट्वा नमस्कृत्य स्नात्वा सानन्दमानसः ॥ ६० ॥
शिंशपावृक्षमूले स निषसाद रघूत्तमः ।
ततो गुहो जनैः श्रुत्वा रामागममहोत्सवम् ॥ ६१ ॥
सखायं स्वामिनं द्रष्टुं हर्षात्तूर्णं समापतत् ।
फलानि मधुपुष्पादि गृहीत्वा भक्तिसंयुतः ॥ ६२ ॥
रामस्याग्रे विनिक्षिप्य दण्डवत्प्रापतद्भुवि ।
गुहमुत्थाप्य तं तूर्णं राघवः परिषस्वजे ॥ ६३ ॥
संपृष्टकुशलो रामं गुहः प्राञ्जलिरब्रवीत् ।
धन्योऽहमद्य मे जन्म नैषादं लोकपावन ! ॥ ६४ ॥

अयोध्याभिमुखमिति तेषां प्रतारणायेदम् ॥ ५७ ॥
तदेवाह रथनेमीति ॥ ५८ ॥ ५९ ॥
शृङ्गिवेरं शृङ्गिवेराख्यो ग्रामस्तदविदूरतस्तत्पूर्वभागे ॥ ६० ॥
जनैः जनमुखैः ॥ ६१ ॥
अयं सखा समानख्यातिस्तत्समानस्नामः अनेन गुहस्य धर्मव्याधादिव-
त्तत्त्वज्ञत्वं सूचितम् यथापि सत्यपि भेदापगमे नाथ तवाहं न मामकीन-
स्त्वमितिन्यायात् स्वामिनं द्रष्टुमिति ॥ ६२ ॥ ६३ ॥
नैषादमपि मे जन्म धन्यम् त्वदङ्गस्पर्शादिति भावः ॥ ६४ ॥

---

(१) वाल्मीकिये शृङ्गवेर इति पाठोऽस्ति ।

बभूव परमानन्दः स्पृष्ट्वा तेऽङ्गं रघूत्तम ! ।
नैषादराज्यमेतत्ते किङ्करस्य रघूत्तम ! ॥ ६५ ॥
त्वदधीनं वसन्नत्र पालयास्मान् रघूद्वह ! ।
आगच्छ यामो नगरं पावनं कुरु मे गृहम् ॥ ६६ ॥
गृहाण फलमूलानि त्वदर्थं सञ्चितानि मे ।
अनुगृह्णीष्व भगवन् ! दासस्तेऽहं सुरोत्तम ! ॥ ६७ ॥
रामस्तमाह सुप्रीतो वचनं शृणु मे सखे ! ।
न वेक्ष्यामि गृहं ग्रामं नववर्षाणि पञ्च च ॥ ६८ ॥
दत्तमन्येन नो भुञ्जे फलमूलादि किञ्चन ।
राज्यं ममैतत्ते सर्वं त्वं सखा मेऽतिवल्लभः ॥ ६९ ॥
वटक्षीरं समानाय्य जटामुकुटमादरात् ।
बबन्ध लक्ष्मणेनाथ सहितो रघुनन्दनः ॥ ७० ॥
जलमात्रं तु संप्राश्य सीतया सह राघवः ।
आस्तृतं कुशपर्णाद्यैः शयनं लक्ष्मणेन हि ॥ ७१ ॥
उवास तत्र नगरप्रासादाग्रे यथा पुरा ।
सुष्वाप तत्र वैदेह्या पर्यङ्क इव संस्कृते ॥ ७२ ॥

तदेवाह बभूवेति एतत्ते किङ्करस्य नैषादराज्यम् ॥ ६५ ॥

यस्मात्त्वदधीनमतोऽत्र वसन् अस्मान् पालय अत्र न ते पितुः स्वाम्यत्वमित्यत्र वासे दोषाभाव इति भावः ॥ ६६ ॥

दास इत्यनेन भोज्याहारता सूचिता ॥ ६७ ॥

न वेक्ष्यामि न प्रवेक्ष्यामि इति मे प्रतिज्ञेति शेषः ॥ ६८ ॥

एतत्ते सर्वं राज्यं ममैवं त्वं च मे सखैव तत्सखत्वात् तथापि प्रतिज्ञारक्षणाय ते ग्रामं न प्रविशामीति भावः ॥ ६९ ॥

समानाय्य गुहेनेति शेषः अथ आनयनानन्तरं वार्तानन्तरं वा ॥ ७० ॥

हि पादपूरणे लक्ष्मणेन यदास्तृतम् ॥ ७१ ॥

तौ विदूरे परिगृह्य चापं
सबाणतूणीरधनुः स लक्ष्मणः।
ररक्ष रामं परितो विपश्यन्
गुहेन सार्द्धं सशरासनेन ॥ ७३ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
अयोध्याकाण्डे
पञ्चमः सर्गः।

ततोऽवासेऽनन्वयः स्थित इत्यर्थः ततो निद्रासमये सुष्वापेत्यर्थः ॥७२॥
परितो विपश्यन् दुष्टजन्तूनिति शेषः ॥ ७३ ॥

इति श्रीमल्लकबराजविपदुद्धरणसमर्थेत्यादिवि० श्रीरामवर्मणा
कृतावध्यात्मरामायणसेतौ अयोध्याकाण्डे
पञ्चमः सर्गः।

---

# षष्ठः सर्गः ।

सुप्तं रामं समालोक्य गुहः सोऽश्रुपरिप्लुतः ।
लक्ष्मणं प्राह विनयाद् भ्रातः ! पश्यसि राघवम् ॥ १ ॥
शयानं कुशपत्रौघसंस्तरे सीतया सह ।
यः शेते स्वर्णपर्य्यङ्के स्वास्तीर्णे भवनोत्तमे ॥ २ ॥
कैकेयी रामदुःखस्य कारणं विधिना कृता ।
मन्थराबुद्धिमास्थाय कैकेयी पापमाचरत् ॥ ३ ॥
तच्छ्रुत्वा लक्ष्मणः प्राह सखे ! शृणु वचो मम ।
कः कस्य हेतुर्दुःखस्य कश्च हेतुः सुखस्य वा ॥ ४ ॥
स्वपूर्वार्जितकर्मैव कारणं सुखदुःखयोः ॥ ५ ॥

सुखस्य दुःखस्य न कोऽपि दाता
परो ददातीति कुबुद्धिरेषा ।
अहं करोमीति वृथाऽभिमानः
स्वकर्मसूत्रग्रथितो हि लोकः ॥ ६ ॥

षष्ठे गत्वाऽथ वाल्मीकेराश्रमं तेन संस्तुतः मुनीन्द्रैः सहितस्तत्रावस' त्सुखमितीर्य्यते ॥ १ ॥

सुप्तमिति ॥ १ ॥

कुशपत्रसमूहनिर्मिते संस्तरे आस्तरणे इत्यर्थः शोभनैः राङ्कवादिभिरास्तीर्णे ॥ २ ॥ ३ ॥

को हेतुः अन्यो न कोऽपीत्यर्थः ॥ ४ ॥

कस्तर्हि हेतुस्तत्राह स्वपूर्वेति ॥ ५ ॥

तदेवोपपादयति सुखस्येति स्वयमपि तस्य न सम्पादक इत्याह अहमिति अहं सुखादिजनकक्रियां करोमीत्यपि वृथाभिमानः अस्वातन्त्र्यादिति भावः तदेवाह स्वकर्मसूत्रेण ग्रथित ईश्वरेणेति शेषः यथा

सुहृन्मित्रार्युदासीनद्वेष्यमध्यस्थबान्धवाः ।
स्वयमेवाचरन् कर्म तथा तत्र विभाव्यते ॥ ७ ॥
सुखं वा यदि वा दुःखं स्वकर्मवशगो नरः ।
यद्यद्यथागतं तत्तद्भुक्त्वा स्वस्थमना भवेत् ॥ ८ ॥
न मे भोगागमे वाञ्छा न मे भोगविवर्जने ।
आगच्छत्वथ मागच्छत्वभोगवशगो भवे ॥ ९ ॥
यस्मिन् देशे च काले च यस्माद्वा येन केन वा ।
कृतं शुभाशुभं कर्म भोज्यं तत्तत्र नान्यथा ॥ १०
अलं हर्षविषादाभ्यां शुभाशुभफलोदये ।
विधात्रा विहितं यद्यत्तदलङ्घ्यं सुरासुरैः ॥ ११ ॥

सूत्रयुक्तां काष्ठपुत्तलीं सूत्रधारो नानाप्रकारसूत्रचालनेनानेकविधक्रियावतीं करोति एवं भगवान् कर्मरूपसूत्रचालनेन तथा कारयतीति भावः ॥६॥

सुहृन्मित्रे सोपाधिनिरुपाधिभेदाद् भिन्ने एवमरिद्वेष्यौ एते कर्म सुहृत्त्वादिप्रयोजकं कर्म स्वयमेवाचरन् येन सुहृत्त्वादिभावो भवति एवं तत्र सुखदुःखादिविषयेऽपि विभाव्यते ज्ञायत इत्यर्थः ॥ ७ ॥

स्वकर्मवशगो नरः यद्यत्सुखं वा दुःखं वा यथा गतं यथा प्राप्तं भवति तत्तत् भुक्त्वा स्वस्थमनाः रागद्वेषहीनो भवेत् ॥ ८ ॥

भोगागमे सुखभोगप्राप्तौ भोगविवर्जने दुःखभोगाप्राप्तौ वाञ्छामेवाभिनयति आगच्छत्विति सुखमिति शेषः मागच्छतु दुःखमिति शेषः अतएवाहं भोगवशगो न भवे अलमिति निषेधार्थमव्ययम् पृथक् पदं न चैवाहं तथैव रामोऽस्मीति न किञ्चिद्बाधकमेतत्कृतं दुःखमिति भावः ॥९॥

यस्मादिति प्राप्यफलमिति शेषः तत्तत्रेत्युपलक्षणम् तस्मात्तेनेत्यपि बोध्यम् ॥ १० ॥

यद्यद् विधात्रा विहितं तदलङ्घ्यमिति निश्चित्य तत्तत्फलोदये हर्षविषादाभ्यामलम् एवं चाननुतप्ते त्वया विषादो न कार्य्य इति भावः ॥११

सर्वदा सुखदुःखाभ्यां नरः प्रत्यवरुध्यते ।
शरीरं पुण्यपापाभ्यामुत्पन्नं सुखदुःखवत् ॥ १२ ॥
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
द्वयमेतद्धि जन्तूनामलङ्घ्यं दिनरात्रिवत् ॥ १३ ॥
सुखमध्ये स्थितं दुःखं दुःखमध्ये स्थितं सुखम् ।
द्वयमन्योऽन्य संयुक्तं प्रोच्यते जलपङ्कवत् ॥ १४ ॥
तस्माद्धैर्येण विद्वांस इष्टानिष्टोपपत्तिषु ।
न हृष्यन्ति न मुह्यन्ति(१)सर्वं मायेति भावनात् ॥१५॥
गुहलक्ष्मणयोरेवं भाषतोर्विमलं नभः ।
बभूव रामः सलिलं स्पृष्ट्वा प्रातःसमाहितः ॥ १६ ॥
उवाच शीघ्रं सुदृढां नावमानय मे सखे ! ।

आवश्यकत्व शरीरिणां तत्सम्बन्धस्य इत्याह सर्वदेति पुण्यपापजत्वात् शरीरस्य तदवच्छेदेन सुखदुःखयस्त्वावश्यकत्वादयं नरः सदा ताभ्यां प्रत्यवरुध्यते सम्बध्यते ॥ १२ ॥

सम्बन्धप्रकारमाह सुखस्यानन्तरमिति एवं च पुनः सुखमपि भाव्येवेति भावः ॥ १३ ॥

इदानीं पदार्थमात्रस्य त्रिगुणात्मकत्वेन सुखस्यापि दुःखात्मकत्वाद्धेयत्वमित्याह सुखमध्य इति तेनोभयमपि हेयमेवेति तदुक्तं पतञ्जलिना 'सर्वमेव दुःखं विवेकिन' इति ॥ १४ ॥

उपसंहरति तस्मादिति इष्टप्राप्तौ न हृष्यन्ति अनिष्टप्राप्तौ न मुह्यन्तीत्यन्वयः तत्र हेतुः सर्वं मायेति भावनात् नह्यैन्द्रजालिकमायाकृतेष्टानिष्टप्राप्तौ हर्षमोहौ तद्वदिति भावः ॥ १५ ॥

सलिलं स्पृष्ट्वेति प्रातःकालिकसकलक्रियोपलक्षणम् ॥ १६ ॥

---

(१) न क्रुध्यन्ति इत्यपि पाठः ।

श्रुत्वा रामस्य वचनं निषादाधिपतिर्गुहः ॥ १७ ॥
स्वयमेव दृढां नावमानिनाय सुलक्षणाम्।
स्वामिन्नारुह्यतां नौका सीतया लक्ष्मणेन च ॥ १८ ॥
वाहये ज्ञातिभिः सार्द्धमहमेव समाहितः।
तथेति राघवः सीतामारोप्य शुभलक्षणाम् ॥ १९ ॥
गुहस्य हस्तावालम्ब्य स्वयं चारुहदच्युतः।
आयुधादीन् समारोप्य लक्ष्मणोऽप्यारुरोह च ॥ २० ॥
गुहस्तान्वाहयामास ज्ञातिभिः सहितः स्वयम्।
गङ्गामध्ये गता गङ्गां प्रार्थयामास जानकी ॥ २१ ॥
देवि गङ्गे ! नमस्तुभ्यं निवृत्ता वनवासतः।
रामेण सहिताऽहं त्वां लक्ष्मणेन च पूजये ॥ २२ ॥
सुरामांसोपहारैश्च(१)नानाबलिभिरादृता।
इत्युक्त्वा परकूलं तौ शनैरुत्तीर्य्य जग्मतुः ॥ २३ ॥
गुहोऽपि राघवं प्राह गमिष्यामि त्वया सह।
अनुज्ञां देहि राजेन्द्र ! नोचेत्प्राणांस्त्यजाम्यहम् ॥२४॥
श्रुत्वा नैषादवचनं श्रीरामस्तमथाब्रवीत्।

मे अवतारयावेति शेषः ॥ १७ ॥
नौका त्वारुह्यतामित्यन्वयः ॥ १८ ॥
वाहये इति नौकामिति शेषः ॥ १९ ॥ २० ॥
वाहयामास अरित्रादिभिश्चालयामास परं पारं प्रापयितुमित्यर्थः
गङ्गामध्ये गता जानकी गङ्गां प्रार्थयामासेत्यन्वयः ॥ २१ ॥ २२ ॥
आदृता सती पूजये अनेन श्रद्धा सूचिता ॥ २३ ॥
अनुज्ञां त्वत्सहगमनविषयाम् ॥ २४ ॥

(१) फलपुष्पोपहारैश्च इति वा पाठः।

चतुर्दशसमाः स्थित्वा दण्डके पुनरप्यहम् ॥ २५ ॥
आयास्याम्युदितं सत्यं नासत्यं रामभाषितम् ।
इत्युक्त्वालिङ्ग्य तं भक्तं समाश्वास्य पुनः पुनः ॥ २६ ॥
निवर्त्तयामास गुहं सोऽपि कृच्छ्राद्ययौ गृहम् ।
तत्र मेध्यं मृगं हत्वा पक्त्वा हुत्वा च ते त्रयः ॥ २७ ॥
भुक्त्वा वृक्षदले सुप्त्वा सुखमासत तां निशाम् ।
ततो रामस्तु वैदेह्या लक्ष्मणेन समन्वितः ॥ २८ ॥
भरद्वाजाश्रमपदं गत्वा बहिरुपस्थितः ।
तत्रैकं बटुकं दृष्ट्वा रामः प्राह च हे बटो ॥ २९ ॥
रामो दाशरथिः सीतालक्ष्मणाभ्यां समन्वितः ।
आस्ते बहिर्वनस्येति ह्युच्यतां मुनिसन्निधौ ॥ ३० ॥
तच्छ्रुत्वा सहसा गत्वा पादयोः पतितो मुनेः ।
स्वामिन् रामः समागत्य वनाद्बहिरवस्थितः ॥ ३१ ॥
सभार्यः सानुजः श्रीमानाह मां देवसन्निभः ।
भरद्वाजाय मुनये ज्ञापयस्व यथोचितम् ॥ ३२ ॥
तच्छ्रुत्वा सहसोत्थाय भरद्वाजो मुनीश्वरः ।
गृहीत्वाऽर्घ्यं च पाद्यञ्च रामसामीप्यमाययौ ॥ ३३ ॥
दृष्ट्वा रामं यथान्यायं पूजयित्वा सलक्ष्मणम् ।

गेहादिर्गृहः ॥ २५ ॥
नासत्यमपि तु सत्यमेवेत्यर्थः तेनान्यथा न सम्भावनीयमिति भावः ॥ २६ ॥
कृच्छ्रात् कृच्छ्रमत्यातिदुःखं तत्र गङ्गापरकूले मेध्यं मृगं मध्यं मृगं
हुत्वा वैश्वदेवदेवताभ्यः ॥ २७ ॥ २८ ॥
बहिराश्रमद्वारि ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥
रामसामीप्यं स्वार्थे ष्यञ् रामसमीपमित्यर्थः ॥ ३३ ॥

आह मे पर्णशालां भो राम ! राजीवलोचन ! ॥ २४ ॥
आगच्छ पादरजसा पुनीहि रघुनन्दन ! ।
इत्युक्त्वोटजमानीय सीतया सह राघवौ ॥ २५ ॥
भक्त्या पुनः पूजयित्वा चकारातिथ्यमुत्तमम् ।
अद्याहं तपसः पारं गतोऽस्मि तव सङ्गमात् ॥ २६ ॥
ज्ञातं राम ! तवोदन्तं भूतं चागामिकं च यत् ।
जानामि त्वां परात्मानं मायया कार्य्यमानुषम् ॥ २७ ॥
यदर्थमवतीर्णोऽसि प्रार्थितो ब्रह्मणा पुरा ।
यदर्थं वनवासस्ते यत्करिष्यसि वै पुरः ॥ २८ ॥
जानामि ज्ञानदृष्ट्याऽहं जातया त्वदुपासनात् ।
इतः परं त्वां किं वक्ष्ये कृतार्थोऽहं रघूत्तम ! ॥ २९ ॥
यस्त्वां पश्यामि काकुत्स्थं पुरुषं प्रकृतेः परम् ।
रामस्तमभिवाद्याह सीतालक्ष्मणसंयुतः ॥ ४० ॥
अनुग्राह्यास्त्वया ब्रह्मन् ! वयं क्षत्रियबान्धवाः ।

मे पर्णशालामागच्छेत्यन्वयः ॥ २४ ॥

आनीय प्रापय्य ॥ २५ ॥

तपसः पारं पूर्णतां गतोऽस्मि प्राप्तोऽस्मि 'प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् तद्विष्णोः स्मरणादेव सम्पूर्णं स्यादिति श्रुतिः' इति स्मृतेर्यस्य नामस्मरणेनापि सर्वकर्मपूर्णता तस्य साक्षाद्दर्शने किं वक्तव्यमित्यर्थः यद्वा तपसः पारं फलं सर्वतपःफलमेतत् यत्तव दर्शनमित्यर्थः ॥ २६ ॥

भूतम्भावि च तवोदन्तं वृत्तान्तो ज्ञातः तत्र भूतवृत्तान्तज्ञानमभिनयति आगामीत्यादि ॥ २७ ॥

यदर्थमिति सर्वत्र यच्छब्दो रक्षोवधपरः ॥ २८ ॥ २९ ॥

प्रकृतेः परं प्रकृतिगुणास्पृष्टमीश्वरम् ॥ ४० ॥

इति सम्भाष्य तेऽन्योऽन्यमुषित्वा मुनिसन्निधौ ॥ ४१ ॥
प्रातरुत्थाय यमुनामुत्तीर्य्य मुनिदारकैः ।
कृताप्लवेन मुनिना दृष्टमार्गेण राघवः ॥ ४२ ॥
प्रययौ चित्रकूटाद्रिं वाल्मीकेर्यत्र चाश्रमः ।
गत्वा रामोऽथ वाल्मीकेराश्रमं ऋषिसंकुलम् ॥ ४३ ॥
नानामृगद्विजाकीर्णं नित्यपुष्पफलाकुलम् ।
तत्र दृष्ट्वा समासीनं वाल्मीकिं मुनिसत्तमम् ॥ ४४ ॥
ननाम शिरसा रामो लक्ष्मणेन च सीतया ।
दृष्ट्वा रामं रमानाथं वाल्मीकिर्लोकसुन्दरम् ॥ ४५ ॥
जानकीलक्ष्मणोपेतं जटामुकुटमण्डितम् ।
कन्दर्पसदृशाकारं कमनीयाम्बुजेक्षणम् ॥ ४६ ॥
दृष्ट्वैव सहसोत्थाय विस्मयानिमिषेक्षणः ।
आलिङ्ग्य परमानन्दं रामं हर्षाश्रुलोचनः ॥ ४७ ॥
पूजयित्वा जगत्पूज्यं भक्त्यार्घ्यादिभिरादृतः ।

ते सीतारामलक्ष्मणभरद्वाजाः अन्योऽन्यं प्रागुक्तं सम्भाष्य ततो रामो मुनिसन्निधावुषित्वा ॥ ४१ ॥

यमुनायां कृताप्लवेन कृतस्नानेन मुनिना दृष्टमार्गेण दर्शितमार्गेण राघवो मार्गदर्शकैर्मुनिदारकैः सह यमुनामुत्तीर्य्य ॥ ४२ ॥

चित्रकूटाद्रिं प्रययौ यत्र वाल्मीकेराश्रम इत्यनेन तस्य माहात्म्यम् ॥ ४३ ॥ द्विजाः पक्षिणो ब्राह्मणाश्च ॥ ४४ ॥

रमानाथं विष्ण्ववतारम् ॥ ४५ ॥

कमनीयपद्मसदृशनेत्रम् ॥ ४६ ॥

विस्मयेनानिमिषे ईक्षणे नेत्रे यस्य सः हर्षजाश्रुभिः पूर्णे लोचने यस्य सः क्रमेणैवं भावः ॥ ४७ ॥

फलमूलैः सुमधुरैर्भोजयित्वा च लालितः ॥ ४८ ॥
राघवः प्राञ्जलिः प्राह वाल्मीकिं विनयान्वितः।
पितुराज्ञां पुरस्कृत्य दण्डकानागता वयम् ॥ ४९ ॥
भवन्तो यदि जानन्ति किं वक्ष्यामीऽत्र कारणम्।
यत्र मे सुखवासाय भवेत् स्थानं वदस्व तत् ॥ ५० ॥
सीतया सहितः कालं किञ्चित्तत्र नयाम्यहम्।
इत्युक्तो राघवेणासौ मुनिः सस्मितमब्रवीत् ॥ ५१ ॥
त्वमेव सर्वलोकानां निवासस्थानमुत्तमम्।
तवापि सर्वभूतानि निवाससदनानि हि ॥ ५२ ॥
एवं साधारणं स्थानमुक्तं ते रघुनन्दन!।
सीतया सहितस्येति विशेषं पृच्छतस्तव ॥ ५३ ॥
तद्वक्ष्यामि रघुश्रेष्ठ! यत्ते नियतमन्दिरम्।
शान्तानां समदृष्टीनामद्वेष्टॄणां च जन्तुषु।
त्वामेव भजतां नित्यं हृदयं तेऽधिमन्दिरम् ॥ ५४ ॥
धर्माधर्मान् परित्यज्य त्वामेव भजतोऽनिशम्।

लालितः इदं मधुरमिदं मधुरमिदं भुंक्ष्वेत्येवं प्रीत्या बोधितः ॥४८॥४९॥

यदि जानन्तीत्यसन्दिग्धवचनं वेदाश्चेत् प्रमाणं स्युरिति वत् सर्वथा जानन्त्येवातोऽत्र कारणकथनं निष्फलमिति भावः ॥ ५० ॥

तत्र यत्र त्वं वदिष्यसि तत्रेत्यर्थः ॥ ५१ ॥

त्वमेवेति त्वद्विवर्त्तत्वाज्जगत इति भावः तवापीति अन्तर्यामित्वात् सर्वत्र तव वासादिति भावः ॥ ५२ ॥ ५३ ॥

नियतमन्दिरं सर्वदा वासस्थानम् समदृष्टीनां मित्रोदासीनशत्रुष्विति शेषः अतएव अद्वेष्टॄणां तेषां हृदयं तेऽधिकं सर्वोत्कृष्टं मन्दिरमित्यर्थः सर्वदा तत्र वासादेवेति भावः ॥ ५४ ॥

सीतया सह ते राम! तस्य हृत् सुखमन्दिरम् ॥ ५५ ॥
त्वन्मन्त्रजापको यस्तु त्वामेव शरणं गतः।
निर्द्वन्द्वो निस्पृहस्तस्य हृदयं ते सुमन्दिरम् ॥ ५६ ॥
निरहङ्कारिणः शान्ता ये रागद्वेषवर्जिताः।
समलोष्टाश्मकनकास्तेषां ते हृदयं गृहम् ॥ ५७ ॥
त्वयि दत्तमनोबुद्धिर्यः सन्तुष्टः सदा भवेत्।
त्वयि सन्त्यक्तकर्मा यस्तन्मनस्ते शुभं गृहम् ॥ ५८ ॥
यो न द्वेष्ट्यप्रियं प्राप्य प्रियं प्राप्य न हृष्यति।
सर्वं मायेति निश्चित्य त्वां भजेत्तन्मनो गृहम् ॥ ५९ ॥
षड्भावादिविकारान् यो देहे पश्यति नात्मनि।
क्षुत्तृट् सुखं भयं दुःखं प्राणबुद्ध्योर्निरीक्षते ॥ ६० ॥

धर्माधर्मान् विहितनिषिद्धसकलकर्माण्युत्सृज्य यस्त्वामेव भजते तस्य हृत् हृदयं सीतया सह वस्तुं हे राम ते तव सुखमन्दिरं सुखजनकं गृहम् ॥ ५५ ॥

निर्द्वन्द्वोऽहं ममेति द्वन्द्वरहितोऽतएव निस्पृहः ॥ ५६ ॥

नानाविधप्रकारेण तत्त्वमसिवाक्यार्थात् निरहङ्कारिण इति शान्ताः शमयोक्ताः लोष्टं मृत्पिण्डः अश्मानः पद्मरागादयः कनकं चेदं समसमु-पादेयत्वेन येषां ते ॥ ५७ ॥

मनः सङ्कल्पविकल्पात्मकम् बुद्धिर्निश्चयात्मिका द्वयमपि येन त्वय्येव दत्तं त्वद्विषयमेव यस्य सङ्कल्पादिकमिति यावत्सन्तुष्टः कथञ्चिदशनाच्छादनला-भात्सन्तुष्टः त्वयि सन्त्यक्तकर्मा त्वदर्पणबुद्ध्या कृतकर्मा त्यक्तकाम्यकर्मेति यावत् ॥ ५८ ॥

अप्रियं दुःखं द्वेषहर्षाभावयोर्हेतुः सर्वत्र मायामयत्वनिश्चयः ॥ ५९ ॥

भावादिविकारानिति भावोऽत्र जन्म तेन जन्मसत्ताविपरिणामवृद्ध्यपक्ष-यविनाशरूपान् विकारान् यो देहे पश्यति नात्मनि तन्नित्यं वृद्धिक्षयरहितं अविनाशिनं पश्यतीत्यर्थः क्षुत्तृड्भयं प्राणस्य सुखादिबुद्धेरिति विवेक ॥ ६०

संसारधर्मैर्निर्मुक्तस्तस्य ते मानसं गृहम्॥ ६१ ॥

पश्यन्ति ये सर्वगुहाशयस्थं
त्वां चिद्घनं सत्यमनन्तमेकम्।
अलेपकं सर्वगतं वरेण्यं
तेषां हृदब्जे सह सीतया वस॥ ६२ ॥

निरन्तराभ्यासदृढ़ीकृतात्मनां
त्वत्पादसेवापरिनिष्ठितानाम्।
त्वन्नामकीर्त्या हतकल्मषाणां
सीतासमेतस्य गृहं हृदब्जे॥ ६३ ॥

राम! त्वन्नाममहिमा वर्ण्यते केन वा कथम्।
यत्प्रभावादहं राम! ब्रह्मर्षित्वमवाप्तवान्॥ ६४ ॥

अहं पुरा किरातेषु किरातैः सह वर्द्धितः।
जन्ममात्रद्विजत्वं मे शूद्राचाररतः सदा॥ ६५ ॥

शूद्रायां बहवः पुत्रा उत्पन्ना मेऽजितात्मनः।

संसारधर्मैः तत्प्रयोजकैर्धर्मैः पुण्यपापैः॥ ६१ ॥

सर्वाः गुहाः अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयरूपास्तद्रूपो य आशयः स्थानं तत्स्थं चिद्घनं चैतन्यरूपं सर्वगतमप्यलेपकं न भवति लेपकं तत्सर्वं पश्यन्ति तत्र स्थितोऽपि तद्गुणास्पृष्ट इत्यर्थः॥ ६२ ॥

निरन्तरं ध्यानाभ्यासेन त्वय्येव दृढ़ीकृतस्त्वदेकविषयीकृत आत्मा चित्तं येषां त्वत्पादसेवायां परिनिष्ठितानां तत्पराणाम्॥ ६३ ॥

त्वन्नाममहिमवर्णनस्य प्रकारः कर्त्ता च दुर्लभ इत्याह रामेति॥ ६४ ॥

अत्रैवार्थे स्वविपर्यासमितिहासमाह अहमिति किरातेषु तद्वसतिदेशेषु जन्ममात्रद्विजत्वं जन्ममात्रेण द्विजमित्यर्थः तत्रैवोपपत्तिमाह शूद्राचाररत इति॥ ६५ ॥

ततश्चोरैश्च सङ्गम्य चोरोऽहमभवं पुरा ॥ ६६ ॥
धनुर्बाणधरो नित्यं जीवानामन्तकोपमः ।
एकदा मुनयः सप्त दृष्टा महति कानने ॥ ६७
साक्षान्मया प्रकाशन्तो ज्वलनार्कसमप्रभाः ।
तानन्वधावं लोभेन तेषां सर्वपरिच्छदान् ॥ ६८ ॥
गृहीतुकामस्तत्राहं तिष्ठ तिष्ठेति चाब्रुवम् ।
दृष्टा मां मुनयोऽपृच्छन् किमायासि द्विजाधम ! ॥ ६९॥
अहं तानब्रुवं किञ्चिदादातुं मुनिसत्तमाः ! ।
पुत्रदारादयः सन्ति बहवो मे बुभुक्षिताः ॥ ७० ॥
तेषां संरक्षणार्थाय चरामि गिरिकानने ।
ततो मामूचुरव्यग्राः पृच्छ गत्वा कुटुम्बकम् ॥ ७१ ॥
यो यो मया प्रतिदिनं क्रियते पापसञ्चयः ।
यूयं तद्भागिनः किंवा नेति वेति पृथक् पृथक् ॥७२॥
वयं स्थास्यामहे तावदागमिष्यसि निश्चयः ।
तथेत्युक्त्वा गृहं गत्वा मुनिभिर्यदुदीरितम् ॥ ७३ ॥
आपृच्छं पुत्रदारादीन् तैरुक्तोऽहं रघूत्तम ! ।
पापं तवैव तत्सर्वं वयं तु फलभागिनः ॥ ७४ ॥

अजितात्मन इति च्छेदः ॥ ६६ ॥
जीवानामन्तकोपमोऽभवमित्यन्वयः ॥ ६७ ॥ ६८ ॥
अब्रुवम् तानिति शेषः ॥ ६९ ॥ ७० ॥ ७१ ॥
पृथक्पृथक् पुत्रभार्यादिनैकैकेन पृच्छेत्यर्थः ॥ ७२ ॥
यावदागमिष्यसि तावद्वयं स्थास्यामह इति निश्चय इत्यर्थः ॥ ७३ ॥
फलभागिनस्तल्लब्धधनादिभोगभाजः ॥ ७४ ॥

तच्छ्रुत्वा जातनिर्वेदो विचार्य्य पुनरागमम्।
मुनयो यत्र तिष्ठन्ति करुणापूर्णमानसाः ॥ ७५ ॥
मुनीनां दर्शनादेव शुद्धान्तःकरणोऽभवम्।
धनुरादीन् परित्यज्य दण्डवत्पतितोऽस्म्यहम् ॥ ७६ ॥
रक्षध्वं मां मुनिश्रेष्ठा गच्छन्तं निरयार्णवम्।
इत्यग्रे पतितं दृष्ट्वा मामूचुर्मुनिसत्तमाः ॥ ७७ ॥
उत्तिष्ठोत्तिष्ठ भद्रं ते सफलः सत्समागमः।
उपदेक्ष्यामहे तुभ्यं किञ्चित्तेनैव मोक्ष्यसे।
परस्परं समालोच्य दुर्वृत्तोऽयं द्विजाधमः ॥ ७८ ॥
उपेक्ष्य एव सद्वृत्तैस्तथाऽपि शरणं गतः।
रक्षणीयः प्रयत्नेन मोक्षमार्गोपदेशतः ॥ ७९ ॥
इत्युक्त्वा राम! ते नाम व्यत्यस्ताक्षरपूर्वकम्।
एकाग्रमनसात्रैव मरेति जप सर्वदा ॥ ८० ॥
आगच्छामः पुनर्यावत्तावदुक्तं सदा जप।
इत्युक्त्वा प्रययुः सर्वे मुनयो दिव्यदर्शनाः ॥ ८१॥

जातनिर्वेदः तादृशकर्मततः स्वात्मनि जातापमानबुद्धिः विचार्य्य एते पुत्रादयो न कुत्राप्युपकर्त्तार इति विचार्य्य ऋषिसन्निधिं पुनरागमम् आगतः ॥ ७५ ॥

शुद्धान्तःकरणः मलिनवृत्तिरहितः ॥ ७६ ।७७ ॥

सतां साधूनां समागम सफलः मोक्षरूपफलजनकः तदेवाह यदुपदेक्ष्यामहे तेनैव मोक्ष्यसे संसारदुःखादिति शेषः यद्यपि दुर्वृत्तस्तथाऽपि रक्षणीय इत्युत्तरेणान्वयः ॥ ७८ । ७९ ॥

व्यत्यस्तानि विपरीतपौर्वापर्य्याण्यक्षराणि यस्मिन् तादृशं रूपं यस्य तत् ते नाम अपेत्यन्वयः तदाकारो मरेति एकाग्रमनसैति जप इति कर्त्तव्यतोपदेशः अत्र मनस एकाग्रता वर्णविपर्य्ययैव ॥८० ॥ ८१ ॥

अहं यथोपदिष्टं तैस्तथाऽकरवमञ्जसा ।
जपन्नेकाग्रमनसा बाह्यं विस्मृतवानहम् ॥ ८२ ॥
एवं बहुतिथे काले गते निश्चलरूपिणः ।
सर्वसङ्गविहीनस्य वल्मीकोऽभून्ममोपरि ॥ ८३ ॥
ततो युगसहस्रान्ते ऋषयः पुनरागमन् ।
मामूचुर्निष्क्रमस्वेति तच्छ्रुत्वा तूर्णमुत्थितः ॥ ८४ ॥
वल्मीकान्निर्गतश्चाहं नीहारादिव भास्करः ।
ममाप्याहुर्मुनिगणा वाल्मीकिस्त्वं मुनीश्वर ! ॥ ८५ ॥
वल्मीकात् सम्भवो यस्मात् द्वितीयं जन्म तेऽभवत् ।
इत्युक्त्वा ते ययुर्दिव्यगतिं रघुकुलोत्तम ! ॥ ८६ ॥
अहं ते राममन्त्रस्य प्रभावादीदृशोऽभवम् ।
अद्य साक्षात्प्रपश्यामि ससीतं लक्ष्मणेन च ॥ ८७ ॥
रामं राजीवपत्राक्षं त्वां मुक्तो नात्र संशयः ।
आगच्छ राम ! भद्रं ते स्थलं वै दर्शयाम्यहम् ॥ ८८ ॥
एवमुक्त्वा मुनिः श्रीमाँल्लक्ष्मणेन समन्वितः
शिष्यैः परिवृतो गत्वा मध्ये पर्वतगङ्गयोः ॥ ८९ ॥

अल्पकालेऽभ्यासात्तस्यैव फलमाह बाह्यं विस्मृतवानिति अनेन तच्छब्दस्यापि स्मरणपूर्वकं तदर्थभूतान्तर्यामित्वं विषयतया जपकाले चित्तमिति सूचितम् निश्चलरूपिणो निष्क्रियशरीरस्य ॥ ८२ । ८३ । ८४ । ८५ ॥

यस्मात्ते इदानीं वल्मीकात् सम्भवो जातस्त्वं वाल्मीकिरिति पूर्वेणान्वयः ॥ ८६ ॥

ईदृशः त्वत्साक्षात्कार्यः लक्ष्मणेनेत्यस्य सहितमिति शेषः ॥ ८७ ॥

एवम्भूतं राम त्वां प्रपश्यामि तत्सर्वथा मुक्तो भविष्यामि अत्र न संशयः अयं च प्रबन्धोऽपि रामायणकर्तुर्वाल्मीकेरस्य एवेति बहवः ॥ ८८ ॥

मध्ये पर्वतगङ्गयोः स्थितं स्वस्थलं दर्शयामासेति शेषः ॥ ८९ ॥

तत्र शालां सुविस्तीर्णां कारयामास वासभूः ।
प्राक्पश्चिमं दक्षिणोदक् शोभनं मन्दिरद्वयम् ॥ ९० ॥
जानक्या सहितो रामो लक्ष्मणेन समन्वितः ।
तत्र ते देवसदृशा ह्यवसन् भवनोत्तमे ॥ ९१ ॥

वाल्मीकिना तत्र सुपूजितोऽयं
रामः ससीतः सह लक्ष्मणेन ।
देवैर्मुनीन्द्रैः सहितो मुदास्ते
स्वर्गे यथा देवपतिः सशच्या ॥ ९२ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
अयोध्याकाण्डे
षष्ठः सर्गः ।

तत्र ऋषिदर्शितस्थाने शालां मन्दिरद्वयं च लक्ष्मणेन समन्वितो रामः कारयामास तत्पर्वतवासिभिर्भिल्लैरिति शेषः वासभूरिति रामविशेषणं संसारस्य वासस्थानमपि स्ववासाय स्थानं कारितवानित्याश्चर्योक्तिः ।९०।९१

प्रसिद्धो देवपतिः शच्या देवैश्च सहितो यथा स्वर्गे आस्ते तथा ससीतो मुनीन्द्रैः सहितो रामस्तत्रास्त इत्यर्थः ॥ ९२ ॥

इति श्रीमत्सकलराजाधिपधुरन्धरसमर्थेत्यादिवि० श्रीरामवर्मणः
कृतावध्यात्मरामायणसेतौ अयोध्याकाण्डे
षष्ठः सर्गः ।

---

## सप्तमः सर्गः ।

सुमन्त्रोऽपि तदाऽयोध्यां दिनान्ते प्रविवेश ह ।
वस्त्रेण मुखमाच्छाद्य बाष्पाकुलितलोचनः ॥ १ ॥
बहिरेव रथं स्थाप्य राजानं द्रष्टुमाययौ ।
जयशब्देन राजानं स्तुत्वा तं प्रणनाम ह ॥ २ ॥
ततो राजा नमन्तं तं सुमन्त्रं विह्वलोऽब्रवीत् ।
सुमन्त्र ! रामः क्वास्ते सीतया लक्ष्मणेन च ॥ ३ ॥
कुत्र त्यक्तस्त्वया रामः किं मां पापिनमब्रवीत् ।
सीता वा लक्ष्मणो वापि निर्दयं मां किमब्रवीत् ॥ ४ ॥
हा राम ! हा गुणनिधे ! हा सीते ! प्रियवादिनि ! ।
दुःखार्णवे निमग्नं मां म्रियमाणं न पश्यसि ॥ ५ ॥
विलप्यैवं चिरं राजा निमग्नो दुःखसागरे ।
एवं मन्त्री रुदन्तं तं प्राञ्जलिर्वाक्यमब्रवीत् ॥ ६ ॥
रामः सीता च सौमित्रिर्मया नीता रथेन ते ।
शृङ्गिवेरपुराभ्यासे गङ्गाकूले व्यवस्थिताः ॥ ७ ॥

सप्तमे त्वथराजा वै स्वशपोदन्तमादितः संप्रोच्योपरतः पश्चाद्भरतागम ईर्यते ॥ १ ॥

सुमन्त्रोऽपीति रामं विना कृतागमनाल्लज्जया वस्त्रेण मुखमाच्छाद्य प्रविवेश ॥ १ ॥ २ ॥

विह्वलः रामवियोगेन विह्वलचित्तः ॥ ३ । ४ ॥

दुःखार्णवे त्वद्वियोगदुःखार्णवे मज्जत एव म्रियमाणं न पश्यसि किम् पश्यसीत्यर्थः ॥ ५ ॥

एवं विलप्य दुःखसागरे निमग्नो रुदन् स्थित इति शेषः एवं रुदन्तं तं मन्त्री अब्रवीत् ॥ ६ । ७ ॥

गुहेन किञ्चिदानीतं फलमूलादिकं च यत्।
स्पृष्ट्वा हस्तेन सम्प्रीत्या नाग्रहीद्विससर्ज तत् ॥ ८ ॥
वटक्षीरं समानाय्य गुहेन रघुनन्दनः।
जटामुकुटमाबध्य मामाह नृपते! स्वयम् ॥ ९ ॥
सुमन्त्र! ब्रूहि राजानं शोकस्तेऽस्तु न मत्कृते।
साकेतादधिकं सौख्यं विपिने नो भविष्यति ॥ १० ॥
मातुर्मे वन्दनं ब्रूहि शोकं त्यजतु मत्कृते।
आश्वासयतु राजानं वृद्धं शोकपरिप्लुतम् ॥ ११ ॥
सीता चाश्रुपरीताक्षी मामाह नृपसत्तम!।
दुःखगद्गदया वाचा रामं किञ्चिदवेक्षती ॥ १२ ॥
साष्टाङ्गं प्रणिपातं मे ब्रूहि श्वश्र्वोः पदाम्बुजे।
इति प्ररुदती सीता गता किञ्चिदवाङ्मुखी ॥ १३ ॥
ततस्तेऽश्रुपरीताक्षा नावमारुरुहुस्तदा।
यावद्गङ्गां समुत्तीर्य गतास्तावदहं स्थितः ॥ १४ ॥

सीता गुहनीतं फलेन स्पृष्ट्वा नाग्रहीत् वनागमनवेलोपवासवत्त्वात् नाहारं करिष्यामीति प्रतिज्ञाकरणादिति भावः ॥ ८ ॥ ९ ॥

राजानं ब्रूहि वक्ष्यमाणं वन्दनं चेति शेषः साकेतादयोध्याया अधिकं सौख्यं भवत्कृतसुखसम्भारादिति शेषः तस्य शोककारणे एव न भवतीति सर्वथा शोकस्त्याज्य इति भावः ॥ १० ॥

मत्कृते शोकं त्यजतु राजानमाश्वासयतु भवती इति च ब्रूहि इत्यन्वयः ॥ ११ ॥

अश्रुपरीताक्षी अश्रुव्याप्तनयना ॥ १२ ॥

श्वश्र्वोः श्वश्रूश्वशुरयोः कौशल्याकैकेय्योः मम वन्दितेत्यर्थः ॥ १३ ॥

ते सीतारामलक्ष्मणाः तावदहं स्थितः उदककूले इति शेषः ॥ १४ ॥

ततो दुःखेन महता पुनरेवाह्नमागतः।
ततो रुदन्ती कौशल्या राजानमिदमब्रवीत्॥ १५॥
कैकेय्यै प्रियभार्य्यायै प्रसन्नो दत्तवान् वरम्।
त्वं राज्यं देहि तस्यैव मत्पुत्रः किं विवासितः?॥ १६॥
कृत्वा त्वमेव तत्सर्वमिदानीं किं नु रोदिषि?।
कौशल्यावचनं श्रुत्वा क्षते स्पृष्ट इवाग्निना॥ १७॥
पुनः शोकाश्रुपूर्णाक्षः कौशल्यामिदमब्रवीत्।
दुःखेन म्रियमाणं मां किं पुनर्दुःखयस्यलम्॥ १८॥
इदानीमेव मे प्राणा उत्क्रमिष्यन्ति निश्चयः।
शप्तोऽहं बाल्यभावेन केनचिन्मुनिना पुरा॥ १९॥
पुराऽहं यौवने दृप्तश्चापबाणधरो निशि।
अचरं मृगयासक्तो नद्यास्तीरे महावने॥ २०॥
तत्राहं रात्रिसमये मुनिः कश्चित्तृषार्दितः।
पिपासाऽर्दितयोः पित्रोर्जलमानेतुमुद्यतः।
अपूरयज्जले कुम्भं तदा शब्दोऽभवन्महान्॥ २१॥
गजः पिबति पानीयमिति मत्वा महानिशि।
बाणं धनुषि सन्धाय शब्दवेधिनमक्षिपम्॥ २२॥

यदि त्वं कैकेय्यै वरं दत्तवान् तर्हि तत्पुत्रस्यैव राज्यं देहि राज्यस्योपादेयत्वात् मत्पुत्रविवासने तु न कारणमिति भावः॥ १५। १६॥

तत्सर्वं कृत्वा निर्निमित्तमविचारितं तत् कृत्वेत्यर्थः अग्निना क्षते स्पृष्ट इव तेनातिदुःखित इत्यर्थः॥ १७॥

अत्यर्थमतिशयेन॥ १८॥

बाल्यभावेन निर्निमित्तापराधरूपबालकर्मणा॥ १९। २०। २१॥

अक्षिपमहमिति शेषः॥ २२॥

हा हतोऽस्मीति तत्राभूच्छब्दो मानुषसूचकः ।
कस्यापि न कृतो दोषो मया केन हतो विधे ! ॥ २३ ॥
प्रतीक्षते मां माता च पिता च जलकाङ्क्षया ।
तच्छ्रुत्वा भयसन्त्रस्तस्ततोऽहं पौरुषं वचः ॥ २४ ॥
शनैर्गत्वाऽथ तत्पार्श्वं स्वामिन् ! दशरथोऽस्म्यहम् ।
अजानता मया विद्धस्त्रातुमर्हसि मां मुने ! ॥ २५ ॥
इत्युक्त्वा पादयोस्तस्य पतितो गद्गदाक्षरः ।
तदा मामाह स मुनिर्माभैषीर्नृपसत्तम ! ॥ २६ ॥
ब्रह्महत्या स्पृशेन्न त्वां वैश्योऽहं तपसि स्थितः ।
पितरौ मां प्रतीक्षेते क्षुत्तृड्भ्यां परिपीडितौ ॥ २७ ॥
तयोस्त्वमुदकं देहि शीघ्रमेवाविचारयन् ।
न चेत्त्वां भस्मसात्कुर्य्यात्पिता मे यदि कुप्यति ॥ २८ ॥
जलं दत्त्वा तु तौ नत्वा कृतं सर्वं निवेदय ।
शल्यमुद्धर मे देहात्प्राणांस्त्यक्ष्यामि पीडितः ॥ २९ ॥
इत्युक्तो मुनिना शीघ्रं बाणमुत्पाट्य देहतः ।
सजलं कलशं धृत्वा गतोऽहं यत्र दम्पती ॥ ३० ॥

मानुषसूचकः मानुषत्वसूचकः केन हतः अहमिति शेषः ॥ २३ ॥
अहं तत्पौरुषं वचः श्रुत्वा भयसन्त्रस्तः सन् ततः ॥ २४ ॥
तत्पार्श्वं शनैर्गत्वाऽब्रूवमिति शेषः ॥ २५ । २६ ॥
न स्पृशेत् न स्प्रक्ष्यतीत्यर्थः ॥ २७ ॥
यदि कुप्यतीत्यनेन तस्य कोप एव नास्ति अतिशान्तत्वात् तथाऽप्यशीघ्र-
गमनेन क्षुत्पीडितो यदि कदाचित् कुप्यतीत्यर्थः ॥ २८ ॥
कृतं मद्वधम् ॥ २९ ॥

अतिवृद्धावन्धदृशौ क्षुत्पिपासार्दितौ निशि ।
नायाति सलिलं गृह्य पुत्रः किंवाऽत्र कारणम् ॥ ३१ ॥
अनन्यगतिकौ वृद्धौ शोच्यौ तृट्परिपीडितौ ।
आवामुपेक्षते किंवा भक्तिमानावयोः सुतः ॥ ३२ ॥
इति चिन्ताव्याकुलौ तौ मत्पादन्यासजं ध्वनिम् ।
श्रुत्वा प्राह पिता पुत्र ! किं विलम्बः कृतस्त्वया ॥३३॥
देह्यावयोः सुपानीयं पिब त्वमपि पुत्रक ! ।
इत्येवं लपतोर्भीत्या तवाश्रमगमनं शनैः ॥ ३४ ॥
पादयोः प्रणिपत्याहमब्रुवं विनयान्वितः ।
नाहं पुत्रस्त्वयोध्याया राजा दशरथोऽस्म्यहम् ॥ ३५ ॥
पापोऽहं मृगयासक्तो रात्रौ मृगविहिंसकः ।
जलावताराद्दूरेऽहं स्थित्वा जलगतं ध्वनिम् ॥ ३६ ॥
श्रुत्वाऽहं शब्दवेधित्वादेकं बाणमथात्यजम् ।
हतोऽस्मीति ध्वनिं श्रुत्वा भयात्तत्राहमागतः ॥ ३७ ॥
जटा विकीर्य्य पतितं दृष्ट्वाऽहं मुनिदारकम् ।
भीतो गृहीत्वा तत्पादौ रक्ष रक्षेति चाब्रुवम् ॥ ३८ ॥
मा भैषीरिति मां प्राह ब्रह्महत्याभयं न ते ।
मत्पित्रोः सलिलं दत्त्वा नत्वा प्रार्थय जीवितम् ॥ ३९ ॥

धृत्वा गृहीत्वा दम्पती तन्मातापितरौ ॥ ३० ॥ ( गृह्य इत्यार्षं ) ॥३१॥
किमुपेक्षते उपेक्षाऽनुचितेति भावः अनौचित्ये हेत्वर्थं भक्तिमानिति ॥३२॥
इति चिन्ताव्याकुलौ तावासाते तत्र तयोर्मध्ये तत्पिता मत्पादन्यासजं
ध्वनिं श्रुत्वा पुत्र किं विलम्ब इत्यादि प्राह ॥ ३३ ॥
एवं लपतोरित्यनेन मातापित्रोर्वचो बाहुल्यं सूचितम् ॥ ३४ ॥ ३५ ॥
॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

इत्युक्तो मुनिना तेन ह्यागतो मुनिहिंसकः।
रक्षेतां मां दयायुक्तौ युवां हि शरणागतम् ॥ ४० ॥
इति श्रुत्वा तु दुःखार्त्तौ विलप्य बहुशोच्य तम्।
पतितौ नौ सुतो यत्र नय तत्राविलम्बयन् ॥ ४१ ॥
ततो नीतौ सुतो यत्र मया तौ वृद्धदम्पती।
स्पृष्ट्वा सुतं तौ हस्ताभ्यां बहुशोऽथ विलेपतुः ॥ ४२ ॥
हा हेति क्रन्दमानौ तौ पुत्र पुत्रेत्यवोचताम्।
जलं देहीति पुत्रेति किमर्थं न ददास्यलम् ॥ ४३ ॥
ततो मामूचतुः शीघ्रं चितिं रचय भूपते!।
मया तदैव रचिता चितिस्तत्र निवेशिता:।
चयस्तत्राग्निरुत्सृष्टो दग्धास्ते त्रिदिवं ययुः ॥ ४४ ॥
तव वृद्धः पिता चाह त्वमप्येवं भविष्यसि।
पुत्रशोकेन मरणं प्राप्स्यसे वचनान्मम ॥ ४५ ॥
स इदानीं मम प्राप्तः शापकालोऽनिवारितः।
इत्युक्त्वा विललापाथ राजा शोकसमाकुलः ॥ ४६ ॥
हा राम! पुत्र! हा सीते! हा लक्ष्मण! गुणाकर!
त्वद्वियोगादहं प्राप्तो मृत्युं कैकेयिसम्भवम् ॥ ४७ ॥

आगतो युष्मत्समीपाविति शेषः ॥ ४० ॥

पतितौ भूम्याम् ततो मामूचतुरिति शेषः किमवद्धस्तदाह नौ सुत इति आवयोः सुतो यत्र तत्रैवानयेत्यर्थः ॥ ४१ । ४२ । ४३ ॥

चितिं चिताम् तत्र चितौ त्वचः पुत्रो मातापितरौ च तत्र तत्र तदा मयाऽग्निरुत्सृष्टो दत्तः ॥ ४४ ॥

पिता आवयोरेति शेषः ॥ ४५ ॥

अनिवारितः अयत्नानिवारणः भावे क्तः ॥ ४६ ॥

वदन्नेवं दशरथः प्राणांस्त्यक्त्वा दिवं गतः।
कौशल्या च सुमित्रा च तथान्या राजयोषितः॥ ४८॥
चुक्रुशुश्च विलेपुश्च उरस्ताड़नपूर्वकम्।
वशिष्ठः प्रययौ तत्र प्रातर्मन्त्रिभिरावृतः॥ ४९॥
तैलद्रोण्यां दशरथं क्षिप्त्वा दूतानथाब्रवीत्।
गच्छत त्वरितं साश्वा युधाजिन्नगरं प्रति॥ ५०॥
तत्रास्ते भरतः श्रीमाञ्छत्रुघ्नसहितः प्रभुः।
उच्यतां भरतः शीघ्रमायात्विति ममाज्ञया॥ ५१॥
अयोध्यां प्रति राजानं कैकेयीं चापि पश्यतु।
इत्युक्तास्त्वरितं दूता गत्वा भरतमातुलम्॥ ५२॥
युधाजितं प्रणम्योचुर्भरतं सानुजं प्रति।
वशिष्ठस्त्वाब्रवीद्राजन्! भरतः सानुजः प्रभुः॥ ५३॥
शीघ्रमागच्छतु पुरीमयोध्यामविचारयन्।
इत्याज्ञप्तोऽथ भरतस्त्वरितं भयविह्वलः॥ ५४॥
आययौ गुरुणादिष्टः सह दूतैस्तु सानुजः।
राज्ञो वा राघवस्यापि दुःखं किञ्चिदुपस्थितम्॥ ५५॥
इति चिन्तापरो मार्गे चिन्तयन्नगरं ययौ।
नगरं भ्रष्टलक्ष्मीकं जनसम्बाधवर्जितम्॥ ५६॥

प्रत्येकविवक्षया त्वद्वियोगादित्येकवचनम्॥ ४७। ४८। ४९॥
साश्वाः अश्वारूढाः॥ ५०॥
ममाज्ञया भरतसमीपं गत्वा शीघ्रमागच्छेति भरत उच्यताम्॥ ५१॥
अयोध्यां प्रति आगत्य कैकेयीं राजानं च भवान् पश्यत्विति चोच्यताम्॥ ५२॥
ता ताम् युधाजितं सानुजं भरतं प्रति तद्विषये॥ ५३। ५४। ५५॥

उत्सवैश्च परित्यक्तं दृष्ट्वा चिन्तापरोऽभवत्।
प्रविश्य राजभवनं राजलक्ष्मीविवर्जितम्॥ ५७॥
अपश्यत्कैकयी तत्र एकामेवासने स्थिताम्।
ननाम शिरसा पादौ मातुर्भक्तिसमन्वितः॥ ५८॥
आगतं भरतं दृष्ट्वा कैकेयी प्रेमसम्भ्रमात्।
उत्थायालिङ्ग्य रभसा स्वाङ्कमारोप्य संस्थिता॥ ५९॥
मूर्ध्न्यवघ्राय पप्रच्छ कुशलं स्वकुलस्य सा।
पिता मे कुशली भ्राता माता च शुभलक्षणा॥ ६०॥
दिष्ट्या त्वमद्य कुशली मया दृष्टोऽसि पुत्रक!।
इति पृष्टः स भरतो मात्रा चिन्ताकुलेन्द्रियः॥ ६१॥
दूयमानेन मनसा मातरं समपृच्छत।
मातः! पिता मे क्वास्ते एका त्वमिह संस्थिता॥६२॥
त्वया विना न मे तातः कदाचिद्रहसि स्थितः।
इदानीं दृश्यते नैव कुत्र तिष्ठति मे वद॥ ६३॥
अदृष्ट्वा पितरं मेऽद्य भयं दुःखं च जायते।
अथाह कैकयी पुत्रं किं दुःखेन तवानघ!॥ ६४॥
या गतिर्धर्मशीलानामश्वमेधादियाजिनाम्।
तां गतिं गतवानद्य पिता ते पितृवत्सल!॥ ६५॥
तच्छ्रुत्वा निपपातोर्व्यां भरतः शोकविह्वलः।

जनसंबाधो जनसंमर्दः॥ ५६। ५७॥
एकामेव न तु राजसहिताम्॥ ५८॥ ५९॥
स्वकुलस्य स्वपितृकुलस्य॥ ६०। ६१। ६२। ६३। ६४॥
तां गतिमुत्तमलोकम्॥ ६५॥

हा तात ! क्व गतोऽसि त्वं त्यक्त्वा मां वृजिनार्णवे ॥६६॥
असमर्प्यैव रामाय राज्ञे मां क्व गतोऽसि भो ! ।
इति विलपितं पुत्रं पतितं मुक्तमूर्द्धजम् ॥ ६७ ॥
उत्थाप्यामृज्य नयने कैकेयी पुत्रमब्रवीत् ।
समाश्वसिहि भद्रं ते सर्वं सम्पादितं मया ॥ ६८ ॥
तामाह भरतस्तातो म्रियमाणः किमब्रवीत् ।
तमाह कैकयी देवी भरतं भयवर्ज्जिता ॥ ६९ ॥
हा राम ! रामसीतेति लक्ष्मणेति पुनःपुनः ।
विलपन्नेव सुचिरं देहं त्यक्त्वा दिवं ययौ ॥ ७० ॥
तामाह भरतो हेऽम्ब ! रामः सन्निहितो न किम् ।
तदानीं लक्ष्मणो वाऽपि सीता वा कुत्र ते गताः ॥७१॥

कैकेय्युवाच ।

रामस्य यौवराज्यार्थं पित्रा ते सम्भ्रमः कृतः ।
तव राज्यप्रदानाय तदाऽहं विघ्नमाचरम् ॥ ७२ ॥
राज्ञा दत्तं हि मे पूर्वं वरदेन वरद्वयम् ।
याचितं तदिदानीं मे तयोरेकेन तेऽखिलम् ॥ ७३ ॥
राज्यं रामस्य चैकेन वनवासो मुनिव्रतम् ।
ततः सत्यपरो राजा राज्यं दत्त्वा तवैव हि ॥ ७४ ॥

वृजिनार्णवे दुःखार्णवे ॥ ६६ ॥

रामाय राज्ञे मामसमर्प्य अयं मद्वस्त्वयाऽपि पालनीय इत्यनुक्त्वैव पतितं भूमौ ॥ ६७ ॥

आमृज्य मार्जिताश्रुके कृत्वा ॥ ६८ । ६९ । ७० । ७१ ॥

सम्भ्रमतः आदरपूर्वक उपक्रमः राज्यप्रदानाय तव राज्यं प्रदापयितुं अन्तर्भावितण्यर्थो ददाति विघ्नमाचरं रामयौवराज्याभिषेकस्येति शेषः ।७२।

रामं सम्प्रेषयामास वनमेव पिता तव।
सीताऽप्यनुमता रामं पातिव्रत्यमुपाश्रिता ॥ ७५ ॥
सौभ्रात्रं दर्शयन् राममनुयातोऽपि लक्ष्मणः।
वनं गतेषु सर्वेषु राजा तानेव चिन्तयन् ॥ ७६ ॥
प्रलपन् राम रामेति ममार नृपसत्तमः।
इति मातुर्वचः श्रुत्वा वज्राहत इव द्रुमः ॥ ७७ ॥
पपात भूमौ निःसंज्ञस्तं दृष्ट्वा दुःखिता तदा।
कैकेयी पुनरप्याह वत्स! शोकेन किं? तव ॥ ७८ ॥
राज्ये महति सम्प्राप्ते दुःखस्यावसरः कुतः।
इति ब्रुवन्तीमालोक्य मातरं प्रदहन्निव ॥ ७९ ॥
असम्भाष्याऽसि पापे मे घोरे त्वं भर्तृघातिनी।
पापे त्वद्गर्भजातोऽहं पापवानस्मि साम्प्रतम्।
अहमग्निं प्रवेक्ष्यामि विषं वा भक्षयाम्यहम् ॥ ८० ॥
खड्गेन वाथ चात्मानं हत्वा यामि यमक्षयम्।
भर्तृघातिनि! दुष्टे त्वं कुम्भीपाकं गमिष्यसि ॥ ८१ ॥
इति निर्भर्त्स्य कैकेयीं कौसल्याभवनं ययौ।
सापि तं भरतं दृष्ट्वा मुक्तकण्ठा रुरोद ह ॥ ८२ ॥

तदुपपत्तिमाह रामेति ॥ ७३ । ७४ । ७५ । ७६ । ७७ ।

तं दृष्ट्वा निःसञ्ज्ञं भरतं दृष्ट्वा अनेन भर्तृशोकादपि पुत्रशोको गरीया-निति दर्शितम् ॥ ७८ ॥

चक्षुषा प्रदहन्निव पश्यन्नाहेति शेषः असम्भाष्यत्वे हेतुर्भर्तृघातिनीति त्वम् ॥ ७९ ॥

पापे इति तद्गर्भजातत्वात् पापवानहमस्मीति साम्प्रतं निर्णीत-मिति शेषः अतोऽहमित्यादि ॥ ८० ॥

गमिष्यसि देहत्यागोत्तरमिति शेषः ॥ ८१ ॥

पादयोः पतितस्तस्या भरतोऽपि तदारुदन् ।
आलिङ्ग्य भरतं साध्वी राममाता यशस्विनी ॥ ८३ ॥
कृशातिदीनवदना साश्रुनेत्रेदमब्रवीत् ।
पुत्र ! त्वयि गते दूरमेवं सर्वमभूदिदम् ।
उक्तं मात्रा श्रुतं सर्वं त्वया ते मातृचेष्टितम् ॥ ८४ ॥

पुत्रः सभार्य्यो वनमेव यातः
सलक्ष्मणो मे रघुरामचन्द्रः ।
चीराम्बरो बद्धजटाकलापः
सन्त्यज्य मां दुःखसमुद्रमग्नाम् ॥ ८५ ॥
हा राम ! हा मे रघुवंशनाथ !
जातोऽसि मे त्वं परतः परात्मा ।
तथापि दुःखं न जहाति मां वै
विधिर्बलीयानिति मे मनीषा ॥ ८६ ॥

स एवं भरतो वीक्ष्य विलपन्तीं भृशं शुचा ।
पादौ गृहीत्वा प्राहेदं शृणु मातर्वचो मम ॥ ८७ ॥

तं स्वपुत्रवियोगकारणम् ॥ ८२ ॥ ८३ ॥

इदं सर्वं त्वद्वृत्तमेवमभूत् राज्ञो मरणं रामस्य वनगमनं चेत्यर्थः एतत्सर्वं ते मातृचेष्टितम् ॥ ८४ ॥

तत्तु तव मात्रोक्तमेव भविष्यति त्वया च श्रुतमेव भविष्यतीत्यध्याहारेणान्वयः रघुरामचन्द्रः रघुकुलजातो रामचन्द्र इत्यर्थः ॥ ८५ ॥

परतः सर्वस्मात् परतः सर्वतोऽधिक इति यावत् परमात्मा मे पुत्रो जातोऽसि यद्यपि तथापि मां दुःखं न जहाति अतो विधिर्बलवानिति मे मनीषा बुद्धिः दुःखनिवर्तकसामर्थ्ये सत्यामपि दुःखानिवृत्तिर्विधिबलवत्त्वकृतैवेति भावः ॥ ८६ ॥

एवं विलपन्तीं वीक्ष्येत्यन्वयः ॥ ८७ ॥

कैकेय्या यत्कृतं कर्म रामराज्याभिषेचने ।
अन्यदा यदि जानामि सा मया नोदिता यदि ॥८८॥
पापं मेऽस्तु तदा मातः ! ब्रह्महत्याशतोद्भवम् ।
हत्वा वशिष्ठं खड्गेन अरुन्धत्या समन्वितम् ॥ ८९ ॥
भूयात्तत्पापमखिलं मम जानामि यद्यहम् ।
इत्येवं शपथं कृत्वा रुरोद भरतस्तदा ॥ ९० ॥
कौशल्या तमथालिङ्ग्य पुत्र ! जानामि मा शुचः ।
एतस्मिन्नन्तरे श्रुत्वा भरतस्य समागमम् ॥ ९१ ॥
वशिष्ठो मन्त्रिभिः सार्द्धं प्रययौ राजमन्दिरम् ।
रुदन्तं भरतं दृष्ट्वा वशिष्ठः प्राह सादरम् ॥ ९२ ॥
वृद्धो राजा दशरथो ज्ञानी सत्यपराक्रमः ।
भुक्त्वा मर्त्यसुखं सर्वमिष्ट्वा विपुलदक्षिणैः ॥ ९३ ॥
अश्वमेधादिभिर्यज्ञैर्लब्ध्वा रामं सुतं हरिम् ।
अन्ते जगाम त्रिदिवं देवेन्द्रार्द्धासनं प्रभुः ॥ ९४ ॥
तं शोचसि वृथैव त्वमशोच्यं मोक्षभाजनम् ।
आत्मा नित्योऽव्ययः शुद्धो जन्मनाशादिवर्जितः ॥ ९५ ॥

रामराज्यस्याभिषेचने यद्वा अन्यदा मद्राज्ययाचनकर्म यदि वा सा एतदर्थं मया नोदिता प्रेरिता ॥ ८८ ॥

वदेत्यन्वयः ॥ ८९ ॥

यद्यहमिमं वृत्तान्तं जानामि तदा तदखिलं पापं मम भूयादित्यन्वयः ॥ ९० ॥

जानामि त्वद्धृदयमिति शेषः समागमम्आगमनम् ॥ ९१ ॥ ९२ ॥ ९३ ॥

त्रिदिवं गत्वेति शेषः देवेन्द्रार्द्धासनं जगाम प्राप ॥ ९४ ॥

अशोच्यत्वे हेतुगर्भं विशेषणम् मोक्षभाजनमिति प्रकारान्तरेणाप्यशो-

शरीरं जडमत्यर्थमपवित्रं विनश्वरम् ।
विचार्यमाणे शोकस्य नावकाशः कथञ्चन ॥ ९६ ॥
पिता वा तनयो वापि यदि मृत्युवशं गतः ।
मूढास्तमनुशोचन्ति स्वात्मताडनपूर्वकम् ॥ ९७ ॥
निःसारे खलु संसारे वियोगो ज्ञानिनां यदा ।
भवेद्वैराग्यहेतुः स शान्तिसौख्यं तनोति च ॥ ९८ ॥
जन्मवान् यदि लोकेऽस्मिन् तर्हि तं मृत्युरन्वगात् ।
तस्मादपरिहार्योऽयं मृत्युर्जन्मवतां सदा ॥ ९९ ॥
स्वकर्मवशतः सर्वजन्तूनां प्रभवाप्ययौ ।
विजानन्नप्यविद्वान्यः कथं शोचति बान्धवान् ॥ १०० ॥
ब्रह्माण्डकोटयो नष्टाः सृष्टयो बहुशो गताः ।
शुष्यन्ति सागराः सर्वे कैवास्था क्षणजीविते ॥ १०१ ॥
चलपत्रान्तलग्नाम्बुबिन्दुवत् क्षणभङ्गुरम् ।

च्युत्यमाह आत्मेति नित्योऽव्यय इत्यस्यैव जन्मनाशादिवर्जित इति विवरणम् ॥ ९५ ॥

शरीरस्य जडत्वान्नश्वरत्वाच्चैव अशोच्यता इत्याह शरीरमिति ॥९६॥

स्वात्मताडनपूर्वकं स्वशरीरताडनपूर्वकमित्यर्थः ॥ ९७ ॥

ज्ञानिनां संसारस्यासारत्वेन ज्ञानवताम् यदा केनचिद्वियोगो भवति तदा स वैराग्यहेतुः भवेत् भवतीत्यर्थः शान्त्यादिकर्ता च ॥ ९८ ॥

अथ जातस्य ध्रुवो मृत्युरित्याह जन्मवानिति अन्वगात् अनुगच्छत्येवेत्यर्थः ॥ ९९ ॥

यः अविद्वानपि अतत्त्वज्ञोऽपि स्वोत्पत्तिप्रलययोः सर्वजन्तूनां कर्माधीनत्वं विजानन् कथं बान्धवान् शोचति किं पुनस्तत्त्वज्ञ इति भावः ॥१००

शुष्यन्ति वर्त्तमानसामीप्ये लट् क्षणजीविते क्षणभङ्गुरे जीविते इत्यर्थः ॥ १०१ ॥

आयुस्त्यजत्यवेलायां कस्तत्र प्रत्ययस्तव ॥ १०२ ॥
देही प्राक्तनदेहोत्थकर्मणा देहवान् पुनः।
तद्देहोत्थेन च पुनरेवं देहः सदात्मनः ॥ १०३ ॥
यथा त्यजति वै जीर्णं वासो गृह्णाति नूतनम्।
तथा जीर्णं परित्यज्य देही देहं पुनर्नवम् ॥ १०४ ॥
भजत्येव सदा तत्र शोकस्यावसरः कुतः।
आत्मा न म्रियते जातु जायते न च वर्द्धते ॥ १०५ ॥
षड्भावरहितोऽनन्तः सत्यप्रज्ञानविग्रहः।
आनन्दरूपो बुद्ध्यादिसाक्षी लयविवर्जितः ॥ १०६ ॥
एक एव परो ह्यात्मा ह्यद्वितीयः समस्थितः।
इत्यात्मानं दृढं ज्ञात्वा त्यक्त्वा शोकं कुरु क्रियाम् ॥१०७॥
तैलद्रोण्याः पितुर्देहमुद्धृत्य सचिवैः सह।

चलं चञ्चलं यत्पत्रं तदन्ते लग्नो योऽम्बुबिन्दुस्तद्वत् क्षणभङ्गुरम् अवेलायां बाल्येऽपि प्रत्ययो विश्वासः ॥ १०२ ॥

देही जीवः प्राक्तनदेहसम्पादितकर्मणाऽयं देह एतद्देहसम्पादितकर्मणा च पुनर्देह इति देहवियोगो न कदाचिदात्मन इति देहशोको वृथेति भावः ॥ १०३ ॥

पुनर्देहप्राप्तौ दृष्टान्तमाह यथेति नवं भजत्येवेत्युत्तरेणान्वयः ॥१०४॥

आत्मनस्तु न मरणादीत्याह आत्मा नेति ॥ १०५ ॥

आदिमध्यान्तभावविकाराभावेन सर्वभावविकाररराहित्यमित्याह षड्विति भावरहितः अनन्तः देशतः परिच्छेदरहितः प्रज्ञानं निर्विषयज्ञानं तदेव विग्रहः शरीरं यस्य सः बुद्ध्यादिसाक्षी निश्चयादिरूप सकलान्तःकरणवृत्तिसाक्षी लयो नाशस्तद्रहितः ॥ १०६ ॥

समस्थितः सर्वत्र समतया स्थितः स एवाहमित्यात्मानं ज्ञात्वा शोकं त्यक्त्वा क्रियां कुरु ॥ १०७ ॥

कृत्यं कुरु यथा न्यायमस्माभिः कुलनन्दन। ॥ १०८ ॥
इति सम्बोधितः साक्षाद्गुरुणा भरतस्तदा।
विसृज्याज्ञानजं शोकं चक्रे स विधिवत्क्रियाम् ॥१०९॥
गुरुणोक्तप्रकारेण आहिताग्नेर्यथाविधि।
संस्कृत्य स पितुर्देहं विधिदृष्टेन कर्मणा ॥ ११० ॥
एकादशेऽहनि प्राप्ते ब्राह्मणान् वेदपारगान्।
भोजयामास विधिवच्छतशोऽथ सहस्रशः ॥ १११ ॥
उद्दिश्य पितरं तत्र ब्राह्मणेभ्यो धनं बहु।
ददौ गवां सहस्राणि ग्रामान् रत्नाम्बराणि च ॥ ११२ ॥
अवसत् स्वगृहे तत्र राममेवानुचिन्तयन्।
वशिष्ठेन सह भ्रात्रा मन्त्रिभिः परिवारितः ॥ ११३ ॥
रामेऽरण्यं प्रयाते सह जनकसुतालक्ष्मणाभ्यां सुघोरं
माता मे राक्षसीव प्रदहति हृदयं दर्शनादेव सद्यः।
गच्छाम्यारण्यमद्य स्थिरमतिरखिलं दूरतोऽपास्य राज्यं
रामं सीतासमेतं स्मितरुचिरमुखं नित्यमेवानु सेवे ॥११४॥
इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकाण्डे
सप्तमः सर्गः

तैलद्रोणी तैलपूर्णा काष्ठाम्बुवाहिनी ॥ १०८। १०९ ॥
गुरुणा वशिष्ठेन ॥ ११०। १११। ११२। ११३।
अनुचिन्तनप्रकारमेवाह रामे इति सुघोरमरण्यं प्रयाते इत्यन्वयः मे
माता राक्षसीव दर्शनात् हृदयं प्रदहति अत आरण्यं अरण्यवन्तं देशं
रामवासभूतं गच्छामीत्यन्वयः ॥ ११४ ॥
इति श्रीमत्सकलराजधिपद्युहरणसमर्थास्तादिवि० श्रीरामवर्मणः
कृतावध्यात्मरामायणे सेतौ अयोध्याकाण्डे
सप्तमः सर्गः।

# अष्टमः सर्गः ।

श्रीमहादेव उवाच ।

वशिष्ठो मुनिभिः सार्धं मन्त्रिभिः परिवारितः ।
राज्ञः सभां देवसभासन्निभामविशद्विभुः ॥ १ ॥
तत्रासने समासीनश्चतुर्मुख इवापरः ।
आनीय भरतं तत्र उपवेश्य सहानुजम् ॥ २ ॥
अब्रवीद्वचनं देशकालोचितमरिन्दमम् ।
वत्स ! राज्येऽभिषेक्ष्यामस्त्वमद्य पितृशासनात् ॥ ३ ॥
कैकेय्या याचितं राज्यं त्वदर्थे पुरुषर्षभ ! ।
सत्यसन्धो दशरथः प्रतिज्ञाय ददौ किल ॥ ४ ॥
अभिषिक्तो भवत्वद्य मुनिभिर्मन्त्रपूर्वकम् ।
तच्छ्रुत्वा भरतोऽप्याह मम राज्येन किं मुने ! ॥ ५ ॥
रामो राजाधिराजश्च वयं तस्यैव किङ्कराः ।
श्वः प्रभाते गमिष्यामो राममानेतुमञ्जसा ॥ ६ ॥
अहं यूयं मातरश्च कैकेयीं राक्षसीं विना ।

अष्टमे तु वशिष्ठेन प्रोक्तोऽपि भरतः किल अनादृत्याधिराज्यं च जगाम भ्रातृसन्निधौ ॥ १ ॥

देवसभासन्निभां तत्सदृशीम् ॥ १ ॥

चतुर्मुखो ब्रह्मा ॥ २ । ३ ॥

प्रतिज्ञाय अस्मान् सर्वान् प्रतिज्ञापयित्वा ददौ ॥ ४ ॥

मुनिभिः क्रियमाणोऽभिषेकोऽद्य भवत्वित्यन्वयः ॥ ५ ॥

अञ्जसा शीघ्रम् ॥ ६ ॥

हनिष्याम्यधुनैवाहं कैकेयीं मातृगन्धिनीम् ॥ ७ ॥
किन्तु मां नो रघुश्रेष्ठः स्त्रीहन्तारं सहिष्यते।
तच्छ्वोभूते गमिष्यामि पादचारेण दण्डकान् ॥ ८ ॥
शत्रुघ्नसहितस्तूर्णं यूयमायान्तु वा न वा।
रामो यथा वने यातस्तथाऽहं वल्कलाम्बरः ॥ ९ ॥
फलमूलकृताहारः शत्रुघ्नसहितो मुने!।
भूमिशायी जटाधारी यावद्रामो निवर्त्तते ॥ १० ॥
इति निश्चित्य भरतस्तूष्णीमेवावतस्थिवान्।
साधु साध्विति तं सर्वे प्रशशंसुर्मुदान्विताः ॥ ११ ॥
ततः प्रभाते भरतं गच्छन्तं सर्वसैनिकाः।
अनुजग्मुः सुमन्त्रेण नोदिताः साश्वकुञ्जराः ॥ १२ ॥
कौशल्याद्या राजदारा वशिष्ठप्रमुखा द्विजाः।
छादयन्तो भुवं सर्वे पृष्ठतः पार्श्वतोऽग्रतः ॥ १३ ॥
शृङ्गिवेरपुरं गत्वा गङ्गाकूले समन्ततः।
उवास महती सेना शत्रुघ्नपरिचोदिता ॥ १४ ॥
आगतं भरतं श्रुत्वा गुहः शङ्कितमानसः।

हनिष्यामीति तादृशवधस्यैवौचित्यादिति भावः मातृगन्धिनीं तादृशीमपि मातृसम्बन्धवतीमपीत्यर्थः ॥ ७ ॥

नो इति प्रतिषेधे नोसहिष्यत इत्यन्वयः पादचारेण न तु वाहनेनेत्यर्थः ॥ ८ ॥

यावद्रामो निवर्त्तते तावदेवं तत्समानव्रतो भविष्यामीत्यर्थः ॥ ९ । १० । ११ । १२ ॥

पृष्ठतः पार्श्वतोऽग्रतो बभुरिति शेषः ॥ १३ । १४ ॥

महत्या सेनया सार्द्धमागतो भरतः किल ॥ १५ ॥
पापं कर्त्तुं न वा याति रामस्याविदितात्मनः ।
मत्वा तद्धृदयं ज्ञेयं यदि शुद्धस्तरिष्यति ॥ १६ ॥
शुद्धो नो चेत् समालम्ब्य नावस्तिष्ठन्तु सायुधाः ।
ज्ञातयो मे समायत्ताः पश्यन्तः सर्वतो दिशम् ॥ १७ ॥
इति सर्वान् समादिश्य गुहो भरतमागतः ।
उपायनानि संगृह्य विविधानि बहून्यपि ॥ १८ ॥
प्रययौ ज्ञातिभिः सार्द्धं बहुभिर्विविधायुधैः ।
निवेद्योपायनान्यग्रे भरतस्य समन्ततः ॥ १९ ॥
दृष्ट्वा भरतमासीनं सानुजं सह मन्त्रिभिः ।
चीराम्बरं घनश्यामं जटामुकुटधारिणम् ॥ २० ॥
राममेवानुशोचन्तं रामरामेति वादिनम् ।
ननाम शिरसा भूमौ गुहोऽहमिति चाब्रवीत् ॥ २१ ॥
शीघ्रमुत्थाप्य भरतो गाढमालिङ्ग्य सादरम् ।
पृष्ट्वाऽनामयमव्यग्रः सखायमिदमब्रवीत् ॥ २२ ॥

शङ्कितमानसः किमर्थं वने स्थितस्यापि रामस्य वधार्थं यातीति शङ्का तदेवाह महत्येति ॥ १५ ॥

अविदितात्मनः अविदितैतद्वृत्तान्तस्य रामस्य पापं कर्त्तुं याति न वा यातीति शङ्कितमानस इत्यर्थः यदि शुद्धः तदा तरिष्यति गङ्गामित्यन्वयः ॥ १६ ॥

नो चेत् यद्यशुद्धस्तदा मे ज्ञातयो नाव आलम्ब्य सर्वतो दिशं पश्यन्तः समायत्ताः सायुधाश्च तिष्ठन्तु तदुत्तरणप्रतिबन्धायेति शेषः ॥ १७ । १८ ॥

उपायनानि राजयोग्यानि भक्ष्यादीनि स्वदेशजानि भरतस्याग्रे निवेद्य समन्ततो दृष्ट्वेति शेषः सैनिकेषु विचाराविचारपरीक्षणाय समन्ततो निरीक्षणम् ॥ १९ । २० । २१ ॥

अनामयमारोग्यम् ॥ २२ ॥

भ्रातस्त्वं राघवेणाथ समेतः समवस्थितः।
रामेणालिङ्गितः सार्द्रनयनेनामलात्मना ॥ २३ ॥
धन्योऽसि कृतकृत्योऽसि यत्त्वया परिभाषितः।
रामो राजीवपत्राक्षो लक्ष्मणेन च सीतया ॥ २४ ॥
यत्र रामस्त्वया दृष्टस्तत्र मां नय सुव्रत!।
सीतया सहितो यत्र सुप्तस्तद्दर्शयस्व मे ॥ २५ ॥
त्वं रामस्य प्रियतमो भक्तिमानसि भाग्यवान्।
इति संस्मृत्य संस्मृत्य रामं साश्रुविलोचनः ॥ २६ ॥
गुहेन सहितस्तत्र यत्र रामः स्थितो निशि।
ययौ ददर्श शयनस्थलं कुशसमास्तृतम् ॥ २७ ॥
सीताभरणसंलग्नस्वर्णबिन्दुभिरञ्चितम्।
दुःखसन्तप्तहृदयो भरतः पर्य्यदेवयत् ॥ २८ ॥
अहोऽतिसुकुमारी या सीता जनकनन्दिनी।
प्रासादे रत्नपर्य्यङ्के कोमलास्तरणे शुभे ॥ २९ ॥
रामेण सहिता शेते सा कथं कुशविष्टरे।
सीता रामेण सहिता दुःखेन मम दोषतः ॥ ३० ॥
धिङ्मां जातोऽस्मि कैकेय्यां पापराशिसमानतः।

यतो रामेणालिङ्गितोऽतो धन्योऽसि ॥ २३ । २४ । २५ ॥

यतो रामस्य प्रियतमोऽतो भाग्यवान् ॥ २६ । २७ ॥

सीताऽभरणघर्षणेन संलग्ना ये स्वर्णबिन्दवः तदाकारचिह्नानि तैरञ्चितं कुशं शयनस्थलं दृष्ट्वा पर्य्यदेवयत् शुशोचेत्यर्थः ॥ २८ । २९ ॥

सा कथं मम दोषतः कुशविष्टरे शेते रामेण सहितेति पुनरुक्तिः शोकमेव पुष्णाति ॥ ३० ॥

पापराशिसमानतः पापराशिसमानायाम् सार्वविभक्तिकस्तसिः ताद्दृश्यां कैकेय्यां यज्जातोऽस्मि तस्मां धिक् इदं क्रोधं कर्मप्रवचनीयोऽर्थे चादिः ॥३१॥

कूटधीः कूटचित्तः ॥ ३२ ॥

मन्निमित्तमिदं क्लेशं रामस्य परमात्मनः ॥ ३१ ॥
अहोऽति सफलं जन्म लक्ष्मणस्य महात्मनः ।
राममेव सदान्वेति वनस्थमपि हृष्टधीः ॥ ३२ ॥
अहं रामस्य दासा ये तेषां दासस्य किङ्करः ।
यदि स्यां सफलं जन्म मम भूयान्न संशयः ॥ ३३ ॥
भ्रातर्जानासि यदि तत्कथयस्व ममाखिलम् ।
यत्र तिष्ठति तत्राहं गच्छाम्यानेतुमञ्जसा ॥ ३४ ॥
गुहस्तं शुद्धहृदयं ज्ञात्वा सस्नेहमब्रवीत् ।
देव ! त्वमेव धन्योऽसि यस्य ते भक्तिरीदृशी ॥ ३५ ॥
रामे राजीवपत्राक्षे सीतायां लक्ष्मणे तथा ।
चित्रकूटाद्रिनिकटे मन्दाकिन्याविदूरतः ॥ ३६ ॥
मुनीनामाश्रमपदे रामस्तिष्ठति सानुजः ।
जानक्या सहितो नन्दात् सुखमास्ते किल प्रभुः ॥ ३७ ॥
तत्र गच्छामहे शीघ्रं गङ्गां तर्त्तुमिहार्हसि ।
इत्युक्त्वा त्वरितं गत्वा नावः पञ्चशतानि च ॥ ३८ ॥
समानयत् ससैन्यस्य तर्त्तुं गङ्गां महानदीम् ।

आत्मानं निन्दन् रामं स्तौति अहमिति ॥ ३३ । ३४ । ३५ ॥

मन्दाकिन्या अविदूरत इति च्छेदः आङो दीर्घः समीप इत्यर्थः चित्रकूटमन्दाकिन्योर्मध्ये इति यावत् ॥ ३६ ॥

नन्दात्मकैः फलमूलादिसम्पत्तेरिति यावत् टुनदि समृद्धाविति धात्वनुसारात् ॥ ३७ ॥

पञ्चशतानि समानयदित्यन्वयः चेति पादपूरणे ॥ ३८ ॥

स्वयमेवानिनायैकां राजनावं गुहस्तदा ॥ ३९ ॥
आरोप्य भरतं तत्र शत्रुघ्नं राममातरम्।
वशिष्ठं च तथाऽन्यत्र कैकेयीं चान्ययोषितः ॥ ४० ॥
तीर्त्वा गङ्गां ययौ शीघ्रं भरद्वाजाश्रमं प्रति।
दूरे स्थाप्य महासैन्यं भरतः सानुजो ययौ ॥ ४१ ॥
आश्रमे मुनिमासीनं ज्वलन्तमिव पावकम्।
दृष्ट्वा ननाम भरतः साष्टाङ्गमतिभक्तितः ॥ ४२ ॥
ज्ञात्वा दाशरथिं प्रीत्या पूजयामास मौनिराट्।
पप्रच्छ कुशलं दृष्ट्वा जटावल्कलधारिणम् ॥ ४३ ॥
राज्यं प्रशासतस्तेऽद्य किमेतद्वल्कलादिकम्।
आगतोऽसि किमर्थं त्वं विपिनं मुनिसेवितम् ॥ ४४ ॥
भरद्वाजवचः श्रुत्वा भरतः साश्रुलोचनः।
सर्वं जानासि भगवन्! सर्वभूताशयस्थितः ॥ ४५ ॥
तथापि पृच्छसे किञ्चित्तदनुग्रह एव मे।

ससैन्यस्य भरतस्य तत्तुं तरणार्थं अत्यादरप्रदर्शनाय भरतोत्तरणाय राजनावं राजयोग्यां नावं स्वयमेवानिनाय ॥ ३९ ॥

तथा कैकेयीमन्ययोषितश्चान्यत्रान्यराजनारीत्वर्थः रामे दुष्टाचरणप्रयुक्तोऽयं कैकेय्या अनादरः अतातारयदिति शेषः ॥ ४० ॥

भरद्वाजाश्रमपर्य्यन्तं सेनया सह गत्वा ततः सैनयाश्रमोपरोधो मा भूदिति किञ्चिन् दूरे संस्थाप्य स्वयं सानुजो ययौ भरद्वाजाश्रमद्वारं प्रतीति शेषः ॥ ४१ । ४२ ॥

जटादिधारिणं दृष्ट्वा वक्ष्यमाणं पप्रच्छ ॥ ४३ ॥

सर्वभूताशयस्थितः सर्वभूताशयस्यान्तर्य्यामितया तत्त्वज्ञतया भेदादिति भावः ॥ ४५ ॥ ४६ ॥

कैकेय्या यत् कृतं कर्म रामराज्यविवासनम्॥ ४६॥
वनवासादिकं वापि न हि जानामि किञ्चन।
भवत्पादयुगं मेऽद्य प्रमाणं मुनिसत्तम!॥ ४७॥
इत्युक्त्वा पादयुगलं मुनेः स्पृष्ट्वार्त्तमानसः।
ज्ञातुमर्हसि मां देव! शुद्धो वाशुद्ध एव वा॥ ४८॥
मम राज्येन किं स्वामिन्! रामे तिष्ठति राजनि।
किङ्करोऽहं मुनिश्रेष्ठ! रामचन्द्रस्य शाश्वतः॥ ४९॥
अतो गत्वा मुनिश्रेष्ठ! रामस्य चरणान्तिके।
पतित्वा राज्यसम्भारान् समर्प्यैव राघवम्॥ ५०॥
अभिषेक्ष्ये वशिष्ठाद्यैः पौरजानपदैः सह।
नेष्येऽयोध्यां रमानाथं दासः सेवेऽतिनीचवत्॥ ५१॥
इत्युदीरितमाकर्ण्य भरतस्य वचो मुनिः।
आलिङ्ग्य मूर्ध्न्यवघ्राय प्रशशंस सविस्मयः॥ ५२॥
वत्स! ज्ञातं पुरैवैतद्भविष्यं ज्ञानचक्षुषा।
मा शुचस्व परो भक्तः श्रीरामे लक्ष्मणादपि॥ ५३॥
आतिथ्यं कर्तुमिच्छामि ससैन्यस्य तवानघ!।
अद्य भुक्त्वा ससैन्यस्त्वं श्वो गन्ता रामसन्निधिम्॥ ५४॥

यथाज्ञापयति भवांस्तथेति भरतोऽब्रवीत्।

न जानामीत्यर्थं शपथेन प्रत्याययति भवत्पादेति॥ ४७॥

ज्ञातुमर्हसीति इत्याहेति शेषः॥ ४८॥

शाश्वतः किङ्कर इत्यनेन तस्य चक्रावतारत्वं सूचितम्॥ ४९। ५०॥

दासोऽहमतिनीचवत् अतिनम्रः सन् सेवे सेविष्ये इत्यर्थः वर्त्तमानसामीप्ये लट्॥ ५१॥

भरतस्येत्युदीरितं वच इत्यन्वयः शेषे षष्ठी॥ ५२॥

लक्ष्मणादपि परोऽधिक इत्यर्थः रामे इति विषयसप्तमी॥ ५३। ५४॥

भरद्वाजस्तपः स्पृष्ट्वा मौनी होमगृहे स्थितः ॥ ५५ ॥
दध्यौ कामदुघां कामवर्षिणीं कामदो मुनिः ।
असृजत्कामधुक् सर्वं यथाकाममलौकिकम् ॥ ५६ ॥
भरतस्य ससैन्यस्य यथेष्टं च मनोरथम् ।
तथा ववर्ष सकलं तृप्तास्ते सर्वसैनिकाः ॥ ५७ ॥
वशिष्ठं पूजयित्वाऽग्रे शास्त्रदृष्टेन कर्मणा ।
पश्चात् ससैन्यं भरतं तर्पयामास योगिराट् ॥ ५८ ॥
उषित्वा दिनमेकन्तु आश्रमे स्वर्गसन्निभे ।
अभिवाद्य पुनः प्रातर्भरद्वाजं सहानुजः ।
भरतस्तु कृतानुज्ञः प्रययौ रामसन्निधिम् ॥ ५९ ॥
चित्रकूटमनुप्राप्य दूरे संस्थाप्य सैनिकान् ।
रामसन्दर्शनाकाङ्क्षी प्रययौ भरतः स्वयम् ॥ ६० ॥
शत्रुघ्नेन सुमन्त्रेण गुहेन च परन्तपः ।
तपस्विमण्डलं सर्वं विचिन्वानो न्यवर्त्तत ॥ ६१ ॥
अदृष्ट्वा रामभवनमपृच्छदृषिमण्डलम् ।
कुत्रास्ते सीतया सार्द्धं लक्ष्मणेन रघूत्तमः ॥ ६२ ॥
ऊचुरग्रे गिरेः पश्चाद्गङ्गाया उत्तरे तटे ।

यथा आज्ञापयतीति छन्दोभङ्ग आर्षः ॥ ५५ ॥

यस्य यन्मनोरथविषयमिष्टं तत्सर्वमलौकिकं लौकिकसामग्रीजन्यविलक्षणमसृजत् ॥ ५६ । ५७ । ५८ । ५९ ॥

प्रययौ भरतः रामाश्रमद्वारं प्रतीति शेषः ॥ ६० ॥

शत्रुघ्नादिभिः सह सर्वं तपस्विमण्डलं तपस्विनामाश्रममण्डलं विचिन्वानो रामाश्रममलब्ध्वा न्यवर्त्तत निवृत्तव्यापार इवासीत् ॥ ६१ ॥

तत्र ऋषिमण्डलमपृच्छत् ॥ ६२ ॥

विविक्तं रामसद्मं रम्यं काननमण्डितम् ॥६३॥
सफलैराम्रपनसैः कदलीखण्डसंवृतम् (१)।
चम्पकैः कोविदारैश्च पुन्नागैर्विपुलैस्तथा ॥६४॥
एवं दर्शितमालोक्य मुनिभिर्भरतोऽग्रतः।
हर्षाद्ययौ रघुश्रेष्ठभवनं मन्त्रिणा सह ॥६५॥

ददर्श दूराद्तिभासुरं शुभं
रामस्य गेहं मुनिवृन्दसेवितम्।
वृक्षाग्रसंलग्नसुवल्कलाजिनं
रामाभिरामं भरतः सहानुजः ॥६६॥

इति अध्यात्मरामायणे सेतौ अयोध्याकाण्डे
अष्टमः सर्गः।

विविक्तमेकान्तदेशवर्त्ति ॥६३॥

कदलीखण्डः कदलीसमूहः ॥६४॥

एवं मुनिभिर्दर्शितं रघुश्रेष्ठभवनं अग्रतो भरतः समालोक्य मन्त्रिणा सह हर्षाद्ययाविति सम्बन्धः ॥६५॥

रामाभिरामम् रामेण रामवासेनाभिरामम् ॥६६॥

इति श्रीमन्मकवराजविपदुद्धरणसमर्थत्वादिवि० श्रीरामवर्मणः

कृतावध्यात्मरामायणे अयोध्याकाण्डे

अष्टमः सर्गः

---

(१) कदलीषण्डमण्डितं इत्यपि पाठः

# नवमः सर्गः ।

श्रीमहादेव उवाच ।

अथ गत्वाऽऽश्रमपदसमीपं भरतो मुदा ।
सीतारामपदैर्युक्तं पवित्रमतिशोभनम् ॥ १ ॥

स तत्र वज्राङ्कुशवारिजाञ्चित-
ध्वजादिचिह्नानि पदानि सर्वतः ।
ददर्श रामस्य भुवोऽतिमङ्गला-
न्यचेष्टयत्पादरजः स सानुजः ॥ २ ॥

अहो सुधन्योऽहममूनि राम-
पादारविन्दाङ्कितभूतलानि ।
पश्यामि यत्पादरजो विमृग्यं
ब्रह्मादिदेवैः श्रुतिभिश्च नित्यम् ॥ ३ ॥

इत्यद्भुतप्रेमरसाप्लुताशयो
विगाढचेता रघुनाथभावने ।

नवमे भरतो गत्वा श्रीरामस्यैव संनिधौ ।
तेन सार्द्धं गन्तुमना नागमद्गुरुबोधितः ॥ १ ॥

सीतारामपदयुक्तत्वादिविशिष्टं आश्रमपदसमीपं आश्रमस्थानसमीपदेशं गत्वा ॥ १ ॥

तत्र वज्राङ्कुशकमलपूजितध्वजादिचिह्नयुतानि पदानि ददर्श ध्वजे पूजितत्वं स्पष्टरेखत्वं दृष्ट्वा तत्पादचिह्नितदेशरजःसु अचेष्टयत् लुलुठे ॥२॥

यत्पादरज इत्यादि व्याख्यातं प्राक् ॥ ३ ॥

आनन्दजाश्रुस्नपितस्तनान्तरः
शनैरवापाश्रमसन्निधिं हरेः ॥ ४ ॥
स तत्र दृष्ट्वा रघुनाथमास्थितं
दूर्वादलश्याममलमायतेक्षणम् ।
जटाकिरीटं नववल्कलाम्बरं
प्रसन्नवक्त्रं तरुणारुणद्युतिम् ॥ ५ ॥
विलोकयन्तं जनकात्मजां शुभां
सौमित्रिणा सेवितपादपङ्कजम् ।
तदाभिदुद्राव रघूत्तमं शुचा
हर्षाच्च तत्पादयुगं त्वराग्रहीत् ॥ ६ ॥
रामस्तमाकृष्य सुदीर्घबाहु-
र्दोर्भ्यां परिष्वज्य सिषिच्च (१) नेत्रजैः ।
जलैरथाङ्कोपरि सन्निवेशयत्
पुनःपुनः सम्परिषस्वजे विभुः ॥ ७ ॥
अथ ता मातरः सर्वाः समाजग्मुस्त्वरान्विताः ।
राघवं द्रष्टुकामास्तास्तृषार्त्ता गौर्यथा जलम् ॥ ८ ॥
रामः स्वमातरं वीक्ष्य द्रुतमुत्थाय पादयोः ।

अद्भुतो यः प्रेमरसः प्रीतिरसस्तेनाप्लुतो व्याप्त आशयोऽन्तःकरणं यस्य रघुनाथभावने विगाढचेताः तत्परचित्त इत्यर्थः ॥ ४ । ५ ॥
त्वरा त्वरयेत्यर्थः ॥ ६ । ७ ॥
तृषार्त्ता गौर्यथा जलं प्रति गच्छति एवं मातरो राघवं प्रति जग्मुः ॥ ८ ॥

(१) विषिच्य इति वा पाठः ।

ववन्दे सास्रु सा पुत्रमालिङ्ग्यातीव दुःखिता ॥ ९ ॥
इतराश्च तथा नत्वा जननी रघुनन्दनः।
ततः समागतं दृष्ट्वा वशिष्ठं मुनिपुङ्गवम् ॥ १० ॥
साष्टाङ्गप्रणिपत्याह धन्योऽस्मीति पुनःपुनः।
यथार्हमुपवेश्याह सर्वानेव रघूद्वहः ॥ ११ ॥
पिता मे कुशली किंवा मां किमाहातिदुःखितः।
वशिष्ठस्तमुवाचेदं पिता ते रघुनन्दन! ॥ १२ ॥
त्वद्वियोगाभितप्तात्मा त्वामेव परिचिन्तयन्।
राम! रामेति सीतेति लक्ष्मणेति ममार ह ॥ १३ ॥
श्रुत्वा तत्कर्णशूलाभं गुरोर्वचनमञ्जसा।
हा हतोऽस्मीति पतितो रुदन् रामः सलक्ष्मणः ॥१४॥
ततोऽनु रुरुदुः सर्वा मातरश्च तथापरे।
हा तात! मां परित्यज्य क्व गतोऽसि घृणाकर! ॥१५॥
अनाथोऽस्मि महाबाहो! मां को वा लालयेदितः।

सास्रु यथा तथा ववन्दे सा च पुत्रमालिङ्ग्य भर्तृवियोगस्मरणेना-तीव दुःखिता आसीत् इति शेषः ॥ ९ ॥

इतराश्च जननीस्तथा सास्रु नत्वा स्थित इति शेषः ॥ १० ॥

धन्योऽस्मि त्वद्दर्शनादिति भावः यथार्हं यथायोग्यम् ॥ ११ ॥

पिता मे कुशलीति प्रश्नः स्ववियोगे कुशलमसम्भाव्यमित्याशयेनाह किंवेति तथैव सम्भावनयाहातिदुःखितः प्राणवियोगजनकपीड़या पीड़ितः किमाह ॥ १२ ॥

राम रामेतीत्यादेर्वदन्निति शेषः ॥ १३ ॥

कर्णशूलाभं कर्णयोः शूलरोगतुल्यम् ॥ १४ ॥

घृणाकर दयासमुद्र ॥ १५ ॥

सीता च लक्ष्मणश्चैव विलेपतुरतो भृशम् ॥ १६ ॥
वशिष्ठः शान्तवचनैः शमयामास तां शुचम् ।
ततो मन्दाकिनीं गत्वा स्नात्वा ते वीतकल्मषाः ॥ १७ ॥
राज्ञे ददुर्जलं तत्र सर्वे ते जलकाङ्क्षिणे ।
पिण्डान्निर्वापयामास रामो लक्ष्मणसंयुतः ॥ १८ ॥
इङ्गुदीफलपिण्याकरचितान्मधुसंप्लुतान् ।
वयं यदन्नाः पितरस्तदन्नाः स्मृतिनोदिताः ॥ १९ ॥
इति दुःखाश्रुपूर्णाक्षः पुनः स्नात्वा गृहं ययौ ।
सर्वे रुदित्वा सुचिरं स्नात्वा जग्मुस्तथाश्रमम् ॥ २० ॥
तस्मिंस्तु दिवसे सर्वे उपवासं प्रचक्रिरे ।
ततः परेद्युर्विमले स्नात्वा मन्दाकिनीजले ॥ २१ ॥
उपविष्टं समागम्य भरतो राममब्रवीत् ।
राम राम महाभाग ! स्वात्मानमभिषेचय ॥ २२ ॥
राज्यं पालय पित्र्यन्ते ज्येष्ठस्त्वं मे पिता तथा ।
क्षत्रियाणामयं धर्मो यत्प्रजापरिपालनम् ॥ २३ ॥

अतो भृशं रामविलापादप्यधिकमित्यर्थः ॥ १६ ॥

शान्तवचनैः पूर्वराजवियोगचरितैः संसारानित्यताप्रतिपादकैर्वचनैः तत्त्वज्ञानोपदेशैश्च ॥ १७ ॥

जलकाङ्क्षिणे राज्ञ इत्यादि ॥ १८ ॥

इङ्गुदो तापसतरुः ननु राजायोग्यमेतत्तत्राह वयमिति ॥ १९ । २० । २१ । २२ ॥

पित्र्यं पितुरागतं यथा पिता ज्येष्ठस्त्वं मे तथा पितृतुल्यः एवं च पितरि जीवति यथा राज्यानधिकारस्तथा त्वयि जीवत्यपीति भावः किञ्च त्वमप्ययमेव धर्म इत्याह क्षत्रियाणामिति ॥ २३ ॥

इष्ट्वा यज्ञैर्बहुविधैः पुत्रानुत्पाद्य तन्तवे।
राज्ये पुत्रं समारोप्य गमिष्यसि ततो वनम्॥ २४॥
इदानीं वनवासस्य कालो नैव प्रसीद मे।
मातुर्मे दुष्कृतं किञ्चित् स्मर्त्तुं नार्हसि पाहि नः॥२५॥
इत्युक्त्वा चरणौ भ्रातुः शिरस्याधाय भक्तितः।
रामस्य पुरतः साक्षाद्दण्डवत्पतितो भुवि॥ २६॥
उत्थाप्य राघवः शीघ्रमारोप्याङ्केऽतिभक्तितः।
उवाच भरतं रामः स्नेहार्द्रनयनः शनैः॥ २७॥
शृणु वत्स! प्रवक्ष्यामि त्वयोक्तं यत्तथैव तत्।
किन्तु मामब्रवीत्तातो नव वर्षाणि पञ्च च॥ २८॥
उषित्वा दण्डकारण्ये पुरं पश्चात् समाविश।
इदानीं भरतायेदं राज्यं दत्तं मयाखिलम्॥ २९॥
ततः पित्रैव सुव्यक्तं राज्यं दत्तं तवैव हि।
दण्डकारण्यराज्यं मे दत्तं पित्रा तथैव च॥ ३०॥
अतः पितुर्वचः कार्य्यमावाभ्यामतियत्नतः।
पितुर्वचनमुल्लङ्घ्य स्वतन्त्रो यस्तु वर्त्तते॥ ३१॥
स जीवन्नेव मृतको देहान्ते निरयं व्रजेत्।

तस्मादिहेति तन्तवे वंशाविच्छेदाय॥ २४॥

यन्मे मातुः किञ्चिद्दुष्कृतं तत् स्मर्त्तुं नार्हसीति सम्बन्धः॥ २५। २६॥

अतिभक्तितः भरतस्यातिभक्तिं दृष्ट्वेत्यर्थः॥ २७॥

त्वदुक्तं तथैव सत्यमेव तथापि पित्राज्ञापालनं मे आवश्यकमित्याह किन्त्विति नवपञ्च चतुर्दश॥ २८॥

अखिलं दत्तमित्यब्रवीदित्यन्वयः॥ २९। ३०॥

तस्माद्राज्यं प्रशाधि त्वं वयं दण्डकपालकाः ॥ २२ ॥
भरतस्त्वब्रवीद्रामं कामुको मूढधीः पिता ।
स्त्रीजितो भ्रान्तहृदय उन्मत्तो यदि वक्ष्यति ।
तं सत्यमिति न ग्राह्यं भ्रान्तवाक्यं यथा सुधीः ॥२३॥

राम उवाच ।

न स्त्रीजितः पिता ब्रूयान्न कामी नैव मूढधीः ।
पूर्वं प्रतिश्रुतं तस्यै सत्यवादी ददौ भयात् ॥ २४ ॥
असत्याद्भीतिरधिका महतां नरकादपि ।
करोमीत्यहमप्येतत् सत्यं तस्यै प्रतिश्रुतम् ॥ २५ ॥
कथं वाक्यमहं कुर्य्यामसत्यं राघवो हि सन् ? ।
इत्युदीरितमाकर्ण्य रामस्य भरतो (१)ऽब्रवीत् ॥ २६ ॥
तथैव चीरवसनो वने वत्स्यामि सुव्रत ! ।

अतियत्नतः पितृवचनकर्त्तव्यत्वे हेतुमाह पितुरिति स्वतन्त्रः स्वेच्छाचारी ॥ २१ । २२ ॥

कामुकत्वादेव मूढधीः यदि वक्ष्यति वदिष्यतीत्यर्थः सुधीः पुरुषो यथा भ्रान्तवाक्यं सत्यमिति न गृह्णाति तथा त्वयोक्तमपि शिष्टपितृवाक्यं न ग्राह्यमित्यर्थः ॥ २२ ॥

ब्रूयात् उक्तवानित्यर्थः नञ् त्रयमेकैकमपि तत्रासम्भावि किं पुनः समुदितमिति बोधयितुं प्रतिश्रुतं प्रतिज्ञातं भयात् प्रतिज्ञाभङ्गभयात् ॥ २४ ॥

यतो महतां नरकादप्यधिका असत्याद्भीति तेषां फलतोऽप्युपायेति भयमित्यर्थः अहमपि राघव एव सन् तस्यै कैकेय्यै सत्यं करोमि वनवासादिकमित्येतत्प्रतिश्रुतं वाक्यम् ॥ २५ ॥

कथमसत्यं कुर्य्यामित्यर्थः ॥ २६ ॥

---

(१) पुरतो इत्यपि पाठः ।

चतुर्दशसमास्त्वं तु राज्यं कुरु यथा सुखम् ॥ ३७ ॥

राम उवाच।

पित्रा दत्तं तवैवैतद्राज्यं मह्यं वनं ददौ।

व्यत्ययं यद्यहं कुर्य्यामसत्यं पूर्ववत् स्थितम् ॥ ३८ ॥

भरत उवाच।

अहमप्यागमिष्यामि सेवे त्वां लक्ष्मणो यथा।

नो चेत्प्रायोपवेशेन त्यजाम्येतत्कलेवरम् ॥ ३९ ॥

इत्येवं निश्चयं कृत्वा दर्भानास्तीर्य्य चातपे।

मनसापि विनिश्चित्य प्राङ्मुखोपविवेश सः ॥ ४० ॥

भरतस्यापि निर्बन्धं दृष्ट्वा रामोऽतिविस्मितः।

नेत्रान्तसंज्ञां गुरवे चकार रघुनन्दनः ॥ ४१ ॥

एकान्ते भरतं प्राह वशिष्ठो ज्ञानिनां वरः।

वत्स! गुह्यं शृणुष्वेदं मम वाक्यात् सुनिश्चितम् ॥४२॥

रामो नारायणः साक्षाद्ब्रह्मणा याचितः पुरा।

रावणस्य बधार्थाय जातो दशरथात्मजः ॥ ४३ ॥

योगमायापि सीतेति जाता जनकनन्दिनी।

शेषोऽपि लक्ष्मणो जातो राममन्वेति सर्वदा ॥ ४४ ॥

तथैव त्वत्प्रतिनिधितया त्वद्देवेत्यर्थः ॥ ३७ ॥

व्यत्ययं राज्यवनवासयोरित्यर्थः ॥ ३८ ॥

आगमिष्यामि वनमिति शेषः ॥ ३९ ॥

निश्चयं कृत्वोवाचेति शेषः आतपे इत्यनेन सर्वथा जीविताशापरित्यागः प्राङ्मुख उपविवेश सन्निरार्थः ॥ ४० ॥

नेत्रान्तसंज्ञां नेत्रान्तेनाश्वोत्थापनं कुर्विति सूचनाम् ॥ ४१ ॥ ४२ ॥

सात् नारायणः सर्वान्तर्य्यामीत्यर्थः ॥ ४३ ॥

योगमाया तच्छक्तिरूपा ॥ ४४ ॥ ४५ ॥

रावणं हन्तुकामास्ते गमिष्यन्ति न संशयः।
कैकेय्या वरदानादि यच्चनिष्ठुरभाषणम् ॥ ४५ ॥
सर्वं देवकृतं नो चेदेवं सा भाषयेत्कथम्?।
तस्मात्त्यजाग्रहं तात! रामस्य विनिवर्त्तने ॥ ४६ ॥
निवर्त्तस्व महासैन्यैर्भ्रातृभिः सहितः पुरम्।
रावणं सकुलं हत्वा शीघ्रमेवागमिष्यति ॥ ४७ ॥
इति श्रुत्वा गुरोर्वाक्यं भरतो विस्मयान्वितः।
गत्वा समीपं रामस्य विस्मयोत्फुल्ललोचनः ॥ ४८ ॥
पादुके देहि राजेन्द्र! राज्याय तव पूजिते।
तयोः सेवां करोम्येव यावदागमनं तव ॥ ४९ ॥
इत्युक्त्वा पादुके दिव्ये योजयामास पादयोः।
रामस्य ते ददौ रामो भरतायातिभक्तितः ॥ ५० ॥
गृहीत्वा पादुके दिव्ये भरतो रत्नभूषिते।
रामं पुनः परिक्रम्य प्रणनाम पुनः पुनः ॥ ५१ ॥
भरतः पुनराहेदं भक्त्या गद्गदया गिरा।
नवपञ्चसमान्ते तु प्रथमे दिवसे यदि? ॥ ५२ ॥
नागमिष्यसि चेद्राम! प्रविशामि महानलम्।
बाढ़मित्येव तं रामो भरतं सम्यवर्त्तयत् ॥ ५३ ॥
ससैन्यः स वशिष्ठश्च शत्रुघ्नसहितः सुधीः।
मातृभिर्मन्त्रिभिः सार्द्धं गमनायोपचक्रमे ॥ ५४ ॥

सा दशरथस्त्री अत्यन्तं रामे प्रीतिमती च ॥ ४६ । ४७ । ४८ ॥
राज्याय राज्यपालनसामर्थ्यलाभाय ॥ ४९ । ५० । ५१ ॥
नवपञ्चसमान्ते ॥ ५२ । ५३ । ५४ ॥

कैकेयी राममेकान्ते स्रवन्नेत्रजलाकुला ।
प्राञ्जलिः प्राह हे राम ! तव राज्यविघातनम् ॥ ५५ ॥
कृतं मया दुष्टधिया मायामोहितचेतसा ।
क्षमस्व मम दौरात्म्यं क्षमासारा हि साधवः ॥ ५६ ॥
त्वं साक्षाद्विष्णुरव्यक्तः परमात्मा सनातनः ।
मायामानुषरूपेण मोहयस्यखिलं जगत् ।
त्वयैव प्रेरितो लोकः कुरुते साध्वसाधु वा ॥ ५७ ॥
त्वदधीनमिदं विश्वमस्वतन्त्रं करोति किम् ? ।
यथा कृत्रिमनर्त्तक्यो नृत्यन्ति कुहकेच्छया ॥ ५८ ॥
त्वदधीना तथा माया नर्त्तकी बहुरूपिणी ।
त्वयैव प्रेरिताहं च देवकार्य्यं करिष्यता ॥ ५९ ॥

स्रवन्नेत्रजला सती आकुला कृतापराधत्वादतिव्याकुलेत्यर्थः राज्यविघातनं राज्यविघातः ॥ ५५ ॥

मायामोहितचेतसेत्यनेन वस्तुतो ममापराध एव नेति सूचिताङ्गीकृत्यापि स्वापराधमाह क्षमस्वेति क्षमैव सारः सर्वगुणप्रधानं येषामित्यर्थः ॥ ५६ ॥

सम्प्रति मायापगमं ध्वनयति त्वमिति नन्वहं मनुष्यो न परमात्मेति चेत्तत्राह मायेति एषा ते मायैवेति भावः त्वयैवेति तस्मादन्तर्याम्येव त्वमिति भावः एवं च त्वत्प्रेरणयैव तथा कृतवत्या मे नापराध इति ध्वनिः ॥ ५७ ॥

तदेवोपपादयति त्वदिति स्वतोऽस्वतन्त्रं त्वत्प्रेरणां विना किं करोति न किमपि करोतीति भावः कुहको विस्मापकः गुप्ततया तत्सूत्रचालनेन तन्नर्त्तनादिक्रियोत्पादक इति यावत् ॥ ५८ ॥

त्वदधीनेति अनेन मायातत्कार्य्ययोरतिजडत्वं सूचितम् नन्वेवं स्वदुःखफलकं त्वत्प्रेरणं मया कथं कर्त्तव्यं तत्राह देवकार्य्यं करिष्यतेति ॥ ५९ ॥

पापिष्ठं पापमनसा कर्माचरमरिन्दम ।
अद्य प्रतीतोऽसि मम देवानामप्यगोचरः ॥ ६० ॥
पाहि विश्वेश्वरानन्त ! जगन्नाथ ! नमोऽस्तु ते ।
छिन्धि स्नेहमयं पाशं पुत्रवित्तादिगोचरम् ॥ ६१ ॥
त्वज्ज्ञानानलखड्गेन त्वामहं शरणं गता ।
कैकेय्या वचनं श्रुत्वा रामः सस्मितमब्रवीत् ॥ ६२ ॥
यदाह (१) मां महाभागे न कृतं सत्यमेव तत् ।
मयैव प्रेरिता वाणी तव वक्त्राद्विनिर्गता ॥ ६३ ॥
देवकार्यार्थसिद्ध्यर्थमत्र दोषः कुतस्तव ? ।
गच्छ त्वं हृदि मां नित्यं भावयन्ती दिवानिशम् ॥ ६४ ॥
सर्वत्र विगतस्नेहा मद्भक्त्या मोक्ष्यसेऽचिरात् ।
अहं सर्वत्र समदृक् द्वेष्यो वा प्रिय एव वा ॥ ६५ ॥

मम मया येषे यत्नो प्रतीतोऽसि वाक्यस्वरूपेण ज्ञातोऽसि इदमपि त्वत्प्रसादादेवेति भावः अन्यथा देवानामप्यविषयस्य कथमज्ञानविषयता स्यादिति भावः ॥ ६० ॥

अतः प्रार्थयते पाहीति पुत्रवित्तादिविषयस्नेहरूपं पाशमित्यर्थः ॥ ६१ ॥

त्वज्ज्ञानानलखड्गेनेति पूर्वान्वयि ॥ ६२ । ६२ ॥

मद्भक्त्या सर्वविषयेषु स्नेहत्यागपूर्वकं नित्यं मद्भावनयैव मद्भक्तिस्तया मम रागद्वेषाभावात्त्वत्तो भयं नास्तीति आह अहमिति मम द्वेष्यो वा प्रियो वा नास्ति कल्पकस्येव मायाविनो यथा स्वमायाकल्पितपदार्थेषु

(१) यदात्थ इत्यपि पाठः ।

नास्ति मे कल्पकस्येव भजतोऽनुभजाम्यहम् ।
मन्मायामोहितधियो मामम्ब ! मनुजाकृतिम् ॥ ६६ ॥
सुखदुःखाद्यनुगतं जानन्ति न तु तत्त्वतः ।
दिष्ट्या मद्गोचरं ज्ञानमुत्पन्नं ते भयापहम् ॥ ६७ ॥
स्मरन्ती तिष्ठ भवने लिप्यसे न च कर्मभिः ।
इत्युक्ता सा परिक्रम्य रामं सानन्दविस्मया ॥ ६८ ॥
प्रणम्य शतशो भूमौ ययौ गेहं मुदान्विता ।
भरतस्तु सहामात्यैर्मातृभिर्गुरुणा सह ॥ ६९ ॥
अयोध्यामगमच्छीघ्रं राममेवानुचिन्तयन् ।
पौरजानपदान् सर्वानयोध्यायामुदारधीः ॥ ७० ॥
स्थापयित्वा यथान्यायं नन्दिग्रामं ययौ स्वयम् ।
तत्र सिंहासने नित्यं पादुके स्थाप्य भक्तितः ॥ ७१ ॥

...त्प्रीतिराहित्यम् तथा ममापि सर्वत्र मिथ्यात्वनिश्चयात् न द्वेषरागा-विति भावः न मत्तस्ते भयमिति तथाप्ययं मे स्वभाव इत्याह भजतोऽन्विति अतो न वैषम्यनैर्घृण्ये ॥ ६५ । ६६ ॥

न तु तत्त्वतः अहं तादृश इति शेषः भयापहमित्यनेन भयान्तरस्यावकाश एव नेति सूचितम् ॥ ६७ ॥

मां स्मरन्ती तिष्ठ मां जगत्प्रेरकत्वेन स्मरन्ती तिष्ठ एवं च स्वस्मिन् स्वतन्त्रत्वाभिमानापगमान्न कर्मभिर्लिप्यसे सोऽभिमान एव कर्मलेपक इति भावः ॥ ६८ । ६९ । ७० ॥

स्थाप्य स्थापयित्वा आर्षो ल्यप् ॥ ७१ ॥

पूजयित्वा यथा रामं गन्धपुष्पाक्षतादिभिः।
राजोपचारैरखिलैः प्रत्यहं नियतव्रतः॥ ७२॥
फलमूलाशनो दान्तो जटावल्कलधारकः।
अधःशायी ब्रह्मचारी शत्रुघ्नसहितस्तदा॥ ७३॥
राजकार्य्याणि सर्वाणि यावन्ति पृथिवीतले।
तानि पादुकयोः सम्यक् निवेदयति राघवः॥ ७४॥
गणयन् दिवसान्येव रामागमनकाङ्क्षया।
स्थितो रामार्पितमना: साक्षाद्ब्रह्ममुनिर्यथा॥ ७५॥
रामस्तु चित्रकूटाद्रौ वसन् मुनिभिरावृतः।
सीतया लक्ष्मणेनापि किञ्चित्कालमुपावसत्॥ ७६॥
नागराश्च सदा यान्ति रामदर्शनलालसाः।
चित्रकूटस्थितं ज्ञात्वा सीतया लक्ष्मणेन च॥ ७७॥
दृष्ट्वा तज्जनसम्बाधं रामस्तत्याज तं गिरिम्।
दण्डकारण्यगमने कार्य्यमप्यनुचिन्तयन्॥ ७८॥
अन्वगात् सीतया भ्रात्रा ह्यत्रेराश्रममुत्तमम्।

राजोपचारैः राजयोग्यैः पुष्पादिभी राममिव ते पूजयित्वेत्यर्थः॥ ७२॥
भरतस्यापि रामसमव्रतत्वमाह फलेति दान्तो जितेन्द्रियः॥ ७३॥ ७४॥
ब्रह्ममुनिः ब्रह्मर्षिः॥ ७५॥
रामः चित्रकूटाद्रौ मुनिभिः सीतया लक्ष्मणेनावृतो वसन्नपि किञ्चि-त्कालमेवोषावसदित्यन्वयः एवेत्यस्याध्याहारः च शब्दार्थोऽपिशब्दार्थः॥ ७६
तत्र हेतुमाह नागराश्चेति लक्ष्मणेन चेति चकार इति शेषः॥ ७७॥
कार्य्यं रावणवधरूपम्॥ ७८॥

सर्वर्तुसुखसंवासं जनसम्बाधवर्जितम् ॥ ७९ ॥
गत्वा मुनिमुपासीनं भासयन्तं तपोवनम् (१) ।
दण्डवत्प्रणिपत्याह रामोऽहमभिवादये ॥ ८० ॥
पितुराज्ञां पुरस्कृत्य दण्डकानहमागतः ।
वनवासमिषेणापि धन्योऽहं दर्शनात्तव ॥ ८१ ॥
श्रुत्वा रामस्य वचनं रामं ज्ञात्वा हरिं परम् ।
पूजयामास विधिवद्भक्त्या परमया मुनिः ॥ ८२ ॥
वन्यैः फलैः कृतातिथ्यमुपविष्टं रघूत्तमम् ।
सीतां च लक्ष्मणं चैव सन्तुष्टो वाक्यमब्रवीत् ॥ ८३ ॥
भार्या मेऽतीव संहृष्टा ह्यनसूयेति विश्रुता ।
तपश्चरन्ती सुचिरं धर्मज्ञा धर्मवत्सला ॥ ८४ ॥
अन्तस्तिष्ठति तां सीता पश्यत्वरिनिषूदन ! ।
तथेति जानकीं प्राह रामो राजीवलोचनः ॥ ८५ ॥

जनसंबाधवर्जितं नागरजनसंबाधहीनम् ॥ ७९ ॥

गत्वा अत्र्याश्रममिति शेषः अत्रिं दण्डवत्प्रणम्य रामोऽहमभिवादये इत्याहेत्यन्वयः ॥ ८० ।

प्रसङ्गादागत्यापि त्वद्दर्शनेनाहं धन्यः किं वक्तव्यं त्वद्दर्शनोद्देशेनैवागतो धन्य इति ॥ ८१ ॥

परं हरिमन्तर्यामिरूपम् उपासनाभिस्तत्साक्षात्त्वं ये गताः तद्व्यपेक्षया परमिति ॥ ८२ ॥

लक्ष्मणं चैवेति दृष्ट्वेति शेषः वाक्यमब्रवीत् राममिति शेषः ॥ ८३ ॥

अतीव संहृष्टा अत्यन्तहृष्टतरा धर्मवत्सला धर्मप्रिया ॥ ८४ । ८५ ॥

---

(१) तपोधनं इति क्वचित् पाठः ।

गच्छ देवीं नमस्कृत्य शीघ्रमेहि पुनः शुभे ! ।
तथेति रामवचनं सीता चापि तथाऽकरोत् ॥ ८६ ॥
दण्डवत्पतितामग्रे सीतां दृष्ट्वाऽति हृष्टधीः ।
अनुसूया समालिङ्ग्य वत्से ! सीतेति सादरम् ॥ ८७ ॥
दिव्ये ददौ कुण्डले द्वे निर्मिते विश्वकर्मणा ।
दुकूले द्वे ददौ तस्यै निर्मले भक्तिसंयुता ॥ ८८ ॥
अङ्गरागं च सीतायै ददौ दिव्यं शुभानना ।
न त्यक्ष्यतेऽङ्गरागेण शोभा त्वां कमलानने ! ॥८९ ॥
पातिव्रत्यं पुरस्कृत्य राममन्वेहि जानकि ! ।
कुशली राघवो यातु त्वया सह पुनर्गृहम् ॥ ९० ॥
भोजयित्वा यथा न्याय्यं रामं सीतासमन्वितम् ।
लक्ष्मणं च तदा रामं पुनः प्राह कृताञ्जलिः ॥ ९१ ॥
राम ! त्वमेव भुवनानि विधाय तेषां
संरक्षणाय सुरमानुषतिर्य्यगादीन् ।

सीतारामवचनं तथा अत्यन्तमित्यङ्गीकृत्य तथाकरोत् तत्समीपगमन-
मकरोत् ॥ ८६ ॥
सीते इति च्छेदः सन्धिरार्षः ॥ ८७ ॥
भक्तिसंयुता बाह्यादीश्वरोऽयमिति भक्तिमती ॥ ८८ ॥
न त्यक्ष्यते कदाचिदपीति शेषः ॥ ८९ ॥
अथ शिक्षयति पातिव्रत्यमिति यथाविधमाह कुशलीति ॥ ९० ॥
९१ ॥

देहान् बिभर्षि न च देहगुणैर्विलिप्त-
स्त्वत्तो बिभेत्यखिलमोहकरी च माया॥९२

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकाण्डे

नवमः सर्गः।

---

अयं काण्डः समाप्तः।

सुरदेहो वामनादिः मानुषो देहो रामादिः तिर्यक् देहो मत्स्यादिः न च देहेति मायिकत्वादिति भावः त्वत्तो बिभेतीति त्वज्ज्ञाननाश्यत्वादिति भावः॥ ९२॥

इति श्रीमत्सुकलराजविपदुद्धरणसमर्थत्यादिवि॰ श्रीरामवर्मणः कृतौ

श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकाण्डे

नवमः सर्गः।

---

# अरण्यकाण्डम् ।

प्रथमः सर्गः ।

श्रीमहादेव उवाच ।

अथ तत्र दिनं स्थित्वा प्रभाते रघुनन्दनः ।
स्नात्वा मुनिं समामन्त्र्य प्रयाणायोपचक्रमे ॥ १ ॥
मुने ! गच्छामहे सर्वे मुनिमण्डलमण्डितम् ।
विपिनं दण्डकं यत्र त्वमाज्ञातुमिहार्हसि ॥ २ ॥
मार्गप्रदर्शनार्थाय शिष्यानाज्ञप्तुमर्हसि ।
श्रुत्वा रामस्य वचनं प्रहस्यात्रिर्महायशाः ॥ ३ ॥
सर्वस्य मार्गद्रष्टा त्वं तव को मार्गदर्शकः ।
तथापि दर्शयिष्यन्ति तव लोकानुसारिणः ॥ ४ ॥

अथेति दिनं दिनशेषम् ॥ १ ॥

यत्र दण्डकं विपिनं मुनिमण्डलमण्डितम् तत्र गच्छामहे त्वमा-
ज्ञातु अताञ्च कर्त्तुम् ॥ २ । २ ॥

मार्गद्रष्टा मार्गदर्शयिता लोकानुसारिणः लोकवद्गमनं नाटयतः
॥ ४ ॥

इति शिष्यान् समादिश्य स्वयं किञ्चित्समन्वगात्।
रामेण वारितः प्रीत्या अत्रिः स्वभवनं ययौ॥ ५॥
क्रोशमात्रं ततो गत्वा ददर्श महतीं नदीम्।
अत्रेः शिष्याणुवाचेदं रामो राजीवलोचनः॥ ६॥
नद्याः सन्तरणे कश्चिदुपायो विद्यते न वा।
ऊचुस्ते विद्यते नौका सुदृढ़ा रघुनन्दन!॥७॥
तारयिष्यामहे युष्मान् वयमेव क्षणादिह।
ततो नावि समारोप्य सीतां राघवलक्ष्मणौ॥ ८॥
क्षणात् सन्तारयामासुर्नदीं मुनिकुमारकाः।
रामाभिनन्दिताः सर्वे जग्मुरत्रेरथाश्रमम्॥ ९॥
तावेत्य विपिनं घोरं झिल्लीझङ्कारनादितम।
नानामृगगणाकीर्णं सिंहव्याघ्रादिभीषणम्॥ १०॥
राक्षसैर्घोररूपैश्च सेवितं रोमहर्षणम्।
प्रविश्य विपिनं घोरं रामो लक्ष्मणमब्रवीत्॥ ११॥
इतः परं प्रयत्नेन गन्तव्यं सहितेन मे।
धनुर्गुणेन संयोज्य शरानपि करे दधत्॥ १२॥
अग्रे यास्याम्यहं पश्चात्त्वमन्वेहि धनुर्धरः।

वारितः निवर्त्तस्वमिति प्रार्थितः॥ ५। ६। ७। ८॥

रामाभिनन्दिताः रामेणानन्दपूर्वकं गच्छतेति दत्तानुमतयः॥ ९॥

झिल्लीझङ्कारो झिल्लीशब्दः॥ १०। ११॥

सहितेन युवाभ्यां मिलितेन गन्तव्यमित्युक्तमिति शेषः दधत् आदधदित्यर्थः॥ १२॥

साङ्गित्वप्रकारमेवाह अग्र इति आत्मपरात्मनोर्जीवेशयोर्मध्यगा आश्रयत्वविषयत्वाभ्यां सम्बद्धा मायेवेत्यर्थः॥ १२॥ ,

आवयोर्मध्यगा सीता मायेवात्मपरात्मनोः ॥ १३ ॥
चक्षुषारय सर्वत्र दृष्टं रक्षोभयं महत् ।
विद्यते दण्डकारण्ये श्रुतपूर्वमरिन्दम ! ॥ १४ ॥
इत्येवं भाषमाणौ तौ जग्मतुः सार्धयोजनम् ।
तत्रैका पुष्करिण्यास्ते कह्लारकुमुदोत्पलैः ॥ १५ ॥
अम्बुजैः शीततोयेन शोभमाना व्यदृश्यत ।
तत्समीपमथो गत्वा पीत्वा तत्सलिलं शुभम् ॥ १६ ॥
ऊषुस्ते सलिलाभ्याशे वृक्षच्छायामुपाश्रिताः ।
ततो ददृशुरायान्तं महासत्त्वं भयानकम् ॥ १७ ॥
करालदंष्ट्रवदनं भीषयन्तं स्वगर्जितैः ।
वामांसे न्यस्तशूलाग्रग्रथितानेकमानुषम् ॥ १८ ॥
भक्षयन्तं गजव्याघ्रमहिषं वनगोचरम् ।
ज्यारोपितं धनुर्धृत्वा रामो लक्ष्मणमब्रवीत् ॥ १९ ॥
पश्य भ्रातर्महाकायो राक्षसोऽयमुपागतः ।

दृष्टमपशकुनैः सूचितम् ननु शकुनादिषु को विश्वास इत्यत आह श्रुतपूर्वमिति दण्डकारण्ये पूर्वमृषीणां मुखात् श्रुतं रक्षोभयं विद्यते शकुनैश्च तत्सूचितमित्यर्थः ॥ १४ ॥

कह्लारशीतोदकादियुक्ता पुष्करिणी तत्रास्ते ॥ १५ ॥

सा शोभमाना तैर्व्यदृश्यतेत्यर्थः ॥ १६ ॥

महासत्त्वं महाशरीरं प्राणिनम् ॥ १७ ॥

करालदंष्ट्रायुतं वदनं यस्य तत् वामांसे वामस्कन्धे न्यस्तशूलाग्रे ग्रथिता अनेकमानुषा येन तत् ॥ १८ ॥

गजव्याघ्रमहिषमिलितमाहारद्रव्यः ज्या आरोपिता यस्मिन् तत् ॥ १९ ॥

अग्रे सम्मुखदेशे वर्तमानोऽस्मदभिमुखमायाति भीरुत्वां भक्षमाण-इच्छन्ननेन मा त्वाकं भयमिति ध्वनितम् ॥ २० ॥

आयात्यभिमुखं नोऽग्रे भीरूणां भयमावहन् ॥ २० ॥
सज्जीकृतधनुस्तिष्ठ मा भैर्जनकनन्दिनि ! ।
इत्युक्त्वा बाणमादाय स्थितो राम इवाचलः ॥ २१ ॥
स तु दृष्ट्वा रमानाथं लक्ष्मणं जानकीं तदा ।
अट्टहासं ततः कृत्वा भीषयन्निदमब्रवीत् ॥ २२ ॥
कौ युवां बाणतूणीरजटावल्कलधारिणौ ।
मुनिवेशधरौ बालौ स्त्रीसहायौ सुदुर्मदौ ॥ २३ ॥
सुन्दरौ वन मे वक्त्रप्रविष्टकवलोपमौ ।
किमर्थमागतौ घोरं वनं व्यालनिषेवितम् ॥ २४ ॥
श्रुत्वा रक्षोवचो रामः स्मयमान उवाच तम् ।
अहं रामस्त्वयं भ्राता लक्ष्मणो मम सम्मतः ॥ २५ ॥
एषा सीता मम प्राणवल्लभा वयमागताः ।
पितृवाक्यं पुरस्कृत्य शिक्षणार्थं भवादृशाम् ॥ २६ ॥
श्रुत्वा तद्रामवचनमट्टहासमथाकरोत् ।
व्यादाय वक्त्रं बाहुभ्यां शूलमादाय सत्वरः ॥ २७ ॥
मां न जानासि राम ! त्वं विराधं लोकविश्रुतम् ।
मद्भयान्मुनयः सर्वे त्यक्त्वा वनमितो गताः ॥ २८ ॥
यदि जीवितुमिच्छाऽस्ति ? त्यक्त्वा सीतां निरायुधौ ।
पलायतं न चेत् शीघ्रं भक्षयामि युवामहम् ॥ २९ ॥

अचल इव रामः स्थित इत्यन्वयः ॥ २१ । २२ । २३ ॥

वक्त्रप्रविष्टकवलोपमा विलम्बेन सुकरवधत्वं ध्वनयति व्याला दुष्टा हिंस्रजीवाः ॥ २४ । २५ । २६ । २७ । २८ ॥

जीवितुमिच्छास्ति युवयोरिति शेषः शीघ्रं पलायतं नोचेद्भक्षयामी-

(१) सज्जीकृत्य इति वा पाठः ।

इत्युक्त्वा राक्षसः सीतामादातुमभिदुद्रुवे ।
रामश्चिच्छेद तद्बाहू शरेण प्रहसन्निव ॥ ३० ॥
ततः क्रोधपरीतात्मा व्यादाय विकटं मुखम् ।
राममभ्यद्रवद्रामश्चिच्छेद परिधावतः ॥
पदद्वयं विराधस्य तदद्भुतमिवाभवत् ॥ ३१ ॥
ततः सर्प इवास्येन ग्रसितुं राममापतत् ।
ततोऽर्धचन्द्राकारेण बाणेनास्य महच्छिरः ॥ ३२ ॥
चिच्छेद रुधिरौघेण पपात धरणीतले ।
ततः सीता समालिङ्ग्य प्रशशंस रघूत्तमम् ॥ ३३ ॥
ततो दुन्दुभयो नेदुर्दिवि देवगणेरिताः ।
ननृतुश्चाप्सरो हृष्टा जगुर्गन्धर्वकिन्नराः ॥ ३४ ॥

विराधकायादतिसुन्दराकृति-
र्विभ्राजमानो विमलाम्बरावृतः ।
प्रतप्तचामीकरचारुभूषणो
व्यदृश्यताग्रे गगने रविर्यथा ॥ ३५ ॥
प्रणम्य रामं प्रणतार्त्तिहारिणं
भवप्रवाहोपरमं घृणाकरम् ।

स्पष्टम्रन्वयः ॥ २९ । ३० । ३१ ॥

सर्प इवेति उरसैवेति भावः ॥ ३२ ॥

रुधिरौघेण सह तच्छिरो भूतले पपातेत्यन्वयः ॥ ३३ । ३४ ॥

विराधकायान्निःसृत इति शेषः विमलाम्बरं निर्मलवस्त्रं तेनावृतः चामीकरं सुवर्णम् ॥ ३५ ॥

भवप्रवाहस्य संसारप्रवाहस्योपरमो नाशो यस्मात्तम् घृणायाः दयायाः

प्रणम्य भूयः प्रणनाम दण्डवत्
प्रपन्नसर्वार्त्तिहरं प्रसन्नधीः ॥ ३६ ॥

विराध उवाच।

श्रीराम! राजीवदलायताक्ष!
विद्याधरोऽहं विमलप्रकाशः।
दुर्वाससा कारणकोपमूर्त्तिना
शप्तः पुरा सोऽद्य विमोचितस्त्वया ॥ ३७ ॥
इतःपरं त्वच्चरणारविन्दयोः
स्मृतिः सदा मेऽस्तु भवोपशान्तये।
त्वन्नामसंकीर्त्तनमेव वाणी
करोतु मे कर्णपुटं त्वदीयम् ॥ ३८ ॥
कथामृतं पातु करद्वयं ते
पादारविन्दार्चनमेव कुर्य्यात्।
शिरश्च ते पादयुगप्रणामं
करोतु नित्यं भवदीयमेवम् ॥ ३९ ॥
नमस्तुभ्यं भगवते विशुद्धज्ञानमूर्त्तये।
आत्मारामाय रामाय सीतारामाय वेधसे ॥ ४० ॥
प्रपन्नं पाहि मां राम! यास्यामि त्वदनुज्ञया।

आकरस्थलमित्यागम् प्रपन्नानां शरणागतानां सर्वभीडानाशकम् ॥३६॥
राजीवं कमलम् अकारणकोपमूर्त्तिना निर्निमित्तकोपमूर्त्तिना ॥३७
मे कर्णपुटं त्वदीयं कथामृतं पात्वित्यन्वयः पिबत्वित्यर्थः वाद्दरं
स्तौत्वित्यर्थः पिबादेशाभाव आर्षः ॥ ३८ ॥
एवं मदङ्गजातं सर्वं भवदीयमेवास्तु भवत्सेवापरमेवास्त्वित्यर्थः ॥३९
आत्मनि सततमेव आरमते यस्य सर्वदा तदनुसन्धानपरते इत्यर्थः ॥ ४०

देवलोकं रघुश्रेष्ठ ! माया मां मा वृणोतु ते ॥ ४१ ॥
इति विज्ञापितस्तेन प्रसन्नो रघुनन्दनः ।
ददौ वरं तदा प्रीतो विराधाय महामतिः ॥ ४२ ॥
गच्छ विद्याधराशेषमायादोषगुणा जिताः ।
त्वया मद्दर्शनात् सद्यो मुक्तो ज्ञानवतां वरः ॥ ४३ ॥
मद्भक्तिर्दुर्लभा लोके जाता चेन्मुक्तिदा यतः ।
अतस्त्वं भक्तिसम्पन्नः परं याहि ममाज्ञया ॥ ४४ ॥
रामेण रक्षोनिधनं सुघोरं
शापाद्विमुक्तिर्वरदानमेवम् ।
विद्याधरत्वं पुनरेव लब्धं
रामं स्मरन्नेति नरोऽखिलार्थान् ॥ ४५ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे

प्रथमः सर्गः ।

---

इदानीं प्रार्थयति मायेत्यादि ॥ ४१ ॥ ४२ ॥

अशेषमायादोषरूपा लोके गुणात्मत्वेन लोके प्रसिद्धास्त्वया मद्दर्शनाज्जिताः अत त्वं ज्ञानवतां वरो भूत्वा मुक्तो भविष्यसीति शेषः ॥४३
परं मोक्षं याहि प्राप्नुहि ॥ ४४ ॥

रामेण रक्षोनिधनं कृतं तेन निधनेन तस्य रक्षसः शापाद्विमुक्तिः कृता तस्मै वरदानं च कृतं यतस्तेन पुनरेव विद्याधरत्वं लब्धम् अतो रामं स्मरन्नरोऽखिलार्थानेति प्राप्नोति ॥ ४५ ॥

इति श्रीमदध्यात्मरामायणे अरण्यकाण्डे श्रीरामवर्मणा कृतौ टीकौ

प्रथमः सर्गः ।

---

द्वितीयः सर्गः ।

विराधे स्वर्गते रामो लक्ष्मणेन च सीतया ।
जगाम शरभङ्गस्य वनं सर्वसुखावहम् ॥ १ ॥
शरभङ्गस्ततो दृष्ट्वा रामं सौमित्रिणा सह ।
आयातं सीतया सार्द्धं सम्भ्रमादुत्थितः सुधीः ॥ २ ॥
अभिगम्य सुसम्पूज्य विष्टरेषूपवेशयत् ।
आतिथ्यमकरोत् तेषां कन्दमूलफलादिभिः ॥ ३ ॥
प्रीत्याह शरभङ्गोऽपि रामं भक्तपरायणम् ।
बहुकालमिहैवासं तपसे कृतनिश्चयः ॥ ४ ॥
तव सन्दर्शनाकाङ्क्षी राम ! त्वं परमेश्वरः ।
अद्य मत्तपसा सिद्धं यत् पुण्यं बहु विद्यते ।
तत् सर्वं तव दास्यामि ततो मुक्तिं व्रजाम्यहम् ॥ ५ ॥

समर्प्य रामस्य महत्सुपुण्य-
फलं विरक्तः शरभङ्गयोगी ।
चितिं समारोहयदप्रमेयं
रामं ससीतं सहसा प्रणम्य ॥ ६ ॥

विराधे इति ॥ १ ॥

आयातमागतम् ॥ २ ॥

अभिगम्य सु सुखागमनपूर्वकं तमानीय उपवेशयत् अडभाव आर्षः ३

आसंस्थितः तपसे तपः कर्त्तुं कृतनिश्चयः ॥ ४ ॥

तव संदर्शनाकाङ्क्षी इहैवासमिति पूर्वेणान्वयः यतस्त्वं परमेश्वरः मोक्षदः ॥ ५ ॥

विरक्तः सन् शोभनं पुण्यं हिंसारहितत्वात्तपस्तत्फलं रामस्य समर्प्य दत्त्वा सहसा तत्क्षणमेव चितिं समारोहयत् समारुहत् णिजन्तमेषणा निच् ॥ ६ ॥

ध्यायंश्चिरं राममशेषहृत्स्थं
दूर्वादलश्याममलमम्बुजाक्षम् ।
चीराम्बरं स्निग्धजटाकलापं
सीतासहायं सहलक्ष्मणं तम् ॥ ७ ॥
को वा दयालुः स्मृतकामधेनु-
रन्यो जगत्यां रघुनायकादहो ।
स्मृतौ मया नित्यमनन्यभाजा
ज्ञात्वा स्मृतिं (१) मे स्वयमेव यातः ॥ ८ ॥
पश्यत्विदानीं देवेशो रामो दाशरथिः प्रभुः ।
दग्ध्वा स्वदेहं गच्छामि ब्रह्मलोकमकल्मषः ॥ ९ ॥
अयोध्याधिपतिर्मेऽस्तु हृदये राघवः सदा ।
यद्वामाङ्के स्थिता सीता मेघस्येव तडिल्लता ॥ १० ॥
इति रामं चिरं ध्यात्वा दृष्ट्वा च पुरतः स्थितम् ।
प्रज्वाल्य सहसा वह्निं दग्ध्वा पञ्चात्मकं वपुः ॥ ११ ॥
दिव्यदेहधरः साक्षाद् ययौ लोकपतेः पदम् ।
ततो मुनिगणाः सर्वे दण्डकारण्यवासिनः ।

अशेषहृत्स्थं सर्वान्तर्यामिणं सहलक्ष्मणं समस्तत्वेऽपि चोपसर्जनस्येति सादेशाभावः ॥ ७ ॥

स्मृतकामधेनुः स्मृतः सन् कामधेनुस्तत्तुल्यः सर्वमनोरथपूरकत्वात् यातः आगतः ॥ ८ ॥

ब्रह्मलोकम् उपासकत्वान्मोक्षद्वारभूतम् ॥ ९ ॥ १० ॥

पुरतः स्थितं दृष्ट्वा तादृशमेव हृदये ध्यात्वा ॥ ११ ॥

---

(१) स्तुतिम् इति च पाठः ।

आजग्मू राघवं द्रष्टुं शरभङ्गनिवेशनम् ॥ १२ ॥
दृष्ट्वा मुनिसमूहं तं जानकीरामलक्ष्मणाः ।
प्रणेमुः सहसा भूमौ मायामानुषरूपिणः ॥ १३ ॥
आशीर्भिरभिनन्द्याथ रामं सर्वहृदि स्थितम् ।
ऊचुः प्राञ्जलयः सर्वे धनुर्बाणधरं हरिम् ॥ १४ ॥
भूमेर्भारावताराय जातोऽसि ब्रह्मणार्थितः ।
जानीमस्त्वां हरिं लक्ष्मीं जानकीं लक्ष्मणं तथा ॥ १५ ॥
शेषांशं शङ्खचक्रे द्वे भरतं सानुजं तथा ।
अतस्त्वादौ ऋषीणां त्वं दुःखं मोक्तुमिहार्हसि ॥ १६ ॥

आगच्छ यामो मुनिसेवितानि
वनानि सर्वाणि रघूत्तम ! क्रमात् ।
द्रष्टुं सुमित्रासुतजानकीभ्यां
तदा दयास्मत्सु दृढा भविष्यति ॥ १७ ॥

इति विज्ञापितो रामः कृताञ्जलिपुटैर्विभुः ।
जगाम मुनिभिः सार्द्धं द्रष्टुं मुनिवनानि सः ॥ १८ ॥

लोकपतेः कार्यब्रह्मणः हिरण्यगर्भस्य शरभङ्गनिवेशनं तदाश्रमं आजग्मुरित्यन्वयः ॥ १२ ॥

भूमौ दण्डवत्पतिताः प्रणेमुः ॥ १३ ॥ १४ ॥

लक्ष्मणं शेषांशमित्यन्वयः ॥ १५ ॥

अतः भूमिदुःखहरणार्थमवतीर्णत्वात् आदौ खरादिवधेनास्मद्दुःखं मोक्तुमर्हसि ॥ १६ ॥

सुमित्रासुतजानकीभ्यां सह वनानि द्रष्टुमागच्छ तदा तद्दर्शने सति ॥ १७ ॥ १८ ॥

ददर्श तत्र पतितान्यनेकानि शिरांसि सः ।
अस्थिभूतानि सर्वत्र रामो वचनमब्रवीत् ॥ १९ ॥
अस्थीनि केषामेतानि किमर्थं पतितानि वै ।
तमूचुर्मुनयो राम ! ऋषीणां मस्तकानि हि ॥ २० ॥
राक्षसैर्भक्षितानीश ! प्रमत्तानां समाधितः ।
अन्तरायं मुनीनां ते पश्यन्तोऽनु चरन्ति हि ॥ २१ ॥
श्रुत्वा वाक्यं मुनीनां स भयदैन्यसमन्वितम् ।
प्रतिज्ञामकरोद्रामो वधायाशेषरक्षसाम् ॥ २२ ॥
पूज्यमानः सदा तत्र मुनिभिर्वनवासिभिः ।
जानक्या सहितो रामो लक्ष्मणेन समन्वितः ॥ २३ ॥
उवास कतिचित्तत्र वर्षाणि रघुनन्दनः ।
एवं क्रमेण सम्पश्यन् ऋषीणामाश्रमान् विभुः ॥ २४ ॥
सुतीक्ष्णस्याश्रमं प्रागात्प्रख्यातमृषिसंकुलम् ।
सर्वर्त्तुगुणसम्पन्नं सर्वकालसुखावहम् ॥ २५ ॥
राममागतमाकर्ण्य सुतीक्ष्णः स्वयमागतः ।
अगस्त्यशिष्यो रामस्य मन्त्रोपासनतत्परः ॥
विधिवत् पूजयामास भक्त्युत्कण्ठितलोचनः ॥ २६ ॥

अस्थिभूतानि अतिशुष्काणि ॥ १९ ॥ २० ॥

समाधितः समाधिना प्रमत्तानां तद्दर्शने पलायनाद्यसमर्थानाम् अन्तरायं समाधिरूपं अप्रमत्तमिति पाठे समाधितः प्रमत्तानां हीनानां अकृतसमाधीनामित्यर्थः अप्रमत्तं समाधित्यागरूपं समाधौ हि भगवदेकरूपत्वात्कुत्रापि नास्त्यन्तरमिति भावः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

सर्वैः ऋतुगुणैः सम्पन्नत्वादेव सर्वकाले सुखजनकम् ॥ २५ ॥

भक्त्या प्रेम्णा उत्कण्ठिते रामस्य पुनः पुनर्दर्शनेच्छावती लोचने यस्य सः ॥ २६ ॥

सुतीक्ष्ण उवाच।

त्वन्मन्त्रजाप्यहमनन्तगुणाप्रमेय! ।
सीतापते! शिवविरिञ्चिसमाश्रिताङ्घ्रे!
संसारसिन्धुतरणामलपोतपाद!
रामाभिराम! सततं तव दासदासः ॥ २७ ॥
मामद्य सर्वजगतामविगोचरस्त्वं
त्वन्मायया सुतकलत्रगृहान्धकूपे।
मग्नं निरीक्ष्य मलमुद्गलपिण्डमोह-
पाशानुबद्धहृदयं स्वयमागतोऽसि ॥ २८ ॥
त्वं सर्वभूतहृदयेषु कृतालयोऽपि
त्वन्मन्त्रजाप्यविमुखेषु तनोषि मायाम्।
त्वन्मन्त्रसाधनपरेष्वपयाति माया
सेवानुरूपफलदोऽसि यथा महीपः ॥ २९ ॥

हे अभिराम! परमसुन्दरराम! त्वन्मन्त्रजापी अहं सततं तव दासदासो भूयामिति शेषः अप्रमेय! देशकालापरिच्छेद्य! शिवब्रह्म-समाश्रितचरण! संसारसमुद्रतरणे अमलपोतरूपौ पादौ यस्य तच्चरणा-श्रितानां संसारसागरोत्तरणमकिञ्चित्करमेवेति भावः ॥ २७ ॥

सर्वजगतामगोचरोऽपि त्वं मलभूतो यः मुद्गलपिण्डः शरीरं तत्र यो मोहः अहङ्कार इत्याद्यहन्ता बुद्धिस्तद्रूपपाशेनानुबद्धं चित्तं यस्य तं माम् अद्य त्वन्मायया सुतकलत्रगृहरूपेऽन्धकूपे निमग्नं निरीक्ष्य स्वयमागतोऽसि इत्याश्चर्यं तेन करुणावत्त्वमित्याशयः ॥ २८ ॥

जाप्यं जपस्तद्विमुखेषु यथा महीपो राजा सेवानुरूपफलदस्तथा त्वमसीत्यर्थः ॥ २९ ॥

विश्वस्य सृष्टिलयसंस्थितिहेतुरेक-
स्त्वं मायया त्रिगुणया विधिरीशविष्णू ।
भासीश ! मोहितधियां विविधाकृतिस्त्वं
तद्वद्रविः सलिलपात्रगतो ह्यनेकः ॥ २० ॥
प्रत्यक्षतोऽद्य भवतश्चरणारविन्दं
पश्यामि राम ! तमसः परतः स्थितस्य ।
दृग्रूपतस्त्वमसतामविगोचरोऽपि ।
त्वन्मन्त्रपूतहृदयेषु सदा प्रसन्नः ॥ २१ ॥
पश्यामि राम ! तव रूपमरूपिणोऽपि
मायाविडम्बनकृतं सुमनुष्यवेशम् ।
कन्दर्पकोटिसुभगं कमनीयचाप-
बाणं दयार्द्रहृदयं स्मितचारुवक्त्रम् ॥ २२ ॥
सीतासमेतमजिनाम्बरमप्रधृष्यं
सौमित्रिणा नियतसेवितपादपद्मम् ।

विश्वसृष्ट्यादिहेतुस्त्वमेक एव त्रिगुणया माययोपाधिभूतया त्वमेव विधिरिति ईशः शिव इति विष्णुरिति भासीत्यन्वयः विविधाकृतिस्त्वं तत्तदुपासनादौ प्रसिद्धमेव तेषां तथा त्वं तद्भेदमनेकत्वं तव मिथ्यैवेत्याह यद्वदिति ॥ २० ॥

तमसः परतः तद्धीने शुद्धसत्त्वप्रधानचित्ते स्थितस्येत्यर्थः दृग्रूपतः दृग्रूपस्य दृष्टेरित्यर्थः "सार्वविभक्तिकस्तसिः" प्रसन्नः दृग्विषयः भवसीति शेषः ॥ २१ ॥

अरूपिणः अरूपस्यापि स्वच्छन्दसत्त्वेन सिद्धं मायाविडम्बनेन मायाव्यवहारेण कृतम् । स्पष्टमन्यत् ॥ २२ ॥

नियतसेवितेति नियमेन सेवितेत्यर्थः मन्द्भागधेयं मदद्दारक-

नीलोत्पलद्युतिमनन्तगुणं प्रशान्तं
तन्नामधेयमनिशं प्रणमामि रामम् ॥ २३ ॥

जानन्तु राम ! तव रूपमशेषदेश-
कालाद्युपाधिरहितं घनचित्प्रकाशम् ।
प्रत्यक्षतोऽद्य मम गोचरमेतदेव
रूपं विभातु हृदये न परं विकाङ्क्षे ॥ २४ ॥

इत्येवं स्तुवतस्तस्य रामः सस्मितमब्रवीत् ।
मुने ! जानामि ते चित्तं निर्मलं मदुपासनात् ॥ २५ ॥
अतोऽहमागतो द्रष्टुं मदृते नान्यसाधनम् ।
मन्मन्त्रोपासका लोके मामेव शरणं गताः ॥ २६ ॥
निरपेक्षा नान्यगतास्तेषां दृश्योऽहमन्वहम् ।
स्तोत्रमेतत् पठेद् यस्तु त्वत्कृतं मत्प्रियं सदा ॥ २७ ॥
सद्भक्तिर्मे भवेत्तस्य ज्ञानं च विमलं भवेत् ।
त्वं ममोपासनादेव विमुक्तोऽसीह सर्वतः ॥ २८ ॥
देहान्ते मम सायुज्यं लप्स्यसे नात्र संशयः ।
गुरुं ते द्रष्टुमिच्छामि ह्यगस्त्यं मुनिनायकम् ॥
किञ्चित् कालं तत्र वस्तुं मनो मे त्वरयत्यलम् ॥ २९ ॥

शरीरमिति यावत् अनेन शरीराणाम् षड्भावविकारवत्त्वं सूचितम् ॥ २२ ॥

जानन्तु अन्येऽपि योगिन इति शेषः देशेत्यादि देशकालाद्यपरिच्छिन्नमित्यर्थः घनेति चैतन्यमात्रस्वरूपमित्यर्थः प्रत्यक्षत इति मम तु परिदृश्यमाने अत्रैव प्रीतिर्नतु परे वाङ्मनसागोचरे इत्यर्थः ॥ २४ ॥ २५ ॥

मदृते मद्भक्तिं विनेत्यर्थः तत्रोपपत्त्यानन्यः तदेवाह अनन्येत्यादिना ॥ २६ ॥ २७ ॥

तस्य ते मयि सद्भक्तिः सती भक्तिर्भवेत् ॥ २८ ॥ २९ ॥

सुतीक्ष्णोऽपि तथेत्याह श्वो गमिष्यसि राघव ! ।
अहमप्यागमिष्यामि चिराद्दृष्टो महामुनिः ॥ ४० ॥

अथ प्रभाते मुनिना समेतो
राम: ससीतः सह लक्ष्मणेन ।
आगस्त्यसंभाषणलोलमानसः
शनैरगस्त्यानुजमन्दिरं ययौ ॥ ४१ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे

द्वितीयः सर्गः ।

---

चिराद्दृष्टो मयापीति शेषः ॥ ४० ॥
आगस्त्यसंभाषणे लोलमत्युत्कटेच्छावन्मानसं यस्य स तथा ॥४१॥
इति श्रीमत्सकलराजाधिपद्धरचरणसमर्थेनारिदिव० श्रीरामवर्मणः कृतौ
श्रीमदध्यात्मरामायणे टीकायां अरण्यकाण्डे

द्वितीयः सर्गः ।

---

अथ तृतीयः सर्गः ।

अथ रामः सुतीक्ष्णेन जानक्या लक्ष्मणेन च ।
अगस्त्यस्यानुजस्थानं मध्याह्ने समपद्यत ॥ १ ॥
तेन सम्पूजितः सम्यक् भुक्त्वा मूलफलादिकम् ।
परेद्युः प्रातरुत्थाय जग्मुस्तेऽगस्त्यमण्डलम् ॥ २ ॥
सर्वर्त्तुफलपुष्पाढ्यं नानामृगगणैर्युतम् ।
पक्षिसंघैश्च विविधैर्नादितं नन्दनोपमम् ॥ ३ ॥
ब्रह्मर्षिभिर्देवर्षिभिः सेवितं मुनिमन्दिरैः ।
सर्वतोऽलङ्कृतं साक्षाद् ब्रह्मलोकमिवापरम् ॥ ४ ॥
बहिरेवाश्रमस्याथ स्थित्वा रामोऽब्रवीन्मुनिम् ।
सुतीक्ष्ण ! गच्छ त्वं शीघ्रमागतं मां निवेदय ॥ ५ ॥
अगस्त्यमुनिवर्य्याय सीतया लक्ष्मणेन च ।
महाप्रसाद इत्युक्त्वा सुतीक्ष्णः प्रययौ गुरोः ॥ ६ ॥
आश्रमं त्वरया तत्र ऋषिसङ्घसमावृतम् ।
उपविष्टं रामभक्तैर्विशेषेण समायुतम् ॥ ७ ॥
व्याख्यातराममन्त्रार्थं शिष्येभ्यश्चातिभक्तितः ।
दृष्ट्वागस्त्यं मुनिश्रेष्ठं सुतीक्ष्णः प्रययौ मुनेः ॥ ८ ॥

अथेति अगस्त्यानुजोऽग्निजिह्वनामा ऋषिः ॥ १ ॥
अगस्त्यमण्डलं तदाश्रमम् ॥ २ ॥ ३ ॥
देवर्षिभिरिति छन्दोभङ्ग आर्षः मुनिमन्दिरैः सर्वतोऽलंकृतमित्यन्वयः ॥ ४ ॥ ५ ॥ ६ ॥
व्याख्यातो राममन्त्रार्थो येन तम् प्रययौ मुनेः समीपमिति शेषः ॥ ७ ॥ ८ ॥

दण्डवत्प्रणिपत्याह विनयावनतः सुधीः। 
रामो दाशरथिर्ब्रह्मन् ! सीतया लक्ष्मणेन च।
आगतो दर्शनार्थं ते बहिस्तिष्ठति साञ्जलिः॥ ९॥

अगस्त्य उवाच।

शीघ्रमानय भद्रन्ते रामं मम हृदि स्थितम्।
तमेव ध्यायमानोऽहं काङ्क्षमाणोऽत्र संस्थितः॥ १०॥
इत्युक्त्वा स्वयमुत्थाय मुनिभिः सहितो द्रुतम्।
अभ्ययात्त्वरया भक्त्या गत्वा राममथाब्रवीत्॥ ११॥
आगच्छ राम ! भद्रन्ते दिष्ट्या तेऽद्य समागमः।
प्रियातिथिमम प्राप्तोऽस्यद्य मे सफलं दिनम्॥ १२॥
रामोऽपि मुनिमायान्तं दृष्ट्वा हर्षसमाकुलः।
सीतया लक्ष्मणेनापि दण्डवत्पतितो भुवि॥ १३॥
द्रुतमुत्थाप्य मुनिराट् राममालिङ्ग्य भक्तितः।
तद्गात्रस्पर्शजाह्लादस्रवन्नेत्रजलाकुलः॥ १४॥
गृहीत्वा करमेकेन करेण रघुनन्दनम्।
जगाम स्वाश्रमं हृष्टो मनसा मुनिपुङ्गवः॥ १५॥
सुखोपविष्टं सम्पूज्य पूजया बहुविस्तरम्।
भोजयित्वा यथान्यायं भोज्यैर्वन्यैरनेकधा॥ १६॥
सुखोपविष्टमेकान्ते रामं शशिनिभाननम्।

काङ्क्षमाणः तमेवेत्यनुकर्षः॥ ९॥ १०॥ ११॥
सीतयेत्यादेः सहेति शेषः॥ १२॥
तद्गात्रस्पर्शजाह्लादेन स्रवद् यन्नेत्रजलं तेनाकुलः॥ १३॥
रघुनन्दनं रघुनन्दनस्येत्यर्थः॥ १४॥
वन्यैर्भोज्यैर्भोजयित्वेत्यन्वयः॥ १५॥ १६॥ १७॥ १८॥

कृताञ्जलिरुवाचेदमगस्त्यो भगवानृषिः ॥१७॥
त्वदागमनमेवाहं प्रतीक्षन् समवस्थितः।
यदा क्षीरसमुद्रान्ते ब्रह्मणा प्रार्थितः पुरा ॥ १८ ॥
भूमेर्भारापनुत्त्यर्थं रावणस्य वधाय च।
तदादिदर्शनाकाङ्क्षी तव राम! तपश्चरन्।
वसामि मुनिभिः सार्द्धं त्वामेव परिचिन्तयन् ॥ १९ ॥
सृष्टेः प्रागेक एवासीन्निर्विकल्पोऽनुपाधिकः।
त्वदाश्रया त्वद्विषया माया ते शक्तिरुच्यते ॥ २० ॥
त्वामेव निर्गुणं शक्तिरावृणोति यदा तदा।
अव्याकृतमिति प्राहुर्वेदान्तपरिनिष्ठिताः ॥ २१ ॥
मूलप्रकृतिरित्येके प्राहुर्मायेति केचन।
अविद्या संसृतिर्बन्ध इत्यादि बहुधोच्यते ॥ २२ ॥

हे राम तव दर्शनाकाङ्क्षी तपश्चरन् तदादि तत्कालमारभ्य वसामीत्यन्वयः ॥ १९ ॥

अथ भगवत्स्वरूपं विद्वान् बोधयितुमध्यात्मशास्त्रारम्भाय भगवदग्र एवाह सृष्टेः प्रागिति त्वमेक एवासीः निर्विकल्पः विकल्पकं मायाकार्यप्रपञ्चहीनः तत्र हेतुः अनुपाधिक इति उपाध्यसम्बद्ध इत्यर्थः नतु किं सर्वथोपाधेर्नास्त्येवेति नेत्याह त्वदिति अस्त्येव सा परंतु स्वकल्पितत्वात्सम्बन्धहीना सा अतस्त्वमनुपाधिक इत्याशयः ॥ २० ॥

अथ सृष्टिमुपक्रमते त्वामिति त्वां निर्गुणमेव सन्तं सा शक्तिः स्वकल्पितसम्बन्धेन त्वामावृणोति त्वत्सम्बन्धादात्मानं मनुते न तु कदाचिदपि त्वं तत्सम्बन्धमात्मानं मनुषे अतो निर्गुणमेवेत्युक्तं तदा तां मायामव्याकृतमित्याहुः ॥ २१ ॥

तत्र तदवस्थावां नामान्तराण्याह मूलप्रकृतिरित्यादि तदुक्तं कपिलेन "मूलप्रकृतिरविकृतिः" इत्यादिना ॥ २२ ॥

अहङ्कारो महत्तत्त्वसंवृतस्त्रिविधोऽभवत् ।
सात्त्विको राजसश्चैव तामसश्चेति भण्यते ॥ २३ ॥
तामसात् सूक्ष्मतन्मात्राण्यासन् भूतान्यतः परम् ।
स्थूलानि क्रमशो राम ! क्रमोत्तरगुणानि ह ॥ २४ ॥
राजसानीन्द्रियाण्येव सात्त्विका देवता मनः ।
तेभ्योऽभवत् सूत्ररूपं लिङ्गं सर्वगतं महत् ॥ २५ ॥

सा त्वत्सम्बन्धमात्मानं मन्वाना अतएव त्वया संक्षोभ्यमाणा संक्षोभस्यापि तत्कल्पितसम्बन्ध एवेति बोध्यम् । महत्तत्त्वमिति "सविकारात् प्रधानात्तु महत्तत्त्वमजायत महानिति यतः ख्यातिर्लोकानां जायते सदा" इति स्मृतेः निश्चयोऽस्यामिति साधारणी वृत्तिः एतदभिमानिनि हिरण्यगर्भेऽपि महानितिशब्दः सर्वेषां स्वस्वबुद्धिरूपाः प्रतिनियतोपाधयस्तस्यैव महत्तत्त्वस्यांशाः अस्यानेकबुद्धिमयत्वरूपत्वादिति बोध्यम् । त्वया संचोदितात्प्रेरितान्महत्तत्त्वादहङ्कारोऽभूत् स चाहं ममेत्यभिमानवृत्तिकमन्तःकरणद्रव्यम् "अहङ्कारोऽभिमानश्च कर्ता मन्ता च सः स्मृतः" इति कौर्मोक्तेः अभिमानोऽभिमानवृत्तिक इत्यर्थः ॥ २३ ॥

महत्तत्त्वसंवृतस्तदुपादानकत्वात् यथा घटो मृदा सत्त्वाद्युपाधिकत्वेन त्रैविध्यं मूलप्रकृतेस्त्रिगुणत्वेन तत्कार्यत्वान्महत्तत्त्वस्य त्रिगुणत्वम् "सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्" इति स्मृतेः तत्कार्यत्वादहङ्कारस्य त्रैविध्यम् एवमग्रेऽपि बोध्यम् ॥ २४ ॥

सूक्ष्मतन्मात्राणि शब्दस्पर्शरूपरसगन्धतन्मात्रकाणि अतः सूक्ष्मतन्मात्रेभ्यः स्थूलानि भूतानि तत्र शब्दतन्मात्रादाकाशं स्पर्शतन्मात्रात् पूर्वसहिताद्वायुः ताभ्यां सहिताद्रूपतन्मात्रात्तेजः तैः सहिताद्रसतन्मात्राज्जलम् एतैः सहिताद्गन्धतन्मात्रात् पृथिवीत्याद्यस्मत्कृतसांख्यतत्त्ववृत्तौ विस्तरः तदेवाह क्रमोत्तरगुणानीति क्रमेणाधिकगुणानि आकाशं शब्दमात्रगुणं वायुः शब्दस्पर्शगुणः तेजः शब्दस्पर्शरूपगुणं जलं शब्दस्पर्शरूपरसगुणं भूः शब्दस्पर्शरूपरसगन्धगुणेति ॥ २५ ॥

ततो विराट् समुत्पन्नः स्थूलाद् भूतकदम्बकात् ।
विराजः पुरुषात् सर्वं जगत् स्थावरजङ्गमम् ॥ २६ ॥
देवतिर्य्यङ्मनुष्याश्च कालकर्मक्रमेण तु ।
त्वं रजोगुणतो ब्रह्मा जगतः सर्वकारणम् ॥ २७ ॥
सत्त्वाद्विष्णुस्त्वमेवास्य पालकः सद्भिरुच्यते ।
लये रुद्रस्त्वमेवास्य त्वन्मायागुणभेदतः ॥ २८ ॥

राजसादहङ्कारादिन्द्रियाणि राजसाहङ्कारोपादानकारणानीत्यर्थः तानि च वाक्पाणिपादपायूपस्थरूपाणि कर्मेन्द्रियाणि पञ्च चक्षुःश्रोत्रत्वग्रसनघ्राणाख्यानि ज्ञानेन्द्रियाणि पञ्चैवं दश वचनादानविहरणानन्दोत्सर्गाश्च कर्मेन्द्रियाणां वृत्तयः ज्ञानेन्द्रियाणां च सविकल्पकनिर्विकल्पकोभयरूपज्ञानरूपा वृत्तिः तत्र निर्विकल्पकं किञ्चिदिदमिति ज्ञानं देवता मनश्च सात्त्विकाः सात्त्विकाहङ्कारोपादाना इत्यर्थः देवताः इन्द्रियदेवताः ताश्च चक्षुषो रविः श्रोत्रस्य दिक् त्वचो वायुः रसनस्य वरुणः घ्राणस्याश्विनौ वाचो अग्निः पाण्योरिन्द्रः पादयोरुपेन्द्रः पायोर्मित्रः उपस्थस्य को ब्रह्मेति मन इन्द्रियमपि अन्तरत्वात् पृथगुक्तं सूत्ररूपं प्राणादिक्रियाशक्तेः प्राणादेरेव सूत्रव्यवहारात् तदात्मकं हिरण्यगर्भरूपं लिङ्गसर्वकार्य्यकर्तृत्वात् सर्वसूक्ष्मसमष्टिरूपमभवदित्यर्थः ॥ २६ ॥

ततो विराट् स्थूलसमष्टिरयम् तदाह स्थूलाद्भूतकदम्बकादिति इदमिन्द्रियादेरप्युपलक्षणम् तस्मादेव विराजः पुरुषात् सर्वं स्थावरं जङ्गमम् अभिव्यक्तमित्यर्थः ॥ २७ ॥

तत्र जङ्गममाह देवेत्यादि कालकर्मक्रमेण कालक्रमेण यथा हेमन्ते ब्रीहयो वसन्ते यवादि कर्मक्रमेण कालसहकृतेन तिर्य्यङ्मनुष्यदेवत्वप्राप्तिः उपाधिभेदेन ब्रह्मादिरूपोऽपि त्वमेवेत्याह रजोगुणतः तद्रूपोपाधेः जगतः सर्वकारणं सर्वस्य जगतः कारणमित्यर्थः सार्द्धश्लोकत्रयस्य ॥ २८ ॥

जाग्रत्स्वप्नसुषुप्त्याख्या वृत्तयो बुद्धिजैर्गुणैः ।
तासां विलक्षणो राम ! त्वं साक्षी चिन्मयोऽव्ययः ॥२९॥
सृष्टिलीलां यदा कर्तुमीहसे रघुनन्दन ! ।
अङ्गीकरोषि मायां त्वं तदा वै गुणवानिव ॥ ३० ॥
राम ! माया द्विधा भाति विद्याविद्येति ते सदा ।
प्रवृत्तिमार्गनिरता अविद्यावशवर्त्तिनः ।
निवृत्तिमार्गनिरता वेदान्तार्थविचारकाः ॥ ३१ ॥
त्वद्भक्तिनिरता ये च ते वै विद्यामयाः स्मृताः ।
अविद्यावशगा ये तु नित्यं संसारिणश्च ते ।
विद्याभ्यासरता ये तु नित्यमुक्तास्त एव हि ॥ ३२ ॥
लोके त्वद्भक्तिनिरतास्त्वन्मन्त्रोपासकाश्च ये ।
विद्या प्रादुर्भवेत्तेषां नेतरेषां कदाचन ॥ ३३ ॥

अस्य वये नाथनिमित्तं त्वमेव स्वरूपमण्डपाधिक इत्यर्थः एवं त्वन्मायायाः गुणभेदैः सत्त्वरजस्तमोभिरेव तत्तत्प्राधान्येन बुद्धेर्जाग्रदादयो वृत्तय इत्यर्थः त्वं त्वेतदवस्थात्रयरहित इत्याह तासामिति सत्त्वगुणयोरभावात्तत्प्रतिबिम्बजाग्रदवस्थाया अप्यभाव इति भावः ॥ २९ ॥ ३० ॥

सृष्टिलीलामित्युपलक्षणं स्थित्यादेरपि यदा ईहसे इच्छसि तदा मायामङ्गीकरोषि तत्कल्पितं तत्कृतसम्बन्धं मन्यसे तदा वस्तुतोऽगुणोऽपि गुणवानिवाभासीति शेषः ॥ ३१ ॥

तव मायैव संसारस्य मोक्षस्य च दाने समर्थेत्याह रामेति विद्या तत्त्वज्ञानम् अविद्या संसारमूलकारणम् । तदुक्तं मार्कण्डेयेन „सा विद्या परमा मुक्तेर्हेतुभूता सनातनी । संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरीति” ॥ ३२ ॥

विद्यामयाः तत्त्वज्ञानप्रधानाः सन्तोऽपि प्रारब्धकर्मणो विक्षेपेऽपि पुनः पुनरन्तर्मुखा भवन्त इत्यर्थः ॥ ३३ ॥

अतस्त्वद्भक्तिसम्पन्ना मुक्ता एव न संशयः ।
त्वद्भक्त्यमृतहीनानां मोक्षः स्वप्नेऽपि नो भवेत् ॥ २४ ॥
किं राम ! बहुनोक्तेन सारं किञ्चिद्ब्रवीमि ते ।
साधुसङ्गतिरेवात्र मोक्षहेतुरुदाहृता ॥ २५ ॥
साधवः समचित्ता ये निस्पृहा विगतैषिणः ।
दान्ताः प्रशान्तास्त्वद्भक्ता निवृत्ताखिलकामनाः ॥ २६ ॥
इष्टप्राप्तिविपत्त्योश्च समाः सङ्गविवर्जिताः ।
संन्यस्ताखिलकर्माणः सर्वदा ब्रह्मतत्पराः ॥ २७ ॥
यमादिगुणसम्पन्नाः सन्तुष्टा येन केनचित् ।
सत्सङ्गमो भवेद्यर्हि त्वत्कथाश्रवणे रतिः ॥ २८ ॥

विद्याप्राप्त्यवधारणे हेतुमाह अत इति ॥ २४ ॥

मुक्ता एव तेषां तत्त्वज्ञानस्यावश्यम्भावित्वादिति भावः व्यतिरेकमप्याह त्वद्भक्तीति ॥ २५ ॥

भक्तिरेव कथमिति चेत्तत्रापि किञ्चिद्गुह्यं कारणमस्तीत्याह किं रामेति ते इत्थमाप्नुत इति शेषः स्वाभिप्रायविश्वासार्थं भवदुक्त एतदुक्तिः ॥ २६ ॥

साधुसङ्गप्रमाणे एव तत्सङ्गतिः शक्येत्यतस्तल्लक्षणमाह साधव इति समचित्ताः शत्रुमित्रयो रागद्वेषहीनचित्ताः अतएव निस्पृहाः रागद्वेषकारणीभूतस्पृहाहीनाः विगतैषिणः लोकपुत्रवित्तादीच्छाः दान्ताः बहिरिन्द्रियनिग्रहवन्तः शान्ताः अन्तरिन्द्रियान्तःकरणनिग्रहवन्तः विगतैषिण इत्यस्यैव व्याख्यानं निवृत्ताखिलकामना इति ॥ २६ ॥

इष्टेति समाः हर्षविषादरहिताः सङ्गवर्जिताः दुःसङ्गरहिताः संन्यस्तेत्यादि त्यक्तकाम्यनित्यादिकर्माणः तदेवाह सर्वदा ब्रह्मतत्पराः ॥ २७ ॥

यमादयो यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयो

समुदेति ततो भक्तिस्त्वयि राम ! सनातने ।
त्वद्भक्तावुपपन्नायां विज्ञानं विपुलं स्फुटम् ॥ ३९ ॥
उदेति मुक्तिमार्गोऽयमाद्यश्चतुरसेवित: ।
तस्माद्राघव ! सद्भक्तिस्त्वयि मे प्रेमलक्षणा ॥ ४० ॥
सदा भूयाद्धरे ! सङ्गस्त्वद्भक्तेषु विशेषत: ।
अद्य मे सफलं जन्म भवत्सन्दर्शनादभूत् ॥ ४१ ॥
अद्य मे क्रतव: सर्वे बभूवु: सफला: प्रभो ! ।
दीर्घकालं मया तप्तमनन्यमतिना तप: ।
तस्येह तपसो राम ! फलं तव यदर्चनम् ॥ ४२ ॥
सदा मे सीतया सार्द्धं हृदये वस राघव ! ।
गच्छतस्तिष्ठतो वाऽपि स्मृति: स्यान्मे सदा त्वयि ॥४३॥
इति स्तुत्वा रामनाथमगस्त्यो मुनिसत्तम: ।
ददौ चापं महेन्द्रेण रामार्थे स्थापितं पुरा ॥ ४४ ॥

योगशास्त्रोक्ता: वर्हि यदा तेषां सत्सङ्गमो भवेत्तदा त्वत्कथाश्रवणे रति: समुदेतीत्यन्वय: ॥ ३८ ॥

ततो भक्तिरवश्यं मम भूयात् तस्या च या मय्यविच्छिन्नाकारचित्त-वृत्तिविशेष: प्रेमाख्यस्तथा प्रेमवतस्तत्त्वज्ञानं स्फुटमेवोदेति इत्य-न्वय: ॥ ३९ ॥

अयमाद्यो मुख्यश्चतुरै: कुशलै: सेवितो मुक्तेर्मार्ग: तस्मात् हे राघव ! त्वयि प्रेमलक्षणा सद्भक्तिर्मे सदा भूयात् हे हरे ! तद्भक्तेषु विशेषत: सङ्गो भूयादित्यनुषङ्ग: ॥ ४० ॥ ४१ ॥

क्रतव: सफला बभूवु: त्वत्प्रीतिरेव क्रतूनां मुख्यं फलं सा च तदाश्रमे आगमनात् त्वया व्यक्तीकृता ॥ ४२ ॥

उक्तमेवार्थमक्रमान्तरेणाह दीर्घेति ॥ ४३ ॥

चाव योऽपि प्रार्थयते सदा इति ॥ ४४ ॥

अक्षय्यौ बाणतूणीरौ खड्गौ रत्नविभूषितः।
जहि राघव! भूभारभूतं राक्षसमण्डलम् ॥ ४५ ॥
यदर्थमवतीर्णोऽसि मायया मनुजाकृतिः।
इतो योजनयुग्मे तु पुण्यकाननमण्डितः ॥ ४६ ॥
अस्ति पञ्चवटी नाम्ना आश्रमो गौतमीतटे।
नेतव्यस्तत्र ते कालः शेषो रघुकुलोद्वह! ॥ ४७ ॥
तत्रैव बहुकार्य्याणि देवानां कुरु सत्पते! ॥ ४८ ॥

श्रुत्वा तदागस्त्यसुभाषितं वचः
स्तोत्रञ्च तत्त्वार्थसमन्वितं विभुः।
मुनिं समाभाष्य मुदान्वितो ययौ
प्रदर्शितं मार्गमशेषविद्धरिः ॥ ४९ ॥

इति श्रीमदध्यात्मरामायणे अरण्यकाण्डे उमामहेश्वरसंवादे
तृतीयः सर्गः।

बाणतूणीरौ बाणपूर्णौ तूणीरौ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥
अशेषविदपि मानुष्यं नाटयन् प्रदर्शितं मार्गं ययौ ॥ ४९ ॥

---

इति श्रीमत्सकलराजविपद्वारणसमर्थत्वादिवि० श्रीरामवर्मणः
कृतावध्यात्मरामायणे सेतौ अयोध्याकाण्डे
तृतीयः सर्गः।

---

अथ चतुर्थः सर्गः ।

सूतउवाच ।

मार्गे व्रजन्ददर्शाथ शैलशृङ्गमिव स्थितम् ।
वृद्धं जटायुषं रामः किमेतदिति विस्मितः ॥ १ ॥
धनुरानय सौमित्रे ! राक्षसोऽयं पुरः स्थितः ।
इत्याह लक्ष्मणं रामो हनिष्याम्यृषिभक्षकम् ॥ २ ॥
तच्छ्रुत्वा रामवचनं गृध्रराट् भयपीड़ितः ।
वधार्होऽहं न ते राम ! पितुस्तेऽहं प्रियः सखा ॥ ३ ॥
जटायुर्नाम भद्रन्ते गृध्रोऽहं प्रियकृत्तव ॥ ४ ॥
पञ्चवव्यामहं वत्स्ये तवैव प्रियकाम्यया ।
मृगयायां कदाचित् तु प्रयाते लक्ष्मणेऽपि च ॥ ५ ॥
सीता जनककन्या मे रक्षितव्या प्रयत्नतः ।
श्रुत्वा तद्गृध्रवचनं रामः सस्नेहमब्रवीत् ॥ ६ ॥
साधु गृध्रमहाराज ! तथैव कुरु मे प्रियम् ।
अत्रैव मे समीपस्थो नातिदूरे वने वसन् ॥ ७ ॥
इत्यामन्त्रितमालिङ्ग्य ययौ पञ्चवटीं प्रभुः ।
लक्ष्मणेन सह भ्रात्रा सीतया रघुनन्दनः ॥ ८ ॥
गत्वा ते गौतमीतीरं पञ्चवव्यां सुविस्तरम् ।

मार्गे इति ददर्श दृष्ट्वा च किमेतदिति विस्मितः ॥१॥२॥३॥४॥
वत्स्ये वसाम्भीत्यर्थः आर्षः प्रयोगः ॥ ५ ॥ ६ ॥
गृध्रमहाराजेति पञ्चीतत्पुरुषः अत्रैव वने वसन्मे प्रियं कुर्वित्यन्वयः ॥ ७ ॥
आमन्त्रितं सम्यक् बोधितं गृध्रमालिङ्ग्येत्यर्थः ॥ ८ ॥

मन्दिरं कारयामास लक्ष्मणेन सुबुद्धिना ॥ ९ ॥
तत्र ते न्यवसन् सर्वे गङ्गाया उत्तरे तटे ।
कदम्बपनसाम्रादिफलवृक्षसमाकुले ॥ १० ॥
विविक्ते जनसम्बाधवर्जिते भीरुजस्थले ।
विनोदयन् जनकजां लक्ष्मणेन विपश्चिता ॥ ११ ॥
अध्युवास सुखं रामो देवलोक इवामरः ।
कन्दमूलफलादीनि लक्ष्मणोऽनुदिनं तयोः ॥ १२ ॥
आनीय प्रददौ रामसेवातत्परमानसः ।
धनुर्बाणधरो नित्यं रात्रौ जागर्त्ति सर्वतः ॥ १३ ॥
स्नानं कुर्वन्त्यनुदिनं त्रयस्ते गौतमीजले ।
उभयोर्मध्यगा सीता कुरुते च गमागमौ ॥ १४ ॥
आनीय सलिलं नित्यं लक्ष्मणः प्रीतमानसः ।
सेवतेऽहरहः प्रीत्या एवमासन् सुखं त्रयः ॥ १५ ॥
एकदा लक्ष्मणो राममेकान्ते समुपस्थितम् ।
विनयावनतो भूत्वा पप्रच्छ परमेश्वरम् ॥ १६ ॥
भगवन् ! श्रोतुमिच्छामि मोक्षस्यैकान्तिकीं गतिम् ।
त्वत्तः कमलपत्राक्ष ! सङ्क्षेपाद्वक्तुमर्हसि ॥ १७ ॥

ते गौतमीतीरं गोदावरीतीरं गत्वा पञ्चवट्यां पञ्चवटसमीपे स्थिताः ततस्तत्र रामो लक्ष्मणेन सुविस्तरं मन्दिरं कारयामास ॥ ९ ॥

गङ्गायाः गङ्गात्व गौतम्येव ॥ १० ॥

जनसम्बाधो जनसमूहः निष्क्रान्ता रुजा पीड़ा यस्मात्तादृशस्थले लक्ष्मणेन सह अध्युवासेति सम्बन्धः ॥ ११ ॥ १२ ॥ १३ ॥१४॥१५॥१६॥

ऐकान्तिकीं गतिम् अव्यभिचारिकारणमित्यर्थः ॥ १७ ॥

ज्ञानं विज्ञानसहितं भक्तिवैराग्यबृंहितम् ।
आचक्ष्व मे रघुश्रेष्ठ ! वक्ता नान्योऽस्ति भूतले ॥ १८ ॥

श्रीराम उवाच ।

शृणु वक्ष्यामि ते वत्स ! गुह्याद् गुह्यतरं परम् ।
यद्विज्ञाय नरो जह्यात् सद्यो वैकल्पिक भ्रमम् ॥ १९ ॥
आदौ मायास्वरूपं ते वक्ष्यामि तदनन्तरम् ।
ज्ञानस्य साधनं पश्चात् ज्ञानं विज्ञानसंयुतम् ॥ २० ॥
ज्ञेयं च परमात्मानं यज्ज्ञात्वा मुच्यते भयात् ।
अनात्मनि शरीरादावात्मबुद्धिस्तु या भवेत् ॥ २१ ॥
सैव माया तयैवासौ संसारः परिकल्प्यते ।
रूपे द्वे निश्चिते पूर्वं मायायाः कुलनन्दन ! ॥ २२ ॥
विक्षेपावरणे तत्र प्रथमं कल्पयेज्जगत् ।

ननु मोक्षकारणं ज्ञानमिति प्रसिद्धमेवेति चेत्तत्स्वरूपमेव प्रश्न-विषय इत्याह ज्ञानमिति ज्ञानं श्रवणमननजन्यं विज्ञानं निदिध्यासनजं भक्तिर्ज्ञानविषये प्रेम उक्तस्वरूपं वैराग्यं तदतिरिक्ते प्रेमाभावरूपम् ॥ १८ ॥

वैकल्पिकं भ्रमं विकल्प एव वैकल्पिकं विनयादित्वाट्ठक् "शब्द-ज्ञानानुपाती वस्तुशून्यो विकल्पः" इति योगसूत्रोक्तविकल्परूपं भ्रमं यथा शशशृङ्गादि यद्यपि तदलीकमेव तथाऽपि शशशृङ्गादिशब्दप्रयोगस्ततो बोधश्च भवत्येव तद्वदेव सर्वोऽपि व्यवहारः संसाररूपस्तं यज्ज्ञानेन जह्यात्तद्गुह्यं वक्ष्यामीत्यन्वयः ॥ १९ ॥

तदुपयोगितया वक्ष्यमाणान्यर्थानि नाममात्रेण क्रमत उद्दिशति आदाविति ॥ २० ॥

तत्र मायास्वरूपमाह अनात्मनीति आत्मबुद्धिः अहमिति बुद्धिः ॥२१॥

परिकल्प्यते अवस्तुभूत एव दृश्यते अथ तादृशशक्तिमत्त्वं मायायाः दर्शयति रूपे इति पूर्वमित्यनेन तयो रूपयोरनादित्वं दर्शयति ॥ २२ ॥

लिङ्गाद्या ब्रह्मपर्य्यन्तं स्थूलसूक्ष्मविभेदतः ॥ २३ ॥
अपरं त्वखिलं ज्ञानं रूपमावृत्य तिष्ठति ।
मायया कल्पितं विश्वं परमात्मनि केवले ॥ २४ ॥
रज्जौ भुजङ्गवद्भ्रान्त्या विचारे नास्ति किञ्चन ।
श्रूयते दृश्यते यद्यत् स्मर्य्यते वा नरैः सदा ॥ २५ ॥
असदेव हि तत् सर्वं यथा स्वप्नमनोरथौ ।
देह एव हि संसारवृक्षमूलं दृढं स्मृतम् ॥ २६ ॥
तन्मूलः पुत्त्रदारादिबन्धः किन्तेऽन्यथात्मनः ॥ २७ ॥
देहस्तु स्थूलभूतानां पञ्चतन्मात्रपञ्चकम् ।
अहङ्कारश्च बुद्धिश्च इन्द्रियाणि तथा दश ॥ २८ ॥

के ते रूपे तत्राह विक्षेपावरणे इति विक्षेपशक्तिरावरणशक्ति-श्चेत्यर्थः प्रथमं विक्षेपरूपं लिङ्गं महत्तत्त्वमाद्यं यस्य तत्र तत् ब्रह्म-पर्य्यन्तं चतुर्मुखब्रह्मान्तमित्यर्थः ॥ २३ ॥

अपरमावरणरूपं तस्यान्वर्थत्वमाह अखिलमिति सर्वज्ञानरूपा-वरकत्वात् आवरणव्यवहारस्तत्रेति भावः ननु माया कुत्राधिष्ठाने इदं जगत् कल्पितवती तत्राह परमात्मनीति तद्रूपं चैतन्यमाच्छाद्य जगद्रूपं दर्शितमित्यर्थः ॥ २४ ॥

तत्र दृष्टान्तमाह रज्जाविति रज्ज्वज्ञानं यथा रज्जुमाच्छाद्य भुजङ्गं कल्पयति तद्वत् विचारे विचारणेऽधिष्ठानतत्त्वज्ञाने ॥ २५ ॥

सर्वस्य मिथ्यात्वे दृष्टान्तौ स्वप्नेति यथा स्वप्ने श्रुतं दृष्टं स्मृतं च सर्वं मिथ्या जागरेऽनुभवात् तद्वत् देह एवेति तस्यैव सर्वसंसारकारण-कर्मोत्पादकत्वादिति भावः ॥ २६ ॥

तदाह तन्मूल इति अन्यथा देहाभावे ते पुत्त्रादय आत्मनः किं भवन्ति न किमपीत्यर्थः तत्र सूक्ष्मस्थूलदेहौ एकीकृत्याह देह इति स्थूलभूतपञ्चकं स्थूलदेहः अहङ्कारबुद्धिर्दशेन्द्रियाणि च मनः पञ्च-तन्मात्राणि इत्येतावानष्टादशात्मको लिङ्गदेहः सूक्ष्मः ॥ २७ ॥ २८ ॥

चिदाभासो मनश्चैव मूलप्रकृतिरेव च ।
एतत्त्रितयमिति ज्ञेयं देह इत्यभिधीयते ॥ २९ ॥
एतैर्विलक्षणो जीवः परमात्मा निरामयः ।
तस्य जीवस्य विज्ञाने साधनान्यपि मे शृणु ॥ ३० ॥
जीवश्च परमात्मा च पर्य्यायो नात्र भेदधीः ।
मानाभावस्तथा दम्भहिंसादिपरिवर्जनम् ॥ ३१ ॥
पराक्षेपादिसहनं सर्वत्रावक्रता तथा ।
मनोवाक्कायसद्भक्त्या सद्गुरोः परिसेवनम् ॥ ३२ ॥
बाह्याभ्यन्तरसंशुद्धिः स्थिरता सत्क्रियादिषु ।
मनोवाक्कायदण्डश्च विषयेषु निरीहता ॥ ३३ ॥
निरहङ्कारता जन्मजराद्यालोचनं तथा ।
असक्तिः स्नेहशून्यत्वं पुत्रदारधनादिषु ॥ ३४ ॥

चिदाभास इति तस्य विशेषणम्, चिदाभासते अहमिति बुद्ध्या विषयीक्रियत इत्यर्थः मूलप्रकृतिस्त्वीश्वरो देहः एतत्त्रयस्य जडत्वाद्देहत्वेनादिसंज्ञा ॥ २९ ॥

जीवः स एव परमात्मा ॥ ३० ॥

अत जीवे परमात्मनि च यथाऽत्र मानाभावः देशतः कालतश्च परिच्छेदाभावः अथ तद्विज्ञानसाधनान्याह दम्भेत्यादि ॥ ३१ ॥

परेति परकृताक्षेपादि निन्दादि तत्सहनं मनोवाक्कायकृतसद्भक्त्या प्रेम्णा सद्गुरुसेवनम् ॥ ३२ ॥

बाह्याभ्यन्तरसंशुद्धिः उक्तरूपैव सत्क्रियादिषु स्थिरता अवश्यकर्त्तव्यताबुद्धिः परानिष्टाचिन्तनं मनोदण्डः पराक्षेपाकरणं वाग्दण्डः पराहिंसा कायदण्डः निरीहता इच्छाराहित्यम् ॥ ३३ ॥

जन्मजराद्यालोचनं परेषां तदालोचनमूलकं वैराग्यं पुत्रादिष्वसक्तिः तस्यैव आत्मत्वं स्नेहशून्यत्वम् ॥ ३४ ॥

इष्टानिष्टागमे नित्यं चित्तस्य समता तथा।
मयि सर्वात्मके रामे ह्यनन्यविषया मतिः॥ २५॥
जनसम्बाधरहितशुद्धदेशनिषेवणम्।
प्राकृतैर्जनसङ्घैश्च ह्यरतिः सर्वदा भवेत्॥ २६॥
आत्मज्ञाने सदोद्योगो वेदान्तार्थावलोकनम्।
उक्तैरेतैर्भवेज्ज्ञानं विपरीतैर्विपर्ययः॥ २७॥
बुद्धिप्राणमनोदेहाहङ्कृतिभ्यो विलक्षणः।
चिदात्माहं नित्यशुद्धो बुद्ध एवेति निश्चयम्॥ २८॥
येन ज्ञानेन संवित्ते तज्ज्ञानं निश्चितं च मे।
विज्ञानञ्च तदैवैतत् साक्षादनुभवेद्यदा॥ २९॥
आत्मा सर्वत्र पूर्णः स्याच्चिदानन्दात्मकोऽव्ययः।
बुद्ध्याद्युपाधिरहितः परिणामादिवर्जितः॥ ४०॥

चित्तस्य समता हर्षविषादराहित्यम् अनन्यविषया तन्मात्रविषय ॥२५॥
जनसम्बाधो जनसमूहः प्राकृतैः सांसारिकैः अरतिः अप्रीतिः ॥२६॥
आत्मज्ञाने तत्साधने श्रवणादावुद्योगः आदरपूर्वको यत्नः वेदान्तार्थावलोकनं श्रवणं विचारश्च विपर्ययः संसारः॥ २७॥
बुद्ध्यादिभ्यो विलक्षण इत्यादिनिश्चयम्॥ २८॥
येन ज्ञानेन यथा शब्दादिजन्यया संवित्ते लभते यज्ज्ञानमिति मे निश्चितं निश्चयः तदैवैतत् यदा साक्षादनुभवेत् निदिध्यासनपरिपाके अपरोक्षमनुभवेत्तदा विज्ञानमित्युच्यते॥ २९॥
अथात्मन उक्तं बुद्ध्यादिभ्यो वैलक्षण्यं दर्शयति आत्मेति चिदानन्दस्वरूपात्मकः यद्वा चित् आनन्दसच्छब्दस्तदात्मकः बुद्ध्याद्युपाधिभिस्तद्धर्मैः रागादिभी रहितः हीनः परिणामो रूपान्तरापत्तिः तद्वर्जितः आदिपदेन जडत्वभासत्वादि॥ ४०॥

स्वप्रकाशेन देहादीन् भासयन्ननपावृतः।
एक एवाद्वितीयश्च सत्यज्ञानादिलक्षणः॥ ४१॥
असङ्गः स्वप्रभो द्रष्टा विज्ञानेनावगम्यते।
आचार्यशास्त्रोपदेशादैक्यज्ञानं यदा भवेत्॥ ४२॥
आत्मनोर्जीवपरयोर्मूलाविद्या तदैव हि।
लीयते कार्य्यकरणैः सहैव परमात्मनि॥ ४३॥
सावस्था मुक्तिरित्युक्ता ह्युपचारोऽयमात्मनि।
इदं मोक्षस्वरूपं ते कथितं रघुनन्दन!॥ ४४॥
ज्ञानविज्ञानवैराग्यसहितं मे परात्मनः।
किं त्वेतद् दुर्लभं मन्ये मद्भक्तिविमुखात्मनाम्॥ ४५॥
चक्षुष्मतामपि यथा रात्रौ सम्यक् न दृश्यते।

स एव सर्वभासक इत्याह स्वप्रकाशेनेति सत्यज्ञानादीति "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुत्युक्तलक्षणः॥ ४१॥

स्वप्रभः स्वभासेन इतरभासकानपेक्षः द्रष्टा सर्वसाक्षी विज्ञानेन प्रागुक्तेनावगम्यते विषयीक्रियते तस्य ज्ञानस्य मुख्यं कारणमाह आचार्येति आचार्यकृततत्त्वमस्यादिशास्त्रोपदेशात् जीवपरयोरात्मनोर्यदैक्यज्ञानं तदपरोक्षानुभवः भवेत् तदैव मूलाविद्याकार्य्यं स्थूलं करणमिन्द्रियस्तैः सह परात्मनि लीयते॥ ४२॥ ४३॥

सैषायस्था मुक्तिर्मूलाविद्यालय एव मुक्तिरित्यर्थः॥ ४४॥

आत्मनः शुद्धस्य सर्वथा अविद्यास्पृष्टस्य भेदरहितस्य ऐक्यज्ञानमविद्यालय इत्यपि व्यवहारः कण्ठचामीकरन्यायेन गौण इत्यर्थः यथा कण्ठस्थं चामीकरमज्ञत्वान्विस्मृति नष्टं तदिति बुद्ध्वा "अरे कण्ठे एवास्ते" इति केनचिदुक्ते लब्धं तदिति व्यवहरति तद्वत् एवं ज्ञानादिसहितं मे परात्मनो मोक्षस्वरूपं ते कथितं या मोक्षावस्थोक्ता तदेव मे स्वरूपमित्यर्थः मद्भक्तिविमुखात्मनां मत्प्रेमहीनानाम्॥ ४५॥

पदं दीपसमेतानां दृश्यते सम्यगेव हि ॥ ४६ ॥
एवं मद्भक्तियुक्तानामात्मा सम्यक् प्रकाशते।
मद्भक्तेः कारणं किञ्चिद्वक्ष्यामि शृणु तत्त्वतः ॥ ४७ ॥
मद्भक्तसङ्गो मत्सेवा (१) मद्भक्तानां निरन्तरम्।
एकादश्युपवासादि मम पर्वानुमोदनम् ॥ ४८ ॥
मत्कथाश्रवणे पाठे व्याख्याने सर्वदा रतिः।
मत्पूजापरिनिष्ठा च मम नामानुकीर्त्तनम् ॥ ४९ ॥
एवं सततयुक्तानां भक्तिरव्यभिचारिणी।
मयि सञ्जायते नित्यं ततः किमवशिष्यते ॥ ५० ॥
अतो मद्भक्तियुक्तस्य ज्ञानं विज्ञानमेव च।
वैराग्यं च भवेच्छीघ्रं ततो मुक्तिमवाप्नुयात् ॥ ५१ ॥
कथितं सर्वमेतत्ते तव प्रश्नानुसारतः।
अस्मिन् मनः समाधाय यस्तिष्ठेत् स तु मुक्तिभाक् ॥ ५२ ॥
न वक्तव्यमिदं यत्नात् मद्भक्तिविमुखाय हि।

यथा सनेत्राणामपि रात्रौ पदं चोरादिपदं न दृश्यते न दृग्विषयं भवति दीपसमेतानां तु तेषां तत्तद्दृग्विषयो भवति ॥ ४६ ॥

एवं भक्तियुक्तानां सम्यक् मत्प्रकाशो भवति ॥ ४७ ॥

अथ प्रतिज्ञातानि भक्तिकारणान्याह मद्भक्तेति मद्भक्तानां निरन्तरमित्यत्र सेवेत्यनुषज्यते एकादश्युपवासादि तदनुष्ठानमित्यर्थः मम यानि पर्वाणि उत्सवदिनानि रामनवम्यादीनि तेषामनुमोदनं तेषूत्सवकरणम् ॥ ४८ ॥

परिनिष्ठा तत्परता ॥ ४९ ॥

ततो मद्भक्तेरधिकं ज्ञानसाधनं किमवशिष्यते न किमप्यस्तीत्यर्थः ॥५०॥
तदेव स्फुटमाह अत इति ॥ ५१ ॥ ५२ ॥ ५३ ॥

(१) मे सेवा इत्यपि पाठः।

मद्भक्ताय प्रदातव्यमाज्ञयापि प्रयत्नतः॥ ५३॥
य इदन्तु पठेन्नित्यं श्रद्धाभक्तिसमन्वितः।
अज्ञानपटलध्वान्तं विधूय परिमुच्यते॥ ५४॥
भक्तानां मम योगिनां सुविमलस्वान्तातिशान्तात्मनां
मत्सेवाभिरतात्मनां च विमलज्ञानात्मनां सर्वदा।
सङ्गं यः कुरुते सदोद्यतमतिः सत्सेवनानन्यधी-
र्मोक्षस्तस्य करे स्थितोऽहमनिशं दृश्यो भवे नान्यथा॥५५॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे
चतुर्थः सर्गः।

अज्ञानपटलकृतं ध्वान्तमित्यर्थः॥ ५४॥

मम भक्तानामतएव योगिनां मद्भक्तियोगवतां सुविमलं स्वान्तं हृदयं येषान्ते च तेऽतिशान्तात्मनश्चातिशान्तचित्ताश्च तेषां मत्सेवाया-मभिरतः प्रीतियुत आत्मा चित्तं येषां विमलज्ञानरूप आत्मा येषां ज्ञानविषयस्तेषामुद्यता। ज्ञानविषये उद्यमशालिनी मतिर्यस्य यः सतां सेवनेऽनन्यधीस्तत्पर इत्यर्थः तस्यानिशमहं दृश्यो भवे आत्मनेपदमार्षं नान्यथा तादृशसङ्गं विना न मद्दर्शनं नापि मोक्ष इत्यर्थः॥ ५५॥

इति श्रीमद्वककराजविपद्धरचममर्थेत्यादिवि० श्रीरामवर्मणः
कृतावध्यात्मरामायणे सेतौ अयोध्याकाण्डे
चतुर्थः सर्गः।

———

पञ्चमः सर्गः ।

तस्मिन् काले महारण्ये राक्षसी कामरूपिणी ।
विचचार महासत्त्वा जनस्थाननिवासिनी ॥ १ ॥
एकदा गौतमीतीरे पञ्चवट्याः समीपतः ।
पद्मवज्राङ्कुशाङ्कानि पदानि जगतीपतेः ॥ २ ॥
दृष्ट्वा कामपरीतात्मा पादसौन्दर्यमोहिता ।
पश्यन्ती सा शनैरायाद्राघवस्य निवेशनम् ॥ ३ ॥
तत्र सा तं रमानाथं सीतया सह संस्थितम् ।
कन्दर्पसदृशं रामं दृष्ट्वा कामविमोहिता ॥ ४ ॥
राक्षसी राघवं प्राह कस्य ? त्वं कः ? किमाश्रमे ? ।
युक्तो जटावल्कलाद्यैः साध्यं किन्तेऽत्र ? मे वद ॥ ५ ॥
अहं शूर्पणखा नाम राक्षसी कामरूपिणी ।
भगिनी राक्षसेन्द्रस्य रावणस्य महात्मनः ॥ ६ ॥
खरेण सहिता भ्रात्रा वसाम्यत्रैव कानने ।
राज्ञा दत्तञ्च मे सर्वं मुनिभक्षा वसाम्यहम् ॥ ७ ॥

तस्मिन्निति महासत्त्वा महाबला ॥ १ ॥

पद्मेत्यादि तच्चिह्नानि तद्युक्तानीत्यर्थः ॥ २ ॥

कामपरीतात्मा कामव्याप्तचित्ता पश्यन्ती तत्पदानीत्यर्थः तेनच चिह्नेन राघवाश्रममायात् ॥ ३ ॥ ४ ॥

कः किंनामा जटावल्कलाद्यैर्युक्तः आश्रमे किं वसतीति शेषः अत्र वासेन किं साध्यं तच्च वद ॥ ५

अथ तत्प्रश्नं विनैव तज्जिज्ञासां सम्भाव्य स्वस्योत्तमकुलत्वादि च बोधयितुं स्वस्वरूपमाह अहमिति ॥ ६ ॥

त्वां तु वेदितुमिच्छामि वद मे वदतां वर ! ।
तामाह रामनामाहमयोध्याधिपतेः सुतः ॥ ८ ॥
एषा मे सुन्दरी भार्य्या सीता जनकनन्दिनी ।
स तु भ्राता कनीयान् मे लक्ष्मणोऽतीव सुन्दरः ॥ ९ ॥
किं ? कृत्यन्ते मया ब्रूहि कार्य्यं भुवनसुन्दरि ! ।
इति रामवचः श्रुत्वा कामार्त्ता साब्रवीदिदम् ॥ १० ॥
एहि राम ! मया सार्द्धं रमस्व गिरिकानने ।
कामार्त्ताहं न शक्नोमि त्यक्तुं त्वां कमलेक्षणम् ॥ ११ ॥
रामः सीतां कटाक्षेण पश्यन् सस्मितमब्रवीत् ।
भार्य्या ममैषा कल्याणी विद्यते ह्यनपायिनी ॥ १२ ॥
त्वं तु सापत्न्यदुःखेन कथं स्थास्यसि सुन्दरि ! ।
बहिरास्ते मम भ्राता लक्ष्मणोऽतीव सुन्दरः ॥ १३ ॥
तवानुरूपो भविता पतिस्तेनैव सञ्चर ।
इत्युक्ता लक्ष्मणं प्राह पतिर्मे भव सुन्दर ! ॥ १४ ॥
भ्रातुराज्ञां पुरस्कृत्य सङ्गच्छावोऽद्य मा चिरम् ।
इत्याह राक्षसी घोरा लक्ष्मणं काममोहिता ॥ १५ ॥
तामाह लक्ष्मणः साध्वि ! दासोऽहं तस्य धीमतः ।

वरेण भ्राता सहितेत्यन्वयः सर्वं वनमिति शेषः ॥ ७ ॥ ८ ॥९॥
ते किं कृत्यं मया कार्य्यं करणीयं तद् ब्रूहीत्यन्वयः ॥ १० ॥
गिरिकानने समाहारद्वन्द्वः गिरिषु काननेषु चेत्यर्थः ॥ ११ ॥
अनपायिनी सर्वथा त्यक्तुमशक्या सर्वमप्यविभक्ता च ॥ १२ ॥
तद्देवाह त्वं त्विति ॥ १३ ॥
तेनैव सह सञ्चर गिरिकाननेष्विति शेषः ॥ १४ ॥
संगच्छावः मिथुनीभावं प्राप्नुवः ॥ १५ ॥ १६ ॥ १७ ॥

द्दासी भविष्यसि त्वन्तु ततो दुःखतरं नु किम्? ॥१६॥
तमेव गच्छ भद्रं (१) ते स तु राजाखिलेश्वरः।
तच्छ्रुत्वा पुनरप्यागाद्राघवं दुष्टमानसा ॥ १७ ॥
क्रोधाद्राम! किमर्थं मां भ्रामयस्यनवस्थितः।
इदानीमेव तां सीतां भक्षयामि तवाग्रतः ॥ १८ ॥
इत्युक्त्वा विकटाकारा जानकीमनुधावती।
ततो रामाज्ञया खड्गमादाय परिगृह्य ताम् ॥ १९ ॥
चिच्छेद नासां कर्णौ च लक्ष्मणो लघुविक्रमः।
ततो घोरध्वनिं कृत्वा रुधिराक्तवपुर्द्रुतम् ॥ २० ॥
क्रन्दमाना पपाताग्रे खरस्य परुषाक्षरा।
किमेतदिति तामाह खरः खरतराक्षरः ॥ २१ ॥
केनैवं कारितासि त्वं मृत्योर्वैक्लानुवर्त्तिना।
वद मे तं वधिष्यामि कालकल्पमपि क्षणात् ॥ २२ ॥
तमाह राक्षसी रामः सीतालक्ष्मणसंयुतः।
दण्डकं निर्भयं कुर्वन्नास्ते गोदावरीतटे ॥ २३ ॥
मामेवं कृतवांस्तस्य भ्राता तेनैव चोदितः।
यदि त्वं कुलजातोऽसि वीरोऽसि? जहि तौ रिपू २४

क्रोधात् अवददिति शेषः किमवदत्तदाह रामेत्यादि अनवस्थितः सत्ये वचसीति शेषः यत्प्रीत्या मामेवं भ्रामयसि तामित्यर्थः ॥ १८ ॥
तां परिगृह्य धृत्वा ॥ १९ ॥ २० ॥
परुषाक्षरा खरभिकृतिबोधककठोरवाक् ॥ २१ ॥
एवं नासाकर्णविहीना तस्मै वद तमहं वधिष्यामीत्यन्वयः ॥२२॥२३॥
तेन रामेण चोदितः प्रेरितः ॥ २४ ॥ २५ ॥

(१) भद्रे! इत्यपि पाठः।

तयोस्तु रुधिरं पास्ये भक्षये तौ सुदुर्मदौ ।
नोचेत्प्राणान् परित्यज्य यास्यामि यमसादनम् ॥ २५ ॥
तच्छ्रुत्वा त्वरितं प्रागात् खरः क्रोधेन मूर्च्छितः ।
चतुर्द्दशसहस्राणि रक्षसां भीमकर्मणाम् ॥ २६ ॥
चोदयामास रामस्य समीपं वधकाङ्क्षया ।
खरश्च त्रिशिराश्चैव दूषणश्चैव राक्षसः ॥ २७ ॥
सर्वे रामं ययुः शीघ्रं नानाप्रहरणोद्यताः ।
श्रुत्वा कोलाहलं तेषां रामः सौमित्रिमब्रवीत् ॥ २८ ॥
श्रूयते विपुलः शब्दो नूनमायान्ति राक्षसाः ।
भविष्यति महद्युद्धं नूनमद्य मया सह ॥ २९ ॥
सीतां नीत्वा गुहां गत्वा तत्र तिष्ठ महाबल ! ।
हन्तुमिच्छाम्यहं सर्वान् राक्षसान् घोररूपिणः ॥ ३० ॥
अत्र किञ्चिन्न वक्तव्यं शापितोऽसि ममोपरि ।
तथेति सीतामादाय लक्ष्मणो गह्वरं ययौ ॥ ३१ ॥
रामः परिकरं बद्ध्वा धनुरादाय निष्ठुरम् ।
तूणीरावक्षयशरौ बद्ध्वा यत्तोऽभवत्प्रभुः ॥ ३२ ॥
तत आगत्य रक्षांसि रामस्योपरि चिक्षिपुः ।
आयुधानि विचित्राणि पाषाणान् पादपानपि ॥ ३३ ॥

प्रागात्प्रस्थितः ॥ २६ ॥

रामस्य समीपं गन्तुं चोदयामास वधकाङ्क्षयेत्यस्य तस्य रामस्य वधकाङ्क्षयेत्यर्थः स्ववधेच्छयेति तत्त्वार्थः ॥ २७ ॥ २८ ॥ २९ ॥

सीतां नीत्वा रक्षित्वेत्यर्थः ॥ ३० ॥

शापितोऽसि ममोपरि मदीयः शपथ इत्यर्थः ॥ ३१ ॥

यत्तः सन्नद्धः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

तानि चिच्छेद रामोऽपि लीलया तिलशः क्षणात् ।
ततो बाणसहस्रेण हत्वा तान् सर्वराक्षसान् ॥ २४ ॥
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ।
जघान प्रहरार्द्धेन सर्वानेव रघूत्तमः ॥ २५ ॥
लक्ष्मणोऽपि गुहामध्यात् सीतामादाय राघवे ।
समर्प्य राक्षसान् दृष्ट्वा हतान् विस्मयमाययौ ॥ २६ ॥
सीता रामं समालिङ्ग्य प्रसन्नमुखपङ्कजा ।
शस्त्रव्रणानि चाङ्गेषु ममार्ज जनकात्मजा ॥ २७ ॥
सापि दुद्राव दृष्ट्वा तान् हतान् राक्षसपुङ्गवान् ।
लङ्कां गत्वा सभामध्ये क्रोशन्ती पादसन्निधौ ॥ २८ ॥
रावणस्य पपातोर्व्यां भगिनी तस्य रक्षसः ।
दृष्ट्वा तां रावणः प्राह भगिनीं भयविह्वलाम् ॥ २९ ॥
उत्तिष्ठोत्तिष्ठ वत्से ! त्वं विरूपकरणं तव ।
कृतं शक्रेण वा भद्रे ! यमेन वरुणेन वा ॥ ४० ॥
कुवेरेणाथ वा ब्रूहि भस्मीकुर्य्यां क्षणेन तम् ।
राक्षसी तमुवाचेदं त्वं प्रमत्तो विमूढधीः ॥ ४१ ॥
पानासक्तः स्त्रीविजितः षण्ढः सर्वत्र लक्ष्यसे ।
चारचक्षुर्विहीनस्त्वं कथं राजा भविष्यसि ॥ ४२ ॥
खरश्च निहतः सङ्ख्ये दूषणस्त्रिशिरास्तथा ।
चतुर्दशसहस्राणि राक्षसानां महात्मनाम् ॥ ४३ ॥

शस्त्रव्रणानि मार्जितरुधिराणि पूर्णगर्त्तानि चकारेत्यर्थः २७
रावणस्य पादसन्निधावुर्व्यां पपातेत्यन्वयः ॥ २८ ॥ २९ ॥
विरूपकरणं वैरूप्यमिति यावत् ॥ ४० ॥
अथवा कुबेरेण कृतं तद्ब्रूहीत्यन्वयः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

निहतानि क्षणेनैव रामेणासुरमनुणा ।
जनस्थानमशेषेण मुनीनां निर्भयं कृतम् ।
न जानासि विमूढस्त्वमतएव मयोच्यते ॥ ४४ ॥

रावण उवाच ।

को वा रामः किमर्थं वा कथं तेनासुरा हताः ? ।
सम्यक्कथय मे तेषां मूलघातं (१) करोम्यहम् ॥ ४५ ॥

शूर्पणखोवाच ।

जनस्थानादहं याता कदाचिद् गौतमीतटे ।
तत्र पञ्चवटी नाम पुरा मुनिजनाश्रया ॥ ४६ ॥
तत्राश्रमे मया दृष्टो रामो राजीवलोचनः ।
धनुर्बाणधरः श्रीमान् जटावल्कलमण्डितः ॥ ४७ ॥
कनीयाननुजस्तस्य लक्ष्मणोऽपि तथाविधः ।
तस्य भार्य्या विशालाक्षी रूपिणी श्रीरिवापरा ॥४८॥
देवगन्धर्वनागानां मनुष्याणां तथाविधा ।
न दृष्टा न श्रुता राजन् ! द्योतयन्ती वनं शुभा ॥ ४९ ॥
आनेतुमहमुद्युक्ता तां भार्य्यार्थं तवानघ ! ।
लक्ष्मणो नाम तद्भ्राता चिच्छेद मम नासिकाम्॥५० ॥
कर्णौ च नोदितस्तेन रामेण स महाबलः ।

किमर्थं कस्मै प्रयोजनाय कथं केन प्रकारेणासुराः खरादयो हताः तेषां रामादीनाम् ॥ ४५ ॥

पञ्चवटी नाम आश्रम इति शेषः ॥ ४६ ॥ ४७ ॥ ४८ ॥

द्योतयन्ती शोभयन्ती ॥ ४९ ॥ ५० ॥ ५१ ॥

---

(१) मूलघातमिति पाठान्तरम् ।

ततोऽहमतिदुःखेन रुदन्ती खरमन्वगाम् ॥ ५१ ॥
सोऽपि रामं समासाद्य युद्धं राक्षसयूथपैः।
ततः क्षणेन रामेण तेनैव बलशालिना ॥ ५२ ॥
सर्वे तेन विनष्टा वै राक्षसा भीमविक्रमाः।
यदि रामो मनः कुर्य्यात्त्रैलोक्यं निमिषार्द्धतः ॥ ५३ ॥
भस्मीकुर्य्यान्न सन्देह इति भाति मम प्रभो!।
यदि सा तव भार्य्या स्यात् सफलं तव जीवितम् ॥५४॥
अतो यतस्व राजेन्द्र! यथा ते वल्लभा भवेत्।
सीता राजीवपत्राक्षी सर्वलोकैकसुन्दरी ॥ ५५ ॥
साक्षाद्रामस्य पुरतः स्थातुं त्वं न क्षमः प्रभो!।
मायया मोहयित्वा तु प्राप्स्यसे तां रघूत्तमम् ॥ ५६ ॥
श्रुत्वा तत् शूर्पणखावाक्यं च दानमानादिभिस्तथा।
आश्वास्य भगिनीं राजा प्रविवेश स्वकं गृहम्।
तत्र चिन्तापरो भूत्वा निद्रां रात्रौ न लब्धवान् ॥५७॥

एकेन रामेण कथं? मनुष्य-
मात्रेण नष्टः सबलः खरो मे।
भ्राता कथं मे बलवीर्य्यदर्प-
युतो विनष्टो बत राघवेण? ॥ ५८ ॥

राक्षसयूथपैः सह युद्धमकरोदिति शेषः ॥ ५२ ॥
विनष्टाः विनाशिता इत्यर्थः अन्तर्भावितण्यर्थः ॥ ५३॥५४॥ ५५॥
रघूत्तमं मायया मोहयित्वा तां प्राप्स्यसे इत्यन्वयः ॥ ५६ ॥
तत् शूर्पणखावाक्यं श्रुत्वा दानमानादिभिर्भगिनीमाश्वास्य स्वकं गृहं प्रविवेशेत्यन्वयः ॥ ५७ ॥
नष्टः नाशितः शोकावेशादुक्तमेव पुनराह भ्रातेति बलं शारीरं वीर्य्यं मानसं बलं दर्पोऽहङ्कारः ॥ ५८ ॥

यदा न रामो मनुजः परेशो
मां हन्तुकामः सबलं बलौघैः ।
सम्प्रार्थितोऽयं द्रुहिणेन पूर्वं
मनुष्यरूपोऽद्य रघोः कुलेऽभूत् ? ॥ ५९ ॥

बध्यो यदि स्यां ? परमात्मनाहं
वैकुण्ठराज्यं परिपालयेऽहम् ।
नोचेदिदं राक्षसराज्यमेव
भोक्ष्ये चिरं राममतो व्रजामि ॥ ६० ॥

इत्थं विचिन्त्याखिलराक्षसेन्द्रो
रामं विदित्वा परमेश्वरं हरिम् ।
विरोधबुद्ध्यैव हरिं प्रयामि
द्रुतं न भक्त्या भगवान् प्रसीदेत् ॥ ६१ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे
पञ्चमः सर्गः ।

परेशः परमात्मा बलौघैर्वानरसमूहैः द्रुहिणेन ब्रह्मणा ॥ ५९ ॥
अतः अल्पराज्यत्यागेन महत्तरराज्यप्राप्तिः ॥ ६० ॥
भक्त्या द्रुतमल्पकालतया शीघ्रं न प्रसीदेत् एतद्राज्यत्याजनपूर्वं
मह्द्राज्यं न प्रापयेत् ॥ ६१ ॥

इति श्रीमन्महाराजविपदुद्धरणसमर्थेत्यादिवि० श्रीरामवर्मणः कृतौ
श्रीमदध्यात्मरामायणे सेतौ अरण्यकाण्डे
पञ्चमः सर्गः ।

अथ षष्ठः सर्गः ।

विचिन्त्यैवं निशायां सः प्रभाते रथमास्थितः ।
रावणो मनसा कार्य्यमेकं निश्चित्य बुद्धिमान् ॥ १ ॥
ययौ मारीचसदनं परं पारमुदन्वतः (१) ।
मारीचस्तत्र मुनिवज्जटावल्कलधारकः ॥ २ ॥
ध्यायन् हृदि परात्मानं निर्गुणं गुणभासकम् ।
समाधिविरमेऽपश्यद्रावणं गृहमागतम् ॥ ३ ॥
द्रुतमुत्थाय चालिङ्ग्य पूजयित्वा यथाविधि ।
कृतातिथ्यं सुखासीनं मारीचो वाक्यमब्रवीत् ॥ ४ ॥
समागमनमेतत्ते रथेनैकेन रावण ! ।
चिन्तापर इवाभासि हृदि कार्य्यं विचिन्तयन् ॥ ५ ॥
ब्रूहि मे न हि गोप्यञ्चेत्करवाणि तव प्रियम् ।
न्याय्यं चेद् ब्रूहि राजेन्द्र ! वृजिनं मां स्पृशेन्न हि ॥६॥

रावण उवाच ।

अस्ति राजा दशरथः साकेताधिपतिः किल ।
रामनामा सुतस्तस्य ज्येष्ठः सत्यपराक्रमः ॥ ७ ॥

एकं कार्य्यं सीताहरणेन रामतो मृत्युरूपम् ॥ १ ॥ २ ॥

गुणाः प्रकृतयः तत्कार्य्याणि तद्भासकम् ॥ ३ ॥ ४ ॥

एतदेकेन रथेन समागमनं किमर्थं तद् ब्रूहीति शेषः हृदि किञ्चित् कार्य्यं विचिन्तयन् चिन्तापर इवाभासि तत् कार्य्यं किमिति ब्रूहीत्यन्वयः ॥ ५ ॥

न्याय्यं धर्म्यं हि यतो यत्कार्यकरणे मां वृजिनं पापं न स्पृशेत् ॥६॥

साकेतम् अयोध्या ॥ ७ ॥

---

(१) तीरमुदन्वतः इति वा पाठः ।

विवासयामास सुतं वनं वनजनप्रियम्।
भार्य्यया सहितं भ्रात्रा लक्ष्मणेन समन्वितम्॥ ८॥
स आस्ते विपिने घोरे पञ्चवट्याश्रमे शुभे।
तस्य भार्य्या विशालाक्षी सीता लोकविमोहिनी॥ ९॥
रामो निरपराधान्मे राक्षसान् भीमविक्रमान्।
खरं च हत्वा विपिने सुखमास्तेऽतिनिर्भयः॥ १०॥
भगिन्या मे शूर्पणखा निर्दोषायाश्च नासिकाम्।
कर्णौ चिच्छेद दुष्टात्मा वने तिष्ठति निर्भयः॥ ११॥
अतस्त्वया सहायेन गत्वा तत्प्राणवल्लभाम्।
आनयिष्यामि विपिने रहिते राघवेण ताम्॥ १२॥
त्वं तु मायामृगो भूत्वा ह्याश्रमादपनेष्यसि।
रामं च लक्ष्मणं चैव तदा सीतां हराम्यहम्॥ १३॥
त्वं तु तावत् सहायं मे कृत्वा स्थास्यसि पूर्ववत्।
इत्येवं भाषमाणन्तं रावणं वीक्ष्य विस्मितः॥ १४॥
केनेदमुपदिष्टन्ते मूलघातकरं वचः।
स एव शत्रुर्वध्यश्च यस्त्वन्नाशं प्रतीक्षते॥ १५॥
रामस्य पौरुषं स्मृत्वा चित्तमद्यापि रावण!।

वनविशेषणं वनजनप्रियमिति॥ ८। ९। १०॥
कर्णौ चिच्छेद तथापि निर्भय इत्यन्वयः॥ ११। १२॥
मायामृगः मायया विचित्रमृगरूपधरः॥ १३॥
सहार्थे सहायत्वम्॥ १४॥
इदं वचः सीतोत्तमा स्त्री सा हर्त्तव्येत्येवं रूपम् यो दुरुपदेशेन त्वन्नाशं प्रतीक्षते इच्छति स एव शत्रुर्न रामः स एव वध्यस्त्वया॥ १५॥
रामस्य पौरुषं स्मृत्वाऽद्यापि मे चित्तं विक्लवमिति शेषः अर्द्धमार्षं

बालोऽपि मां कौशिकस्य यज्ञसंरक्षणाय स ॥ १६ ॥
आगतस्त्विषुणैकेन पातयामास सागरे ।
योजनानां शतं रामस्तदादिभयविह्वलः ॥ १७ ॥
स्मृत्वा स्मृत्वा तदैवाहं रामं पश्यामि सर्वतः ॥ १८ ॥
दण्डकेऽपि पुनरप्यहं वने पूर्ववैरमनुचिन्तयन् हृदि ।
तीक्ष्णशृङ्गमृगरूपमेकदा माद्दशैर्बहुभिरावृतोऽभ्ययाम् ॥१९॥
राघवं जनकजासमन्वितं लक्ष्मणेन सहितं त्वरान्वितः ।
आगतोऽहमथ हन्तुमुद्यतो मां विलोक्य शरमेकमक्षिपत् ॥२०॥
तेन विद्धहृदयोऽहमुद्भ्रमन् राक्षसेन्द्र! पतितोऽस्मि सागरे ।
तत्प्रभृत्यहमिदं समाश्रितः स्थानमूर्जितमिदं भयार्दितः ॥२१॥
राममेव सततं विभावये भीतभीत इव भोगराशितः ।
राजरत्नरमणीरथादिकं श्रोत्रयोर्यदि गतं भयं भवेत् ॥२२॥
राम आगत इहेति शङ्कया बाह्यकार्य्यमपि सर्वमत्यजम् ।
निद्रया परिवृतो यदा स्वपे राममेव मनसानुचिन्तयन् ॥२३॥

पौरुषं किञ्चिदेव निदर्शनायाह बालोऽपीति कौशिकस्य यज्ञरक्षणायागतो बालोऽपीति रामस्त्वेकेनेषुणाऽनेकयोजनशतसङ्ख्यं मां सागरे पातयामास तदेव रामकर्षणाहं स्मृत्वा रामं सर्वतः सर्वत्र पश्यामि ॥ १६ । १७ । १८ ॥

तीक्ष्णशृङ्गमृगरूपं धृत्वेति शेषः ॥ १९ । २० ॥

तेन शरेण ऊर्जितं रामानागमननिश्चयेन निर्भयम् ॥ २१ ॥

यद्वस्तु भोगसमूहसाधनं ततोऽपि भीतभीत अत्यन्तं भीत इव राममेव भावये तदेवोपपादयति राजेति रेफवत्त्वेन भोगसाधनानामप्येषां श्रवणं रामस्मारकतया भयजनकमिति भावः ॥ २२ ॥

रामागमनशङ्कया बाह्यकार्य्यं परित्यज्य निद्रायोऽपि राममेव चिन्तयन् स्वपे इति परस्मैपदमार्षम् ॥ २३ ॥

स्वप्नदृष्टिगतराघवं तदा
बोधितो विगतनिद्र आस्थितः।
तद्भवानपि विमुच्य चाग्रहं
राघवं प्रति गृहं प्रयाहि भो! ॥ २४ ॥

रक्ष राक्षसकुलं चिरागतं
तत्स्मृतौ सकलमेव नश्यति।
तव हितं वदतो मम भाषितं
परिगृहाण परात्मनि राघवे ॥ २५ ॥

त्यज विरोधमतिं भज भक्तितः
परमकारुणिको रघुनन्दनः।
अहमशेषमिदं मुनिवाक्यतो-
ऽशृणवमादियुगे परमेश्वरः ॥ २६ ॥

ब्रह्मणाऽर्थित उवाच तं हरिः
किं तवेप्सितमहं करवाणि तत्।
ब्रह्मणोक्तमरविन्दलोचन!
त्वं प्रयाहि भुवि मानुषं वपुः।

तदा स्वप्नदृष्टिगतराघवं स्वाप्नज्ञानविषयं राघवं पश्यन्नेव बोधितो-विगतनिद्र आस्थित आसने भवेयमिति शेषः राघवं प्रत्याग्रहं विमुच्येत्यन्वयः ॥ २४ ॥

चिरागतं चिरेण वृद्धिं प्राप्तं राक्षसकुलं रक्ष एवं विरोधेन तत्कृतौ सकलमेव रक्षः कुलं नश्यति राघवे तद्विषये ॥ २५ ॥

विरोधमतिं विरोधसम्पादिकां मतिम् पुनरपि तद्विरोधान्निवृत्तये इतिहासान्तरमाह अहमिति मुनिरत्न नारदः आदियुगे सत्ययुगे ॥ २६ ॥

दशरथात्मजभावमञ्जसा
जहि रिपुं दशकन्धरं हरे ! ॥ २७ ॥
अतो न मानुषो रामः साक्षान्नारायणोऽव्ययः ।
मायामानुषवेशेन वनं यातोऽस्ति निर्भयः ॥ २८ ॥
भूभारहरणार्थाय गच्छ तात ! गृहं सुखम् ।
श्रुत्वा मारीचवचनं रावणः प्रत्यभाषत ॥ २९ ॥
परमात्मा यदा रामः प्रार्थितो ब्रह्मणा किल ।
मां हन्तुं मानुषो भूत्वा यत्नादिह समागतः ॥ ३० ॥
करिष्यत्यचिरादेव सत्यसङ्कल्प ईश्वरः ।
अतोऽहं यत्नतः सीतामानेष्याम्येव राघवात् ॥ ३१ ॥
वधे प्राप्ते रणे वीर ! प्राप्स्यामि परमं पदम् ।
यद्वा रामं रणे हत्वा सीतां प्राप्स्यामि निर्भयः ॥३२॥
अतोत्तिष्ठ महाभाग ! विचित्रमृगरूपधृक् ।
रामं सलक्ष्मणं शीघ्रमाश्रमादतिदूरतः ॥ ३३ ॥
आकृष्य गच्छ त्वं शीघ्रं सुखं तिष्ठ यथा पुरा ।
अतः परं चेद्यत्किञ्चिद्भाषसे मद्विभीषणम् ॥ ३४ ॥
हनिष्याम्यसिनाऽनेन त्वामत्रैव न संशयः ।
मारीचस्तद्वचः श्रुत्वा स्वात्मन्येवानुचिन्तयत् ॥ ३५ ॥

तद् वहेति शेषः मानुषं वपुर्धृत्वेति शेषः ॥ २७ ॥
दशरथात्मजभावं दशरथपुत्रत्वं प्राप्याञ्जसा शीघ्रमेव ॥ २८ । २९ । ३०
सत्यः सङ्कल्प इच्छा यस्य सः राघवात् राघवं वञ्चयित्वेत्यर्थः ॥ ३१ ॥
यद्वा रामाद्वधे प्राप्ते सति हे वीर ! अहं परमं पदं प्राप्स्यामि ॥३२॥
अतोत्तिष्ठ अत उत्तिष्ठ सन्धिरार्षः ॥ ३३ ॥
यथा पुरा यथा पूर्वम् आश्रमे सुखं तिष्ठ इत्यन्वयः ॥ ३४ । ३५ ॥

यदि मां राघवो हन्यात्तदा मुक्तो भवार्णवात् ।
मां हन्याद्यदि चेद्दुष्टस्तदा मे निरयो ध्रुवम् ॥ ३६ ॥
इति निश्चित्य मरणं रामादुत्थाय वेगतः ।
अब्रवीद्रावणं राजन्! करोम्याज्ञान्तव प्रभो ! ॥ ३७ ॥
इत्युक्त्वा रथमास्थाय गतौ रामाश्रमं प्रति ।
शुद्धजाम्बूनदप्रख्यो मृगोऽभूद्रौप्यबिन्दुकः ॥ ३८ ॥
रत्नशृङ्गो मणिखुरो नीलरत्नविलोचनः ।
विद्युत्प्रभो विमुग्धास्यो विचचार वनान्तरे ॥ ३९ ॥
रामाश्रमपदस्यान्ते सीतादृष्टिपथे चरन् ॥ ४० ॥

क्षणं च धावत्यवतिष्ठते क्षणं
समीपमागत्य पुनर्भयावृतः ।
एवं स मायामृगवेशरूपधृक्
चचार सीतां परिमोहयन् खलः ॥ ४१ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
अयोध्याकाण्डे
षष्ठः सर्गः

भवार्णवान्मुक्तो भविष्यामीति शेषः ध्रुवं निरयो भवेदिति शेषः ॥३६॥
रामान्मरणमेव सम्यगिति निश्चित्य ॥ ३७ ॥
गतौ मारीचरावणौ जाम्बूनदं सुवर्णम् ॥ ३८ ॥
विमुग्धं सुन्दरमास्यं यस्य सः ॥ ३९ ॥ ।४० ॥
पुनर्भयावृतः पलायते ॥ ४१ ॥

इति श्रीमत्सकलराजविमुकुटरत्नसमर्चितादिपि० श्रीरामवर्मणः
कृताध्यात्मरामायणे सेतौ अयोध्याकाण्डे
षष्ठः सर्गः ।

———

# अथ सप्तमः सर्गः ।

अथ रामोऽपि तत् सर्वं ज्ञात्वा रावणचेष्टितम् ।
उवाच सीतामेकान्ते शृणु जानकि ! मे वचः ॥ १ ॥
रावणो भिक्षुरूपेण आगमिष्यति तेऽन्तिकम् ।
त्वन्तु छायां त्वदाकारां स्थापयित्वोटजे विश ॥ २ ॥
अग्नावदृश्यरूपेण वर्षं तिष्ठ ममाज्ञया ।
रावणस्य बधान्ते मां पूर्ववत्प्राप्स्यसे शुभे ! ॥ ३ ॥
श्रुत्वा रामोदितं वाक्यं साऽपि तत्र तथाऽकरोत् ।
माया सीतां बहिः स्थाप्य स्वयमन्तर्दधेऽनले ॥ ४ ॥
मायासीता तदा पश्यन् मृगं मायाविनिर्मितम् ।
हसन्ती राममभ्येत्य प्रोवाच विनयान्विता ॥ ५ ॥
पश्य राम मृगं चित्रकानकं रत्नभूषितम् ।
विचित्रबिन्दुभिर्युक्तं चरन्तमकुतोभयम् ॥ ६ ॥
बद्धा देहि मम क्रीड़ामृगो भवतु सुन्दरः ।
तथेति धनुरादाय गच्छन् लक्ष्मणमब्रवीत् ॥ ७ ॥
रक्ष त्वमतियत्नेन सीतां मत्प्राणवल्लभाम् ।
मायिनः सन्ति विपिने राक्षसा घोरदर्शनाः ॥ ८ ॥
अतोऽत्रावहितः साध्वीं रक्ष सीतामनिन्दिताम् ।

अथेति ॥ १ ॥
त्वदाकारां तवाकार इवाकारो यस्यास्तां स्थापयित्वा बहिरिति शेषः
॥ २ । ३ । ४ । ५ । ६ ॥
अयं सुन्दरः क्रीड़ार्थो मृगः क्रीड़ामृगो भवत्वित्यन्वयः ॥ ७ ॥
मायिनः छद्मकर्त्तारः ॥ ८ ॥

लक्ष्मणो राममाहेदन्देवायं मृगरूपधृक् ।
मारीचोऽत्र न सन्देह एवंभूतो मृगः कुतः ॥ ९ ॥

श्रीराम उवाच ।

यदि मारीच एवायं तदा हन्मि न संशयः ।
मृगश्चेदानयिष्यामि सीताविश्रामहेतवे ॥ १० ॥
गमिष्यामि मृगं बद्ध्वा ह्यानयिष्यामि सत्वरः ।
त्वं प्रयत्नेन सन्तिष्ठ सीतासंरक्षणोद्यतः ॥ ११ ॥
इत्युक्त्वा प्रययौ रामो मायामृगमनुद्रुतः ।
माया यदाश्रया लोकमोहिनी जगदाकृतिः ॥ १२ ॥
निर्विकारश्चिदात्मापि पूर्णोऽपि मृगमन्वगात् ।
भक्तानुकम्पी भगवानिति सत्यं वचो हरिः ॥ १३ ॥
कर्तुं सीताप्रियार्थाय जानन्नपि मृगं ययौ ।
अन्यथा पूर्णकामस्य रामस्य विदितात्मनः ॥ १४ ॥
मृगेण वा स्त्रिया वापि किं कार्य्यं परमात्मनः ।
कदाचिद्दृश्यतेऽभ्यासे क्षणं धावति लीयते ॥ १५ ॥

अवहितः सावधानः मृगरूपधृगयं मारीच एव न मृगोऽस्ति न सन्देहोऽत्र एतदुद्देशेन मागाः एवंभूतो मृगः कुतो न कुत्रापीत्यर्थः ॥ ९ । १०

कुतो न अतोऽहमित्यादि गमिष्यामीत्यादेः ॥ ११ ॥

जगदाकृतिः जगद्रूपेण परिणम्यमाना ॥ १२ ॥

हरिः राम इति स्वभक्तवचः सत्यं कर्त्तुं मारीचं जानन्नपि सीता-प्रियार्थाय सीताप्रियरूपमर्थमुद्दिश्य मृगं ययौ अनुययावित्यर्थः अत्र मारीचस्य रामात्मरणं श्रेय इति जानतः स्वस्मिन् प्रेमवत्तया स्वभक्तत्वं निर्णीय तस्य तं मनोरथं पूरयितुं रावणस्य पूर्वविचारेण निर्णीतभक्तस्य मनोरथं पूरयितुं तदनुकम्पया गत इति तात्पर्य्यम् ॥ १३ । १४ ॥

दृश्यते च ततो दूरादेवं राममपाहरत्।
ततो रामोऽपि विज्ञाय राक्षसोऽयमिति स्फुटम् ॥१६॥
विव्याध शरमादाय राक्षसं मृगरूपिणम्।
पपात रुधिराक्तास्यो मारीचः पूर्वरूपधृक् ॥ १७ ॥
हा हतोऽस्मि महाबाहो! त्राहि लक्ष्मण! मां द्रुतम्।
इत्युक्त्वा रामवद्वाचा पपात रुधिराशनः ॥ १८ ॥
यन्नामाज्ञोऽपि मरणे स्मृत्वा तत्साम्यमाप्नुयात्।
किमुताग्रे हरिं पश्यन् तेनैव निहतोऽसुरः ॥ १९ ॥
तद्देहादुत्थितं तेजः सर्वलोकस्य पश्यतः।
राममेवाविशद्देवा विस्मयं परमं ययुः ॥ २० ॥
किं कर्म कृत्वा किं प्राप्तः पातकी मुनिहिंसकः?।
अथवा राघवस्यायं महिमा नात्र संशयः ॥ २१ ॥
रामबाणेन संविद्धः पूर्वं राममनुस्मरन्।
भयात् सर्वं परित्यज्य गृहवित्तादिकं च यत् ॥ २२ ॥

अभ्यासे समीपे ॥ १५ । १६ । १७ ॥

रामवद्वाचा रामवाक्तुल्यवाचा ॥ १८ ॥

स च भगवत्सायुज्यं प्राप्त इत्याह यदिति तं पश्यन् तेन हतोऽसुरः सायुज्यं प्राप्त इति किमु वक्तव्यमिति ॥ १९ ॥

तदेव स्पष्टमाह तद्देहादिति तस्य रामप्रवेशं दृष्ट्वा देवाः परमं विस्मयं ययुः राममहिमविषये इति शेषः ॥ २० ॥

तदेवाह किमिति किं प्राप्तः किं फलं प्राप्तः ॥ २१ ॥

रामभयादेव सर्वं गृहादिकं परित्यज्य पूर्वमपि रामं स्मरन् स्थित इति शेषः ॥ २२ ॥

हृदि रामं सदा ध्यात्वा निर्धूताशेषकल्मषः।
अन्ते रामेण निहतः पश्यन् राममवाप सः॥ २३॥
द्विजो वा राक्षसो वापि पापी वा धार्मिकोऽपि वा।
त्यजन् कलेवरं रामं स्मृत्वा याति परं पदम्॥ २४॥
इति तेऽन्योन्यमाभाष्य ततो देवा दिवं ययुः।
रामस्तच्चिन्तयामास म्रियमाणोऽसुराधमः॥ २५॥
हा लक्ष्मणेति मद्वाक्यमनुकुर्वन्ममार किम्?।
श्रुत्वा मद्वाक्यसदृशं वाक्यं सीताऽपि किं भवेत्?॥२६॥
इति चिन्तापरीतात्मा रामो दूरात्र्यवर्त्तत।
सीता तद्भाषितं श्रुत्वा मारीचस्य दुरात्मनः॥ २७॥
भीतातिदुःखसंविग्ना लक्ष्मणं त्विदमब्रवीत्।
गच्छ लक्ष्मण! वेगेन भ्राता तेऽसुरपीडितः॥ २८॥
हा लक्ष्मणेति वचनं भ्रातुस्ते न शृणोषि किम्?।
तामाह लक्ष्मणो देवि! रामवाक्यं न तद्भवेत्॥ २९॥
यः कश्चिद्राक्षसो देवि! म्रियमाणोऽब्रवीद्वचः।
रामस्त्रैलोक्यमपि यः क्रुद्धो नाशयति क्षणात्॥ ३०॥

तादृशः स तत्स्मृतिदूरीकृताशेषपापोऽन्ते रामेण निहतो रामं पश्यन् राममेव प्राप अत्र भगवद्भयमेव वैराग्यादिद्वारा नन्तकल्मषक्षिपा-धनसम्पादकं जातमिति सूचितम् सुव्यक्तमेतदेव सर्वसाधनमिति मन्त-व्यम्॥ २३। २४। २५॥

किं ममार एवं किमर्थं अतः किं भवेत् किमवस्था भवेत्॥ २६। २७॥

तदेव स्पष्टमाह भीता भीतेवेत्यर्थः यद्वा अस्या मायासीतात्वात्तत्काल-वैव वास्तवी भीतिः॥ २८॥

तत् रामवाक्यं न तस्य भयलेशाभावात्॥ २९॥

स कथं दीनवचनं भाषतेऽमरपूजितः।
क्रुद्धा लक्ष्मणमालोक्य सीता वाष्पविलोचना ॥ ३१ ॥
प्राह लक्ष्मण! दुर्बुद्धे भ्रातुर्व्यसनमिच्छसि।
प्रेषितो भरतेनैव रामनाशाभिकाङ्क्षिणा ॥ ३२ ॥
मान्नेतुमागतोऽसि त्वं रामनाश उपस्थिते।
न प्राप्स्यसे त्वं मामद्य पश्य प्राणांस्त्यजाम्यहम् ॥३३ ॥
न जानातीदृशं रामो त्वां भार्य्याहरणोद्यतम्।
रामादन्यं न स्प्रशामि त्वां वा भरतमेव वा ॥ ३४ ॥
इत्युक्त्वा बध्यमाना सा स्वबाहुभ्यां रुरोद ह।
तच्छ्रुत्वा लक्ष्मणः कर्णौ पिधायातीव दुःखितः ॥ ३५ ॥
मामेवं भाषसे चण्डि! धिक् त्वां नाशमुपैष्यसि।
इत्युक्त्वा वनदेवीभ्यः समर्प्य जनकात्मजाम् ॥ ३६ ॥
ययौ दुःखातिसंविग्नो राममेव शनैः शनैः।
ततोऽन्तरं समालोक्य रावणो भिक्षुवेशधृक् ॥ ३७ ॥
सीता समीपमगमत् स्फुरद्दण्डकमण्डलुः।
सीता तमवलोक्याशु नत्वा सम्पूज्य भक्तितः ॥ ३८ ॥
कन्दमूलफलादीनि दत्त्वा स्वागतमब्रवीत्।
मुने! भुंक्ष्व फलादीनि विश्रमस्व यथा सुखम् ॥ ३९ ॥

किन्तु म्रियमाणस्य राक्षसस्येदं वचः तदेवाह राम इति ॥ ३० । ३१ ॥
। ३२ ॥ ३३ ॥ ३४ ॥

स्वबाहुभ्यामात्मानं बध्यमाना ताड्यमाना रुरोद कर्णौ पिधाय ईदृशं पापमेषा वदतीति तस्य श्रवणायोग्यत्वात् कर्णपिधानम् ॥ ३५ ॥

नाशमदर्शनम् ॥ ३६ ॥ ३७ । ३८ । ३९ ॥

इदानीमेव भर्त्ता मे ह्यागमिष्यति ते प्रियम्।
करिष्यति विशेषेण तिष्ठ त्वं यदि रोचते॥ ४०॥

भिक्षुरुवाच।

का त्वं कमलपत्राक्षि! को वा भर्त्ता तवानघे!।
किमर्थमत्र ते वासो वने राक्षससेविते?॥ ४१॥
ब्रूहि भद्रे! ततः सर्वं स्ववृत्तान्तं निवेदय।

सीतोवाच।

अयोध्याधिपतिः श्रीमान् राजा दशरथो महान्।
तस्य ज्येष्ठः सुतो रामः सर्वलक्षणलक्षितः॥ ४२॥
तस्याहं धर्मतः पत्नी सीता जनकनन्दिनी।
तस्य भ्राता कनीयांश्च लक्ष्मणो भ्रातृवत्सलः॥ ४३॥
पितुराज्ञां पुरस्कृत्य दण्डके वस्तुमागतः।
चतुर्दशसमास्त्वां तु ज्ञातुमिच्छामि मे वद॥ ४४॥

भिक्षुरुवाच।

पौलस्त्यतनयोऽहं तु रावणो राक्षसाधिपः।
त्वत्कामपरितप्तोऽहं त्वां नेतुं पुरमागतः॥ ४५॥
मुनिवेशेन रामेण किं करिष्यसि मां भज।
भुंक्ष्व भोगान्मया सार्धं त्यज दुःखं वनोद्भवम्॥ ४६॥
श्रुत्वा तद्वचनं सीता भीता किञ्चिदुवाच तम्।

ते प्रियं तद्योग्यातिथ्यकरणेनेति शेषः॥ ४०। ४१॥
ततः स्ववृत्तान्तकथनानन्तरम्॥ ४२। ४३। ४४॥
त्वां पुरं स्वनगरं लङ्काख्यं नेतुमागत इत्यन्वयः॥ ४५। ४६॥

यद्येवं भाषसे मां त्वं नाशमिष्यसि राघवात् ॥ ५७ ॥
आगमिष्यति रामोऽपि क्षणं तिष्ठ सहानुजः ।
मां को धर्षयितुं शक्तो हरेर्भार्यां शशो यथा ॥ ४८ ॥
रामबाणैर्विभिन्नस्त्वं पतिष्यसि महीतले ।
इति सीतावचः श्रुत्वा रावणः क्रोधमूर्च्छितः ॥ ४९ ॥
स्वरूपं दर्शयामास महापर्वतसन्निभम् ।
दशास्यं विंशतिभुजं कालमेघसमद्युति ॥ ५० ॥
तद्दृष्ट्वा वनदेव्यश्च भूतानि च वितत्रसुः ।
ततो विदार्य्य धरणीं नखैरुद्धृत्य बाहुभिः ॥ ५१ ॥
तोलयित्वा रथे क्षिप्त्वा ययौ क्षिप्रं विहायसा ।
हा राम ! हा लक्ष्मणेति रुदन्ती जनकात्मजा ॥ ५२ ॥
भयोद्विग्नमना दीना पश्यन्ती भुवमेव सा ।
श्रुत्वा तत्क्रन्दितं दीनं सीतायाः पक्षिसत्तमः ॥ ५३ ॥
जटायुरुत्थितः शीघ्रं नागाग्रासीत्तातुण्डकः ।
तिष्ठ तिष्ठेति तं प्राह को गच्छति ममाग्रतः ॥ ५४ ॥
मुषित्वा लोकनाथस्य भार्य्यां शून्याद्वनालयात् ।
शुनको मन्त्रपूतं त्वं पुरोडाशमिवाध्वरे ॥ ५५ ॥

यत् यस्मात् एवं भाषसे ततो राघवान्नाशमेष्यसि ॥ ४७ ॥
सहानुजो रामः आगमिष्यतीत्यन्वयः हरेः सिंहस्य शशकः क्षुद्र-
मृगः ॥ ४८ । ४९ । ५० ॥
तत् रावणस्वरूपम् नखैर्धरणीं विदार्य्य भूसम्बद्धायाश्चालयितुमशक्य-
त्वात् बाहुभिरुद्धृत्य भुवः सकाशात् उपरि कृत्वा ॥ ५१ ॥
तोलयित्वा बाहुभ्यां भारमनुमीय ॥ ५२ ॥
पश्यन्ती आसीदिति शेषः ॥ ५३ । ५४ ॥

इत्युक्त्वा तीक्ष्णतुण्डेन चूर्णयामास तद्रथम् ।
बाहान् विभेद पादाभ्यां चूर्णयामास तद्धनुः ॥ ५६ ॥
ततः सीतां परित्यज्य रावणः खड्गमाददे ।
चिच्छेद पक्षौ सामर्षः पक्षिराजस्य धीमतः ॥ ५७ ॥
पपात किञ्चिच्छेषेण प्राणेन भुवि पक्षिराट् ।
पुनरन्यरथेनाशु सीतामादाय रावणः ॥ ५८ ॥
क्रोशन्ती रामरामेति त्रातारं नाधिगच्छती ।
हा राम! हा जगन्नाथ! मां न पश्यसि दुःखिताम्? ५९
रक्षसा नीयमानां त्वां भार्यां मोचय राघव! ।
हा लक्ष्मण महाभाग! त्राहि मामपराधिनीम् ॥ ६० ॥
वाक्शरेण हतस्त्वं मे क्षन्तुमर्हसि देवर! ।
इत्येवं क्रोशमानां तां रामागमनशङ्कया ॥ ६१ ॥
जगाम वायुवेगेन सीतामादाय सत्वरः ।
विहायसा नीयमाना सीता पश्यत्यधोमुखी ॥ ६२ ॥
पर्वताग्रस्थितान् पञ्च वानरान् वारिजानना ।
उत्तरीयार्द्धखण्डेन विमुच्याभरणादिकम् ॥ ६३ ॥

यज्ञपूतं पुरोडाशं लुप्त्वा शुनक इव लोकनायकस्य रामस्य भार्यां हृत्वा यमालयतः को गच्छतीत्यन्वयः ॥ ५५ । ५६ । ५७ ॥

अन्यरथेन मायाकल्पितेन सीतामादायागच्छदिति शेषः ॥ ५८ ॥

क्रोशन्ती सीता मां न पश्यसि मां किं न पश्यसीत्यर्थः एवं विललापेति शेषः ॥ ५९ । ६० । ६१ ॥

जगाम रावण इति शेषः ॥ ६२ ॥

आभरणादिकं विमुच्य उत्तरीयार्द्धखण्डेन बद्धा रामाय कथयन्त्विति मत्वा ते पिपेष अनेन स्त्रीचरित्रमाश्चर्यवद्भवता सूचिता ॥ ६३ । ६४ ॥

बद्ध्वा चिक्षेप रामाय कथयन्त्विति पर्वते ।
ततः समुद्रमुल्लङ्घ्य लङ्कां गत्वा स रावणः ॥ ६४ ॥
स्वान्तःपुरे रहस्ये तामशोकविपिनेऽक्षिपत् ।
राक्षसीभिः परिवृतां मातृबुद्ध्यानुपालयत् ॥ ६५ ॥

कृशातिदीना परिकर्मवर्जिता
दुःखेन शुष्यद्वदनातिविह्वला ।
हा राम! रामेति विलप्यमाना
सीता स्थिता राक्षसवृन्दमध्ये ॥ ६६ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे
सप्तमः सर्गः ।

रहस्ये एकान्ते गुप्तदेशे अनुपालयत् अन्वपालयदित्यर्थः अडभाव आर्षः ॥ ६५ ॥

परिकर्म शरीरसंस्कारादि ॥ ६६ ॥

इति श्रीमत्सकलराजविपश्चिच्चक्रवर्त्तिमहाराजाधि० श्रीरामवर्म्मणः
कृताध्यात्मरामायणे अरण्यकाण्डे
सप्तमः सर्गः ।

---

# अथ अष्टमः सर्गः

रामो मायाविनं हत्वा राक्षसं कामरूपिणम् ।
प्रतस्थे स्वाश्रमं गन्तुं ततो दूराद्ददर्श तम् ॥ १ ॥
आयान्तं लक्ष्मणं दीनं मुखेन परिशुष्यता ।
राघवश्चिन्तयामास स्वात्मन्येव महामतिः ॥ २ ॥
लक्ष्मणस्तन्न जानाति मायासीतां मया कृताम् ।
ज्ञात्वाप्येनं वञ्चयित्वा शोचामि प्राकृतो यथा ॥ ३ ॥
यद्यहं विरतो भूत्वा तूष्णीं स्थास्यामि मन्दिरे ।
तदा राक्षसकोटीनां वधोपायः कथं भवेत् ? ॥ ४ ॥
यदि शोचामि तां दुःखसन्तप्तः कामुको यथा ? ।
तदा क्रमेणानुचिन्वन् सीतां यास्येऽसुरालयम् ।
रावणं सकुलं हत्वा सीतामग्नौ स्थितां पुनः ॥ ५ ॥
मयैव स्थापितां नीत्वा याताऽयोध्यामतन्द्रितः ।
अहं मनुष्यभावेन जातोऽस्मि ब्रह्मणार्थितः ॥ ६ ॥

राम इति तं सीतारक्षकत्वेन स्वयं स्थापितं लक्ष्मणमित्यर्थः ॥ १ ॥

स्वात्मनि स्वचित्ते ॥ २ ॥

ननु लक्ष्मणो यद्यपि न जानाति तथापि त्वं जानास्येव तत्राह ज्ञात्वा-पीति ॥ ३ ॥

तादृशशोकफलमाह यद्यहमिति ॥ ४ ॥

आसुरालयं लङ्काम् ( यास्ये इति आत्मनेपदमार्षम् ) ॥ ५ ॥

नीत्वा प्राप्य अयोध्यां याता गन्ता एतत् किमर्थं मानुषोपमं तत्राह ब्रह्मणा प्रार्थितोऽहं मनुष्यभावेन जातोऽस्मि एवञ्च तद्भावसंरक्षणार्थमेतदिति भावः ॥ ६ ॥

मनुष्यभावमापन्नः किञ्चित्कालं वसामि कौ ।
ततो मायामनुष्यस्य चरितं मेऽनुशृण्वताम् ॥ ७ ॥
मुक्तिः स्यादप्रयासेन भक्तिमार्गानुवर्त्तिनाम् ।
निश्चित्यैवं तदा दृष्ट्वा लक्ष्मणं वाक्यमब्रवीत् ॥ ८ ॥
किमर्थमागतोऽसि त्वं सीतां त्यक्त्वा मम प्रियाम् ।
नीता वा भक्षिता वापि राक्षसैर्जनकात्मजा ॥ ९ ॥
लक्ष्मणः प्राञ्जलिः प्राह सीताया दुर्वचो वदन् ।
हा ! लक्ष्मणेति वचनं राक्षसोक्तं श्रुतं तया ॥ १० ॥
त्वद्वाक्यसदृशं श्रुत्वा मां गच्छेति त्वराब्रवीत् ।
रुदन्ती सा मया प्रोक्ता देवि ! राक्षसभाषितम् ।
नेदं रामस्य वचनं स्वस्था भव शुचिस्मिते ! ॥ ११ ॥
इत्येवं सान्त्विता साध्वी मया प्रोवाच मां पुनः ।
यदुक्तं दुर्वचो राम ! न वाच्यं पुरतस्तव ॥ १२ ॥
कर्णौ पिधाय निर्गत्य यातोऽहं त्वां समीक्षितुम् ।
रामस्तु लक्ष्मणं प्राह तथाप्यनुचितं कृतम् ॥ १३ ॥
त्वया स्त्रीभाषितं सत्यं कृत्वा त्यक्त्वा शुभाननाम् ।
नीता वा भक्षिता वापि राक्षसैर्नात्र संशयः ॥ १४ ॥

ननु रावणवधोत्तरं पुनरयोध्यागमनेन तत्र स्थानेन वा न फलं तत्राह मनुष्यभावमिति मद्भक्तमुक्तिरेव तत्फलमिति भावः ॥ ७ । ८ ॥

नीता वेति आवयोरसान्निध्ये त्वय्येकाकिन्या प्राप्नोतीति भावः ॥ ९ । १० । ११ ॥

मया सान्त्विता मां प्रोवाचेत्यन्वयः यदुक्तं सीतयेति शेषः ॥ १२ ॥

तथापि स्त्रीस्वभावादेवं तदुक्तावपि ॥ १३ ॥

सत्यं ज्ञात्वा सत्यं मत्वेत्यर्थः यत् शुभाननां त्यक्त्वा आगमनं तदनुचितं कृतमित्यन्वयः ॥ १४ । १५ ॥

इति चिन्तापरो रामः स्वाश्रमं त्वरितो ययौ ।
तत्रादृष्ट्वा जनकजां विललापातिदुःखितः ॥ १५ ॥
हा प्रिये ! क्व गतासि त्वं ? नासि पूर्ववदाश्रमे ।
अथ वा मद्विमोहार्थं लीलया क्व विलीयसे ? ॥ १६ ॥
इत्याचिन्वन्वनं सर्वं नापश्यत् जानकीं तदा ।
वनदेव्यः कुतः सीतां ब्रुवन्तु मम वल्लभाम् ॥ १७ ॥
मृगाश्च पक्षिणो वृक्षा ! दर्शयन्तु ( १ ) मम प्रियाम् ।
इत्येवं विलपन्नेव रामः सीतां न कुत्रचित् ॥ १८ ॥
सर्वज्ञः सर्वथा क्वापि नापश्यद्रघुनन्दनः ।
आनन्दोऽप्यन्वशोचत्तां अचलोऽप्यनुधावति (२) ॥ १९ ॥
निर्ममो निरहङ्कारोऽप्यखण्डानन्दरूपवान् ।
मम जायेति सीतेति विललापातिदुःखितः ॥ २० ॥
एवं मायामनुचरन्नसक्तोऽपि रघूत्तमः ।

मद्विमोहार्थं मम मोहार्थं क्व कुत्रचित् विलीयसे किमित्यर्थः ॥ १६ ॥

आचिन्वन् अन्वेषयन् कुतः कुत्रेत्यर्थः क्वचित् कुत्रेत्येव पाठः ॥ १७ ॥

मृगा इत्यादि सम्बोधनानि न कुत्रचित् ददर्शेति शेषः ॥ १८ ॥

सर्वथा सर्वप्रकारेण पश्यन्नपि क्वापि देशे नापश्यत् यदानन्दस्वरूपः सर्वशक्तिसम्पन्नो वा तामन्वशोचत्तदचलोऽप्यनुधावति तत्कर्तृकः शोकोऽचल-कर्तृकं धावनम् महत् तदाश्चर्यमिति भावः ॥ १९ ॥

निर्ममत्वादिगुणोऽपि मम जायेति विललाप मायाङ्गीकृतमनुष्यत्वस्य लोकान् सत्यत्वेन प्रत्याययितुमिति भावः अतिदुःखितः स इव ॥ २० ॥

---

(१) शंसयन्तु इति वा पाठः ।

(२) असक्तोरघुनन्दन इत्यपि पाठः ।

आसक्त इव मूढ़ानां भाति तत्त्वविदां नहि ॥ २१ ॥
एवं विचिन्वन् सकलं वनं रामः सलक्ष्मणः ।
भग्नं रथं छत्रचापं कूबरं पतितं भुवि ॥ २२ ॥
दृष्ट्वा लक्ष्मणमाहेदं पश्य लक्ष्मण ! केनचित् ।
नीयमानां जनकजां तं जित्वान्यो जहार ताम् ॥ २३ ॥
ततः कश्चिद्दूरे भागं गत्वा पर्वतसन्निभम् ।
रुधिराक्तवपुर्दृष्ट्वा रामो वाक्यमथाब्रवीत् ॥ २४ ॥
एष वै भक्षयित्वा तां जानकीं शुभदर्शनाम् ।
शेते विविक्तेऽतिदृप्तः पश्य हन्मि निशाचरम् ॥ २५ ॥
चापमानय शीघ्रं मे बाणञ्च रघुनन्दन ! ।
तच्छ्रुत्वा रामवचनं जटायुः प्राह भीतवत् ॥ २६ ॥
मां न मारय भद्रं ते म्रियमाणं स्वकर्मणा ।
अहं जटायुस्ते भार्य्याहारिणं समनुद्रुतः ॥ २७ ॥
रावणं तव युद्धं मे बभूवारिविमर्द्दन ! ।
तस्य वाहान् रथं चापं छित्वाहं तेन घातितः ॥ २८ ॥
पतितोऽस्मि जगन्नाथ ! प्राणांस्त्यक्ष्यामि पश्य माम् ।
तच्छ्रुत्वा राघवो दीनं कण्ठप्राणं ददर्श ह ॥ २९ ॥

तदेवाह एवमिति असक्तोऽपि आसक्तिरहितोऽपि ॥ २१ ॥
छत्रचापमित्यत्र भग्नमित्यनुकर्षः ॥ २२ ॥
नीयमानां जनकजां दृष्ट्वा अन्यः तं जित्वा तां जहार तच्चिह्नमिदं पश्येत्यन्वयः ॥ २३ ॥
पर्वतसन्निभं तत्सदृशं रुधिराक्तवपुरिति कर्मधारयः ॥ २४ ॥
विविक्ते एकान्ते ॥ २५ । २६ । २७ ॥

हस्ताभ्यां संस्पृशन् रामो दुःखाश्रुवृतलोचनः ॥ ३० ॥
जटायो ! ब्रूहि मे भार्य्या केन नीता शुभानना।
मत्कार्य्यार्थं हतोऽसि त्वमतो मे प्रियबान्धवः ॥ ३१ ॥
जटायुः सन्नया वाचा वक्त्राद्रक्तं समुद्वमन्।
उवाच रावणो राम ! राक्षसो भीमविक्रमः ॥ ३२ ॥
आदाय मैथिलीं सीतां दक्षिणाभिमुखो ययौ।
इतो वक्तुं न मे शक्तिः प्राणांस्त्यक्ष्यामि तेऽग्रतः ॥ ३३ ॥
दिष्ट्या दृष्टोऽसि राम ! त्वं म्रियमाणेन मेऽनघ !।
परमात्मासि विष्णुस्त्वं मायामनुजरूपधृक् ॥ ३४ ॥
अन्तकालेऽपि दृष्ट्वा त्वां मुक्तोऽहं रघुसत्तम !।
हस्ताभ्यां स्पृश मां राम ! पुनर्यास्यामि ते पदम् ॥ ३५ ॥
तथेति रामः पस्पर्श तदङ्गं पाणिना स्मयन्।
ततः प्राणान् परित्यज्य जटायुः पतितो भुवि ॥ ३६ ॥
रामस्तमनुशोचित्वा बन्धुवत् साश्रुलोचनः।
लक्ष्मणेन समानाय्य काष्ठानि प्रददाह तम् ॥ ३७ ॥
स्नात्वा दुःखेन रामोऽपि लक्ष्मणेन समन्वितः।
हत्वा वने मृगं तत्र मांसखण्डान् समन्ततः ॥ ३८ ॥
शाद्वले प्राक्षिपद्रामः पृथक् पृथगनेकधा।

रावणमिति पूर्णान्वयि छित्वा स्थितोऽहमित्यन्वयः ॥ २८ । २९ । ३० । ३१ । ३२ । ३३ ॥

म्रियमाणेन मे मयेत्यर्थः ॥ ३४ ॥

पुनः स्पृशेत्यन्वयः येन स्पर्शेन ते पदं यास्यामीत्यन्वयः ॥ ३५ ॥

स्मयन् पक्षिणोऽप्येवं पराक्रम एवं ज्ञानमित्याश्चर्य्यवान् ॥ ३६ ॥

बन्धुवदनुशोचित्वा अनेन तिरश्चामपि प्रीत्या दाहौचित्यमिति दर्शितम् ॥ ३७ । ३८ ॥

भक्षन्तु पक्षिणः सर्वे हृष्टो भवतु पक्षिराट्॥ ३९॥
इत्युक्त्वा राघवः प्राह जटायो! गच्छ मत्पदम्।
मत्सारूप्यं भजस्वाद्य सर्वलोकस्य पश्यतः॥ ४०॥
ततोऽनन्तरमेवासौ दिव्यरूपधरः शुभः।
विमानवरमारुह्य भास्वरं भानुसन्निभम्॥ ४१॥
शङ्खचक्रगदापद्मकिरीटवरभूषणैः।
द्योतयन् स्वप्रकाशेन पीताम्बरधरोऽमलः॥ ४२॥
चतुर्भिः पार्षदैर्विष्णोस्तादृशैरभिपूजितः।
स्तूयमानो योगिगणै राममाभाष्य सत्वरः।
कृताञ्जलिपुटो भूत्वा तुष्टाव रघुनन्दनम्॥ ४३॥

जटायुरुवाच।

अगणितगुणमप्रमेयमाद्यं
सकलजगत्स्थितिसंयमादिहेतुम्।
उपरमपरमं परात्मभूतं
सततमहं प्रणतोऽस्मि रामचन्द्रम्॥ ४४॥
निरवधिसुखमिन्दिराकटाक्षं
क्षपितसुरेन्द्रचतुर्मुखादिदुःखम्।

भक्षन्तु भक्षयन्तु॥ ३९॥
इत्युक्त्वा इति सङ्कल्प्य॥ ४०। ४१॥
द्योतयन् आकाशमिति शेषः॥ ४२॥
राममाभाष्य रामं सम्बोध्य॥ ४३॥
अगणितगुणम् अनन्तशक्तित्वात् अप्रमेयं देशकालापरिच्छेद्यम् संयमो नाशः आदिना जन्मोपरमः शान्तिरेव परमा शोभा यस्मिन् तम्॥ ४४॥
निरवधिसुखं तदतिरिक्तेषु अन्यान्येषु सुखं सावधिकमिति भावः इन्दिरा

नरवरमनिशं नतोऽस्मि रामं
वरदमहं वरचापबाणहस्तम् ॥ ४५ ॥
त्रिभुवनकमनीयरूपमीड्यं
रविशतभासुरमीहितप्रदानम् ।
शरणमनिशं सुरागमूले
कृतनिलयं रघुनन्दनं प्रपद्ये ॥ ४६ ॥
भवविपिनदवाग्निनामधेयं
भवमुखदैवतदैवतं दयालुम् ।
दनुजपतिसहस्रकोटिनाशं
रवितनयासदृशं हरिं प्रपद्ये ॥ ४७ ॥
अविरतभवभावनातिदूरं
भवविमुखैर्मुनिभिः सदैव दृश्यम् ।
भवजलधिसुतारणाङ्घ्रिपोतं
शरणमहं रघुनन्दनं प्रपद्ये ॥ ४८ ॥
गिरिशगिरिसुतामनोनिवासं
गिरिवरधारिणमीहिताभिरामम् ।

लक्ष्मीसत्कटाक्षा यस्मिंस्तं सुरेन्द्रादिसेवा प्रीतेन येन तदीयदुःखं क्षपितमित्यर्थः ॥ ४५ ॥

ईहितप्रदानं भक्तेहितदानस्वभावम् सुरागमूले शोभनो रागः प्रीतिस्तस्य मूलमाश्रयीकृतं तत्र कृतस्थानम् ॥ ४६ ॥

भवविपिनस्य दवाग्निभूतं नामधेयं यस्य तम् रवितनयया यमुनया तत्सदृशं तद्वर्णम् ॥ ४७ ॥

अविरतं भवस्य संसारस्य भावना येषां तेषामतिदूरः भवजलधेः सुतारणोऽङ्घ्रिरूपः पोतो यस्य तम् ॥ ४८ ॥

गिरिशः शिवः गिरिसुता पार्वती तयोर्मनसि निवासो यस्य तम्

सुरवरदनुजेन्द्रसेविताङ्घ्रिं
सुरवरदं रघुनायकं प्रपद्ये ॥ ४९ ॥
परधनपरदारवर्ज्जितानां
परगुणभूतिषु तुष्टमानसानाम्
परहितनिरतात्मनां सुसेव्यं
रघुवरमम्बुजलोचनं प्रपद्ये ॥ ५० ॥
स्मितरुचिरविकासिताननाब्ज-
मतिसुलभं सुरराजनीलनीलम्।
सितजलरुहचारुनेत्रशोभं
रघुपतिमीशगुरोर्गुरुं प्रपद्ये ॥ ५१ ॥
हरिकमलजशम्भुरूपभेदात्
त्वमिह विभासि गुणत्रयानुवृत्तः।
रविरिव जलपूरितोदपात्रे-
ष्वमरपतिस्तुतिपात्रमीशमीडे ॥ ५२ ॥
रतिपतिशतकोटिसुन्दराङ्गं
शतपथगोचरभावनाविदूरम्।

गिरिवरधारिणं स्वयमेव कृष्णो भावीति भावः ईहितैश्चेष्टितैरभिराम-मभिरामचेष्टितमिति यावत् सुराणां वरदम् ॥ ४९ ॥

परगुणादिषु तुष्टमीर्ष्यारहितं मानसं येषाम् ॥ ५० ॥

स्मितेनेषद्धासेन रुचिरं विकासितमाननाब्जं यस्य। सुरराजनील इन्द्र-नीलमणिः ईशगुरोर्ब्रह्मणः ॥ ५१ ॥

यथैकोऽपि रविरुदपात्रेष्वनेक इव एवमेकोऽपि त्वं गुणभेदाद्ब्रह्मादि-संज्ञकः अमरपतिरिन्द्रस्तस्य स्तुतिपात्रं तत्कर्तृकस्तुतिविषयमित्यर्थः ॥५२॥

रतिपतिः कामः ततोऽपि शतकोटिगुणं सुन्दरमङ्गं यस्य शतपथो

यतिपतिहृदये सदा विभातं
रघुपतिमार्त्तिहरं प्रभुं प्रपद्ये ॥ ५३ ॥
इत्येवं स्तुवतस्तस्य प्रसन्नोऽभूद्रघूत्तमः।
उवाच गच्छ भद्रं ते मम विष्णोः परं पदम् ॥ ५४ ॥
शृणोति य इदं स्तोत्रं लिखित्वा नियतः पठेत्।
स याति मम सारूप्यं मरणे मत्स्मृतिं लभेत् ॥ ५५ ॥
इति राघवभाषितं तदा श्रुतवान् हर्षसमाकुलो द्विजः।
रघुनन्दनसाम्यमास्थितः प्रययौ ब्रह्मसुपूजितं पदम् ॥ ५६ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
अरण्यकाण्डेऽष्टमः सर्गः।

माध्यन्दिनानां ब्राह्मणं तद्रोचरया। तत्रोक्तप्रकारेण भावनया ऽविदूरम् अध्यमिति यावत् तदेवाह यतिपतीत्यादि ॥ ५३। ५४। ५५ ॥
ब्रह्मसुपूजितं पदं वैकुण्ठम् ॥ ५६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपद्मपादप्रशिष्यश्रीरामवर्मणः कृतौ
श्रीमदध्यात्मरामायणे अरण्यकाण्डे
अष्टमः सर्गः।

---

# अथ नवमः सर्गः।

ततो रामो लक्ष्मणेन जगाम विपिनान्तरम्।
पुनर्दुःखं समाश्रित्य सीतान्वेषणतत्परः॥ १॥
तत्राद्भुतसमाकारो राक्षसः प्रत्यदृश्यत।
वक्षस्येव महावक्त्रश्चक्षुरादिविवर्जितः॥ २॥
बाहू योजनमात्रेण व्यापृतौ तस्य रक्षसः।
कबन्धो नाम दैत्येन्द्रः सर्वसत्त्वविहिंसकः॥ ३॥
तद्बाह्वोर्मध्यदेशे तौ चरन्तौ रामलक्ष्मणौ।
ददर्शतुर्महासत्त्वं तद्बाहुपरिवेष्टितौ॥ ४॥
रामः प्रोवाच विहसन् पश्य लक्ष्मण! राक्षसम्।
शिरःपादविहीनोऽयं यस्य वक्षसि चाननम्॥ ५॥
बाहुभ्यां लभ्यते यद्यत्तत्तद्भक्षन् स्थितो ध्रुवम्।
आवामप्येतयोर्बाह्वोर्मध्ये संकलितौ ध्रुवम्॥ ६॥
गन्तुमन्यत्र मार्गो न दृश्यते रघुनन्दन!।
किं कर्त्तव्यमितोऽस्माभिरिदानीं? भक्षयेत् स नौ॥७॥
लक्ष्मणस्तमुवाचेदं किं विचारेण? राघव!।
आवामेकैकमव्यग्रौ छिन्द्यावं रक्षोभुजौ ध्रुवम्॥ ८॥

विपिनान्तरमन्यद्वनं दुःखं समाश्रित्याभिनीय॥ १॥
अद्भुतसमाकारः आश्चर्याकृतिः महद्वक्त्रं यस्य सः॥ २॥
व्यापृतौ व्यापारवन्तौ॥ ३।४।५॥
संकलितौ प्राप्तौ॥ ६॥
नौ आवाम्॥ ७॥
छिन्द्यावं छिन्द्याव इत्यर्थः आर्षमेतद्वचनम्॥ ८।९॥

तथेति रामः खड्गेन भुजं दक्षिणमच्छिनत्।
तथैव लक्ष्मणो वामं चिच्छेद भुजमञ्जसा॥९॥
ततोऽतिविस्मितो दैत्यः कौ युवां सुरपुङ्गवौ।
मद्बाहुच्छेदे दक्षौ लोके दिवि देवेषु वा सुराः॥१०॥
ततोऽब्रवीत्कबन्धं च रामो राजीवलोचनः।
अयोध्याधिपतिः श्रीमान् राजा दशरथो महान्॥११॥
रामोऽहं तस्य पुत्रोऽसौ भ्राता मे लक्ष्मणः सुधीः।
मम भार्या जनकजा सीता त्रैलोक्यसुन्दरी॥१२॥
आवां मृगयया यातौ तदा केनापि रक्षसा।
नीतां सीतां विचिन्वन्तौ चागतौ घोरकानने॥१३॥
बाहुभ्यां वेष्टितावत्र तव प्राणपरिप्सया।
छिन्नौ तव भुजौ त्वं च को वा विकटरूपधृक्?॥१४॥

कबन्ध उवाच।

धन्योऽहं यदि राम त्वमागतोऽसि ममान्तिकम्।
पुरा गन्धर्वराजोऽहं रूपयौवनदर्पितः॥१५॥
विचरन् लोकमखिलं वरनारीमनोहरः।
तपसा ब्रह्मणो लब्धमवध्यत्वं रघूत्तम!॥१६॥

मद्बाहुच्छेदसमर्थौ। लोके भूर्लोके सुराः- अलक्ष्यत्रिकावेष वर्णाः दिवि स्वर्गलोकेषु देवेष्वपि यावभासितौ तद्वर्णात्किमाव्य वा मनः॥१०।११॥

अहं रामस्तस्य पुत्र इत्यन्वयः॥१२॥

मृगयया। अन्वयाविमता यातौ कूरं मासाविवक्षयः रक्षसा नीतां सीतां विचिन्वन्तावित्यन्वयः॥१३॥

अत्र तव बाहुभ्यां वेष्टितौ जातौ प्राणपरिरक्षया तव भुजौ छिन्नौ यद्वा तात्त्वज्ञा यहकानां प्रच्छति त्वं च क इति॥१४।१५॥

अष्टावक्रं मुनिं दृष्ट्वा कदाचिदहसं पुरा ।
क्रुद्धोऽसावाह दुष्ट ! त्वं राक्षसो भव दुर्मते ! ॥ १७ ॥
अष्टावक्रः पुनः प्राह वन्दितो मे दयापरः ।
शापस्यान्तञ्च मे प्राह तपसा द्योतितप्रभः ॥ १८ ॥
त्रेतायुगे दाशरथिर्भूत्वा नारायणः स्वयम् ।
आगमिष्यति ते बाहू छिद्येते योजनायतौ ॥ १९ ॥
तेन शापाद्विनिर्मुक्तो भविष्यसि यथा पुरा ।
इति शप्तोऽहमद्राक्षं राक्षसीं तनुमात्मनः ॥ २० ॥
कदाचिद्देवराजानमभ्यद्रवमहं रुषा ।
सोऽपि वज्रेण मां राम ! शिरोदेशेऽभ्यताड़यत् ॥ २१ ॥
तदा शिरो गतं कुक्षिं पादौ च रघुनन्दन ! ।
ब्रह्मदत्तवरान्मृत्युर्नाभून्मे वज्रताड़नात् ॥ २२ ॥
मुखाभावे कथं जीवेत् ? अयमित्यमराधिपम् ।
ऊचुः सर्वे दयाविष्टा मां विलोक्यास्यवर्जितम् ॥ २३ ॥
ततो मां प्राह मघवा जठरे ते मुखं भवेत् ।
बाहू ते योजनायामौ भविष्यत इतो व्रज ॥ २४ ॥
इत्युक्तोऽत्र वसन्नित्यं बाहुभ्यां वनगोचरान् ।

वरनार्थैः उत्तमस्त्रिय: अवध्यत्वं वध्यं भवेति शेषः ॥ १६ । १७ । १८ ॥

तेन यदा ते बाहू छिद्येते तदा शापाद्विनिर्मुक्तो भविष्यसीति सम्बन्धः ॥ १९ । २० ॥

कदाचिदिति राक्षसतनुप्राप्त्यनन्तरमिति शेषः ॥ २१ ॥

तदा वज्रेण ताड़ने शिरः कुक्षिं गतम् पादौ च गतौ गतावित्यनुकर्षः ॥ २२ । २२ ॥

इतो व्रजेति अरण्यामेव रिक्षमिति शेषः ॥ २४ ॥

भक्षयाम्यधुना बाहू खण्डितौ मे त्वयानघ ! ॥ २५ ॥
इतःपरं मां श्वभ्रस्थे निक्षिप्याग्नीन्धनावृते ।
अग्निना दह्यमानोऽहं त्वया रघुकुलोत्तम ! ॥ २६ ॥
पूर्वरूपमनुप्राप्य भार्य्यामार्गं वदामि ते ।
इत्युक्तो लक्ष्मणेनाशु श्वभ्रं निर्माय तत्र तम् ॥ २७ ॥
निक्षिप्य प्रादहत्काष्ठैस्ततो देहात् समुत्थितः ।
कन्दर्पसदृशाकारः सर्वाभरणभूषितः ॥ २८ ॥
रामं प्रदक्षिणं कृत्वा साष्टाङ्गं प्रणिपत्य च ।
कृताञ्जलिरुवाचेदं भक्तिगद्गदया गिरा ॥ २९ ॥

गन्धर्व उवाच ।

स्तोतुमुत्सहते मेऽद्य मनो रामातिसम्भ्रमात् ।
त्वामनन्तमनाद्यन्तं मनोवाचामगोचरम् ॥ ३० ॥
सूक्ष्मं ते रूपमव्यक्तं देहद्वयविलक्षणम् ।
दृग्रूपमितरत् सर्वं दृश्यं जडमनात्मकम् ।

बाहुभ्यां च्छेदित्वेति शेषः ॥ २५ ॥

श्वभ्रस्थे गर्त्तोपरिभागे अग्नीन्धनावृते अग्नियुक्तेन्धनावृते ॥ २६ ॥

भार्य्यामार्गं भार्य्यालाभोपायम् ॥ २७ ॥

ततो देहात् दह्यमानदेहादित्यर्थः कन्दर्पसदृशः पुरुष उत्थित इत्यर्थः ॥ २८ ॥ २९ ॥

अतिसम्भ्रमात् अत्यादरात् अनन्तं देशापरिच्छेद्यम् अनाद्यन्तं आद्यन्तरहितं तेन कालापरिच्छेद्यत्वमुक्तम् मनोवाचामिति 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुतेः ॥ ३० ॥

देहद्वयं हिरण्यगर्भविराड्रूपं स्थूलं सूक्ष्मं च ततो विलक्षणं रूपं केवलज्ञानरूपम् ते सूक्ष्मं रूपं तदव्यक्तं सर्वथा योगिभिर्दुर्ज्ञेयम् इतरत्

तत्कथं त्वां विजानीयाद्व्यतिरिक्तं मनः प्रभो ! ॥ २१ ॥
बुद्ध्यात्माभासयोरैक्यं जीव इत्यभिधीयते ।
बुद्ध्यादिसाक्षी ब्रह्मैव तस्मिन्निर्विषयेऽखिलम् ॥ २२ ॥
आरोप्यतेऽज्ञानवशान्निर्विकारेऽखिलात्मनि ।
हिरण्यगर्भस्ते सूक्ष्मं देहं स्थूलं विराट् स्मृतम् ॥ २३ ॥
भावनाविषयो राम ! सूक्ष्मं ते ध्यातृमङ्गलम् ।
भूतं भव्यं भविष्यच्च यत्रेदं दृश्यते जगत् ॥ २४ ॥
स्थूलेऽण्डकोशे देहे ते महदादिभिरावृते ।
सप्तभिरुत्तरगुणैः वैराजो धारणाश्रयः ॥ २५ ॥

यत्रं जडं यतो जगज्जडं दृश्यत्वादित्यनुमानमनेन सूचितम् विस्तरस्त्वस्मद्गुरुभिर्व्यासवृत्तौ प्रपञ्चितः व्यतिरिक्तं जडत्वात्त्वत्तो भिन्नं मनस्त्वां कथं जानीयात् इत्यर्थः ॥ २१ ॥

बुद्धिचित्तं तदात्माभासः आत्मप्रतिबिम्बस्तयोरैक्यं भेदाग्रहणात्तत्तद्विषयो जीवः बुद्ध्यादीनां जडानां साक्षी अन्तर्यामी ब्रह्मैव शुद्धं चैतन्यं यतो निर्विषये वाङ्मनसोरगोचरे तस्मिन्निदमखिलं जगत् ॥ २२ ॥

अज्ञानवशान्निर्विकारे त्वयि आरोप्यते हिरण्यगर्भः सूक्ष्मदेहम् सकललिङ्गदेहसमष्टिरूपत्वात्तस्येति भावः सकलस्थूलसमष्टिर्विराडिति भावः ॥ २३ ॥

ध्यातॄणां मङ्गलं स्वपदप्रदत्वात् अतस्ते सूक्ष्मं भावनाविषयं हृदयपुण्डरीकादौ ध्येयमिति यावत् यद्विषयभावनायां सिद्धायां भूतभविष्यद्वर्त्तमानसर्वपदार्थज्ञानं सम्भवतीत्याह भूतमित्यादि भव्यं वर्त्तमानम् ॥ २४ ॥

अण्डकोशरूपो भगवतो विराट् देहस्तत्र महदादिभिरावृते इति अत्रेयं पौराणिकसाङ्ख्यसम्मता प्रक्रिया स्वव्याप्याहङ्कारावरणाद्दशगुणितं महत्तत्त्वं बाह्यमावरणम् तन्मध्येऽहङ्कारावरणं तदपि स्वव्याप्यव्योमावरणाद्दशगुणितम् तन्मध्ये व्योमावरणं तस्य दशगुणितस्य मध्ये वाय्वावरणम् तस्यापि दशगुणितस्य मध्ये तैजसावरणम् तेजसो दशगुणि-

चक्षुस्ते सविता राम! मनश्चन्द्र उदाहृतः (१)।
भ्रूभङ्ग एव कालस्ते बुद्धिस्ते वाक्पतिर्भवेत् ॥ ४१ ॥
रुद्रोऽहङ्काररूपस्ते वाचश्छन्दांसि तेऽव्यय!।
यमस्ते दंष्ट्रदेशस्थो नक्षत्राणि द्विजालयः ॥ ४२ ॥
हासो मोहकरी माया सृष्टिस्तेऽपाङ्गमोक्षणम्।
धर्मः पुरस्तेऽधर्मश्च पृष्ठभाग उदीरितः ॥ ४३ ॥
निमिषोन्मेषणे रात्रिर्दिवा चैव रघूत्तम!।
समुद्राः सप्त ते कुक्षि र्नाड्यो नद्यस्तव प्रभो! ॥ ४४ ॥
रोमाणि वृक्षौषधयो रेतो वृष्टिस्तव प्रभो!।
महिमा ज्ञानशक्तिस्ते एवं स्थूलं वपुस्तव ॥ ४५ ॥
यदस्मिन्स्थूलरूपे ते मनः संधार्य्यते नरैः।
अनायासेन मुक्तिः स्यादतोऽन्यन्नहि किञ्चन ॥ ४६ ॥
अतोऽहं राम! रूपन्ते स्थूलमेवानुभावये।
यस्मिन्ध्याते प्रेमरसः सरोमपुलको भवेत् ॥ ४७ ॥

कालो निमेषादिर्हि यदधीनः वाक्पतिर्बृहस्पतिः ॥ ४१ ॥

अहङ्कारचित्तं छन्दांसि वेदास्ते वाचः वाणिन्यर्थः दंष्ट्रदेशे तु दंष्ट्र-देशस्य इत्यर्थः स्थूल आर्षः द्विजालयो दन्तपङ्क्तयः ॥ ४२ ॥

मोहकरी सकलजनमोहकरी ॥ ४३ ॥

निमिषो रात्रिरुन्मेषणं दिवा सप्तसमुद्राः कुक्षिस्तव नद्यः तव नाड्यः ॥ ४४ ॥

वृष्टिस्तव रेतः ज्ञानशक्तिस्तव महिमा सर्वत आधिक्यम् तत्तु ज्ञानाक-शक्तिर्नान्यस्येति भावः ॥ ४५ ॥

अत आधिक्यमन्यत्किञ्चन नहि किमपि नेत्यर्थः ॥ ४६ ॥

सरोमपुलक इत्यनेन प्रेमरसस्य लक्षणमुक्तम् येन गात्रे सरोमपुलकता क

(१) उदीरित इति वा पाठः।

तदैव मुक्तिः स्याद्राम ! यदा ते स्थूलभावकः ।
तदप्यास्तां तवैवाहमेतद्रूपं विचिन्तये ॥ ४८ ॥
धनुर्बाणधरं श्यामं जटावल्कलभूषितम् ।
अपीच्यवयसं सीतां विचिन्वन्तं सलक्ष्मणम् ॥ ४९ ॥
इदमेव सदा मे स्यान्मानसे रघुनन्दन ! ।
सर्वज्ञः शङ्करः साक्षात्पार्वत्या सहितः सदा ॥ ५० ॥
त्वद्रूपमेवं सततं ध्यायन्नास्ते रघूत्तम ! ।
मुमूर्षूणां सदा काश्यां तारकं ब्रह्मवाचकम् ॥ ५१ ॥
राम रामेत्युपदिशन् सदा सन्तुष्टमानसः ।
अतस्त्वं जानकीनाथ ! परमात्मा सुनिश्चितः ॥ ५२ ॥
सर्वे ते मायया मूढास्त्वां न जानन्ति तत्त्वतः
नमस्ते रामभद्राय वेधसे परमात्मने ॥ ५३ ॥

प्रेमरसः इदं मे भूयाद्बन्धं च मा गच्छत्वितीच्छा प्रेमेत्याहुः ॥ ४७ ॥

अयं जीवो यदा ते स्थूलरूपभावको भवति तदैव तस्य मुक्तिः स्यादवेदित्यर्थः तत् स्थूलभावनमप्यास्तां यद्यप्यर्थ्यं तदा तिष्ठतु तवैतद्रूपमेवाहं विचिन्तये चिन्तयिष्यामि ॥ ४८ ॥

तद्रूपमाह धनुरिति अपीच्यवयसन्तारुण्यवयस्कम् ॥ ४९ ॥

एतद्रूपध्यानप्रार्थने हेतुमाह सर्वज्ञ इत्यादि एवं त्वद्रूपं अनुपदोक्तं धनुरित्यादि एवं च शङ्करध्येयत्वादेतद्रूपध्यानंप्रार्थनमिति भावः ॥ ५० ॥

ननु मनुष्यस्य मम किमेतत्प्रार्थयते इत्याशङ्कायां तस्य परमात्मत्वं युक्त्या साधयति मुमूर्षूणामिति तारकं ब्रह्म तत्त्वमस्यादिप्रतिपाद्यं तस्य वाचकं प्रतिपादकम् ॥ ५१ ॥

रमन्ते योगिनोऽत्रेति व्युत्पत्त्येति भावः ॥ ५२ ॥

त्वां न जानन्ति परमात्मत्वेनेत्यर्थः ॥ ५३ । ५४ ॥

मयोध्याधिपते ! तुभ्यं नमः सौमित्रिसेवित ! ।
पाहि पाहि जगन्नाथ ! मां माया नावृणोतु मे ॥ ५४ ॥

राम उवाच ।

तुष्टोऽहं देवगन्धर्व ! भक्त्या स्तुत्या च तेऽनया ।
याहि मे परमं स्थानं योगिगम्यं सनातनम् ॥ ५५ ॥

जपन्ति ये नित्यमनन्यबुध्या
भक्त्या त्वदुक्तं स्तवमागमोक्तम् ।
तेऽज्ञानसम्भूतभवं विहाय
मां यान्ति नित्यानुभवानुमेयम् ॥ ५६ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
अरण्यकाण्डे नवमः सर्गः ।

योगिभिरनेनैव देहेन योगबलात् गम्यं सर्वोत्तमम् ॥ ५५ ॥

नित्यानुभवानुमेयं नित्यं योऽनुभवो ज्ञानं तत्तद्वस्तुविषयं तेनानुमेयम् तदुक्तं भगवद्गीतायाम् 'सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च' इति ॥ ५६ ॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थ ज्ञाद्विप० श्रीरामवर्मणः
कृतायध्यात्मरामायणसेतौ अरण्यकाण्डे
नवमः सर्गः ।

———

## अथ दशमः सर्गः ।

साधु परं स गन्धर्वः प्रयास्यन् राममब्रवीत् ।
शबर्यास्ते पुरोभागे आश्रमे रघुनन्दन ! ॥ १ ॥
भक्ता त्वत्पादकमले भक्तिमार्गविशारदा ।
तां प्रयाहि महाभाग ! सर्वं ते कथयिष्यति ॥ २ ॥
इत्युक्त्वा प्रययौ सोऽपि विमानेनार्कवर्चसा ।
विष्णोः पदं रामनामस्मरणे फलमीदृशम् ॥ ३ ॥
त्यक्त्वा तद्विपिनं घोरं सिंहव्याघ्रादिदूषितम् ।
शनैरथाश्रमपदं शबर्या रघुनन्दनः ॥ ४ ॥
शबरी राममालोक्य लक्ष्मणेन समन्वितम् ।
आयान्तमाराद्धर्षेण प्रत्युत्थायाचिरेण सा ॥ ५ ॥
पतित्वा पादयोरग्रे हर्षपूर्णाश्रुलोचना ।
स्वागतेनाभिनन्द्याथ स्वासने संन्यवेशयत् ॥ ६ ॥
रामलक्ष्मणयोः सम्यक् पादौ प्रक्षाल्य भक्तितः ।
तज्जलेनाभिषिच्याङ्गमथार्घ्यादिभिरादृता ॥ ७ ॥
सम्पूज्य विधिवद्रामं ससौमित्रिं सपर्यया ।

प्रयास्यन् स्वर्गमिति शेषः पुरोभागे दृश्यमाने आश्रमे त्वच्चरण-भक्तिमार्गविशारदा शबरी आस्ते ॥ १ ॥

सा ते सर्वं सीतावस्थितिस्थानं तत्प्राप्त्युपायं चेत्यर्थः ॥ २ ॥

विष्णोः पदं स्वर्लोकम् ॥ ३ । ४ ॥

अचिरेण शीघ्रम् ॥ ५ ॥

पादयोरग्रे तदन्त्यभागे स्वासने शोभने आसने ॥ ६ ॥

आदृता अर्घ्यादिभिस्तद्रूपया ॥ ७ ॥

संगृहीतानि दिव्यानि रामार्थं शबरी मुदा ॥ ८ ॥
फलान्यमृतकल्पानि ददौ रामाय भक्तितः ।
पादौ सम्पूज्य कुसुमैः सुगन्धैः सानुलेपनैः ॥ ९ ॥
कृतातिथ्यं रघुश्रेष्ठमुपविष्टं सहानुजम् ।
शबरी भक्तिसम्पन्ना प्राञ्जलिर्वाक्यमब्रवीत् ॥ १० ॥
अत्राश्रमे रघुश्रेष्ठ ! गुरवो मे महर्षयः ।
स्थिताः शुश्रूषणं तेषां कुर्वन्ती समुपस्थिता ॥ ११ ॥
बहुवर्षसहस्राणि गतास्ते ब्रह्मणः पदम् ।
गमिष्यन्तोऽब्रुवन्मां त्वं वसात्रैव समाहिता ॥ १२ ॥
रामो दाशरथिर्जातः परमात्मा सनातनः ।
राक्षसानां वधार्थाय ऋषीणां रक्षणाय च ॥ १३ ॥
आगमिष्यति चैकाग्रध्याननिष्ठा स्थिरा भव ।
इदानीं चित्रकूटाद्रावाश्रमे वसति प्रभुः ॥ १४ ॥

सपर्य्यया पूजासामग्र्या रामं सम्पूज्य रामार्थं संगृहीतानि दिव्यानि ॥ ८ ॥

फलानि रामाय ददावित्यन्वयः तदुक्तं पाद्मे शबरीं प्रस्तुत्य प्रत्युद्गम्य प्रणम्याथ निवेश्य कुशविष्टरे । पादप्रक्षालनं कृत्वा तत्तोयं पापनाशनम् । शिरसाधार्य्य पीत्वा च वन्यैः पुष्पैरथार्च्चयत् फलानि च सुपक्वानि मूलानि मधुराणि च । स्वयमास्वाद्य माधुर्य्यं परीक्ष्य परिभक्ष्य च । पश्चान्निवेदयामास राघवाभ्यां दृढव्रता । फलान्यास्वाद्य काकुत्स्थस्तस्यै मुक्तिं परां ददौ इति ॥ ९ । १० ॥

तेषां शुश्रूषणं कुर्वन्ती अहं सम्यक् उप तेषां समीपे स्थिता ॥ ११ ॥

बहुवर्षसहस्राणीति पूर्वान्वयि गतास्ते इत्यस्य इदानीमित्यादिः गमिष्यन्तस्ते त्वमत्रैव समाहिता वसेति मामब्रुवन् ॥ १२ । १३ ॥

आगमिष्यति अत्राश्रमे इति शेषः अत एकाग्रं यथा भवति तथा विषयान्तरसञ्चाररहितमिति यावत् तद्ध्याननिष्ठा अत्र स्थिरा भवेत्यर्थः तेषां गमनकालमाह इदानीमिति इत्युक्त्वा ते गता इत्यर्थः ॥ १४ । १५ ॥

यावदागमनं तस्य तावद्रक्ष कलेवरम् ।
दृष्ट्वैव राघवं दग्ध्वा देहं यास्यसि तत्पदम् ॥ १५ ॥
तथैवाकरवं राम ! त्वद्ध्यानैकपरायणा ।
प्रतीक्ष्यागमनं तेऽद्य सफलं गुरुभाषितम् ॥ १६ ॥
तव सन्दर्शनं राम ! गुरूणामपि मे नहि ।
योषिन्मूढाऽप्रमेयात्मन् ! हीनजातिसमुद्भवा ॥ १७ ॥
तव दासस्य दासानां शतसङ्ख्योत्तरस्य वा ।
दासीत्वेनाधिकारोऽस्ति कुतः साक्षात्तवैव हि ॥ १८ ॥
कथं रामाद्य मे दृष्टस्त्वं मनोवागगोचरः ।
स्तोतुं न जाने देवेश ! किं करोमि ? प्रसीद मे ॥१९॥

श्रीराम उवाच ।

पुंस्त्वे स्त्रीत्वे विशेषो वा जातिनामाश्रमादयः।
न कारणं मद्भजने भक्तिरेव हि कारणम् ॥ २० ॥

ते आगमनं प्रतीक्ष्य स्थिताऽहं तथैव यथा गुरुभिरुक्तं तथाऽकरवं तच्च मे गुरुभाषितं रामोऽत्रायास्यतीत्येतत् अद्य सफलं जातम् ॥ १६ ॥

हे राम तवैतद्रूपस्य दर्शनं मे गुरूणामपि न जातम् हेऽप्रमेयात्मन् अहं योषित् अनेन सर्वधर्मानर्हत्वं तत्रापि हीनजात्युद्भवा तव दासः तद्दासैरेवं क्रमेण शतसंख्यात उत्तरस्यापि दासीत्वेनाधिकारः साक्षात्तव दास्ये तु सुतरामनधिकारः ॥ १७ । १८ ॥

इति हेतोः योगिनामपि मनोवागगोचरस्त्वं मे मया कथं दृष्ट इति प्रश्नः श्रोतुमित्यादिर्विनयः ॥ १९ ॥

पुंस्त्वस्त्रीत्वात् कृतो विशेषो वा जातिनामाश्रमादयः तत्कृता विशेषा वा न मद्भजने कारणम् किन्तु भक्तिरेव न तु पुंसो ब्राह्मणस्यैवाधिकार इत्यर्थः ॥ २० ॥

यज्ञदानतपोभिर्वा वेदाध्ययनकर्मभिः।
नैव द्रष्टुमहं शक्यो मद्भक्तिविमुखैः सदा ॥ २१ ॥
तस्माद्भामिनि ! संक्षेपाद्वक्ष्येऽहं भक्तिसाधनम्।
सतां सङ्गतिरेवात्र साधनं प्रथमं स्मृतम् ॥ २२ ॥
द्वितीयं मत्कथालापस्तृतीयं मद्गुणेरणम्।
व्याख्यातृत्वं मद्वचसां चतुर्थं साधनं भवेत् ॥ २३ ॥
आचार्योपासनं भद्रे ! मद्बुद्ध्याऽमायया सदा।
पञ्चमं पुण्यशीलत्वं यमादिर्नियमादि च ॥ २४ ॥
निष्ठा मत्पूजने नित्यं षष्ठं साधनमीरितम्।
मम मन्त्रोपासकत्वं साङ्गं सप्तममुच्यते ॥ २५ ॥
मद्भक्तेष्वधिका पूजा सर्वभूतेषु मन्मतिः।
बाह्यार्थेषु विरागित्वं शमादिसहितं तथा ॥ २६ ॥

तदेवोपपादयति यज्ञेत्यादि वेदाध्ययनकर्मभिः वेदाध्ययनेन वेदोक्तकर्मानुष्ठानैश्चेत्यर्थः ॥ २१ ॥

सत्सङ्ग एव प्रथमं मुख्यं साधनमित्यर्थः ॥ २२ ॥

मत्कथालापः मच्चरितनिबन्धालाप इत्यर्थः मद्गुणेरणं मद्गुणकीर्त्तनं मद्वचसां मत्प्रतिपादकवचसामुपनिषद्रूपाणां व्याख्यातृत्वम् ॥ २३ ॥

अमायया अच्छलेन मद्बुद्ध्या ईश्वरबुद्ध्या गुरुसेवा पुण्यशीलता पुण्यविषये स्वारसिकी प्रवृत्तिः यमादि अहिंसाऽस्तेयब्रह्मचर्य्यापरिग्रहा यमाः आदिना आसनप्राणायामप्रत्याहाराः नियमादिः शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः आदिना धारणाध्यानसमाधयः ॥ २४ ॥

मत्पूजने निष्ठातत्परता मम ये मन्त्रास्तदुपासकत्वं तदुपासनं तच्च साङ्गं तत्तन्मन्त्रकल्पोक्ताङ्गसहितम् ॥ २५ ॥

अधिका मत्तोऽप्यधिकेत्यर्थः पुत्रादरस्य पितुरिव तदादरस्य ममाधिकसन्तोषदत्वादिति भावः मन्मतिः सर्वान्तर्यामी भगवानिति सर्वे भगवति वर्त्तते

अष्टमं नवमं तत्त्वविचारो मम भामिनि ! ।
एवं नवविधा भक्तिसाधनं यस्य कस्य वा ॥ २७ ॥
स्त्रियो वा पुरुषस्यापि तिर्य्यग्योनिगतस्य वा ।
भक्तिः सञ्जायते प्रेमलक्षणा शुभलक्षणे ! ॥ २८ ॥
भक्तौ सञ्जातमात्रायां मत्तत्त्वानुभवस्तथा ।
ममानुभवसिद्धस्य मुक्तिस्तत्रैव जन्मनि ॥ २९ ॥
स्यात्तस्मात्कारणं भक्तिर्मोक्षस्येति सुनिश्चितम् ।
प्रथमं साधनं यस्य भवेत्तस्य क्रमेण तु ॥ ३० ॥
भवेत् सर्वं ततो भक्तिर्मुक्तिरेव सुनिश्चितम् ।
यस्मान्मद्भक्तियुक्ता त्वं ततोऽहं त्वामुपस्थितः ॥ ३१ ॥
इतो मद्दर्शनान्मुक्तिस्तव नास्त्यत्र संशयः ।
यदि जानासि मे ब्रूहि सीता कमललोचना ॥ ३२ ॥
कुत्रास्ते केन वा नीता प्रिया मे प्रियदर्शना ? ॥ ३३ ॥

इति वा मतिः विरागित्वं वैराग्यम् शमोऽन्तरिन्द्रियनिग्रहः आदिना बाह्येन्द्रियनिग्रहरूपो दमः ॥ २६ ॥

मम तत्त्वविचारः मम तत्त्वं शुद्धं ब्रह्म तद्विचारः तत्त्वमस्यादिवाक्यतः ॥ २७ ॥

यस्य कस्य वेत्यस्यैव प्रपञ्चः स्त्रिय इति यस्य तन्नवविधं साधनं जायते तस्य प्रेमलक्षणा भक्तिः सञ्जायते ममेयं भूयात् भूत्वा च मा नश्यत्वित्येवमिच्छा प्रेम ॥ २८ ॥

मत्तत्त्वं ब्रह्मानुभवसिद्धस्येति इतोवा समासः मुक्तिः स्यादित्यन्वयः ॥ २९ । ३० ॥

सर्वं नवविधं साधनं ततो भक्तिस्ततो मुक्तिरित्यन्वयः ॥ ३१ ॥

इतो मद्दर्शनात् अस्मादेव मद्दर्शनादित्यर्थः ॥ ३२ । ३३ ॥

शबर्य्युवाच ।

देव ! जानासि सर्वज्ञ ! सर्वं त्वं विश्वभावन ! ।
तथापि पृच्छसे यस्मां लोकाननुसृत: प्रभो ! ॥ ३४ ॥
ततोऽहमभिधास्यामि सीता तत्राधुना स्थिता ।
रावणेन हृता सीता लङ्कायां वर्त्ततेऽधुना ॥ ३५ ॥
इत: समीपे रामास्ते पम्पा नाम सरोवरम् ।
ऋष्यमूकगिरिर्नाम तत् समीपे महानग: ॥ ३६ ॥
चतुर्भिर्मन्त्रिभि: सार्द्धं सुग्रीवो वानराधिप: ।
भीतभीत: सदा तत्र तिष्ठत्यतुलविक्रम: ॥ ३७ ॥
वालिनश्च भयाद्भ्रातुस्तदगम्यमृषेर्भयात् ।
वालिनस्तत्र गच्छ त्वं तेन सख्यं कुरु प्रभो ! ॥ ३८ ॥
सुग्रीवेण स सर्वं ते कार्य्यं सम्पादयिष्यति ।
अहमग्निं प्रवेक्ष्यामि तवाग्रे रघुनन्दन ! ॥ ३९ ॥
मुहूर्त्तं तिष्ठ राजेन्द्र ! यावद्दग्ध्वा कलेवरम् ।

सर्वं जानासीत्यत्र हेतुगर्भं विशेषणं सर्वज्ञेति यत्पृच्छसे तल्लोकाननुसृतोऽसीति जाने इति शेष: (आत्मनेपदमार्षम्) ॥ ३४ ॥

तत्राग्र्यं पायमध्याह इत इति ॥ ३६ ॥

भीतभीत: भीतेभ्योऽपि अतिभीत इत्यर्थ: ॥ ३७ ॥

कस्य भयादेवं भीतस्तत्राह वालिन इति भ्रातुर्वालिनो भयादित्यर्थ: ननु तत्र वासेन कथमभयमत आह तद्वालिनोऽगम्यम् एवं चार्यो वाल्मीकिना सविस्तरं दर्शित: अग्रे चात्रापि दर्शयिष्यति तेन सुग्रीवेण सख्यं कुरु तस्यापि विपद्ग्रस्तत्वात्तेन सख्यं सुलभम् न तु वालिनेति भाव: । ३८ । ३९ ॥

यास्यामि भगवन्नाम तव विष्णोः परं पदम् ॥ ४० ॥
इति रामं समामन्त्र्य प्रविवेश हुताशनम्।
क्षणान्निर्धूय सकलमविद्याकृतबन्धनम् ॥ ४१ ॥
रामप्रसादाच्छबरी मोक्षं प्रापातिदुर्लभम्।
किं दुर्लभं जगन्नाथे श्रीरामे भक्तवत्सले।
प्रसन्नेऽधमजन्मापि शबरी मुक्तिमाप सा ॥ ४२ ॥
किं पुनर्ब्राह्मणा मुख्याः पुण्याः श्रीरामचिन्तकाः।
मुक्तिं यान्तीति तद्भक्तिर्मुक्तिरेव न संशयः ॥ ४३ ॥
भक्तिर्मुक्तिविधायिनी भगवतः श्रीरामचन्द्रस्य हे।
लोकाः कामदुघांघ्रिपद्मयुगलं सेवध्वमत्युत्सुकाः।

विष्णोस्तव परं पदं ब्रह्मलोकम् ॥ ४० ॥

अविद्याकृतबन्धनं संसारः ॥ ४१ ॥

विशेषे सामान्यमर्थान्तरं न्यस्यति किमिति श्रीरामे प्रसन्ने किं दुर्लभं तमेव विशेषं सामान्योपपादकत्वेनाह यदधमजन्मा शबर्यपि रामे प्रसन्ने मुक्तिमाप ॥ ४२ ॥

मुक्तिं यान्तीति किं पुनर्वक्तव्यमित्यन्वयः यतस्तद्भक्तिर्मुक्तिरेव अनेन रूपकेण सर्वथा तस्या मुक्तिजनकत्वं सूचितम् ॥ ४३ ॥

यतो रामचन्द्रस्य भक्तिर्मुक्तिदा अतो रामस्य कामदुघं चरणपद्मयुगलं सेवध्वं तद्विषयेऽत्युत्सुका अत्युत्कटेच्छावन्तः सन्तः नानाप्रकारामज्ञानविशेष-भूतां अज्ञानस्यैव तन्मूलसंसारस्यैव जननिकां मन्त्रविततिं मन्त्रसमूहं त्यक्त्वा

नानाज्ञानविशेषमन्त्रविततिं त्यक्त्वा सुदूरे भृशं
रामं श्यामतनुं स्मरारिहृदये भान्तं भजध्वं बुधाः ॥ ४४ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
अरण्यकाण्डे दशमः सर्गः।

अयं काण्डः समाप्तः।

---

भक्त्यतिशयेन रामं भजन्तु तत्र हेतुगर्भं विशेषणं स्मरारिहृदये भान्तम्
स्मरारिः शिवः ॥ ४४ ॥

इति श्रीमत्सकलराजविपद्धरणसमर्थेश्वादिवि० श्रीरामवर्मणः
कृताध्यात्मरामायणे सेतौ अरण्यकाण्डे
दशमः सर्गः

---

# किष्किन्ध्याकाण्डम् ।

## प्रथमः सर्गः ।

---

श्रीमहादेव उवाच ।

ततः सलक्ष्मणो रामः शनैः पम्पासरस्तटम् ।
आगत्य सरसां श्रेष्ठं दृष्ट्वा विस्मयमाययौ ॥ १ ॥
क्रोशमात्रं सुविस्तीर्णमगाधामलशम्बरम् ।
उत्फुल्लाम्बुजकह्लारकुमुदोत्पलमण्डितम् ॥ २ ॥
हंसकारण्डवाकीर्णं चक्रवाकादिशोभितम् ।
जलकुक्कुटकोयष्टिक्रौञ्चनादोपनादितम् ॥ ३ ॥
नानापुष्पलताकीर्णं नानाफलसमावृतम् ।
सतां मनः स्वच्छजलं पद्मकिञ्जल्कवासितम् ॥ ४ ॥
तत्रोपस्पृश्य सलिलं पीत्वा श्रमहरं विभुः ।
सानुजः सरसस्तीरे शीतलेन पथा ययौ ॥ ५ ॥

तत इति सरसां श्रेष्ठं पम्पासरः ॥ १ ॥

विस्मयहेतुमाह क्रोशमात्रमिति अगाधामलशम्बरं नीरक्षीराम्बुशम्बरं इति अमरः अम्बुजं पद्मकह्लारसौगन्धिकेषु एककलपत्रकेन कुसुमविशेषोऽत्र ॥ २ ॥

हंसादयः पक्षिविशेषाः क्रौञ्चनादैरुपनादितं प्रतिध्वनितम् ॥ ३ ॥

सतां मनोवत् स्वच्छजलम् ॥ ४ ॥

उपस्पृश्य स्नात्वा ॥ ५ ॥

ऋष्यमूकगिरेः पार्श्वे गच्छन्तौ रामलक्ष्मणौ ।
धनुर्बाणकरौ दान्तौ जटावल्कलमण्डितौ ।
पश्यन्तौ विविधान् वृक्षान् गिरेः शोभां सुविक्रमौ ॥६॥
सुग्रीवस्तु गिरेर्मूर्ध्नि चतुर्भिः सह वानरैः ।
स्थित्वा ददर्श तौ यान्तौ आरुरोह गिरेः शिरः ॥ ७ ॥
भयादाह हनूमन्तं कौ तौ वीरवरौ ? सखे ! ।
गच्छ जानीहि भद्रं ते बटुर्भूत्वा द्विजाकृतिः ॥ ८ ॥
वालिना प्रेषितौ किंवा मां हन्तुं समुपागतौ ।
ताभ्यां सम्भाषणं कृत्वा जानीहि हृदयं तयोः ॥ ९ ॥
यदि तौ दुष्टहृदयौ संज्ञां कुरु कराग्रतः ।
विनयावनतो भूत्वा एवं जानीहि निश्चयम् ॥ १० ॥
तथेति बटुरूपेण हनूमान् समुपागतः ।
विनयावनतो भूत्वा रामं नत्वेदमब्रवीत् ॥ ११ ॥
कौ युवां पुरुषव्याघ्रौ युवानौ वीरसम्मतौ ।
द्योतयन्तौ दिशः सर्वाः प्रभया भास्कराविव ॥ १२ ॥
युवां त्रैलोक्यकर्त्ताराविति भाति मनो मम ।

दान्तौ निगृहीतेन्द्रियौ विविधान् वृक्षान् गिरेः शोभां च पश्यन्तौ ॥६॥

तौ ददर्श दृष्ट्वा च भयाद्गिरेः शिर आरुरोहेत्यन्वयः ॥ ७ ॥

भद्रन्ते इति प्रेरणानिमित्तं आशीर्वादः ॥ ८ ॥

किं वालिना प्रेषितौ मां हन्तुमागतौ वा पक्षान्तरे उतान्यथेति तयोर्हृदयं सम्भाषणं कृत्वा जानीहि अन्तःकरणानुरूपत्वाद्वाचः सम्भाषणेन बहिर्वचः ॥ ९ ॥

संज्ञां कुरु पलायनार्थमिति शेषः एवं बहुतस्य निश्चयं जानीहीत्यर्थः ॥ १० । ११ । १२ ॥

युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ ॥ १३ ॥
मायया मानुषाकारौ चरन्ताविव लीलया।
भूभारहरणार्थाय भक्तानां पालनाय च ॥ १४ ॥
अवतीर्णाविह परौ चरन्तौ क्षत्रियाकृती।
जगत्स्थितिलयौ सर्वं लीलया कर्त्तुमुद्यतौ ॥ १५ ॥
स्वतन्त्रौ प्रेरकौ सर्वहृदयस्थाविहेश्वरौ।
नरनारायणौ लोके चरन्ताविति मे मतिः ॥ १६ ॥
श्रीरामो लक्ष्मणं प्राह पश्यैनं बटुरूपिणम्।
शब्दशास्त्रमशेषेण श्रुतं नूनमनेकधा ॥ १७ ॥
अनेन भाषितं कृत्स्नं न किञ्चिदपशब्दितम्।
ततः प्राह हनूमन्तं राघवो ज्ञानविग्रहः ॥ १८ ॥
अहं दाशरथी रामस्त्वयं मे लक्ष्मणोऽनुजः।
सीतया भार्य्यया सार्द्धं पितुर्वचनगौरवात् ॥ १९ ॥
आगतस्तत्र विपिने स्थितोऽहं दण्डके द्विज!।
तत्र भार्य्या हृता सीता रक्षसा केनचिन्मम।

भाति आभाति प्रधानपुरुषौ मुख्यपुरुषौ नरनारायणावित्यर्थः मुख्यत्वमेवाह जगद्धेतू इत्यादिना ॥ १३ ॥

लीलया चरन्ताविव गच्छन्ताविव वस्तुतो विभुत्वादिति भावेन ॥ १४ ॥

स्थितिलयौ सर्गञ्च लीलया कर्तुमुद्यतौ रक्षसां वधस्तदितरजगतः सर्गस्थिती ॥ १५

प्रेरकौ अन्तर्यामितयेत्यर्थः तदेवाह सर्वहृदयस्थाविति इह लोके चरन्तौ इत्यन्वयः ॥ १६ ॥

शब्दशास्त्रं व्याकरणम् ॥ १७ ॥

कृत्स्नं समस्तमित्यर्थः ज्ञानविग्रह इत्यनेन चिदानन्द एव मायया एवं शरीररूपेण भातीति सूचितम् ॥ १८ । १९ । २० ॥

तामन्वेष्टुमिहायातौ त्वं को वा कस्य वा वद ॥ २० ॥

वटुरुवाच।

सुग्रीवो नाम राजा यो वानराणां महामतिः।
चतुर्भिर्मन्त्रिभिः सार्द्धं गिरिमूर्धनि तिष्ठति ॥ २१ ॥
भ्राता कनीयान् सुग्रीवो वालिनः पापचेतसः।
तेन निष्कासितो भार्य्या हृता तस्येह वालिना ॥ २२ ॥
तद्भयादृष्यमूकाख्यं गिरिमाश्रित्य संस्थितः।
अहं सुग्रीवसचिवो वायुपुत्रो महामते ! ॥ २३ ॥
हनूमान्नाम विख्यातो अञ्जनागर्भसम्भवः।
तेन सख्यं त्वया युक्तं सुग्रीवेण रघूत्तम ! ॥ २४ ॥
भार्य्यापहारिणं हन्तुं सहायस्ते भविष्यति।
इदानीमेव गच्छाम आगच्छ यदि रोचते ॥ २५ ॥

श्रीराम उवाच।

अहमप्यागतस्तेन सख्यं कर्त्तुं कपीश्वर !।
सख्युस्तस्यापि यत्कार्य्यं तत्करिष्याम्यसंशयम् ॥ २६ ॥
हनूमान् स्वस्वरूपेण स्थितो राममथाब्रवीत्।
आरोहतां मम स्कन्धौ गच्छामः पर्वतोपरि ॥ २७ ॥

कः सुग्रीवो नाम तेन नाम्ना प्रसिद्धो वानराणां राजा स गिरिमूर्द्धनि तिष्ठतीत्यन्वयः ॥ २१ ॥

तत्र कस्मिन्केन हेतुना भ्रात्रेति निष्कासितः कोऽपराधः अतः भार्य्या च हृता ॥ २२ । २३ ॥

तेन सख्यन्तु युक्तं समदुःखत्वात् न तु वालिनेति भावः ॥ २४ । २५ ॥

तस्यापि यत्कार्य्यं वालिवधरूपम् ॥ २६ ॥

पर्वतोपरि गमने श्रमातिशयात् स्कन्धारोहणप्रेरणा ॥ २० ॥

यत्र तिष्ठति सुग्रीवो मन्त्रिभिर्वालिनो भयात् ।
तथेति तस्यारुरोह स्कन्धं रामोऽथ लक्ष्मणः ॥ २८ ॥
उत्पपात गिरेर्मूर्ध्नि क्षणादेव महाकपिः ।
वृक्षच्छायां समाश्रित्य स्थितौ तौ रामलक्ष्मणौ ॥ २९ ॥
हनूमानपि सुग्रीवमुपगम्य कृताञ्जलिः ।
व्येतु ते भयमायातौ राजन् ! श्रीरामलक्ष्मणौ ॥ ३० ॥
शीघ्रमुत्तिष्ठ रामेण सख्यं ते योजितं मया ।
अग्निं साक्षिणमारोप्य तेन सख्यं द्रुतं कुरु ॥ ३१ ॥
ततोऽतिहर्षात् सुग्रीवः समागम्य रघूत्तमम् ।
वृक्षशाखां स्वयं छित्वा विष्टराय ददौ मुदा ॥ ३२ ॥
हनूमान् लक्ष्मणायादात् सुग्रीवाय च लक्ष्मणः ।
हर्षेण महता विष्टाः सर्व एवावतस्थिरे ॥ ३३ ॥
लक्ष्मणस्त्वब्रवीत् सर्वं रामवृत्तान्तमादितः ।
वनवासाभिगमनं सीताहरणमेव च ॥ ३४ ॥
लक्ष्मणोक्तं वचः श्रुत्वा सुग्रीवो राममब्रवीत् ।
अहं करिष्ये राजेन्द्र ! सीतायाः परिमार्गणम् ॥ ३५ ॥
साहाय्यमपि ते राम ! करिष्ये शत्रुघातिनः ।
शृणु राम ! मयादृष्टं किञ्चित्ते कथयाम्यहम् ॥ ३६ ॥

मन्त्रिभिः सहेति शेषः तथेति उक्त्वेति शेषः ॥ २८ ॥
उत्पपात जगामेत्यर्थः स्थितौ स्थापितावित्यर्थः ॥ २९ ॥
व्येतु भयं वालिप्रेरिताविति शङ्काकृतम् ॥ ३० ॥
योजितं ताभ्यामङ्गीकारं कारितं आरोप्य कृत्वा ॥ ३१ ॥
विष्टराय आसनार्थम् ॥ ३२ । ३३ । ३४ । ३५ ॥
शत्रुघातिनस्ते शत्रुवधे साहाय्यमपि करिष्ये इत्यन्वयः ॥ ३६ ॥

एकदा मन्त्रिभिः सार्द्धं स्थितोऽहं गिरिमूर्धनि।
विहायसा नीयमानां केनचित्प्रमदोत्तमाम्॥ ३७॥
क्रोशन्ती रामरामेति दृष्ट्वास्मान् पर्वतोपरि।
आमुच्याभरणान्याशु स्वोत्तरीयेण भामिनी॥ ३८॥
निरीक्ष्याधः परित्यज्य क्रोशन्ती तेन रक्षसा।
नीत्वाहं भूषणान्याशु गुहायामक्षिपं प्रभो!॥ ३९॥
इदानीमपि पश्य त्वं जानीहि तव वा नवा।
इत्युक्त्वानीय रामाय दर्शयामास वानरः॥ ४०॥
विमुच्य रामस्तद्दृष्ट्वा हा सीतेति मुहुर्मुहुः।
हृदि निक्षिप्य तत्सर्वं रुरोद प्राकृतो यथा॥ ४१॥
आश्वास्य राघवं भ्राता लक्ष्मणो वाक्यमब्रवीत्।
अचिरेणैव ते राम! प्राप्यते जानकी शुभा।
वानरेन्द्रसहायेन हत्वा रावणमाहवे॥ ४२॥
सुग्रीवोऽप्याह हे राम! प्रतिज्ञां करवाणि ते।
समरे रावणं हत्वा तव दास्यामि जानकीम्॥ ४३॥

विहायसा नीयमानां प्रमदोत्तमामपश्यमिति शेषः॥ ३७॥

सा च रामरामेति क्रोशन्ती अस्मान् पर्वतोपरि दृष्ट्वा स्वोत्तरीयेण तदेकदेशेनाभरणानि आमुच्य बद्ध्वा पुनरस्मान्निरीक्ष्य तान्यप्यधः परित्यज्य क्रोशन्ती तेन नीता क्रोशनक्रियया समानकर्तृकः क्त्वा अहञ्च तानि गुहायामक्षिपम्॥ ३८॥ ३९॥

इदानीं त्वमपि पश्य तव भार्य्याया भवन्ति वा न भवन्ति चेति जानीहि निश्चयं कुरु॥ ४०॥

तत् भूषणयुक्तं वासःखण्डं विमुच्य दृष्ट्वा भवन्तीति शेषः तत्सर्वं भूषणजातम्॥ ४१॥

ते त्वया॥ ४२। ४३॥

ततो हनुमान् प्रज्वाल्य तयोरग्निसमीपतः।
तावुभौ रामसुग्रीवावग्नौ सान्निध्य तिष्ठति ॥ ४४ ॥
बाहू प्रसार्य्य चालिङ्ग्य परस्परमकल्मषौ ।
समीपे रघुनाथस्य सुग्रीवः समुपाविशत् ॥ ४५ ॥
स्वोदन्तं कथयामास प्रणयाद्रघुनायके ।
सखे ! शृणु ममोदन्तं वालिना यत्कृतं पुरा ॥ ४६ ॥
मयपुत्रोऽथ मायावी नाम्ना परमदुर्मदः ।
किष्किन्धायां समुपागत्य वालिनं समुपाह्वयत् ॥ ४७ ॥
सिंहनादेन महता वाली तु तदमर्षणः ।
निर्य्ययौ क्रोधताम्राक्षो जघान दृढ़मुष्टिना ॥ ४८ ॥
दुद्राव तेन संविग्नो जगाम स्वगुहां प्रति ।
अनुदुद्राव तं वाली मायाविनमहं तथा ।
ततः प्रविष्टमालोक्य गुहां मायाविनं रुषा ॥ ४९ ॥
वाली मामाह तिष्ठ त्वं बहिर्गच्छाम्यहं गुहाम् ।
इत्युक्त्वाविश्य स गुहां मासमेकं न निर्य्ययौ ॥ ५० ॥
मासादूर्द्ध्वं गुहाद्वारान्निर्गतं रुधिरं बहु ।

तयोः समीपतोऽग्निं प्रज्वाल्य सख्यं कुरुतामित्युवाचेति शेषः ॥ ४४ ॥

आलिङ्ग्य परस्परं सखे ! इत्यवदतामिति शेषः सखित्वकरणफलं दर्शयति समीपे इति ॥ ४५ ॥

वालिना यदुदन्तं मद्विषये कृतं तच्छृणु ॥ ४६ ॥

नाम्ना मायावीत्यन्वयः समुपाह्वयत् युद्धायेति शेषः ॥ ४७ ॥

तदाह्वानममर्षणोऽसहमानः ॥ ४८ ॥

तेन मुष्टिघातेन संविग्नः पीड़ितः तं मायाविनं मायावन्तं स्वगुहां प्रविष्टमालोक्येत्यन्वयः ॥ ४९ । ५० ॥

तद्दृष्ट्वा परितप्ताङ्गो मृतो वालीति दुःखितः ॥ ५१ ॥
गुहाद्वारि शिलामेकां निधाय गृहमागतः ।
ततोऽब्रुवं मृतो वाली गुहायां रक्षसा हतः ॥ ५२ ॥
तच्छ्रुत्वा दुःखिताः सर्वे मामनिच्छन्तमप्युत ।
राज्येऽभिषेचनं चक्रुः सर्वे वानरमन्त्रिणः ॥ ५३ ॥
शिष्टं तदा मया राज्यं किञ्चित्कालमरिन्दम ! ।
ततः समागतो वाली मामाह परुषं रुषा ॥ ५४ ॥
बहुधा भर्त्सयित्वा मां निजघान च मुष्टिभिः ।
ततो निर्गत्य नगराद्धावं परया भिया ॥ ५५ ॥
लोकान् सर्वान् परिक्रम्य ऋष्यमूकं समाश्रितः ।
ऋषेः शापभयात् सोऽपि नायातीमं गिरिं प्रभो ! ॥५६॥
तदादि मम भार्य्यां स स्वयं भुङ्क्ते विमूढधीः ।
अतो दुःखेन सन्तप्तो हृतदारो हृताश्रयः ॥ ५७ ॥
वसाम्यद्य भवत्पादसंस्पर्शात् सुखितोऽस्म्यहम् ।
मित्रदुःखेन सन्तप्तो रामो राजीवलोचनः ॥ ५८ ॥

मृतो वालीति निश्चयेनेति शेषः ॥ ५१ ॥

रक्षसा हतो वाली मृत इति सम्पातीत्यब्रुवम् ॥ ५२ ॥

अनिच्छन्तं राज्याभिषेकमिति शेषः ॥ ५३ ॥

शिष्टं पालितं परुषं भ्रातृद्रोहिन्नित्यादिवाक्यम् ॥ ॥ ५४ ॥

परया भिया वालिजया ॥ ५५ ॥

ऋष्यमूकं तदाख्यमिमं पर्वतम् ऋषेः शापभयात् तस्यागुपदमेव स्फुटं भविष्यति ॥ ५६ ॥

हृताश्रयः हृतगृहः ॥ ५७ ॥

सुखितोऽस्मि अद्य त्वादर्शनमात्रेनेति शेषः ॥ ५८ । ५९ ॥

हनिष्यामि तव द्वेष्यं शीघ्रं भार्य्यापहारिणम् ।
इति प्रतिज्ञामकरोत् सुग्रीवस्य पुरस्तदा ॥ ५९ ॥
सुग्रीवोऽप्याह राजेन्द्र ! वाली बलवतां बली ।
कथं हनिष्यति भवान् देवैरपि दुरासदम् ॥ ६० ॥
शृणु ते कथयिष्यामि तद्बलं बलिनां वर ! ।
कदाचिद्दुन्दुभिर्नाम महाकायो महाबलः ॥ ६१ ॥
किष्किन्ध्यामगमद्राम ! महामहिषरूपधृक् ।
युद्धाय वालिनं रात्रौ समाह्वयत भीषणः ॥ ६२ ॥
तच्छ्रुत्वाऽसहमानोऽसौ वाली परमकोपनः ।
महिषं शृङ्गयोर्धृत्वा पातयामास भूतले ॥ ६३ ॥
पादेनैकेन तत्कायमाक्रम्यास्य शिरो महत् ।
हस्ताभ्यां भ्रामयंश्छित्वा तोलयित्वाक्षिपद्भुवि ॥ ६४ ॥
पपात तच्छिरो राम ! मातङ्गाश्रमसन्निधौ ।
योजनात्पतितं तस्मान्मुनेराश्रममण्डले ॥ ६५ ॥
रक्तवृष्टिः पपातोच्चैर्दृष्ट्वा तां क्रोधमूर्च्छितः ।

बलवतां बली सर्वेभ्यो बलवद्भ्योऽप्यधिकबलवानित्यर्थः दुरासदं वालिनमिति शेषः ॥ ६० ॥

तद्बलं वालिनो बलम् ॥ ६१ । ६२ ॥

असहमान इति छेदः ॥ ६३ ॥

अस्य शिरो हस्ताभ्यां भ्रामयन् घीवातश्चालयन् छित्वा ग्रीवा-च्छेदाधाराद्दुत्पाद्य हस्ताभ्यां तोलयित्वा एतावद्भारकमिति ज्ञात्वा भुवि अक्षिपत् ॥ ६४ ॥

क्षेपवेगेन भुव ऊर्द्ध्वं योजनमात्रं गत्वा ततो मातङ्गाश्रमे पपात ततश्च योजनात्तच्छिरादूरदेशात्पतितम् ॥ ६५ ॥

मातङ्गो वालिनं प्राह यद्यागन्तासि मे गिरिम् ॥ ६६ ॥
इतःपरं भग्नशिरा मरिष्यसि न संशयः ।
एवं शप्तस्तदारभ्य ऋष्यमूकं न यात्यसौ ॥ ६७ ॥
एतज्ज्ञात्वाहमप्यत्र वसामि भयवर्जितः ।
राम ! पश्य शिरस्तस्य दुन्दुभेः पर्वतोपमम् ॥ ६८ ॥
तत्क्षेपणे यदा शक्तः शक्तस्त्वं वालिनो वधे ।
इत्युक्त्वा दर्शयामास शिरस्तद्गिरिसन्निभम् ॥ ६९ ॥
दृष्ट्वा रामः स्मितं कृत्वा पादाङ्गुष्ठेन चाक्षिपत् ।
दशयोजनपर्य्यन्तं तदद्भुतमिवाभवत् ॥ ७० ॥
साधु साध्विति तं प्राह सुग्रीवो मन्त्रिभिः सह ।
पुनरप्याह सुग्रीवो रामं भक्तपरायणम् ॥ ७१ ॥
एते ताला महासाराः सप्त पश्य रघूत्तम ! ।
एकैकं चालयित्वासौ निष्पत्रान् कुरुतेऽञ्जसा ॥ ७२ ॥
यदि त्वमेकबाणेन विद्धा छिद्रं करोषि चेत् ।
हतस्त्वया तदा वाली विश्वासो मे प्रजायते ।
तथेति धनुरादाय सायकं तत्र सन्दधे ॥ ७३ ॥
विभेद च तदा रामः सप्ततालान् महाबलः ।
तालान् सप्त विनिर्भिद्य गिरिं भूमिं च सायकः ॥ ७४ ॥

ततस्तदाश्रमे शिरसो गलिता रक्तवृष्टिः पपात ततः क्रुद्धः स वालिनं प्राह ॥ ६६ । ६७ ॥

एतत् ज्ञात्वा तदगमनं ज्ञात्वा ॥ ६८ ॥

यदा यदि तस्य बाणेन दूरं क्षेपणे त्वं शक्तस्तर्हि त्वं वालिवधे शक्तः ॥ ६९ । ७० । ७१ ॥

चालयित्वा मूलतो बाहुभ्यां कम्पनेन अञ्जसा अनायासेन ॥ ७२ ॥

पुनरागत्य रामस्य तूष्णीं पूर्ववत् स्थितः ।
ततोऽतिहर्षात् सुग्रीवो राममाहातिविस्मितः ॥ ७५ ॥
देव ! त्वं जगतां नाथः परमात्मा न संशयः ।
मत्पूर्वकृतपुण्यौघैः सङ्गतोऽद्य मया सह ॥ ७६ ॥
त्वां भजन्ति महात्मानः संसारविनिवृत्तये ।
त्वां प्राप्य मोक्षसचिवं प्रार्थयेऽहं कथं भवम् ? ॥ ७७ ॥
दाराः पुत्रा धनं राज्यं सर्वं त्वन्मायया कृतम् ।
अतोऽहं देवदेवेश ! नाकाङ्क्षेऽन्यत्प्रसीद मे ॥ ७८ ॥
आनन्दानुभवं त्वाद्य प्राप्तोऽहं भाग्यगौरवात् ।
मृदर्थं यतमानेन निधानमिव सत्पते ! ॥ ७९ ॥
अनाद्यविद्यासंसिद्धं बन्धनं छिन्नमद्य नः ।
यज्ञदानतपःकर्मपूर्तेष्टादिभिरप्यसौ ॥ ८० ॥
न जीर्यते पुनर्दार्ढ्यं भजते संसृतिः प्रभो ! ।

छिद्रं करोमि सप्तसपीति शेषः ॥ ७३ ॥ ७४ ॥ ७५ ॥

एवमाश्चर्यकर्मणा रामं परमात्मानं ज्ञात्वा स्तौति देवेति सङ्गतिं मैत्रीं प्राप्तः ॥ ७६ ॥

मोक्षसचिवं मोक्षप्रदत्वात्तत्सचिवं भवं संसारम् ॥ ७७ ॥

अन्यद्दारपुत्रादिकं त्वन्मायाकृतत्वेन मायिकत्वान्नाकाङ्क्षेऽतो मां निवर्तयेत्यर्थः ॥ ७८ ॥

मृदर्थं भूमिं खनता यथा निधानं धनराशिः प्राप्तो भवति एवमहं आनन्दानुभव तद्रूपं त्वां प्राप्तः ॥ ७९ ॥

अनाद्यविद्यासंसिद्धं निष्पन्नं विषयवासनारूपं बन्धनं संसारप्रवर्तकं नच्छिन्नं नष्टम् अन्येभ्यो भगवद्दर्शनस्याधिक्यमाह यज्ञेत्यादि यज्ञादिभिरप्यसौ संसृतिस्तत्कारणं विषयवासनारूपं बन्धनं न जीर्यति

त्वत्पाददर्शनात् सद्यो नाशमेति न संशयः ॥ ८१ ॥
यथाहमपि यच्चित्तं त्वयि तिष्ठत्वचञ्चलम् ।
तस्याज्ञानमनर्थानां मूलं नश्यति तत्क्षणात् ॥ ८२ ॥
तत्तिष्ठतु मनो राम ! त्वयि नान्यत्र मे सदा ॥ ८३ ॥
रामरामेति यद्वाणी मधुरं गायति क्षणम् ।
स ब्रह्महा सुरापो वा मुच्यते सर्वपातकैः ॥ ८४ ॥
न काङ्क्षेऽविजयं राम ! न च दारसुखादिकम् ।
भक्तिमेव सदा काङ्क्षे त्वयि बन्धविमोचनीम् ॥ ८५ ॥
त्वन्मायाकृतसंसारस्त्वदंशोऽहं रघूत्तम ! ।
त्वत्पादभक्तिमादिश्य त्राहि मां भवसङ्कटात् ॥ ८६ ॥
पूर्वं मित्रार्युदासीनास्त्वन्मायावृतचेतसः ।
आसन् मेऽद्य भवत्पाददर्शनादेव राघव ! ॥ ८७ ॥
सर्वं ब्रह्मैव मे भाति क्व मित्रं क्व च मे रिपुः ।
यावत्त्वन्मायया बद्धस्तावद्गुणविशेषता ॥ ८८ ॥

अपितु दार्ढ्यमेव भवते त्वच्चरणदर्शनात्तु सद्यस्तन्नाशमेति ॥ ८० ॥ ८१ ॥
यच्चित्तं यस्य चित्तं तस्यानर्थानां नानासंसृतिरूपाणां मूलमज्ञानं नश्यतीत्यन्वयः ॥ ८२ ॥
मे मनः सदा त्वयि तिष्ठतु ॥ ८३ ॥
यस्य वाणी त्वन्नाम गायति स मुच्यते ॥ ८४ ॥
बन्धस्य संसारकारणस्य मोचनीम् ॥ ८५ ॥
त्वन्मायया कृतः संसारो यस्य सः त्वदंशः त्वत्प्रतिबिम्बरूपत्वात् अतः त्वत्पादयोर्भक्तिमादिश्य दत्त्वा त्राहि ॥ ८६ ॥
त्वन्मायावृतचेतस इतः पूर्वं मित्रादय आसन् अद्य तु त्वत्पाददर्शनात्तो सर्वं ब्रह्मैवेति भातीत्यन्वयः ॥ ८७ ॥
गुणविशेषता सत्त्वादिगुणविशेषवत्त्वमित्यर्थः ॥ ८८ ॥

Digitized by Google

सा यावदस्ति नानात्वं तावद्भवति नान्यथा।
यावन्नानात्वमज्ञानात्तावत्कालकृतं भयम् ॥ ८९ ॥
अतोऽविद्यामुपास्ते यः सोऽन्धे तमसि मज्जति।
मायामूलमिदं सर्वं पुत्रदारादिबन्धनम्।
अतोत्सारय मायां त्वं दासीं तव रघूत्तम! ॥ ९० ॥

त्वत्पादपद्मार्पितचित्तवृत्ति-
स्त्वन्नामसङ्गीतकथासु वाणी।
त्वद्भक्तसेवानिरतौ करौ मे
त्वदङ्गसङ्गं लभतां मदङ्गम् ॥ ९१ ॥
त्वन्मूर्त्तिभक्तान् स्वगुरुं च चक्षुः
पश्यत्वजस्रं स शृणोतु कर्णः।
त्वज्जन्मकर्माणि च पादयुग्मं
व्रजत्वजस्रं तव मन्दिराणि ॥ ९२ ॥
अङ्गानि ते पादरजोविमिश्र-
तीर्थानि बिभर्त्वहिशत्रुकेतो!।

सा गुणविशेषतो नानात्वं सुहृन्मित्रार्युदासीनत्वरूपो भेदः कालेन कृतं भयं मृत्युकृतम् ॥ ८९ ॥

अतः अविद्यामिति छेदः अत उत्सारयेति छेदः (भक्तिप्रार्थना:) ॥ ९० ॥

त्वत्पादपद्मयोरर्पिता चित्तवृत्तिर्येन सः ईदृशोऽहं भूयासमिति शेषः त्वन्नामविषयसङ्कीर्तनकथासु वाणी निरता तिष्ठत्वित्यन्वयः त्वद्भक्तानां सेवायां निरतौ तत्परौ ॥ ९१ ॥

त्वन्मूर्त्तिभक्तान् त्वन्मूर्त्तयश्च तद्भक्ताश्च तान् स कर्णः त्वज्जन्मानि कायिकानि तव कर्माणि च शृणोत्वित्यन्वयः ॥ ९२ ॥

शिरस्त्वदीयं भवपद्मजाद्यै-
र्जुष्टं पदं राम ! नमत्वजस्रम् ॥ ८३ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्ध्याकाण्डे
प्रथमः सर्गः ।

---

अङ्कितमत्केतो ! गरुडध्वज ! मे शिरस्त्वदीयं शिवब्रह्माद्यैः
सेवितं पदं नमतु ॥ ८३ ॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिवि० श्रीरामवर्मणः
कृतावध्यात्मरामायणसेतौ किष्किन्ध्याकाण्डे
प्रथमः सर्गः ।

---

अथ द्वितीयः सर्गः ।

इत्थं स्वात्मपरिष्वङ्गनिर्धूताशेषकल्मषम् ।
रामः सुग्रीवमालोक्य सस्मितं वाक्यमब्रवीत् ॥ १ ॥
मायां मोहकरीं तस्मिन् वितन्वन् कार्य्यसिद्धये ।
सखे ! त्वदुक्तं यत्तन्मां सत्यमेव न संशयः ॥ २ ॥
किन्तु लोका वदिष्यन्ति मामेवं रघुनन्दनः ।
कृतवान् किं कपीन्द्राय सख्यं कृत्वाग्निसाक्षिकम् ॥ ३ ॥
इति लोकापवादो मे भविष्यति न संशयः ।
तस्मादाह्वय भद्रं ते गत्वा युद्धाय वालिनम् ॥ ४ ॥
बाणेनैकेन तं हत्वा राज्ये त्वामभिषिच्ये ।
तथेति गत्वा सुग्रीवः किष्किन्ध्योपवनं द्रुतम् ॥ ५ ॥
कृत्वा शब्दं महानादं तमाह्वयत वालिनम् ।
तच्छ्रुत्वा भ्रातृनिनदं रोषताम्रविलोचनः ॥ ६ ॥
निर्जगाम गृहाच्छीघ्रं सुग्रीवो यत्र वानरः ।

स्वात्मपरिष्वङ्गः स्वशरीरालिङ्गनं तेन दूरीकृताशेषपापं सस्मितमिति मायायाः भगवत्याः सद्रूपत्वेन स्मितद्वारा मायया तदावरणम् ॥ १ ॥

कार्यं रावणवधः यन्मां प्रति त्वदुक्तं त्वयोक्तं तत्सत्यमेव ॥ २ ॥

रघुनन्दनः अग्निसाक्षिकं सख्यं कृत्वा कपीन्द्राय तदुपकारकं किं कृतवानित्येव लोका मां वदिष्यन्ति अतस्त्वदुपकारं मेऽवश्यं कर्तव्यं इति शेषः ॥ ३ ॥

उक्तमेव दार्ढ्याय पुनराह इतीति भद्रं ते इत्यनेन महाशाकर एव ते भद्रं नान्यथेति सूचितम् ॥ ४ ॥

तथेतीत्यर्थः प्रतिज्ञायेति शेषः ॥ ५ ॥

महानादं महाप्रतिध्वनिजनकम् आह्वयत स्पर्द्धया शब्दितवान् ॥ ६ ॥

तमापतन्तं सुग्रीवः शीघ्रं वक्षस्यताडयत् ॥ ७ ॥
सुग्रीवमपि मुष्टिभ्यां जघान क्रोधमूर्च्छितः।
वाली तमपि सुग्रीव एवं क्रुद्धौ परस्परम् ॥ ८ ॥
अयुध्येतामेकरूपौ दृष्ट्वा रामोऽतिविस्मितः।
न मुमोच तदा बाणं सुग्रीववधशङ्कया ॥ ९ ॥
ततो दुद्राव सुग्रीवो वमन् रक्तं भयाकुलः।
वाली स्वभवनं यातः सुग्रीवो राममब्रवीत् ॥ १० ॥
किं मां घातयसे राम! शत्रुणा भ्रातृरूपिणा ?।
यदि मद्धनने वाञ्छा त्वमेव जहि मां विभो! ॥ ११ ॥
एवं मे प्रत्ययं कृत्वा सत्यवादिन्! रघूत्तम!।
उपेक्षसे किमर्थं मां शरणागतवत्सल! ॥ १२ ॥
श्रुत्वा सुग्रीववचनं रामः साश्रुविलोचनः।
आलिङ्ग्य मास्म भैषीस्त्वं दृष्ट्वा वामेकरूपिणौ ॥ १३॥
मित्रघातित्वमाशङ्क्य मुक्तवान् सायकं नहि।
इदानीमेव ते चिह्नं करिष्ये भ्रमशान्तये ॥ १४ ॥
गत्वाह्वय पुनः शत्रुं हतं द्रक्ष्यसि बालिनम्।
रामोऽहं त्वां शपे भ्रातर्हनिष्यामि रिपुं क्षणात् ॥ १५॥

एकरूपौ समानाकारौ अतएव रामो बाणं न मुमोच ॥ ९ ॥ १०
जहि शस्त्रेणेति शेषः ॥ ११ ॥
प्रत्ययं कृत्वा विश्वासमुत्पाद्य सत्यवादिन्नित्यादिराक्षेपः ॥ १२ ॥
युवां समानाकारौ दृष्ट्वा मित्रघातशङ्कयाऽहं सायकं न मुक्तवानित्यन्वयः ॥ १३ ॥
भ्रमशान्तये भ्रमशान्तिफलकम् ॥ १४ ॥
अहं राम इत्यनेन स्वस्यामिथ्याभाषित्वं सूचितं त्वां शपे यदि न हनिष्यामि तर्हि मित्रस्य तवैव शपथ इत्यर्थः ॥ १५ ॥

इत्याश्वास्य स सुग्रीवं रामो लक्ष्मणमब्रवीत्।
सुग्रीवस्य गले पुष्पमालामामुच्य पुष्पिताम् ॥ १६ ॥
प्रेषयस्व महाभाग! सुग्रीवं वालिनं प्रति।
लक्ष्मणस्तु तदा बद्ध्वा गच्छ गच्छेति सादरम् ॥ १७ ॥
प्रेषयामास सुग्रीवं सोऽपि गत्वा तथाकरोत्।
पुनरप्यद्भुतं शब्दं कृत्वा वालिनमाह्वयत् ॥ १८ ॥
तच्छ्रुत्वा विस्मितो वाली क्रोधेन महता वृतः।
बद्ध्वा परिकरं सम्यक् गमनायोपचक्रमे ॥ १९ ॥
गच्छन्तं वालिनं तारा गृहीत्वा निषिषेध तम्।
न गन्तव्यं त्वयेदानीं शङ्का मेऽतीव जायते ॥ २० ॥
इदानीमेव ते भग्नः पुनरायाति सत्वरः।
सहायो बलवांस्तस्य कश्चिन्नूनं समागतः ॥ २१ ॥
वाली तामाह हे सुभ्रु! शङ्का ते व्येतु तद्गता।
प्रिये! करं परित्यज्य गच्छ गच्छामि तं रिपुम् ॥२२॥
हत्वा शीघ्रं समायास्ये सहायस्तस्य को भवेत्।
सहायी यदि सुग्रीवस्ततो हत्वोभयं क्षणात् ॥ २३ ॥
आयास्ये मा शुचः शूरः कथं तिष्ठेद्गृहे रिपुम्।
ज्ञात्वाप्याह्वयमानं हि हत्वा यास्यामि सुन्दरि! ॥२४॥

पुष्पितां मालाम् आमुच्य बद्ध्वा प्रेषयतामित्यन्वयः ॥ १६ ॥ १७ ॥ १८ ॥
परिकरं कच्छबन्धादिरूपम् ॥ १९ ॥ २० ॥
ते त्वत्तो भग्नः पुनरायाति गर्जन् युद्धार्थमाह्वयति ॥ २१ ॥
तद्गता सुग्रीवसहायविषया करं परित्यज्य गच्छ अन्तःपुरमिति शेषः ॥२॥
मत्तो रक्षितुं जीवितार्थी कस्तस्य सहायो भवेदित्यन्वयः ॥ २३ ॥
आह्वयमानं रिपुं ज्ञात्वापि शूरः कथं गृहे तिष्ठेत् अतस्तं हत्वा

तारोवाच ।

मत्तोऽन्यच्छृणु राजेन्द्र ! श्रुत्वा कुरु यथोचितम् ।
आह मामङ्गदः पुत्रो मृगयायां श्रुतं वचः ॥ २५ ॥
अयोध्याधिपतिः श्रीमान् रामो दाशरथिः किल ।
लक्ष्मणेन सह भ्राता सीतया भार्यया सह ॥ २६ ॥
आगतो दण्डकारण्यं तत्र सीता हृता किल ।
रावणेन सह भ्राता मार्गमाणोऽथ जानकीम् ॥ २७ ॥
आगतो ऋष्यमूकाद्रिं सुग्रीवेण समागतः ।
चकार तेन सुग्रीवः सख्यं चानलसाक्षिकम् ॥ २८ ॥
प्रतिज्ञां कृतवान् रामः सुग्रीवाय सलक्ष्मणः ।
बालिनं समरे हत्वा राजानं त्वां करोम्यहम् ॥ २९ ॥
इति निश्चित्य तौ यातौ निश्चितं शृणु मद्वचः ।
इदानीमेव ते भग्नः कथं पुनरुपागतः ॥ ३० ॥
अतस्त्वं सर्वथा वैरं त्यक्त्वा सुग्रीवमानय ।
यौवराज्येऽभिषिच्याशु रामं त्वं शरणं व्रज ॥ ३१ ॥
पाहि मामङ्गदं राज्यं कुलञ्च हरिपुङ्गव ! ।

च्छत्वायास्यामि इति छेदः ॥ २४ ॥

यन्मामङ्गदो मृगयायां श्रुतं वच आह तच्छ्रुत्वा यथोचितं कुरु ॥२५।२६

रावणेन सीता हृता तां सह भ्राता मार्गमाणो ऋष्यमूकाद्रिमागतः ॥ २७ ॥

समागतः संमीलितः सख्यञ्च तेन चकार ॥ २८ । २९ ॥

इति निश्चित्य परस्परसाहाय्यं प्रतिज्ञाय यातौ स्वस्वस्थानमिति शेषः तत्राचिन्तितं निश्चितार्थकं मे वचः शृणु इदानीमेवेत्यादेरन्वयेति आदिः ॥ ३० ॥ ३१ ॥

इत्युक्ताश्रुमुखी तारा पादयोः प्रणिपत्य तम्॥ ३२॥
हस्ताभ्यां चरणौ धृत्वा रुरोद भयविह्वला।
तामालिङ्ग्य तदा बाली स्नेहादिदमब्रवीत्॥ ३३॥
स्त्रीस्वभावाद्बिभेषि त्वं प्रिये! नास्ति भयं मम।
रामो यदि समायातो लक्ष्मणेन समं प्रभुः॥ ३४॥
तदा रामेण मे स्नेहो भविष्यति न संशयः।
रामो नारायणः साक्षादवतीर्णोऽखिलप्रभुः॥ ३५॥
भूभारहरणार्थाय श्रुतं पूर्वं मयानघे!।
स्वपक्षः परपक्षो वा नास्ति तस्य परात्मनः॥ ३६॥
आनेष्यामि गृहं साध्वि! नत्वा तच्चरणाम्बुजम्।
भजतोऽनुभजत्येष भक्तिगम्यः सुरेश्वरः॥ ३७॥
यदि स्वयं समायाति सुग्रीवो हन्मि तं क्षणात्।
यदुक्तं यौवराज्याय सुग्रीवस्याभिषेचनम्॥ ३८॥
कथमाहूयमानोऽहं युद्धाय रिपुणा प्रिये!।
शूरोऽहं सर्वलोकानां सम्मतः शुभलक्षणे!॥ ३९॥
भीतभीतमिदं वाक्यं कथं बाली वदेत्प्रिये!।

कुलं वानरकुलम्॥ ३२॥ ३३॥ ३४॥

स्नेहो भविष्यति सुग्रीवतोऽपि मम रामकार्ये समर्थत्वादिति भावः॥३५

स्वपक्षपरपक्षाभावे हेतुगर्भं विशेषणं परात्मन इति तेन सर्वत्र समः स इति ध्वनितम्॥ ३६॥

भजतः भक्तानित्यर्थः॥ ३७॥

यदि स्वयमिति असहाय इत्यर्थः॥ ३८॥

कथं तदभिषेचनं कुर्य्यामिति शेषः यतोऽहं सर्वलोकानां सम्मतः शूरः॥ ३९॥

तस्माच्छोकं परित्यज्य तिष्ठ सुन्दरि ! वेश्मनि ॥ ४०॥
एवमाश्वास्य तारां तां रोदन्तीमश्रुलोचनाम्।
गतो वाली समुद्युक्तः सुग्रीवस्य वधाय सः ॥ ४१ ॥
दृष्ट्वा वालिनमायान्तं सुग्रीवो भीमविक्रमः।
उत्पपात गलेबद्धपुष्पमालः पतङ्गवत् ॥ ४२ ॥
मुष्टिभ्यां ताडयामास वालिनं सोऽपि तं तथा।
अहन् वाली च सुग्रीवं सुग्रीवो वालिनं तथा ॥ ४३ ॥
रामं विलोकयन्नेव सुग्रीवो युयुधे युधि।
इत्येवं युध्यमानौ तौ दृष्ट्वा रामः प्रतापवान् ॥ ४४ ॥
बाणमादाय तूणीरादैन्द्रं धनुषि सन्दधे।
आकृष्य कर्णपर्यन्तमदृश्यो वृक्षखण्डगः ॥ ४५ ॥
निरीक्ष्य वालिनं सम्यग्लक्ष्यं तद्धृदयं हरिः।
उत् ससर्जाशनिसमं महावेगं महाबलः ॥ ४६ ॥
बिभेद स शरो वक्षो वालिनः कम्पयन्महीम्।
उत्पपात महाशब्दं मुञ्चन् स निपपात ह ॥ ४७ ॥

वाक्यो भीतभीतम् अत्यन्तभयसूचकमिदं वाक्यं कथं वदेत् ॥४०॥४१॥
उत्पपात युद्धाय तत्स्थानमिति शेषः ॥ ४२ ॥
अहन् हतवान् ॥ ४३ ॥
रामं विलोकयन् शीघ्रमेतं जहीति इच्छा सूचयन् ॥ ४४ ॥
ऐन्द्रे धनुषि अगस्त्यदत्ते ऐन्द्रमिति पाठे ऐन्द्रास्त्राभिमन्त्रित-मित्यर्थः वृक्षखण्डगः वृक्षसमूहगः ॥ ४५ ॥
तत् हृदयं लक्ष्यं कृत्वेति शेषः ॥ ४६ ॥
महीं कम्पयन् स शरो रामधनुः सकाशात् महाशब्दं मुञ्चन् उत्पपात आकाशे इति शेषः ततः स निपपात वालिवक्षसि ततश्च तद् बिभेद ॥४७॥

तदा मुहूर्तं निःसंज्ञो भूत्वा चेतनमाप सः।
ततो वाली ददर्शाग्रे रामं राजीवलोचनम्।
धनुरालम्ब्य वामेन हस्तेनान्येन सायकम् ॥ ४८ ॥
बिभ्राणं चीरवसनं जटामुकुटधारिणम्।
विशालवक्षसं भ्राजद्वनमालाविभूषितम् ॥ ४९ ॥
पीनचार्वायतभुजं नवदूर्वादलच्छविम्।
सुग्रीवलक्ष्मणाभ्यां च पार्श्वयोः परिसेवितम् ॥ ५० ॥
विलोक्य शनकैः प्राह वाली रामं विगर्हयन्।
किं मयापकृतं? राम! तव येन हतोऽस्म्यहम् ॥ ५१ ॥
राजधर्ममविज्ञाय गर्हितं कर्म ते कृतम्।
वृक्षखण्डे तिरो भूत्वा त्यजता मयि सायकम् ॥ ५२ ॥
यशः किं लप्स्यसे राम! चोरवत् कृतसङ्गरः।
यदि क्षत्रियदायादो मनोर्वंशसमुद्भवः ॥ ५३ ॥
युद्धं कृत्वा समक्षं मे प्राप्स्यसे तत्फलं तदा।

तदा वक्षोभेदकाले चेतनं चैतन्यम् वामेन धनुरन्येन सायकमन्यमालम्ब्य स्थितमिति शेषः ॥ ४८ ॥

वक्षसि वनमाला कण्ठमारभ्याजानुमाला वनमाला तया विभूषितम् ॥ ४९ । ५० ॥

विगर्हयन् कुत्सयन् ॥ ५१ ॥

राजधर्ममिति तिरोभूयान्येन युद्धं कुर्वति बाणपातः कृतत्वान्न राजधर्म इति भावः ल्यबभाव आर्षः ॥ ५२ ॥

चोरवत् कृतसङ्गरस्त्वं मां हत्वा यशो लप्स्यसे किम् अपित्वयश एवेति भावः यदि ते क्षत्रियदायादत्वाद्यभिमानस्तदा मे मम समक्षं युद्धं कृत्वा तत्फलं यशो मरणं वा प्राप्स्यसे प्राप्तो भवेः अन्नार्थेऽन्यथाप्रयोगेणावधानमनस्कता लक्ष्यते ॥ ५३ ॥

सुग्रीवेण कृतं किं ते ? मया वा न कृतं किमु ? ॥५४॥
रावणेन हृता भार्या तव राम ! महावने ।
सुग्रीवं शरणं यातस्तदर्थमिति शुश्रुम ॥ ५५ ॥
यत् राम ! न जानीषे मद्बलं लोकविश्रुतम् ।
रावणं सकुलं बद्धा ससीतं लङ्कया सह ॥ ५६ ॥
आनयामि मुहूर्त्तार्धाद्यदि चेच्छामि राघव ! ।
धर्मिष्ठ इति लोकेऽस्मिन् कथ्यसे रघुनन्दन ! ॥ ५७ ॥
वानरं व्याधवद्धत्वा धर्मं कं लप्स्यसे वद ।
अभक्ष्यं वानरं मांसं हत्वा मां किं करिष्यसि ? ॥ ५८ ॥
इत्येवं बहुभाषन्तं वालिनं राघवोऽब्रवीत् ।
धर्मस्य गोप्ता लोकेऽस्मिंश्चरामि सशरासनः ॥ ५९ ॥
अधर्मकारिणं हत्वा सद्धर्मं पालयाम्यहम् ।
दुहिता भगिनी भ्रातुर्भार्या चैव तथा स्नुषा ॥ ६० ॥
समा यो रमते तासामेकामपि विमूढधीः ।
पातकी स तु विज्ञेयः स वध्यो राजभिः सदा ॥ ६१ ॥

कृतं उपकृतमित्यर्थः ॥ ५५–५७ ॥

कं धर्मं कां धर्मकृतां कीर्त्तिम् ऐहिकमपि न लभसे इत्याह अभक्ष्यमिति ॥ ५८ ॥

इत्येवं बहुभाषन्तम् असम्बद्धं प्रलपन्तमित्यर्थः ॥ ५९ ॥

अधर्मेति सद्धर्मरक्षणार्थत्वादधर्मकारिवधस्य न दोषत्वमिति भावः अधर्मकारित्वं वालिनः समर्थयते दुहितेत्यादि भ्रातुः कनिष्ठस्येति शेषः ॥ ६० ॥

एताः सर्वाः समास्तुल्यास्तासां मध्ये यो विमूढधीरपि एकां रमते स पातकी ज्ञेयः विमूढधीरपीत्यनेनाज्ञानाच्च दोष इति परिहृतम् ऐह-

त्वन्तु भ्रातुः कनिष्ठस्य भार्यायां रमसे बलात्।
अतो मया धर्मविदा हतोऽसि वनगोचर! ॥ ६२ ॥
त्वं कपित्वान्न जानीषे महान्तो यच्चरन्ति यत्।
लोकं पुनानाः सञ्चारैस्तत्तान्नातिभावयेत् ॥ ६३ ॥
तच्छ्रुत्वा भयसन्त्रस्तो ज्ञात्वा रामं रमापतिम्।
वाली प्रणम्य रभसाद्रामं वचनमब्रवीत् ॥ ६४ ॥
राम राम! महाभाग! जाने त्वां परमेश्वरम्।
अजानता मया किञ्चिदुक्तं तत् क्षन्तुमर्हसि ॥ ६५ ॥
साक्षात्त्वच्छरघातेन विशेषेण तवाग्रतः।
त्यजाम्यसून्महायोगिदुर्लभं तव दर्शनम् ॥ ६६ ॥

भ्रातृभार्याभिगामित्वरूपेऽपि महानेव दोषः अतएव तस्य वधपर्यन्तो दण्ड इत्याह स वध्य इति ॥ ६१ ॥

ननु मनुष्याधिकारिकं शास्त्रं नतु तिर्यगादिविषयमतस्तिरश्चामस्माकं कोऽत्र दोष इति चेत् शृणु तिरश्चामनधिकारो हि अज्ञानकृतः तज्ज्ञानं वाल्यादिषु स्वयं प्रतिभातमेवत्वात् देवांशत्वाच्च एवं च कर्त्तव्याकर्त्तव्यज्ञानवतामकर्त्तव्यकरणे दोषो भवत्येव अत एवेन्द्रादीनामहल्यातिक्रमणादौ दोषश्रुतिः सङ्गच्छते देवानां यज्ञाद्यनधिकारस्तु यजनीयदेवतान्तराभावात् अतएव ब्रह्मविद्यायामिन्द्रादीनामप्यधिकारः श्रुतिषु श्रूयते इत्येषोऽत्र भगवतोऽभिप्रायः ॥ ६२ ॥

किञ्च मच्चिन्तया दोषान्तरमागपि त्वं ज्ञायसे इत्याह त्वं कपित्वादिति सञ्चारैर्लोकं पुनाना महान्तो विचरन्ति यत् यतोऽतस्तान्नातिभावयेत् न निन्देत् त्वं तु एवं सञ्चरन्तीति न जानीषे इत्यन्वयः विचरन्तीति पाठान्तरम् एवञ्च त्वादृशपवित्रीकरणार्थं एवायं मम सञ्चार इति ध्वनितम् ॥ ६३ । ६४ ॥

अजानता त्वदीयं परमेश्वरत्वमजानतेत्यर्थः ॥ ६५ ॥

तवाग्रत इति त्वत्स्वरूपध्यानपूर्वकं तवाग्रत इत्यर्थः तव दर्शनं त्वत्स्वरूपध्यानं महायोगिनामपि दुर्लभम् ॥ ६६ ॥

यन्नाम विवशो गृह्णन् म्रियमाणः परं पदम् ।
याति साक्षात् स एवाद्य मुमूर्षोर्मे पुरः स्थितः ॥६७॥
देव! जानामि पुरुषं त्वां श्रियं जानकीं शुभाम् ।
रावणस्य वधार्थाय जातं त्वां ब्रह्मणार्थितम् ॥ ६८ ॥
अनुजानीहि मां राम! यान्तं त्वत्पदमुत्तमम् ।
मम तुल्यबले बाले अङ्गदे त्वं दयां कुरु ॥ ६९ ॥
विशल्यं कुरु मे राम! हृदयं पाणिना स्पृशन् ।
तथेति बाणमुद्धृत्य रामः पस्पर्श पाणिना ।
त्यक्त्वा तद्वानरं देहममरेन्द्रोऽभवत् क्षणात् ॥ ७० ॥

वाली रघूत्तमशराभिहतो विमृष्टो
रामेण शीतलकरेण सुखाकरेण ।
सद्यो विमुच्य कपिदेहमवश्यलभ्यं
प्राप्तः परं परमहंसगणैर्दुरापम् ॥ ७१ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्ध्याकाण्डे
द्वितीयः सर्गः ।

विवशः पुत्रादिममताक्रान्तोऽपि साक्षात्त्वां पश्यतो म्रियमाणस्य परमपदप्राप्तिरिति किं वक्तव्यमित्यर्थः ॥ ६७—६९ ॥

अमरेन्द्रोऽभवत् तदंशत्वात्तत्वैव लयमापेत्यर्थः ॥ ७० ॥

विमृष्टः स्पृष्ट इति यावत् परमं पदमैन्द्रं पदं अधिकारान्ते मुक्तिदत्वात्तस्यापि परमपदत्वेन व्यवहारः ॥ ७१ ॥

इति श्रीमद्ब्रह्मराजविपद्बुरधममर्थेत्यादिवि० श्रीरामवर्मणः
कृतावध्यात्मरामायणसेतौ किष्किन्ध्याकाण्डे
द्वितीयः सर्गः ।

अथ तृतीयः सर्गः ।

निहते वालिनि रणे रामेण परमात्मना ।
दुद्रुवुर्वानराः सर्वे किष्किन्ध्यां भयविह्वलाः ॥ १ ॥
तारामूचुर्महाभागे ! हतो वाली रणाजिरे ।
अङ्गदं परिरक्षाय मन्त्रिणः परिनोदय ॥ २ ॥
चतुर्द्वारकपाटादीन् बद्धा रक्षामहे पुरीम् ।
वानराणां तु राजानमङ्गदं कुरु भामिनि ! ॥ ३ ॥
निहतं वालिनं श्रुत्वा तारा शोकविमूर्च्छिता ।
अताडयत् स्वपाणिभ्यां शिरोवक्षश्च भूरिशः ॥ ४ ॥
किमङ्गदेन राज्येन नगरेण धनेन वा ? ।
इदानीमेव निधनं यास्यामि पतिना सह ॥ ५ ॥
इत्युक्त्वा त्वरिता तत्र रुदन्ती मुक्तमूर्धजा ।
ययौ तारातिशोकार्त्ता यत्र भर्तृकलेवरम् ॥ ६ ॥
पतितं वालिनं दृष्ट्वा रक्तैः पांशुभिरावृतम् ।
रुदती नाथनाथेति पतिता तस्य पादयोः ॥ ७ ॥
करुणं विलपन्ती सा ददर्श रघुनन्दनम् ।
राम ! मां जहि बाणेन येन वाली हतस्त्वया ॥ ८ ॥
गच्छामि पतिसालोक्यं पतिर्मामभिकाङ्क्षते ।

निहत इति ॥ १ ॥

परिनोदय नगरादिरक्षार्थमिति शेषः ॥ २ ॥

चतुर्द्वारकपाटादीनिति आदिना कृत्स्नानेकद्वारकपाटपरिखादि-संग्रहः ॥ ३ ॥ ४ ॥

निधनं यास्यामि वह्निप्रवेशेनेति शेषः ॥ ५ । ६ । ७ ॥

येनेति येन बाणेन वाली हतस्तेन बाणेन मां जहि वालिशरीर-भूततया तदुद्देश्यस्य मदुद्देश्यत्वादिति भावः ॥ ८ । ९ ॥

स्वर्गेऽपि न सुखं तस्य मां विना रघुनन्दन ! ॥ ९ ॥
पत्नीवियोगजं दुःखमनुभूतं त्वयानघ ! ।
वालिने मां प्रयच्छाशु पत्नीदानफलं भवेत् (१) ॥ १० ॥
सुग्रीव ! त्वं सुखं राज्यं दापितं वालिघातिना ।
रामेण रुमया सार्धं भुंक्ष्व सापत्नवर्जितम् ॥ ११ ॥
इत्येवं विलपन्तीं तां तारां रामो महामनाः ।
आश्वासयामास दयया तत्त्वज्ञानोपदेशतः ॥ १२ ॥

श्रीराम उवाच ।

किं भीरु ! शोचसि व्यर्थं ? शोकस्याविषयं पतिम् ।
पतिस्तवायं देहो वा जीवो वा वद तत्त्वतः ॥ १३ ॥
पञ्चात्मको जडो देहस्त्वङ्मांसरुधिरास्थिमान् ।
कालकर्मगुणोत्पन्नः सोऽप्यास्तेऽद्यापि ते पुरः ॥ १४ ॥
मन्यसे जीवमात्मानं जीवस्तर्हि निरामयः ।
न जायते न म्रियते न तिष्ठति न गच्छति ॥ १५ ॥

पत्नीदानफलमिति तेन कर्मणा तथापि पत्नीलाभो भविष्यतीति भावः ॥ १०॥

वालिघातिना रामेण दापितं वालिनेति शेषः वालिनो दातृत्वञ्च मरणे न स्वत्वत्यागमात्रेणेति बोध्यम् ॥ ११—१२ ॥

देहजीवयोः पतित्वं विकल्प्य नाद्य इत्याह पञ्चात्मक इति पञ्च-भूतात्मक इत्यर्थः इदं जडत्वोपपादकं त्वङ्मांसेत्यादिनात्यन्तबीभत्सत्वं दर्शितम् कालेन कर्मभिर्गुणैः सत्त्वादिभिश्चोत्पन्न इत्यनेन नश्वरत्वमेवञ्च तत्रात्यन्तं प्रीत्ययोगे का ते पतिबुद्धिरित्यर्थः अथाप्येवं बुद्धिरेव ते तर्हि सोऽस्त्येवेति व्यर्थशोक इत्यर्थः ॥ १४ ॥

नान्त्य इत्याह मन्यसे इति निरामयः मायादिरहितः तदाह न जायते इत्यादि ॥ १५ ॥

(१) लभ इति वा पाठः ।

न स्त्री पुमान्वा षण्ढो वा जीवः सर्वगतोऽव्ययः ।
एक एवाद्वितीयोऽयमाकाशवदलेपकः ।
नित्यो ज्ञानमयः शुद्धः स कथं शोकमर्हति ॥ १६ ॥

तारोवाच ।

देहोऽचित्काष्ठवद्राम ! जीवो नित्यश्चिदात्मकः ।
सुखदुःखादिसम्बन्धः कस्य स्याद्राम ! मे वद ॥ १७ ॥

श्रीराम उवाच ।

अहङ्कारादिसम्बन्धो यावद्देहेन्द्रियैः सह ।
संसारस्तावदेव स्यादात्मनस्त्वविवेकिनः ॥ १८ ॥
मिथ्यारोपितसंसारो न स्वयं विनिवर्त्तते ।
विषयान्ध्यायमानस्य स्वप्ने मिथ्यागमो यथा ॥ १९ ॥

सर्वगतश्चेतनो जीव एक एव अद्वितीय इति द्वितीयसम्बन्धरहितस्तदेवाहाकाशवदलेपक इति अलिप्त इत्यर्थः मायागुणैरिति शेषः स कथमिति अविनाशित्वादिति भावः ॥१६॥

देहः काष्ठवदचित् अचेतन इत्यर्थः जीवश्चिदात्मको ज्ञानस्वरूप एव न तु सुखादिपरिणामवान् एवं सति सुखादिसम्बन्धः कस्य स्यात् अचेतनत्वात् स्थूलस्य सूक्ष्मस्य नाप्यपरिणामित्वादात्मन इत्यर्थः ॥१७॥

उत्तरयति अहङ्कारादीति देहेन्द्रियैः सह तेषु इत्यर्थः अहङ्कारादिसम्बन्धः अहं ममेत्येवं बुद्धिविषयता इत्यर्थः प्राक् स्थूलसूक्ष्मदेहयोरुभयोरप्यहं बुद्धिरेव केवलाविस्तु स्थूलदेहे पुत्रादौ च ममता बुद्धिः सूक्ष्मे तु सर्वेषामहं बुद्धिरेवेति विवेकः तावद्देयाविवेकिनोऽन्तःकरणादिभ्यः स्वस्मिन् विवेकाग्रहणत आत्मनः संसारः स्यादित्यर्थः ॥ १८ ॥

एवं शुद्धस्यात्मनोऽध्याविवेकादारोपितः संसारः स्वत एव न विनिवर्त्तते यथा स्वप्नस्य मिथ्यागमः स्वाप्नमिथ्यापदार्थदर्शनं न स्वतो निवर्त्तते किन्तु जाग्रद्दशयैव तद्वदिति भावः ॥ १९ ॥

अनाद्यविद्यासम्बन्धात्तत्कार्यौहङ्कृतिस्तथा।
संसारोऽपार्थकोऽपि स्याद्रागद्वेषादिसङ्कुलः ॥ २० ॥
मन एव हि संसारो बन्धश्चैव मनः शुभे!।
आत्मा मनः समानत्वमेत्य तद्गतबन्धभाक् ॥ २१ ॥
यथा विशुद्धः स्फटिकोऽलक्तकादिसमीपतः।
तत्तद्वर्णयुता भाति वस्तुतो नास्ति रञ्जनम् ॥ २२ ॥
बुद्धीन्द्रियादिसामीप्यादात्मनः संसृतिर्बलात्।
आत्मा स्वलिङ्गन्तु मनः परिगृह्य तदुद्भवान् ॥ २३ ॥
कामान् जुषन् गुणैर्बद्धः संसारे वर्त्ततेऽवशः।
आदौ मनो गुणान् सृष्ट्वा ततः कर्माण्यनेकधा ॥ २४ ॥
शुक्ललोहितकृष्णानि गतयस्तत्समानतः।

तत्र स्वस्य विषयध्यानवत्संसारस्य मूलकारणमाह अनादीति अविद्या अनात्मन्यात्मबुद्धिर्माया वा या अयथार्थकः अतएवमिथ्याभूतः॥२०॥

मन एवेति मनोऽन्तःकरणं संसारस्तन्मूलकारणमित्यर्थः बन्धः सुखादिभोगस्तद्धत् मन एव मनसा समानत्वं आत्ममनसोरैक्यं तद्गतबन्धभाक् तद्गतबन्धयुक्तो भवतीत्यर्थः ॥ २१ । २२ ॥

बुद्धीति यथालक्तकादिसामीप्यात् स्फटिकस्य रक्तत्वादिव्यवहारः एवं संसारधर्मकबुद्धीन्द्रियादिसामीप्यादात्मनो बलादवशतः संसारव्यवहारो लोकैः क्रियत इत्यर्थः तदेवाहात्मेति मनसो जडत्वेन कामादिजनकत्वासम्भवात् चेतनस्यात्मनो लिङ्गमनुमापकं मनोऽन्तःकरणं परिगृह्य तेनाविवेकं प्राप्य तदुद्भवान् ततो जातान् कामान् विषयान् जुषन् गुणैस्तदीयै रागद्वेषादिभिर्बद्ध इवावशः संसारे वर्तते ॥ २३ ॥

विषयाणां मन उद्भवत्वं दर्शयति आदाविति गुणान् रागद्वेषादीन् ततो रागद्वेषादितः कर्माणि सृष्टवदिति शेषः ॥ २४ ॥

तत्र कर्मभेदानाह शुक्लेत्यादि शुक्लकर्माणि हिंसादिरहितजपध्या-

एवं कर्मवशाज्जीवो भ्रमत्याभूतसंप्लवम् ॥ २५ ॥
सर्वोपसंहृतौ जीवो वासनाभिः स्वकर्मभिः ।
अनाद्यविद्यावशगस्तिष्ठत्यभिनिवेशतः ॥ २६ ॥
सृष्टिकाले पुनः पूर्ववासनामानसैः सह ।
जायते पुनरप्येवं घटीयन्त्रमिवावशः ॥ २७ ॥
यदा पुण्यविशेषेण लभते सङ्गतिं सताम् ।
मद्भक्तानां सुशान्तानां तदा मद्विषया मतिः ॥ २८ ॥
मत्कथाश्रवणे श्रद्धा दुर्लभा जायते ततः ।
ततः स्वरूपविज्ञानमनायासेन जायते ॥ २९ ॥
तदाचार्यप्रसादेन वाक्यार्थज्ञानतः क्षणात् ।

मादिरूपाणि लोहितानि हिंसामिश्रयागादीनि कृष्णानि पापकर्माणि तत्प्रमाणतः कर्मस्य रूपतुल्या गतयो गतीः सृष्टिवदिति शेषः गतय इति द्वितीयार्थे आर्षम् तत्र शुक्लकर्मणः शुक्ला ब्रह्मलोकप्राप्तिरूपोत्तमा गतिः लोहितकर्मणो मध्यमा स्वर्गगतिः कृष्णकर्मणोऽधमा नरकगतिरित्यर्थः भूतसंप्लवः प्रलयस्तावत्पर्यन्तं कर्मवशाद्भ्रमति ॥ २५ ॥

सर्वोपसंहृतौ प्रलये वासनाभिःकर्मभिश्च सहाभिनिवेशतः अन्तःकरणादितादात्म्याध्यासात् अन्तःकरणादिप्रकृतिभूतानाद्यविद्यावशगस्तल्लीनः सन् तिष्ठति ॥ २६ ॥

वासनाश्च मानसानि कर्माणि च तैः सह तद्युक्त एव जायते वर्षाकाले मण्डूकवत्प्रादुर्भवति एवं सृष्टिप्रलययोर्घटीयन्त्रमिवावर्त्तमानस्तिष्ठति ॥ २७ ॥

नन्वेवमस्य मुक्तिं प्रत्याशैव न किं नेत्याह यदेति मद्विषया मतिः ईश्वरो महानित्येवं बुद्धिर्जायते इति शेषः ॥ २८ ॥

ततः ईश्वरविषयबुद्ध्यनन्तरम् ततः स्वरूपविज्ञानं स्वरूपं विज्ञायते अनेन ततः विषयेषु अनित्याशुचिदुःखरूपं वैराग्यं नित्यानित्यविवेकादि च जायते इत्यर्थः ॥ २९ ॥

तदा तादृशवैराग्यादौ जाते आचार्यप्रसादेन तत्त्वमस्यादिवाक्या-

देहेन्द्रियमनःप्राणाहङ्कृतिभ्यः पृथक् स्थितम् ॥ २० ॥
स्वात्मानुभावतः सत्यमानन्दात्मानमद्वयम् ।
ज्ञात्वा सद्यो भवेन्मुक्तः सत्यमेव मयोदितम् ॥ २१ ॥
एवं मयोदितं सम्यगालोचयति योऽनिशम् ।
तस्य संसारदुःखानि न स्पृशन्ति कदाचन ॥ २२ ॥
त्वमप्येतन्मया प्रोक्तमालोचय विशुद्धधीः ।
न स्पृश्यसे दुःखजालैः कर्मबन्धाद्विमोक्ष्यसे ॥ २३ ॥
पूर्वजन्मनि ते सुभ्रु ! कृता मद्भक्तिरुत्तमा ।
अतस्तव विमोक्षाय रूपं मे दर्शितं शुभे ! ॥ २४ ॥
ध्यात्वा मद्रूपमनिशमालोचय मयोदितम् ।
प्रवाहपतितं कार्यं कुर्वन्त्यपि न लिप्यसे ॥ २५ ॥

देहेत्यादि। आत्मानमिति सम्बन्धः। देहादिभ्यः पृथक्स्थितं सत्यमानन्दरूपमद्वितीयमात्मानं स्वात्मानुभवतः स्वात्मविषयादीदृशं ब्रह्माहमेवेत्येवंरूपाद्विदिध्यासनात् ज्ञात्वा अपरोक्षीकृत्य सद्यस्तत्कालमेव संसारान्मुक्तो भवेदित्यर्थः ॥ २० । २१ ॥

आलोचयति बुद्ध्या निर्णयति तस्य क्रमेण ज्ञानप्राप्त्या संसारदुःखाभावः ॥ २२ ॥

कर्मबन्धात् कर्मकृताद्बन्धाद् संसाररूपादित्यर्थः ॥ २३ ॥

मे मया रूपं दर्शितं स्वरूपं दर्शितमित्यर्थः अत्र तारायै भगवता विश्वरूपदर्शनं कारितमिति ध्वनयति यद्वा दर्शितमित्यं बोधितमित्यर्थः ॥ २४ ॥

मद्रूपं परिच्छिन्नमानं रूपं दर्शितं विश्वरूपं च आलोचय विचारय प्रवाहपतितं संसारप्रवाहपतितं कार्यं सांसारिकं कार्यं कुर्वन्त्यपि तद्दोषैर्न लिप्यसे इत्यर्थः ॥ २५ ॥

श्रीरामेणोदितं सर्वं श्रुत्वा तारातिविस्मिता।
देहाभिमानजं शोकं त्यक्त्वा नत्वा रघूत्तमम्॥ ३६॥
आत्मानुभवसन्तुष्टा जीवन्मुक्ता बभूव ह।
क्षणसङ्गमात्रेण रामेण परमात्मना॥ ३७॥
अनादिबन्धं निर्धूय मुक्ता सापि विकल्मषा।
सुग्रीवोऽपि च तच्छ्रुत्वा रामवक्त्रात्समीरितम्॥ ३८॥
जहावज्ञानमखिलं स्वस्थचित्तोऽभवत्तदा।
ततः सुग्रीवमाहेदं रामो वानरपुङ्गवम्॥ ३९॥
भ्रातुर्ज्येष्ठस्य पुत्रेण यद्युक्तं साम्परायिकम्।
कुरु सर्वं यथान्यायं संस्कारादि ममाज्ञया॥ ४०॥
तथेति बहुभिर्मुख्यैर्वानरैः परिगृह्य तम्।
वालिनं पुष्पके क्षिप्त्वा सर्वराजोपचारकैः॥ ४१॥
भेरीदुन्दुभिनिर्घोषैर्ब्राह्मणैर्मन्त्रिभिः सह।
यूथपैर्वानरैः पौरैस्तारया चाङ्गदेन च॥ ४२॥
गत्वा चकार तत्सर्वं यथाशास्त्रं प्रयत्नतः।

देहाभिमानजं देहे अहं मम इत्याकारकाभिमानाज्जातम्॥३६॥
जीवन्मुक्ता तदवस्था परमात्मना रामेण सह इत्यात् क्षणसङ्गमे-
नैव सापि तिर्यग्योनिरपि तारा अनादिबन्धं संसाररूपं निर्धूय तिर-
स्कृत्य विकल्मषा निःपापा सती मुक्ता जीवन्मुक्ता च सती॥ ३७—३८॥
सुग्रीवं किमाहेत्यत आह भ्रातुरिति ज्येष्ठस्य भ्रातुर्यत्साम्परायिकम्
पारलौकिकं युक्तं तत्पुत्रेणाङ्गदेन कुरु कारयेत्यर्थः ननु भवद्भ्यां
कथमस्माभिः संस्कारादि कार्यं तत्राह ममाज्ञयेति॥ ४०॥
तथेतीत्यस्याङ्गीकारोति शेषः परिगृह्य उत्थाप्य पुष्पकविमानतुल्ये
वाहने सर्वराजोपचारैर्युक्तं वालिनं क्षिप्त्वा॥ ४१। ४२॥

स्नात्वा जगाम रामस्य समीपं मन्त्रिभिः सह ॥ ४३ ॥
नत्वा रामस्य चरणौ सुग्रीवः प्राह हृष्टधीः ।
राज्यं प्रशाधि राजेन्द्र ! वानराणां समृद्धिमत् ॥ ४४ ॥
दासोऽहन्ते पादपद्मं सेवे लक्ष्मणवच्चिरम् ।
इत्युक्तो राघवः प्राह सुग्रीवं सस्मितं वचः ॥ ४५ ॥
त्वमेवाहं न सन्देहः शीघ्रं गच्छ ममाज्ञया ।
पुरराज्याधिपत्ये त्वं स्वात्मानमभिषेचय ॥ ४६ ॥
नगरं न प्रवेक्ष्यामि चतुर्दशसमाः सखे ! ।
आगमिष्यति मे(१) भ्राता लक्ष्मणः पत्तनं तव ॥ ४७ ॥
अङ्गदं यौवराज्ये त्वमभिषेचय सादरम् ।
अहं समीपे शिखरे पर्वतस्य सहानुजः ॥ ४८ ॥
वत्स्यामि वर्षदिवसान् ततस्त्वं यत्नवान् भव ।
किञ्चित्कालं पुरे स्थित्वा सीतायाः परिमार्गणे ॥ ४९ ॥
साष्टाङ्गं प्रणिपत्याह सुग्रीवो रामपादयोः ।

तत् कृतोचितसंस्कारादिः ॥ ४३ ॥

वानराणां राज्यं प्रशाधीत्यन्वयः ॥ ४४ । ४५ ॥

त्वमेवाहं अनेन त्वया क्रियमाण राज्यभोग एव मम भोग इति सूचितम् किञ्चानासक्तो राज्यं भुङ्क्ष्व ईश्वरप्रेरितोऽहं राज्यं कुर्वे इति मत्या च तादृश्या बुध्या क्रियमाणया क्रियया भगवान् तुष्यत्वेवेति ध्वनितम् पुरराज्याधिपत्ये किष्किन्ध्यापुरराज्याधिपत्ये ॥ ४६ ॥

तर्हि मदभिषेककाले तत्र सन्निधानं कुर्विति चेत्तत्राह नगरमिति पत्तनं नगरम् ॥ ४७ ॥

अहं च नगरस्य समीपे पर्वतस्य शिखरे वत्स्यामीत्यन्वयः ॥ ४८ ॥

वर्षदिवसान् वर्षाकालम् ततः राज्याभिषेकानन्तरं किञ्चित्कालं वर्षा-

(१) ते इति क्वचित् पाठः ।

यदाज्ञापयसि देव ! तत्तथैव करोम्यहम् ॥ ५० ॥

अनुज्ञातस्तु रामेण सुग्रीवस्तु सलक्ष्मणः ।
गत्वा पुरं तथा चक्रे यथा रामेण चोदितः ॥ ५१ ॥

सुग्रीवेण यथा न्याय्यं पूजितो लक्ष्मणस्तदा ।
आगत्य राघवं शीघ्रं प्रणिपत्योपतस्थिवान् ॥ ५२ ॥

ततो रामो जगामाशु लक्ष्मणेन समन्वितः ।
प्रवर्षणगिरेरूर्द्ध्वं शिखरं भूरिविस्तरम् ॥ ५३ ॥

तत्रैकं गह्वरं दृष्ट्वा स्फाटिकं दीप्तिमच्छुभम् (१) ।
वर्षवातातपसहं फलमूलसमीपगम् ।
वासाय रोचयामास तत्र रामः सलक्ष्मणः ॥ ५४ ॥

दिव्यमूलफलपुष्पसंयुते मौक्तिकोपमजलौघपल्वले ।
चित्रवर्णमृगपक्षिशोभिते पर्वते(२)रघुकुलोत्तमोऽवसत् ॥ ५५ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्ध्याकाण्डे
तृतीयः सर्गः ।

समयं स्वपुरे स्थित्वा सीतायाः परिमार्गणे अन्वेषणे यत्नवान् भवेत्य-
न्वयः ॥ ४९ ॥ ५० ॥

चोदितः प्रेरितः ॥ ५१–५२ ॥

गह्वरं गुहां फलमूलानि समीपगानि यस्य तत् ॥ ५४ ॥

मौक्तिकोपमजलौघो जलसमूहो येषु तादृशानि पल्वलानि य-
स्मिन् तादृशे पर्वते स्वर्णः नानावर्णैर्मृगैः पक्षिभिश्च शोभिते ॥ ५५ ॥

इति श्रीमदलकनगरराजवि० श्रीरामवर्मणः कृताव-
ध्यात्मरामायणे सेतौ किष्किन्ध्याकाण्डे
तृतीयः सर्गः ।

(१) दीप्तमद्भुतमिति वा पाठः । (२) राघवो इत्यपि पाठः ।

अथ चतुर्थः सर्गः ।

तत्र वार्षिकदिनानि राघवो
लीलया मणिगुहासु सञ्चरन् ।
पक्वमूलफलभोगतोषितो
लक्ष्मणेन सहितोऽवसत् सुखम् ॥ १ ॥

वातनुन्नजलपूरितमेघान्तरस्तनितवैद्युतगर्भान् ।
वीक्ष्य विस्मयमगाद्गजयूथान् यद्वदाहितसुकाञ्चनकक्षान् ॥ २

नवघासं समासाद्य हृष्टपुष्टमृगद्विजाः ।
धावन्तः परितो रामं वीक्ष्य विस्फारितेक्षणाः ॥ ३ ॥

न चलन्ति सदा ध्याननिष्ठा इव मुनीश्वराः ।
रामं मानुषरूपेण गिरिकाननभूमिषु ॥ ४ ॥

चरन्तं परमात्मानं ज्ञात्वा सिद्धगणा भुवि ।
मृगपक्षिगणा भूत्वा राममेवानुसेविरे ॥ ५ ॥

सौमित्रिरेकदा राममेकान्ते ध्यानतत्परम् ।

तत्र पर्वते इत्यर्थः वार्षिकदिनानि व्याप्येति शेषः सुखमित्यन्वयः ॥१॥

वातप्रेरितजलपूर्णमेघान् अन्तरे मध्ये स्तनित युक्तं वैद्युतं विद्यु-
त्समूहो गर्भे येषां तान् आहितसुकाञ्चनाः कक्षाः पृष्ठास्तरणानि येषां
तादृशान् गजयूथान्यद्वत् तानिव वीक्ष्य विस्मयमगात् अत्र गजा बृंहि-
तयुक्ता बोध्या अतएव स्तनितेनाधिक्यम् ॥ २ ॥

नवघासं तृणं विस्फारितेक्षणा भगवत्सौन्दर्यं दर्शनायेति भावः ॥३॥

तादृशाः सन्तो ध्याननिष्ठा मुनीश्वरा इव न चलन्ति राममित्याद्यु-
क्त्यामपि तत्रैते चरन्तो मृगपक्षिगणा न किन्तु सिद्धगणा इत्यपह्नुति-
र्व्यङ्ग्या ॥ ४—६ ॥

समाधिविरमे भक्त्या प्रश्रयाद्विनयान्वितः ॥ ६ ॥
अब्रवीद्देव ! ते वाक्यात् पूर्वोक्ताद्विगतो मम ।
अनाद्यविद्यासम्भूतः संशयो हृदि संस्थितः ॥ ७ ॥
इदानीं ज्ञातुमिच्छामि(१) क्रियामार्गेण राघव ! ।
भवदाराधनं लोके यथा कुर्वन्ति योगिनः ॥ ८ ॥
इदमेव सदा प्राहुर्योगिनो मुक्तिसाधनम् ।
नारदोऽपि तथा व्यासो ब्रह्मा कमलसम्भवः ॥ ९ ॥
ब्रह्मक्षत्रादिवर्णानामाश्रमाणां च मोक्षदम् ।
स्त्रीशूद्राणां च राजेन्द्र ! सुलभं मुक्तिसाधनम् ।
तव भक्ताय मे भ्रात्रे ब्रूहि लोकोपकारकम् ॥ १० ॥

श्रीराम उवाच ।

मम पूजाविधानस्य नान्तोऽस्ति रघुनन्दन ! ।
तथापि वक्ष्ये संक्षेपाद्यथावदनुपूर्वशः ॥ ११ ॥
स्वगृह्योक्तप्रकारेण द्विजत्वं प्राप्य मानवः ।
सकाशात्स गुरोर्मन्त्रं लब्ध्वा मद्भक्तिसंयुतः ॥ १२ ॥

धर्मादिभूतयाऽविद्यया संभूतो जातः संशयो विगत इत्यन्वयः ॥७॥

क्रियामार्गेण लौकिकपुष्पादिभिः पूजारूपेण यथा तत्प्रकारविशिष्टेन पूजामार्गेण योगिनो भवदाराधनं कुर्वन्ति तज्ज्ञातुमिच्छामीत्यन्वयः ॥८॥

इदमेव क्रियामार्गेणाराधनमेव योगिनएवाह नारद इत्यादि ॥९॥

मे मह्यम् ॥ १० ॥ ११ ॥

द्विजत्वं उपनयनसंस्कारं प्राप्य ज्ञानयोरव्यययोः प्राप्य लब्ध्वा एतयोराराधयेदित्यनेनान्वयः ॥ १२ ॥

(१) ज्ञातुमिच्छामि इति वा पाठः ।

तेन सन्दर्शितविधिर्मामेवाराधयेत् सुधीः ।
हृदये वानले वार्चेत्प्रतिमादौ विभावसौ ॥ १३ ॥
शालग्रामशिलायां वा पूजयेन्मामतन्द्रितः ।
प्रातःस्नानं प्रकुर्वीत प्रथमं देहशुद्धये ॥ १४ ॥
वेदतन्त्रोदितैर्मन्त्रैर्मृल्लेपनविधानतः ।
सन्ध्यादिकर्म यन्नित्यं तत्कुर्याद्विधिना बुधः ॥ १५ ॥
सङ्कल्पमादौ कुर्वीत सिद्ध्यर्थं कर्मणां सुधीः ।
स्वगुरुं पूजयेद्भक्त्या मद्बुद्ध्या पूजको मम ॥ १६ ॥
शिलायां स्नपनं कुर्यात् प्रतिमासु प्रमार्जनम् ।
प्रसिद्धैर्गन्धपुष्पाद्यैर्मत्पूजासिद्धिदायिका ॥ १७ ॥
अमायिकोऽनुवृत्त्या मां पूजयेन्नियतव्रतः ।
प्रतिमादिष्वलङ्कारः प्रियो मे कुलनन्दन ! ॥ १८ ॥

पूजास्थानान्याह हृदय इत्यादि स्वहृदयदेश इत्यर्थः इदं च मूर्धादीनामपि स्थानानामुपलक्षणम् अनले वह्नौ प्रतिमादौ प्रतिमा स्वर्णरजतादिमयी आदिना आम्रपत्रे विभावसौ सूर्यमण्डले अर्चेत् पूजयेत् ॥ १३ ॥

प्रातःस्नानमिति सकलप्रातःकृत्योपलक्षणम् ॥ १४ ॥

वेदेति द्विजो वेदोदितैः शूद्रादिस्तन्त्रोदितैः मृल्लेपनं सकलस्नानविधेरुपलक्षणं तेन स्नानं कुर्वन्नित्यन्वयः सन्ध्यादिना होमतर्पणादि ॥ १५ ॥

मम पूजको मद्बुद्ध्या भक्त्या स्वगुरुं पूजयेदित्यन्वयः अत्र गुर्वसान्निध्येऽपि ध्यानेन जलादौ गुरुं पूजयेदिति सम्प्रदायः ॥ १६ ॥

शिलायां शिलानिर्मितप्रतिमायाम् प्रतिमासु स्वर्णरजतादिनिर्मितास्वित्यर्थः प्रसिद्धैः स्मृतिप्रसिद्धैः तेन तन्निषिद्धपुष्पादिपूजानर्हमिति सूचितम् ते च निषेधा निबन्धेषु द्रष्टव्या विस्तरभयान्नेह लिखिताः ॥ १७ ॥

अमायिकः माया दम्भादिरूपा तद्रहितः अनुवृत्त्या गुरूपदिष्टमार्गानुवर्तनेन प्रतिमादिषु प्रतिमाश्च ते आदयश्च प्रतिमादयः तेषु प्रति-

अग्नौ यजेत हविषा भास्करे स्थण्डिले यजेत् ।
भक्तेनोपहृतं प्रीत्यै श्रद्धया मम वार्य्यपि ॥ १९ ॥
किं पुनर्भक्ष्यभोज्यादिगन्धपुष्पाक्षतादिकम् ।
पूजाद्रव्याणि सर्वाणि सम्पाद्यैवं समारभेत् ॥ २० ॥
चैलाजिन कुशैः सम्यगासनं परिकल्पयेत् ।
तत्रोपविश्य देवस्य सम्मुखे शुद्धमानसः ॥ २१ ॥
ततो न्यासं प्रकुर्वीत मातृकाबहिरान्तरम् ।
केशवादि ततः कुर्यात्तत्त्वन्यासं ततः परम् ॥ २२ ॥
मन्मूर्त्तिपञ्जरन्यासं मन्त्रन्यासं ततो न्यसेत् ।

माटिषु प्रतिमारूपेषु आदिषु आश्रयेषु पूजाधिकरणेष्वित्यर्थः तत्पुरुषः समासाधिकरणः कर्मधारयः प्रतिमारूपेष्वाश्रयेषु आदिशब्द आश्रयवाची "भीष्मादिश्च सुयोधन" इत्यादौ प्रसिद्धः अलङ्कारः पुष्पादिरूपः ॥ १८ ॥

आधारान्तरे पूजाविशेषमाहाग्नाविति अग्नौ तत्तद्देवतामन्त्रेण होम एव तत्तद्देवतापूजेत्यर्थः भास्करे स्थण्डिले यजेदिति भास्करे यजेदिति यत् तत्तदाकारे स्थण्डिले इत्यर्थः भक्तेन श्रद्धयोपहृतं वार्य्यपि मम प्रीत्यै भवतीति शेषः अनेन भक्तेरेव मुख्यत्वं दर्शितम् ॥ १९ ॥

भक्ष्यादिकमुपहृतं प्रीत्यै इति किं पुनर्वक्तव्यमित्यर्थः समारभेत् पूजामिति शेषः ॥ २० ॥

तत्र पूजाप्रकारमाह चैलेति अधः कुशासनं तदुपर्य्यजिनम् तदुपरि चैलमिति क्रमः तत्रोपविश्य यद्वासनाद्यन्यतमासनेनेत्यर्थः देवस्य सम्मुखे इत्यनेन स्थिरासु प्रतिमासु पश्चिमाद्यभिमुखतयापि पूजा भवतीति सूचितम् ॥ २१ ॥

मातृका अकारादिपञ्चाशद्वर्णात्मिका तन्न्यासप्रकारश्च तन्त्रे च स्फुटः बहिरिति बहिर्न्यासमान्तरं न्यासं चेत्यर्थः केशवादिचतुर्विंशतिमार्त्ति रित्यर्थः स च नारदपाञ्चरात्रादौ स्पष्टः तत्त्वन्यासोऽपि तत्रैवोक्तः ॥ २२ ॥

प्रतिमादावपि तथा कुर्य्यान्नित्यमतन्द्रितः ॥ २३ ॥
कलशं स्वपुरो वामे क्षिपेत् पुष्पादि दक्षिणे ।
अर्घ्यपाद्यप्रदानार्थं मधुपर्कार्थमेव च ॥ २४ ॥
तथैवाचमनार्थं तु न्यसेत्पात्रचतुष्टयम् ।
हृत्पद्मे भानुविमलात् (१) मत्कलां जीवसंज्ञिताम् ॥ २५ ॥
ध्यायेत् स्वदेहमखिलं तया व्याप्तमरिन्दम ! ।
तामेवावाहयेन्नित्यं प्रतिमादिषु मत्कलाम् ॥ २६ ॥
पाद्यार्घ्याचमनीयाद्यैः स्नानवस्त्रविभूषणैः ।
यावच्छक्योपचारैर्वा त्वर्चयेन्मामममायया ॥ २७ ॥
विभवे सति कर्पूरकुङ्कुमागुरुचन्दनैः ।

मन्त्रमूर्त्तिपञ्जरन्यासो विष्णुपञ्जरस्तोत्रोक्तो महान्यास इति सम्प्रदायः तत्त्वन्यासं मन्त्रवर्णैस्तत्तत्स्थानेषु षडङ्गादिन्यासं प्रतिमादावपीति "यथा-ऽऽत्मनि तथा देवे" इत्युक्तेः ॥ २३ ॥

स्ववामभागावच्छिन्न पुरोभागे कलशं जलपूर्णं स्थापयेदिति शेषः पुष्पादि दक्षिणे क्षिपेत् स्थापयेदित्यर्थः अर्घ्यादिपात्रस्थापनदेशः स्मृतौ उक्तः 'अर्घ्यपात्रं तु वायव्ये नैर्ऋत्यां पाद्यपात्रकम् । मध्ये तु मधुपर्कं स्यादैशे त्वाचमनीयकं' इति ॥ २४ ॥

जीवसंज्ञितां मत्कलामित्यनेन चेतनः सर्वत्रैक एवेति बोधितम् युक्तं चैतत् व्यापकेनैकेनैव चेतनोपपत्तावनेकतत्कल्पनायां मानाभावात् प्रतिशरीरव्यवस्थात्वन्तःकरणभेदेनैवोपपद्यतेति हृत्पद्मे तां ध्यायेत् ॥ २५ ॥

तया व्याप्तमखिलं स्वदेहं भावयेत् तथा भावयित्वा तामेव मत्कलां प्रतिमादिष्वावाहयेत् तदावाहनेन तामपि चेतनत्वेन ध्यात्वा ॥ २६ ॥

यावच्छक्यैरुपचारैर्वा षोडशभिः पञ्चभिर्वा तु पादपूरणार्थः अमायया अदम्भादिना मां पूजयेत् ॥ २७ ॥

(१) विमलां इति वा पाठः ।

अर्चयेन्मन्त्रवन्नित्यं सुगन्धकुसुमैः शुभैः ॥ २८ ॥
दद्यावरणपूजां वै ह्यागमोक्तां प्रकारयेत् ।
नीराजनैर्धूपदीपैर्नैवेद्यैर्विविधैस्तथा(१) ॥ २९ ॥
अद्वयोपहरेन्नित्यं श्रद्धाभुगहमीश्वरः ।
होमं कुर्यात्प्रयत्नेन विधिना मन्त्रकोविदः ॥ ३० ॥
अगस्त्येनोक्तमार्गेण कुण्डेनागमवित्तमः ।
जुहुयान्मूलमन्त्रेण पुंसूक्तेनाथवा बुधः ॥ ३१ ॥
अथवौपासनाग्नौ वा चरुणा हविषा तथा ।
तप्तजाम्बूनदप्रख्यं दिव्याभरणभूषितम् ॥ ३२ ॥
ध्यायेदनलमध्यस्थं होमकाले सदा बुधः ।
पार्षदेभ्यो बलिं दत्वा होमशेषं समापयेत् ॥ ३३ ॥

विभवे सति कर्पूरादिभिः सुगन्धपुष्पैश्च मन्त्रवदर्चयेत् ॥ २८ ॥

आगमोक्तां अगस्त्यसंहितोक्तां प्रकारयेत् प्रकुर्वीतेत्यर्थः नीराजनैरिति पाठक्रमादर्थक्रमस्य बलवत्त्वाद्धूपदीपनैवेद्यनीराजनानीतिक्रमः नीराजनं पञ्चारार्तिकादिभिः ॥ २९ ॥

तद्रूपादि अद्वयोपहरेद्द्यात् यतोऽहं श्रद्धाभुक् श्रद्धादत्तभोक्ता ॥३०

अगस्त्येनेति अगस्त्यसंहितोक्तमार्गेण कृतं यत्कुण्डं तेन तस्मिन्नित्यर्थः अधिकरणस्य करणत्वविवक्षया तृतीया मूलमन्त्रेण आगमोक्तेन पुंसूक्तेन पुरुषसूक्तेन एतद्ब्राह्मणविषयम् ॥ ३१ ॥

तद्भिन्ने एवाऽऽव्रावसोपासनाग्नाविति चरुणा हविषा हवीरूपेण चरुणा ॥ ३२ ॥

ध्यायेन्मामिति शेषः पार्षदेभ्यः तन्त्रोक्तकुमुदादिभ्यः ॥ ३३ ॥

---

(१) बहुविस्तरैः इति पाठान्तरम् ।

ततो जपं प्रकुर्वीत ध्यायन्मां यतवाक् स्मरन्।
मुखवासं च ताम्बूलं दत्त्वा प्रीतिसमन्वितः॥ ३४॥
मदर्थे नृत्यगीतादिस्तुतिपाठादि कारयेत्।
प्रणमेद्दण्डवद्भूमौ हृदये मां निधाय च ॥ ३५॥
शिरस्याधाय मद्दत्तं प्रसादं भावनामयम्।
पाणिभ्यां मत्पदे मूर्ध्नि गृहीत्वा भक्तिसंयुतः॥ ३६॥
रक्ष मां घोरसंसारादित्युक्त्वा प्रणमेत् सुधीः।
उद्वासयेद्यथा पूर्वं प्रत्यग्ज्योतिषि संस्मरन्॥ ३७॥
एवमुक्तप्रकारेण पूजयेद्विधिवद्यदि।
इहामुत्र च संसिद्धिं प्राप्नोति मदनुग्रहात्॥ ३८॥
मद्भक्तो यदि मामेवं पूजां चैव दिने दिने।

मां ध्यायन् स्मरन्नित्यस्य मनुमर्थानिति शेषः तदेवाह यतवागिति अनेन प्रशस्ततरो मानसो जप उक्तः मुखवासं तद्रूपकर्पूरादियुक्तं ताम्बूलं दद्यादित्यर्थः॥ ३४॥

मदर्थे मत्प्रीतये इत्यर्थः कारयेत् कुर्वीतेत्यर्थः निश्चलाङ्गो यथा स्थित् दण्डवदित्यनेनाष्टाङ्गप्रणाम उक्तः॥ ३५॥

भावनामयं मद्दत्तं प्रसादं शिरसि आधाय स्थापयित्वा अनेन मत्तो प्रसादं पुष्पादिरूपं भगवान् ददातीति भावनया प्रसादं गृह्णीयादिति सूचितं तं गृहीत्वा शिरसि स्थापयित्वा भावनाभाविते मत्पदे पाणिभ्यां स्वमूर्ध्नि गृहीत्वा धृत्वा॥ ३६॥

इत्युक्त्वा प्रणमेदित्यन्वयः प्रत्यग्ज्योतिषि स्वहृदयस्थे यतएव ध्यात्वा जीवकलया प्रतिमायामावाहिता पूर्वं तत्रैवोद्वासयेत् तत्रैव प्रविष्टां ध्यायेत् एतदेव विसर्जनम्॥ ३७॥

इहामुत्र च ऐहिकलौकिकीं पारलौकिकीं चेत्यर्थः॥ ३८॥

मद्भक्तो यदि मामेवं ध्यात्वा आवाह्य च दिने दिने प्रतिदिनं

करोति मम सारूप्यं प्राप्नोत्येव न संशयः ॥ ३९ ॥

इदं रहस्यं परमं च पावनं
मयैव साक्षात्कथितं सनातनम् ।
पठत्यजस्रं यदि वा शृणोति यः
स सर्वपूजाफलभाङ्न संशयः ॥ ४० ॥

एवं परात्मा श्रीरामः क्रियायोगमनुत्तमम् ।
पृष्टः प्राह स्वभक्ताय शेषांशाय महात्मने ॥ ४१ ॥
पुनः प्राकृतवद्रामो मायामालम्ब्य दुःखितः ।
हा सीतेति वदन्नेव(१) निद्रां लेभे कथञ्चन ॥ ४२ ॥
एतस्मिन्नन्तरे तत्र किष्किन्ध्यायां सुबुद्धिमान् ।
हनूमान् प्राह सुग्रीवमेकान्ते कपिनायकम् ॥ ४३ ॥
शृणु राजन् ! प्रवक्ष्यामि तवैव हितमुत्तमम् ।
रामेण ते कृतः पूर्वमुपकारो ह्यनुत्तमः ॥ ४४ ॥
कृतघ्नवत्त्वया नूनं विस्मृतः प्रतिभाति मे ।
त्वत्कृते निहतो वाली वीरस्त्रैलोक्यसम्मतः ॥ ४५ ॥

मम पूजां करोति तदा मम सारूप्यं प्राप्नोति ॥ ३९ ॥

सनातनं पूर्वपूर्वैरप्येवमेवानुष्ठितम् ॥ ४० ॥

शेषांशाय लक्ष्मणाय ॥ ४१ ॥

प्राकृतवत् प्रकृतिकार्यमनुष्यवत् मायामालम्ब्य दुःखित इत्यनेन
वस्तुतस्तस्य दुःखलेशोऽपि नेति सूचितम् ॥ ४२ ॥

एकान्ते इति मन्त्रस्यैकान्ते कथनम् ॥ ४३ ॥

अनुत्तमः न विद्यते उत्तमं यस्मादित्यर्थः ॥ ४४ ॥

उपकारमेवाह त्वत्कृते इति ॥ ४५ ॥

---

(१) वदन्नेव इति च पाठः ।

राज्ये प्रतिष्ठितोऽसि त्वं तारां प्राप्तोऽसि दुर्लभाम्।
स रामः पर्वतस्याग्रे भ्रात्रा सह वसन् सुधीः॥ ४६॥
त्वदागमनमेकाग्रमीक्षते कार्य्यगौरवात्।
त्वं तु वानरभावेन स्त्रीसक्तो नावबुध्यसे॥ ४७॥
करोमीति प्रतिज्ञाय सीतायाः परिमार्गणम्।
न करोषि कृतघ्नस्त्वं हन्यसे वालिवद्द्रुतम्॥ ४८॥
हनूमद्वचनं श्रुत्वा सुग्रीवो भयविह्वलः।
प्रत्युवाच हनूमन्तं सत्यमेव त्वयोदितम्॥ ४९॥
शीघ्रं कुरु मदाज्ञां त्वं वानराणां तरस्विनाम्।
सहस्राणि दशेदानीं प्रेषयाशु दिशो दश॥ ५०॥
सप्तद्वीपगतान् सर्वान् वानरानानयन्तु ते।
पक्षमध्ये समायान्तु सर्वे वानरपुङ्गवाः॥ ५१॥
ये पक्षमतिवर्त्तन्ते ते वध्या मे न संशयः।
इत्याज्ञाप्य हनूमन्तं सुग्रीवो गृहमाविशत्॥ ५२॥
सुग्रीवाज्ञां पुरस्कृत्य हनूमान्मन्त्रिसत्तमः।

दुर्लभां तारामिति वालिपरिग्रहत्वात्सर्वथा कामिभावेन दुष्प्रापत्वात् दुर्लभामित्यर्थः॥ ४६॥

एकाग्रं तन्मात्रचित्तं यथा भवति तथा ईक्षते कार्य्यस्य प्रतीक्षते सीतान्वेषणरूपस्य गौरवात् त्वदेकसाध्यत्वादित्यर्थः॥ ४७॥

कृतघ्नस्त्वं यदि न करोषि तदा वालिवत् हन्यसे रामेणेति शेषः अतः सर्वथान्वेषणमुचितमिति अभिप्रायः॥ ४८। ४९॥

वानराणां मदाज्ञां कुरु बोधय॥ ५०॥

आज्ञामाह सप्तेति॥ ५१॥

इत्याज्ञाप्य एवं वानरेषु कर्त्तव्यामाज्ञां बोधयित्वा॥ ५२। ५३॥

तत्क्षणात् (१) प्रेषयामास हरीन् दशदिशः सुधीः॥५३॥

अगणितगुणसत्त्वान् वायुवेगप्रचारान्
वनचरगणमुख्यान् पर्वताकाररूपान्
पवनहितकुमारः प्रेषयामास दूतान्
अतिरभसतरात्मा दानमानादितृप्तान्॥ ५४॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्ध्याकाण्डे

चतुर्थः सर्गः।

अगणिता गुणाः सत्त्वं पराक्रमश्च येषां तान् पर्वताकारवद्दृढं रूपमाकारो येषां तान् पवनस्य वायोर्हितोऽतिप्रियः कुमारो हनूमान्दानमानादितृप्तानित्यनेनावश्यं कार्यसिद्धिकारित्वं दर्शितम्॥ ५४॥

इति श्रीमत्सकलराजविपद्धरणसमर्थेत्यादिवि० श्रीरामवर्मणः कृतावध्यात्मरामायणसेतौ किष्किन्ध्याकाण्डे

चतुर्थः सर्गः।

---

(१) तत्क्षणे इति केचित् पठन्ति।

अथ पञ्चमः सर्गः ।

रामस्तु पर्वतस्याग्रे मणिसानौ निशामुखे ।
सीता विरहजं शोकमसहन्निदमब्रवीत् ॥ १ ॥
पश्य लक्ष्मण ! मे सीता राक्षसेन हृता बलात् ।
मृतामृता वा निश्चेतुं न जानेऽद्यापि भामिनी ॥ २ ॥
जीवतीति मम ब्रूयात्कश्चिद्वा प्रियकृत्स मे ।
यदि जानामि तां साध्वीं जीवन्तीं यत्र कुत्र वा ॥ ३ ॥
हठादेवाहरिष्यामि सुधामिव पयोनिधेः ।
प्रतिज्ञां शृणु मे भ्रातर्येन मे जनकात्मजा ॥ ४ ॥
नीता तं भस्मसात् कुर्यां सपुत्रबलवाहनम् ।
हा(१) सीते ! चन्द्रवदने वसन्ती राक्षसालये ॥ ५ ॥
दुःखार्त्ता मामपश्यन्ती कथं प्राणान् धरिष्यसि ? ।
चन्द्रोऽपि भानुवद्भाति मम चन्द्राननां विना ॥ ६ ॥
चन्द्र ! त्वं जानकीं स्पृष्ट्वा करैर्मां स्पृश शीतलैः ।

रामस्त्विति पर्वताग्रे स्थितो मणियुक्तसानौ शिखरे ॥ १ ॥

न जाने न शक्नोमीत्यर्थः धातूनामनेकार्थत्वात् ॥ २ ॥

यः कश्चिदपि जीवतीति ब्रूयात् स मे प्रियकृत् यत्र कुत्र वा यत्र कुत्रापीत्यर्थः ॥ ३ । ४ ॥

वसन्ती त्वं कथं प्राणान् धरिष्यसीत्यन्वयः ॥ ५ ॥

विरहदुःखमभिनयति चन्द्रोऽपीति भानुवत् दाहकत्वात् ॥ ६ ॥

चन्द्रत्वमिति कर्पूरतोऽप्यतिशीतलस्य मम कामदुःखशामकस्य वल्लभायाः स्पर्शे तव करा अपि तथा गुणशैत्ययुक्ता भूत्वा मां स्पृश-

(१) हे इति वा पाठः ।

सुग्रीवोऽपि दयाहीनो दुःखितं मां न पश्यति ॥ ७ ॥
राज्यं निष्कण्टकं प्राप्य स्त्रीभिः परिवृतो रहः ।
कृतघ्नो दृश्यते व्यक्तं पानासक्तोऽतिकामुकः ॥ ८ ॥
नायाति शरदं पश्यन्नपि मार्गयितुं प्रियाम् ।
पूर्वोपकारिणं दुष्टः कृतघ्नो विस्मृतो हि माम् ॥ ९ ॥
हन्मि सुग्रीवमप्येवं सपुरं सहबान्धवम् ।
वाली यथा हतो मेऽद्य सुग्रीवोऽपि तथा भवेत् ॥ १० ॥
इति रुष्टं समालोक्य राघवं लक्ष्मणोऽब्रवीत् ।
इदानीमेव गत्वाहं सुग्रीवं दुष्टमानसम् ॥ ११ ॥
मामाज्ञापय हत्वा तमायास्ये राम ! तेऽन्तिकम् ।
इत्युक्त्वा धनुरादाय खड्गं तूणीरमेव च ॥ १२ ॥
गन्तुमभ्युद्यतं वीक्ष्य रामो लक्ष्मणमब्रवीत् ।
न हन्तव्यस्त्वया वत्स ! सुग्रीवो ! मे प्रियः सखा ॥ १३ ॥
किन्तु भीषय सुग्रीवं वालिवद्य हनिष्यसे ।

विजानीति भावः । निरङ्कुशेन्द्रियत्वादेव सुग्रीवं निन्दति सुग्रीवोऽ-
पीति ॥ ७ ॥

मां न पश्यति यतः कृतघ्नः स इव दृश्यते ॥ ८ ॥

कृतघ्नत्वमुपपादयति नायातीति ॥ ९ ॥

एवं यथा सीताहर्त्तारं हन्तुमिच्छामि तथाभिमतः । तथा यथा मे
तथा वाली हतः सुग्रीवो भवेदित्यर्थः ॥ १० ॥

दुष्टं क्रोधवन्तम् ॥ ११ ॥

इदानीमेवेत्याद्युक्त्वा राजाज्ञां विनेदमकार्यकरणमनुचितमिति
प्रतिषेधाभावाद् मामाज्ञापयेति रुदती स्फुटं प्रवक्तोऽप्रतिषेधांशं तु राम-
क्रोधेन लक्ष्मणस्यापि रोषाविष्टत्वात् अतोगर्भितं न दोषः ॥ १२।१२ ॥

मायया मोहिताः सर्वे जना अज्ञानसंयुताः ॥ १९ ॥
कथमेषां भवेद्बोध ? इति विष्णुर्व्यचिन्तयत् ।
कथां प्रथयितुं लोके सर्वलोकमलापहाम् ॥ २० ॥
रामायणाभिधां रामो भूत्वा मानुषचेष्टकः ।
क्रोधं मोहं च कामं च व्यवहारार्थसिद्धये ॥ २१ ॥
तत्तत्कालोचितं गृह्णन् मोहयत्यवशाः प्रजाः ।
अनुरक्त इवाशेषगुणेषु गुणवर्जितः ॥ २२ ॥
विज्ञानमूर्त्तिर्विज्ञानशक्तिः साक्षिगुणान्वितः ।
अतः कामादिभिर्नित्यमविलिप्तो यथा नभः ॥ २३ ॥
विन्दन्ति मुनयः केचिज्जानन्ति सनकादयः ।

भावः फलान्तरमपि तथाव्यवहरणस्याह माययेति मायामोहितत्वा-देवाज्ञानसंयुताः ॥ १९ ॥

प्रथयितुं विस्तारयितुम् ॥ २० ॥

मानुषचेष्टकः मनुष्यसदृशचेष्टा कर्त्ता लोकानां क्रोधादिकालिकस्य व्यवहारस्य सिद्धये ज्ञानायार्थस्य तत्फलस्य च सिद्धये ॥ २१ ॥

तत्तत्कालोचितं व्यवहारं गृह्णन् व्यवहरन् प्रजाः मोहयति रामोऽप्येवं व्यवहृतवान् तस्मादेवं व्यवहारो युक्त इति बोधयति मोहकत्वं चास्य निर्वर्त्तितमार्गविपरीतत्वेन गुणवर्जितोऽपि अशेषगुणेषु पुत्रवधकान्तानुरागादिषु अनुरक्त इव तत्तद्व्यवहरन् अतएव मोहयति ॥२२॥

कामाद्यविलिप्तत्वमेव हेतुपूर्वं निरूपयति विज्ञानेति अयं विज्ञानमूर्त्तिस्तनुः तथा विज्ञानरूपैव शक्तिर्यस्य तेन शक्तिसंसर्गकृतोऽप्यवाभावो दर्शितः अतएव सर्वप्राणिनां शुभाशुभसाक्षी विविधज्ञानशक्तिमान् अगुणान्वितः गुणान्वितभिन्नः निर्गुण इति यावत् अत इति एवं यथा नभः आकाशः घनानीतमलेनालिप्तः तद्वत् ॥ २३ ॥ —

नन्वेवं भूतोऽप्यभिज्ञं ज्ञायते किं तत्राह विन्दन्तीति केचिदेव

तद्भावमिमं ह्यात्मानः(१)सम्यक् जानन्ति नित्यदा ॥२४॥
भक्तचित्तानुसारेण जायते भगवानजः ।
लक्ष्मणोऽपि तदा गत्वा किष्किन्धानगरान्तिकम् ॥२५॥
ज्याघोषमकरोत्तीव्रं भीषयन् सर्ववानरान् ।
तं दृष्ट्वा प्राकृतास्तत्र वानरा वप्रमूर्द्धनि ॥ २६ ॥
चक्रुः किलकिलाशब्दं धृतपाषाणपादपाः ।
तान् दृष्ट्वा क्रोधताम्राक्षो वानरान् लक्ष्मणस्तदा ॥२७॥
निर्मूलान् कर्त्तुमुद्युक्तो धनुरानम्य वीर्यवान् ।
ततः शीघ्रं समापत्य ज्ञात्वा लक्ष्मणमागतम् ॥ २८ ॥
निवार्य्य वानरान् सर्वानङ्गदो मन्त्रिसत्तमः ।
गत्वा लक्ष्मणसामीप्यं प्रणनाम स दण्डवत् ॥ २९ ॥
ततोऽङ्गदं परिष्वज्य लक्ष्मणः प्रियवर्द्धनः ।
उवाच वत्स ! गच्छ त्वं पितृव्याय निवेदय ॥ ३० ॥
मामागतं राघवेण चोदितं रौद्रमूर्त्तिना ।

सनकादयो मुनयो जानन्ति श्रुतिवाक्यैर्विमृशन्ति लभन्ते अपरोक्षतयापि साक्षात् कुर्वन्ति इति यावत् तत्किमन्येन जानन्त्येव सर्वथा नेत्याह तद्भक्ता इति ईदृशाः सम्यक् जानन्त्येवेति भावः ॥ २४ ॥

तत्र हेतुमाह भक्तेति जायते मानविषयो जायत इत्यर्थः ॥ २५ ॥

वप्रं प्राकारः ॥ २६ ॥

किलकिलाशब्दो वानराणां क्रोधभयादिकालिकः शब्दः ॥ २७ ॥

समापत्य त्वरायुक्ता ॥ २८ ॥

लक्ष्मणसामीप्यं गत्वा प्राप्य ॥ २९ ॥

प्रियवर्द्धनः प्रियाणां वृद्धिकरणशीलः ॥ ३० ॥

---

(१) तद्भक्ता निर्मलात्मानः इति वा पाठः ।

तथेति त्वरितं गत्वा सुग्रीवाय न्यवेदयत् ॥ २१ ॥
लक्ष्मणः क्रोधताम्राक्षः पुरद्वारि बहिः स्थितः ।
तच्छ्रुत्वातीव सन्त्रस्तः सुग्रीवो वानरेश्वरः ॥ २२ ॥
आहूय मन्त्रिणां श्रेष्ठं हनूमन्तमथाऽब्रवीत् ।
गच्छ त्वमङ्गदेनाशु लक्ष्मणं विनयान्वितः ॥ २३ ॥
सान्त्वयन् कोपितं वीरं शनैरानय मन्दिरम् ।
प्रेषयित्वा हनूमन्तं तारामाह कपीश्वरः ॥२४ ॥
त्वं गच्छ सान्त्वयन्ती तं लक्ष्मणं मृदुभाषितैः ।
शान्तमन्तःपुरं नीत्वा पश्चाद्दर्शय मेऽनघे ! ॥ २५ ॥
भवत्विति ततस्तारा मध्यकक्षं समाविशत् ।
हनूमानङ्गदेनैव सहितो लक्ष्मणान्तिकम् ॥ २६ ॥
गत्वा ननाम शिरसा भक्त्या स्वागतमब्रवीत् ।
एहि वीर ! महाभाग भवद्गृहमशङ्कितम् ॥ २७ ॥
प्रविश्य राजदारादीन् दृष्ट्वा सुग्रीवमेव च ।
यदाज्ञापयसे पश्चात्तत्सर्वं करवाणि भो ! ॥२८ ॥

रौद्रमूर्त्तिना वालिवधकालिकमूर्त्तिना ॥ २१ ॥
लक्ष्मणो बहिः स्थित इति न्यवेदयदित्यन्वयः ॥ २२ ॥
लक्ष्मणं तन्निकटम् ॥ २३ ॥
कोपितं सञ्जातकोपं सान्त्वयन् समाश्वस्तं कुर्वन् मन्दिरमानय प्रापय ॥ २४ ॥
मृदुभाषितैः सान्त्वयन्ती लक्ष्मणं प्रति गच्छ ततः शान्तं शान्तकोपं कृत्वा ततो ऽन्तःपुरं नीत्वा अनेनात्मन्तमित्रताप्रदर्शनं मे मां दर्शय॥२५॥
मध्यकक्षं स्त्रीणां सञ्चारमर्यादास्थलम् ॥ २६ ॥
अशङ्कित मेहि यत इदं भवद्गृहम् ॥ २७ ॥
राजदारादीन् दृष्ट्वानेन सेवकदारदर्शने यथा राज्ञो न सङ्कोचः

इत्युक्त्वा लक्ष्मणं भक्त्या करे गृह्य स मारुतिः ।
आनयामास नगरमध्याद्राजगृहं प्रति ॥ ३९ ॥
पश्यंस्तत्र महासौधान् यूथपानां समन्ततः ।
जगाम भवनं राज्ञः सुरेन्द्रभवनोपमम् ॥ ४० ॥
मध्यकक्षे गता तत्र तारा ताराधिपानना ।
सर्वाभरणसम्पन्ना मदरक्तान्तलोचना ॥ ४१
उवाच लक्ष्मणं नत्वा स्मितपूर्वाभिभाषिणी ।
याहि(१) देवर! भद्रं ते साधुस्त्वं भक्तवत्सलः ॥ ४२ ॥
किमर्थं कोपमाकार्षीर्भक्ते भृत्ये कपीश्वरे ।
बहुकालमनाश्वासं दुःखमेवानुभूतवान् ॥ ४३ ॥
इदानीं बहुदुःखौघाद्भवद्भिरभिरक्षितः ।
भवत्प्रसादात् सुग्रीवः प्राप्तसौख्यो महामतिः ॥ ४४ ॥
कामासक्तो रघुपतेः सेवार्थं नागतो हरिः ।

तथाऽग्रजदारदर्शने तव सङ्कोचो नोचित इति भावः ॥ ३८ ॥
गृह्येत्यार्षम् ॥ ३९ ॥
यूथपानां महासौधान् गृहानित्यर्थः ॥ ४० ॥
ताराधिपानना चन्द्रमुखी ॥ ४१ ॥
आदौ स्वस्य सेवकत्वाल्लक्ष्मणस्य भगवदवतारत्वाच्च नत्वा पश्चान्नि-
त्यभावेन देवरेत्युक्तिः त्वं साधुर्भक्तवत्सलोऽतो भक्ते भृत्ये सुग्रीवे कोपोऽनुचितः
इति भावः ॥ ४२ ॥
आकार्षीः अतिशयेन कृतवान् अनाश्वासं निरन्तरमित्यर्थः ॥ ४३ ॥
बहुदुःखौघात् वारितः प्राप्तसौख्यात् ॥ ४४ ॥

(१) एहि इत्यपि पाठः ।

आगमिष्यन्ति हरयो नानादेशगताः प्रभो ! ॥ ४५ ॥

प्रेषिता दशसाहस्रा हरयो रघुसत्तम ! ।

आनेतुं वानरान् दिग्भ्यो महापर्वतसन्निभान् ॥ ४६ ॥

सुग्रीवः स्वयमागत्य सर्ववानरयूथपैः ।

वधयिष्यति दैत्यौघान् रावणञ्च हनिष्यति(१) ॥ ४७ ॥

त्वयैव सहितोऽद्यैव गत्वा वानरपुङ्गवः ।

पश्चात्तर्भवनं तत्र पुत्रदारसुहृद्वृतम् ॥ ४८ ॥

दृष्ट्वा सुग्रीवमभयं दत्त्वा नय सहैव ते ।

तारायाा वचनं श्रुत्वा लक्ष्मणोऽथ लक्ष्मणः ॥ ४९ ॥

जगामान्तःपुरं यत्र सुग्रीवो वानरेश्वरः ।

रुमामालिङ्ग्य सुग्रीवः पर्यङ्के पर्यवस्थितः ॥ ५० ॥

दृष्ट्वा लक्ष्मणमत्यर्थं उत्पपातातिभीतवत् ।

तं दृष्ट्वा लक्ष्मणः क्रुद्धो मदविह्वलितेक्षणम् ॥ ५१ ॥

यतः प्राप्तसौख्योऽतः कालातिक्रमोऽपि सेवार्थं नागत इति न, अपि त्वागत एव कालान्तरे तत्तदागतवानराह्वानार्थमागमिष्यतीति ॥ ४५ ॥

एवं सैन्यसङ्ग्रहकरणात् सेवां कृतवानेवेति भावः ॥ ४६ । ४७ ॥

रामस्याज्ञया त्वयैव सहितो वानरपुङ्गवोऽद्यैव गत्वा रामसमीपमितीति शेषः अन्तर्भवनस्य मध्ये ॥ ४८ ॥

ते सहैव नय गच्छेत् सह नयेत्यर्थः तारावचनेनातिमधुरेण शमितेन क्रोधः ॥ ४९ ॥

यत्र सुग्रीवः स्थितस्तदन्तःपुरं जगाम ॥ ५० ॥

अत्यर्थं अतिशयेनातिभीतवदुत्पपात पर्यङ्कादिति शेषः मदविह्वलितेक्षणं मदविकलनेत्रम् ॥ ५१ ॥

---

(१) महामते ! इति वा पाठः ।

सुग्रीवं प्राह दुर्वृत्त ! विस्मृतोऽसि रघूत्तमम् ।
वाली येन हतो वीरः स बाणोऽद्य प्रतीक्षते ॥ ५२ ॥
त्वमेव वालिनो मार्गं गमिष्यसि मया हतः ।
एवमत्यन्तपरुषं वदन्तं लक्ष्मणं तदा ॥ ५३ ॥
उवाच हनुमान् वीरः कथमेवं प्रभाषसे ? ।
त्वत्तोऽधिकतरो रामे भक्तोऽयं वानराधिपः ॥ ५४ ॥
रामकार्य्यार्थमनिशं जागर्त्ति न तु विस्मृतः ।
आगताः परितः पश्य वानराः कोटिशः प्रभो ! ॥ ५५ ॥
गमिष्यन्त्यचिरेणैव सीतायाः परिमार्गणम् ।
साधयिष्यति सुग्रीवो रामकार्य्यमशेषतः ॥ ५६ ॥
श्रुत्वा हनुमतो वाक्यं सौमित्रिर्लज्जितोऽभवत् ।
सुग्रीवोऽप्यर्घ्यपाद्याद्यैर्लक्ष्मणं समपूजयत् ॥ ५७ ॥
आलिङ्ग्य प्राह रामस्य दासोऽहं तेन रक्षितः ।
रामस्य तेजसा लोकान् क्षणार्द्धेनैव जेष्यति ॥ ५८ ॥
सहायमात्रमेवाहं वानरैः सहितः प्रभो ! ।
सौमित्रिरपि सुग्रीवं प्राह किञ्चिन्मयोदितम् ॥ ५९ ॥
तत् क्षमस्व महाभाग ! प्रणयाद्भाषितं मया ।

प्रतीक्षते त्वां हन्तुमिति शेषः ॥ ५२ । ५३ । ५४ ॥
जागर्त्ति उद्यमवान् भवति अचिरेणैव समये आकर्षणार्थं गताः
वानराः इमां कर्षन्त आगता इत्याह आगता इति ॥ ५५ ॥
परिमार्गणं कर्त्तुमिति शेषः ॥ ५६ । ५७ । ५८ ॥
यत्किञ्चिन्मयोदितं तत् क्षमस्वेत्यन्वयः ॥ ५९ ॥

(१) संप्रपूजयदिति पाठे अडभावः आर्षः ।

गच्छामोऽद्यैव सुग्रीव ! रामस्तिष्ठति कानने ॥ ६०॥
एक एवातिदुःखार्त्तो जानकीविरहात् प्रभुः ।
तथेति रथमारुह्य लक्ष्मणेन समन्वितः ॥ ६१ ॥
वानरैः सहितो राजा राममेवान्वपद्यत ॥ ६२ ॥

भेरीमृदङ्गैर्बहुऋक्षवानरैः
श्वेतातपत्रैर्व्यजनैश्च शोभितः ।
नीलाङ्गदाद्यैर्हनुमत्प्रधानैः
समावृतो राघवमभ्यगाद्धरिः ॥ ६३ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्धाकाण्डे पञ्चमः सर्गः ।

प्रणयात् प्रणयकोपात् ॥ ६०—६४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामवर्म्मणः कृताध्यात्मरामायणटीका किष्किन्धाकाण्डे पञ्चमः सर्गः ।

---

अथ षष्ठः सर्गः ।

दृष्ट्वा रामं समासीनं गुहाद्वारि शिलातले ।
चैलाजिनधरं श्यामं जटामौलिविराजितम् ॥ १ ॥
विशालनयनं शान्तं स्मितचारुमुखाम्बुजम् ।
सीताविरहसन्तप्तं पश्यन्तं मृगपक्षिणः ॥ २ ॥
रथात् दूरात्समुत्पत्य (१) वेगात् सुग्रीवलक्ष्मणौ ।
रामस्य पादयोरग्रे पेततुर्भक्तिसंयुतौ ॥ ३ ॥
रामः सुग्रीवमालिङ्ग्य पृष्ट्वानामयमन्तिके ।
स्थापयित्वा यथान्यायं पूजयामास धर्मवित् ॥ ४ ॥
ततोऽब्रवीद्रघुश्रेष्ठं सुग्रीवो भक्तिनम्रधीः ।
देव ! पश्य समायान्तीं वानराणां महाचमूम् ॥ ५ ॥
कुलाचलाद्रिसम्भूता मेरुमन्दरसन्निभाः ।
नानाद्वीपसरिच्छैलवासिनः पर्वतोपमाः ॥ ६ ॥
असङ्ख्याताः समायान्ति हरयः कामरूपिणः ।
(२) सर्वदेवांशसम्भूताः सर्वे युद्धविशारदाः ॥ ७ ॥
अत्र केचिद्गजबलाः केचिद्दशगजोपमाः ।

दृष्टेति चैलं च जीर्णं वासोऽजिनं च ॥ १ ॥
स्मितेन चारुसुन्दरं मुखाम्बुजं यस्य तम् ॥ २ । ३ ॥
अनामयमारोग्यम् अन्तिके समीपे ॥ ४ । ५ ॥
कुलाचला हिमाचलादयः क्षुद्रपर्वताः ॥ ६ । ७ ॥

(१) उत्प्लुत्य इति वा पाठः ।
(२) सर्वे इति पाठान्तरम् ।

गजायुतबलाः केचित्केचिदमितबलाः प्रभो ! ॥ ८ ॥
केचिदञ्जनकूटाभाः केचित्कनकसन्निभाः ।
केचिद्रक्तान्तवदना दीर्घबालास्तथा परे ॥ ९ ॥
शुद्धस्फटिकसङ्काशाः केचिद्राक्षससन्निभाः ।
गर्जन्तः परितो यान्ति वानरा युद्धकाङ्क्षिणः ॥ १० ॥
त्वदाज्ञाकारिणः सर्वे फलमूलाशनाः प्रभो ! ।
ऋक्षाणामधिपो वीरो जाम्बवान्नाम बुद्धिमान् ॥ ११ ॥
एष मे मन्त्रिणां श्रेष्ठः कोटिभल्लूकयूथपः ।
हनूमानेष विख्यातो महासत्त्वपराक्रमः ॥ १२ ॥
वायुपुत्रोऽतितेजस्वी मन्त्री बुद्धिमतां वरः ।
नलो नीलश्च गवयो गवाक्षो गन्धमादनः ॥ १३ ॥
शरभो मैन्दवश्चैव गजः पनस एव च ।
वलीमुखो दधिमुखः सुषेणस्तार एव च ॥ १४ ॥
केसरी च महासत्त्वः पिता हनुमतो बली ।
एते मे यूथपा राम ! प्राधान्येन व्यवस्थिताः ॥ १५ ॥
महात्मानो महावीर्याः शक्रतुल्यपराक्रमाः ।
एते प्रत्येकशः कोटिकोटिवानरयूथपाः ॥ १६ ॥
तवाज्ञाकारिणः सर्वे सर्वे देवांशसम्भवाः ।
एष वालिसुतः श्रीमानङ्गदो नामविश्रुतः ॥ १७ ॥
वालितुल्यबलो वीरो राक्षसानां बलान्तकः

अमितबला इति च्छेदः ॥ ८—११ ॥
कोटिभल्लूकयूथपः कोटीति इत्यादिविशेषणम् ॥ १२—१५ ॥
प्रत्येकशः सार्वविभक्तिकशसिः एकैक इत्यर्थः ॥ १६—१७ ॥

एते चान्ये च बहवस्त्वदर्थे त्यक्तजीविताः ॥ १८ ॥
योद्धारः पर्वताग्रैश्च निपुणाः शत्रुघातने ।
आज्ञापय रघुश्रेष्ठ ! सर्वे ते वशवर्त्तिनः ॥ १९ ॥
रामः सुग्रीवमालिङ्ग्य हर्षपूर्णाश्रुलोचनः ।
आह सुग्रीव ! जानासि सर्वं त्वं कार्यगौरवम् ॥ २० ॥
मार्गणार्थं हि जानक्या नियुङ्क्ष्व यदि रोचते ।
श्रुत्वा रामस्य वचनं सुग्रीवः प्रीतमानसः ॥ २१ ॥
प्रेषयामास बलिनो वानरान् वानरर्षभः ।
दिक्षु सर्वासु विविधान् वानरान् प्रेष्य सत्वरम् ॥ २२ ॥
दक्षिणां दिशमत्यर्थं प्रयत्नेन महाबलान् ।
युवराजं जाम्बवन्तं हनूमन्तं महाबलम् ॥ २३ ॥
नलं सुषेणं शरभं मैन्दं द्विविदमेव च ।
प्रेषयामास सुग्रीवो वचनं चेदमब्रवीत् ॥ २४ ॥
विचिन्वन्तु प्रयत्नेन भवन्तो जानकीं शुभाम् ।
मासादर्वाङ् निवर्त्तध्वं मच्छासनपुरःसराः ॥ २५ ॥
सीतामदृष्ट्वा यदि वो मासादूर्ध्वं दिनं भवेत् ।
तदा प्राणान्तिकं दण्डं मत्तः प्राप्स्यथ वानराः ॥ २६ ॥

कार्यगौरवं जानासि अतो यस्यां दिशि ये योग्यास्तांस्तत्र नियुङ्क्ष्वेत्यर्थः ॥ २०—२२ ॥

अत्यर्थमतिप्रयत्नेन महाबलान् यत्नेन तानेव प्रेषयामासेत्यन्वयः तानेवाह युवराजमिति ॥ २३ । २४ ॥

मच्छासनपुरःसराः मच्छासनं पुरःसरमग्रे येषां तादृशाः अनेन मच्छासनं न विस्मर्त्तव्यमिति सूचितम् ॥ २५ ॥

प्राणान्तिकं प्राणान्तसम्बन्धिनं तदन्तकारकमिति यावत् अध्यात्मादित्यादृत् ॥ २६ ॥

इति प्रस्थाप्य सुग्रीवो वानरान् भीमविक्रमान् ।
रामस्य पार्श्वे श्रीरामं मत्वा चोपविवेश सः ॥ २७ ॥
गच्छन्तं मारुतिं दृष्ट्वा रामो वचनमब्रवीत् ।
अभिज्ञानार्थमेतन्मे ह्यङ्गुलीयकमुत्तमम् ॥ २८ ॥
मन्नामाक्षरसंयुक्तं सीतायै दीयतां रहः ।
अस्मिन् कार्ये प्रमाणं हि त्वमेव कपिसत्तम ! ।
जानामि सत्त्वं ते सर्वं गच्छ पन्थाः शुभस्तव ॥ २९ ॥
एवं कपीनां राज्ञा ते निर्दिष्टाः परिमार्गणे ।
सीताया अकृदंमुखा बभ्रमुस्तत्र तत्र ह ॥ ३० ॥
भ्रमन्तो विन्ध्यगहने ददृशुः पर्वतोपमम् ।
राक्षसं भीमवाकारं भक्षयन्तं मृगान् गजान् ॥ ३१ ॥
रावणोऽयमिति ज्ञात्वा केचिद्वानरपुङ्गवाः ।
जघ्नुः किलकिलाशब्दं मुञ्चन्तो मुष्टिभिः क्षणात् ॥ ३२ ॥
नायं रावण इत्युक्त्वा ययुरन्यन्महद्वनम् ।
तृषार्त्ताः सलिलं तत्र नाविन्दन् हरिपुङ्गवाः ॥ ३३ ॥
विभ्रमन्तो महारण्ये शुष्ककण्ठोष्ठतालुकाः ।

श्रीरामं मत्वा तत्पार्श्वे उपविवेशेत्यन्वयः ॥ २७ ॥
मे मम अङ्गुलीयकं मद्दत्तमिति शेषः हि पादपूरणे ॥ २८ ॥
मत्स्वरूपाद्यभिज्ञानाय मद्गुणैर् निश्चयं दीयते तस्मात् अस्मिन्निति
कार्यं बलं बुद्धिं च ॥ २९ ॥
परिमार्गणे अन्वेषणनिमित्तमित्यर्थः ॥ ३० । ३१ ॥
किलकिलाशब्दं मुञ्चन्तो मुष्टिभिः क्षणाज्जघ्नुः राक्षसमिति
शेषः ॥ ३२ ॥
नायमिति शुष्करूपत्वादिति भावः ॥ ३३ ॥

दृष्ट्वा तान्वानरान् देवी प्राह यूयं किमागताः ॥ ४१ ॥
कुतो वा कस्य दूता वा मदाश्रमं किं प्रधर्षथ ? ।
तच्छ्रुत्वा हनुमानाह शृणु वक्ष्यामि देवि ! ते ॥ ४२ ॥
अयोध्याधिपतिः श्रीमान् राजा दशरथः प्रभुः ।
तस्य पुत्रो महाभागो ज्येष्ठो राम इति श्रुतः ॥ ४३ ॥
पितुराज्ञां पुरस्कृत्य सभार्य्यः सानुजो वनम् ।
गतस्तत्र हृता भार्य्या तस्य साध्वी दुरात्मना ॥ ४४ ॥
रावणेन ततो रामः सुग्रीवं सानुजो ययौ ।
सुग्रीवो मित्रभावेन रामस्य प्रियकाम्यया ॥ ४५ ॥
मृगयध्वमिति प्राह ततो वयमुपागताः ।
ततो वनं विचिन्वन्तो जानकीं जलकाङ्क्षिणः ॥ ४६ ॥
प्रविष्टा गह्वरं घोरं दैवादत्र समागताः ।
त्वं वा किमर्थमत्रासि का वा त्वं वद नः शुभे ! ॥ ४७ ॥
योगिनी च तथा दृष्ट्वा वानरान् प्राह हृष्टधीः ।
यथेष्टं फलमूलानि भक्ष्या पीत्वामृतं पयः ॥ ४८ ॥
आगच्छत ततो वक्ष्ये मम वृत्तान्तमादितः ।
तथेति भुक्त्वा पीत्वा च हृष्टास्ते सर्ववानराः ॥ ४९ ॥
देव्याः समीपं गत्वा ते बद्धाञ्जलिपुटाः स्थिताः ।
ततः प्राह हनूमन्तं योगिनी दिव्यदर्शना ॥ ५० ॥

भक्तिभीतियोगिनीविषये किङ्कर्मागताः ४१ ॥

कुत आगता इति शेषः मदाश्रमं किं प्रधर्षथ किमिति धर्षय-विता: ॥ ४२—४७ ॥

तथा इत्यादि सुगमम् इत्यादि ॥ ४८—५१ ॥

हेमा नाम पुरा दिव्यरूपिणी विश्वकर्मणः।
पुत्री महेशं नृत्येन तोषयामास भामिनी ॥ ५१ ॥
तुष्टो महेशः प्रददाविदं दिव्यपुरं महत्।
अत्र स्थिता सा सुदती वर्षाणामयुतायुतम् ॥ ५२ ॥
तस्या अहं सखी विष्णुतत्परा मोक्षकाङ्क्षिणी।
नाम्ना स्वयम्प्रभा दिव्यगन्धर्वतनया पुरा ॥ ५३ ॥
गच्छन्ती ब्रह्मलोकं सा मामाहेदं तपश्चर।
अत्रैव निवसन्ती त्वं सर्वप्राणिविवर्जिते ॥ ५४ ॥
त्रेतायुगे दाशरथिर्भूत्वा नारायणोऽव्ययः।
भूभारहरणार्थाय विचरिष्यति कानने ॥ ५५ ॥
मार्गन्तो वानरास्तस्य भार्यामायान्ति ते गुहाम्।
पूजयित्वाथ तान् गत्वा रामं स्तुत्वा प्रयत्नतः ॥५६ ॥
यातासि भवनं विष्णोर्योगिगम्यं सनातनम्।
इतोऽहं गन्तुमिच्छामि रामं द्रष्टुं त्वरान्विता ॥५७ ॥
यूयं पिदध्वमक्षीणि गमिष्यथ बहिर्गुहाम्।
तथैव चक्रुस्ते वेगाद्गताः पूर्वस्थितं वनम् ॥ ५८ ॥
सापि त्यक्त्वा गुहां शीघ्रं ययौ राघवसन्निधिम्।
तत्र रामं ससुग्रीवं लक्ष्मणञ्च ददर्श ह ॥ ५९ ॥

प्रददौ हेमाया इति शेषः ॥ ५१ ॥
दिव्यगन्धर्वो दिव्याख्यो गन्धर्वस्तस्य कन्या ॥ ५३ ॥
सा हेमा ॥ ५४ । ५५ ॥
तान्वानरान् रामं गत्वा तत्समीपं गत्वा स्तुत्वाथो रामेव ॥५६॥
यातासि लटिरूपं इतः पूर्वोक्तहेमानियोगात् अस्मात् शीघ्र ॥५७॥
वेगात् वेगादिप चक्षुमैवेतार्थः पूर्वस्थितं वनं गताः ॥ ५८।५९ ॥

कृत्वा प्रदक्षिणं रामं प्रणम्य बहुशः सुधीः ।
आह गद्गदया वाचा रोमाञ्चिततनूरुहा ॥ ६० ॥
दासी तवाहं राजेन्द्र ! दर्शनार्थमिहागता ।
बहुवर्षसहस्राणि तप्तं मे दुश्चरं तपः ॥ ६१ ॥
गुहायां दर्शनार्थं ते फलितं मेऽद्य तत्तपः ।
अद्य हि त्वां नमस्यामि मायायाः परतः स्थितम् ॥ ६२ ॥
सर्वभूतेषु चालक्ष्यं बहिरन्तरवस्थितम् ।
योगमायाजवनिकाच्छन्नो मानुषविग्रहः ॥ ६३ ॥
न लक्ष्यसेऽज्ञानदृशां शैलूष इव रूपधृक् ।
महाभागवतानां त्वं भक्तियोगविधित्सया ॥ ६४ ॥
अवतीर्णोऽसि भगवन् ! कथं जानामि ? तामसी ।
लोके जानातु यः कश्चित्तव तत्त्वं रघूत्तम ! ॥ ६५ ॥

रोमाञ्चिततनूरुहा जातरोमाञ्चतनूरुहा ॥ ६० । ६१ ॥

मायायाः परतः स्थितं तदनधीनम् ॥ ६२ ॥

विकर्तौपादानतयान्तर्यामितया च सर्वभूतानां बहिरन्तरवस्थितमपि तैरलक्ष्यम् जवनिका नटानां वेशपरिग्रहस्थानावरणं पटनिर्मितं नटाश्च तत्र प्रविष्टास्तया छन्ना भवन्ति तद्वद्योगमायया त्वं छन्नो गुप्तः इतः सन् अज्ञानदृशामन्तैरित्यर्थः ॥ ६३ ॥

न लक्ष्यसे रूपधृक् तत्तद्रामादिरूपधृक् शैलूषो नट इव स यदा रामादिवेशं कृत्वा रामाद्यनुकरणं करोति तदा राम इत्येव ज्ञायते न तु पूर्वदृष्टोऽपि तद्रूपेण तद्वत् ॥ ६४ ॥

भागवतानां भगवद्भक्तिमतां एवं भूते रूपे भक्तिरूपो योगस्तद्विधित्सया त्वमवतीर्णोऽसि तादृशं त्वां स्त्रीशरीरत्वात् तामसी अहं कथं जानामि अथ योग्यताभावेऽपि तज्ज्ञानापेक्षा मे नास्तीत्याह लोके इति तव तत्त्वं चिदानन्दादिरूपम् ॥ ६५ ॥

ममैतदेव रूपं ते सदा भातु हृदालये ।
राम ! ते पादयुग्मं दर्शितं मोक्षदर्शनम् ॥ ६६॥
अदर्शनं भवार्णानां सन्मार्गपरिदर्शनम् ।
धनपुत्रकलत्रादिविभूतिपरिदर्पितः ।
अकिञ्चनधनं त्वाद्य नाभिधातुं जनोऽर्हति ॥ ६७ ॥
निवृत्तगुणमार्गाय निष्किञ्चनधनाय ते ॥ ६८ ॥
नमः स्वात्माभिरामाय निर्गुणाय गुणात्मने ।
कालरूपिणमीशानमादिमध्यान्तवर्जितम् ॥ ६९ ॥
समं चरन्तं सर्वत्र मन्ये त्वां पुरुषं परम् ।
देव ! ते चेष्टितं कश्चिन्न वेद नृविडम्बनम् ॥ ७० ॥
न तेऽस्ति कश्चिद्दयितो द्वेष्यो वा पर एव च ।

स्वापेक्षामर्थयते ममैतदिति मोक्षदर्शनं मोक्षोपायदर्शकं पादयुगलं ते त्वया दर्शितम् अतोऽन्याकाङ्क्षा मे नास्तीत्यर्थः ॥ ६६ ॥

तदेव विशिनष्टि अदर्शनमिति भवार्णानां भवार्णवानामित्यर्थः वर्णलोप आर्षः सन्मार्गस्य स्वप्राप्त्युपायः धनादिगर्वितो जनः अकिञ्चनानां त्यक्तसर्वविषयाणां धनभूतं दरिद्रस्य धनमिवेष्टविषयं त्वां अभिधातुं वार्तालापं कर्तुं च नार्हति नथापि स्तौमीति शेषः ॥ ६७ ॥

निवृत्तो गुणमार्गः प्रवृत्तिमार्गरूपः संसारः स्वतएव यस्मात्तस्मै ॥ ६८ ॥

स्वात्मन्येव चिदानन्दरूपेऽभिरमते तस्मै अतएव निर्गुणाय गुणानां विषयाणामपि विवर्तोपादानत्वात्सदात्मने कालरूपिणं तेन सर्वसंहर्तृत्वं ईशानत्वेन जगत्स्रष्टृत्वतत्पालकत्वे उक्ते सर्वस्रष्टृत्वादेव तस्यादिमध्यान्तवर्जितत्वं मध्यस्यादयन्तसापेक्षत्वात्तस्याप्यभावः ॥ ६९ ॥

समं चरन्तं अन्तर्यामितयेत्यर्थः नृविडम्बनं मनुष्यव्यवहारानुकरणरूपं अनुकरणमेतदिति कश्चिन्न वेद ॥ ७० ॥

समत्वादेवाह न ते इत्यादि परो भिन्नः सर्वरूपत्वात्तवेति भावः

त्वन्मायापिहितात्मानस्त्वां पश्यन्ति तथाविधम् ॥ ७१ ॥
अजस्याकर्तुरीशस्य देव ! तिर्यङ्नरादिषु ।
जन्मकर्मादिकं यद्यत्तदत्यन्तविडम्बनम् ॥ ७२ ॥
त्वामाहुरजरं जातं कथाश्रवणसिद्धये ।
केचित् कोशलराजस्य तपसः फलसिद्धये ॥ ७३ ॥
कौशल्यया प्रार्थ्यमानं जातमाहुः परे जनाः ।
दुष्टराक्षसभूभारहरणायार्थितो विभुः ॥ ७४ ॥
ब्रह्मणा नररूपेण जातोऽयमिति केचन ।
शृण्वन्ति गायन्ति च ये कथास्ते रघुनन्दन ! ॥ ७५ ॥
पश्यन्ति तव पादाब्जं भवार्णवसुतारणम् ।
त्वन्मायागुणबद्धाहं व्यतिरिक्तं गुणाश्रयम् ॥ ७६ ॥

।-द्वा दर्शितद्वेषाभ्यां पर उदासीनः तथाविधं शत्रुमित्रोदासीनवन्तं यथा रावणः शत्रुर्विभीषणो मित्रं अन्ये उदासीना इति ॥ ७१ ॥

अजस्य सर्वकारणत्वात्तत्कारणहीनस्य अकर्तुः कर्तृत्वादिधर्महीनस्य अपरिणामित्वादिति भावः ईशस्य सन्निधानमात्रेण सर्वनियन्तुः तिर्यङ्नरादिषु तिर्यञ्चो मत्स्यादयः तेषु मनुष्येषु च यज्जन्मकर्मादि तदत्यन्तविडम्बनं अनुकरणं तत्तज्जातेरिति शेषः न तु वास्तवमिति भावः ॥ ७२ ॥

तत्र प्रकृतावतारप्रयोजनमाह त्वामिति अजरमपि लोकानां स्वकथाश्रवणजसिद्धिप्राप्तये जातमाहुः केचित् कोशलराजस्य ॥ ७३ ॥

ब्रह्मणा प्रार्थितो नररूपेण जात इत्यन्वयः ॥ ७४ ॥

आद्यप्रयोजनस्यैव मुख्यत्वं प्रतिपादयितुं तच्छ्रवणादिजां सिद्धिमाह शृण्वन्तीत्यादिना ॥ ७५ ॥

पश्यन्तीति ते त्वत्पादाब्जं पश्यन्तीत्यन्वयः त्वत्पादाब्जदर्शनमेव त्वच्छ्रवणजा मुख्या सिद्धिरित्यर्थः त्वत्पादाब्जपदेन मुख्यं चिदानन्दात्मकम् त्वत्स्वरूपमेव विवक्षितमित्याह त्वन्मायेति त्वन्मायागुणैः सत्त्वरजस्तमो-

कथं त्वां देव ! जानीयां स्तोतुं वाऽविषयं विभुम्।
नमस्यामि रघुश्रेष्ठं बाणासनशरान्वितम्।
लक्ष्मणेन सह भ्रात्रा सुग्रीवादिभिरन्वितम् ॥ ७७ ॥
एवं स्तुतो रघुश्रेष्ठः प्रसन्नः प्रणताघहृत्।
उवाच योगिनीं भक्तां किन्ते मनसि काङ्क्षितम् ॥ ७८ ॥
सा प्राह राघवं भक्त्या भक्तिं ते भक्तवत्सल !।
यत्र कुत्रापि जाताया निश्चलां देहि मे प्रभो ! ॥ ७९ ॥
त्वद्भक्तेषु सदा सङ्गो भूयान्मे प्राकृतेषु न।
जिह्वा मे रामरामेति भक्त्या वदतु सर्वदा ॥ ८० ॥
मानसं श्यामलं रूपं सीतालक्ष्मणसंयुतम्।
धनुर्बाणधरं पीतवाससं मुकुटोज्ज्वलम् ॥ ८१ ॥
अङ्गदैर्नूपुरैर्मुक्ताहारैः कौस्तुभकुण्डलैः।
भान्तं स्मरतु मे राम ! वरं नान्यं वृणे प्रभो ! ॥ ८२ ॥

श्रीराम उवाच।

भवत्वेवं महाभागे ! गच्छ त्वं बदरीवनम्।

भिर्वेद्या वेऽहमः अहङ्कारविशिष्टात्मेभ्यो व्यतिरिक्तं तद्दोषस्पृष्टं गुणा-नामाश्रयं प्रवर्त्तकं यद्रूपं तद्दर्शनमेव तज्ज्ञान्या विविदिषार्थः ॥ ७६ ॥

अविषयं वाङ्मनोऽविषयं त्वां स्तोतुं च कथं जानीयां प्रकृत्या अनेयं तज्ज्ञानं दुर्लभमेव स्तोतुमपि न सामर्थ्यमिति भावः एवञ्च स्तुते-रशक्यत्वात्केवलं प्रणाममेव करोमीत्याह नमस्यामीति ॥ ७७ ॥

प्रसन्नः सम्प्रणतानामघस्य पापस्य हर्ता ॥ ७८ ॥

निश्चलां भक्तिं देहीत्यन्वयः ॥ ७९ ॥

प्राकृतेषु त्वद्भक्तिहीनेषु संसारासक्तेष्विति यावत् ॥ ८० ॥

मे मानसं सच्चिदानन्दगुणविशिष्टरूपं स्मरतु पीतवाससं शान्तिमि-

न्दुं स्मराणम् ॥ ८१ । ८२ ॥

तत्रैव मां स्मरन्ती त्वं त्यक्त्वेदं भूतपञ्चकम्।
मामेव परमात्मानं अचिरात्प्रतिपद्यसे ॥ ८३ ॥

श्रुत्वा रघूत्तमवचोऽमृतसारकल्पं
गत्वा तदैव बदरीतरुखण्डजुष्टम्।
तीर्थं तदा रघुपतिं मनसा स्मरन्ती
त्यक्त्वा कलेवरमवाप परं पदं सा ॥ ८४ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्धाकाण्डे
षष्ठः सर्गः।

बदरीवनं बदरिकाश्रमं इदं भूतपञ्चकात्मकमिदं देहमित्यर्थः परमात्मानं मां प्रतिपद्यसे वर्तमानसामीप्ये लट् अनेन सायुज्यरूपा मुक्तिस्तपःपूर्वकं तत्र देहत्यागेन दर्शिता ॥ ८३ ॥

तरुखण्ड तरुसमूहः ॥ ८४ ॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थेनात्मादिवि० श्रीरामवर्मणा
कृताध्यात्मरामायणसेतौ किष्किन्धाकाण्डे
षष्ठः सर्गः।

---

अथ सप्तमः सर्गः ।

अथ तत्र समासीना वृक्षखण्डेषु वानराः ।
चिन्तयन्तो विमुह्यन्तः सीतामार्गणकर्शिताः ॥ १ ॥
तथोवाचाङ्गदः कांश्चिद्वानरान् वानरर्षभः ।
भ्रमतां गह्वरेऽस्माकं मासो नूनं गतोऽभवत् ॥ २ ॥
सीता नाधिगतास्माभिर्न कृतं राजशासनम् ।
यदि गच्छामः किष्किन्ध्यां ? सुग्रीवोऽस्मान् हनिष्यति ॥ ३ ॥
विशेषतः शत्रुसुतं मां मिषाद्विहनिष्यति ।
मयि तस्य कुतः प्रीतिः ?—एष रामेण रक्षितः ॥ ४ ॥
इदानीं रामकार्यं मे न कृतं तन्मिषं भवेत् ।
तस्य मद्धनने नूनं सुग्रीवस्य दुरात्मनः ॥ ५ ॥
मातृकल्पां भ्रातृभार्यां पापात्मानुभवत्यसौ ।
न गच्छेयमतः पार्श्वं तस्य वानरपुङ्गवाः ! ॥ ६ ॥
त्यक्ष्यामि जीवितं चात्र येन केनापि मृत्युना ।

---

अथ तत्रेति विमुह्यन्तः सीतालाभादिति शेषः सीतामार्गणेन तत्र प्राप्तक्लेशेन कर्शिताः कृशत्वं प्राप्ताः ॥ १ ॥

मासो गतः सुग्रीवाज्ञप्तकालादधिकः कालो गत इत्यर्थः ॥ २ ॥

राजशासनं शासनान्तः सीतान्वेषणरूपम् ॥ ३ ॥

मिषात् रामकार्याकरणरूपात् ॥ ४ ॥

तदेवाह इदानीमिति ॥ ५ ॥

ननु वनगतस्य त्वद्धननरूपं सुग्रीवः कथं कुर्यात्तत्राह मातृकल्पामिति ज्येष्ठभ्रातृपत्नीत्वात् तस्य कार्यविचारो नेति भावः एषोक्तिर्वालिभावेन मृते भर्तरि नैवर्षिकव्यतिरिक्तस्त्रिया अन्योपगमस्यादुष्टत्वात् ॥ ६ ॥

तदेतद्रामबाणानामभेद्यं किं जगत्त्रये ? ॥ १४ ॥
ये त्वां दुर्बोधयन्त्येते वानरा वानरर्षभ ।
पुत्रदारादिकं त्यक्त्वा कथं स्थास्यन्ति ते त्वया ॥ १५ ॥
अन्यद् गुह्यतमं वक्ष्ये रहस्यं शृणु मे सुत ! ।
रामो न मानुषो देवः साक्षान्नारायणोऽव्ययः ॥ १६ ॥
सीता भगवती माया जनसम्मोहकारिणी ।
लक्ष्मणो भुवनाधारः साक्षाच्छेषः फणीश्वरः ॥ १७ ॥
ब्रह्मणा प्रार्थिताः सर्वे रक्षोगणविनाशने ।
मायामानुषभावेन जाता लोकैकरक्षकाः ॥ १८ ॥
वयं च पार्षदाः सर्वे विष्णोर्वैकुण्ठवासिनः ।
मनुष्यभावमापन्ने स्वेच्छया परमात्मनि ॥ १९ ॥
वयं वानररूपेण जातास्तस्यैव मायया ।
वयं तु तपसा पूर्वं आराध्य जगतां पतिम् ॥ २० ॥
तेनैवानुग्रहीताः स्मः पार्षदत्वमुपागताः ।
इदानीमपि तस्यैव सेवां कृत्वैव मायया ॥ २१ ॥
पुनर्वैकुण्ठमासाद्य सुखं स्थास्यामहे वयम् ।
इत्यङ्गदमथाश्वास्य गता विन्ध्यं महाचलम् ॥ २२ ॥

युक्तमिति शेषः यतो जगत्त्रये रामबाणानामभेद्यं किम् ? न किमपी-त्यर्थः तेनात्र वासे महद्भयमिति भावः ॥ १४ ॥

ननु एतैर्वानरैरस्माकं वयं ते प्राणरक्षका इति तदपि मिथ्येत्याह ये त्वामिति ॥ १५ । १६ । १७ ॥

रक्षोगणविनाशने तन्निमित्तं प्रार्थिताः सन्तस्ते मायामानुषभावेनेति न तेषां वास्तवं मनुष्यत्वं किन्तु मायवैवेति भावः ॥ १८ । १९ ॥

नन्वेवं वानररूपमस्माकं किमर्थं तत्राह तस्यैव माययेति ॥ २०—२२ ॥

विचिन्वन्तोऽथ शनकैर्जानकीं दक्षिणाम्बुधेः ।
तीरे महेन्द्राख्यगिरेः पवित्रं पादमाययुः ॥ २३ ॥
दृष्ट्वा समुद्रं दुष्पारमगाधं भयवर्द्धनम् ।
वानरा भयसन्त्रस्ताः किं कुर्म इति वादिनः ॥ २४ ॥
निषेदुरुदधेस्तीरे सर्वे चिन्तासमन्विताः ।
मन्त्रयामासुरन्योन्यमङ्गदाद्या महाबलाः ॥ २५ ॥
भ्रमतामिव नो मासो गतोऽत्रैव गुहान्तरे ।
न दृष्टो रावणो वाऽद्य सीता वा जनकात्मजा ॥ २६ ॥
सुग्रीवस्तीक्ष्णदण्डोऽस्मान्निहन्त्येव न संशयः ।
सुग्रीववधतोऽस्माकं श्रेयः प्रायोपवेशनम् ॥ २७ ॥
इति निश्चित्य तत्रैव दर्भानास्तीर्य सर्वतः ।
उपाविविशुस्ते सर्वे मरणे कृतनिश्चयाः ॥ २८ ॥
एतस्मिन्नन्तरे तत्र महेन्द्राद्रिगुहान्तरात् ।
निर्गत्य शनकै राजा गृध्रः पर्वतसन्निभः ॥ २९ ॥
दृष्ट्वा प्रायोपवेशेन स्थितान् वानरपुङ्गवान् ।
उवाच शनकैर्गृध्रः प्राप्तो भक्ष्योऽद्य मे बहुः ॥ ३० ॥

दक्षिणाम्बुधेस्तीरे महेन्द्राख्यगिरेः पादं प्रत्यन्तपर्वतमाययुरित्यन्वयः ॥ २३ ॥

भयवर्धनं दर्शनमात्रेण भयवृद्धिकरं किं कुर्म इतिवादिनः वदन्तो भीताः सन्तः उदधेस्तीरे निषेदुरथ मन्त्रयामासुरित्यन्वयः ॥ २४ । २५ ॥

गुहान्तरे गुहामध्ये वायव्यावयवौ ॥ २६ ॥

सुग्रीववधतः सुग्रीवात्प्राप्स्यमानवधतः प्रायोपवेशनं तत्रात्र प्राणाभावेऽनशनेन मरणमङ्गल्यः ॥ २७ ॥

उपाविविशुरित्यत्र गुण आर्षः ॥ २८ । २९ ॥

एकैकशः क्रमात्सर्वान् भक्षयामि दिने दिने।
श्रुत्वा तद्गृध्रवचनं वानरा भीतमानसाः ॥ ३१ ॥
भक्षयिष्यति नः सर्वानसौ गृध्रो न संशयः।
रामकार्य्यं च नास्माभिः कृतं किञ्चिद्धरीश्वराः! ॥३२॥
सुग्रीवस्यापि च हितं न कृतं स्वात्मनामपि।
वृथानेन वधं प्राप्ता गच्छामो यमसादनम् ॥ ३३ ॥
अहो जटायुर्धर्मात्मा रामस्यार्थे मृतः सुधीः।
मोक्षं प्राप दुरावापं योगिनामप्यरिन्दमः ॥ ३४ ॥
सम्पातिस्तु तदा वाक्यं श्रुत्वा वानरभाषितम्।
के वा यूयं मम भ्रातुः कर्णपीयूषसन्निभम् ॥ ३५ ॥
जटायुरिति नामाद्य व्याहरन्तः परस्परम्।
उच्यतां वो भयं मा भूत्पत्तः प्लवगसत्तमाः! ॥ ३६ ॥
तमुवाचाङ्गदः श्रीमानुत्थितो गृध्रसन्निधौ।
रामो दाशरथिः श्रीमान् लक्ष्मणेन समन्वितः ॥ ३७ ॥

बहुः विपुलो बहुसंख्यश्च ॥ ३० । ३१ ॥

किञ्चित्किञ्चिदपीत्यर्थः हरीश्वरा इत्यङ्गदहनूमदादीन् प्रत्यन्येतर-वानरवाक्यम् ॥ ३२ ॥

सुग्रीवहितं जानकीसमाचारोक्त्या रामसन्तोषरूपं आत्मनो हितं तथा सुग्रीवतोषरूपं अनेन गृध्रेण वृथावधं नाशं प्राप्ताः प्रापिताः; यमसादनं यमगृहं गच्छामः वर्त्तमानसामीप्ये लट् ॥ ३३ ॥

योगिनामपि दुरावापमित्यन्वयः दुराङ् अवपूर्वादाप्नोतेः खल् प्रत्ययार्थे घेञ् वा ॥ ३४ ॥

कर्णपीयूषसन्निभं कर्णयोरमृततुल्यमित्यर्थः जटायुरिति नामेत्यने-नान्वयः ॥ ३५ ॥

यूयं के तदुच्यतामित्यर्थः ॥ ३६ । ३७ । ३८ ॥

सीतया भार्यया सार्धं विचचार महावने ।
तस्य सीता हृता साध्वी रावणेन दुरात्मना ॥ ३८ ॥
मृगयां निर्गते रामे लक्ष्मणे च हृता बलात् ।
राम ! रामेति क्रोशन्ती श्रुत्वा गृध्रः प्रतापवान् ॥३९॥
जटायुर्नाम पक्षीन्द्रो युद्धं कृत्वा सुदारुणम् ।
रावणेन हतो वीरो राघवार्थं महाबलः ॥ ४० ॥
रामेण दग्धो रामस्य सायुज्यमगमत् क्षणात् ।
रामः सुग्रीवमासाद्य सख्यं कृत्वाऽग्निसाक्षिकम् ॥ ४१ ॥
सुग्रीवचोदितो हत्वा वालिनं सुदुरासदम् ।
राज्यं ददौ वानराणां सुग्रीवाय महाबलः ॥ ४२ ॥
सुग्रीवः प्रेषयामास सीतायाः परिमार्गणे ।
अस्मान् वानरवृन्दान् वै महासत्त्वान्महाबलान् ॥ ४३
मासादर्वाङ्निवर्तध्वं नोचेत्प्राणान् हरामि वः ।
इत्याज्ञया भ्रमन्तोऽस्मिन् वने गह्वरमध्यगाः ॥ ४४ ॥
गतो मासो न जानीमः सीतां वा रावणं च वा ।
मर्तुं प्रायोपविष्टाः स्म तीरे लवणवारिधेः ॥ ४५ ॥
यदि जानासि हे पक्षिन् ! सीतां कथय नः शुभाम् ।
अङ्गदस्य वचः श्रुत्वा सम्पातिर्हृष्टमानसः ॥ ४६ ॥

लक्ष्मणे च निर्गत इत्यनुकर्षः रामरामेति क्रोशन्ती हृतेत्यन्वयः श्रुत्वा तत्क्रोशनं श्रुत्वेत्यर्थः ॥ ३९–४२ ॥

परिमार्गणे तन्निमित्तं विचक्षणानीयं वानरवृन्दान् तद्युक्तानस्मा-न् हनूमदाद्यपेक्षया बहुवचनम् ॥ ४३ ॥

गह्वरं गुहाभ्यन्तर इत्यत्र स्थिता इति शेषः ॥ ४४ ॥

गतो मास इत्यस्यैवं भ्रमतामित्यादि ॥ ४५–४७ ॥

उवाच मत्प्रियो भ्राता जटायुः प्लवगेश्वराः!।
बहुवर्षसहस्राणि भ्रातृवार्त्ता श्रुता मया॥ ४७॥
वाक्सहायं करिष्येऽहं भवतां प्लवगेश्वराः!।
भ्रातुः सलिलदानाय नयध्वं मां जलान्तिकम्॥ ४८॥
पश्चात्सर्वं शुभं वक्ष्ये भवतां कार्यसिद्धये।
तथेति निन्युस्ते तीरं समुद्रस्य विहङ्गमम्।
सोऽपि तत्सलिले स्नात्वा भ्रातुर्दत्त्वा जलाञ्जलिम्॥ ४९॥
पुनः स्वस्थानमासाद्य स्थितो नीतो हरीश्वरैः।
सम्पातिः कथयामास वानरान् परिहर्षयन्॥ ५०॥
लङ्का नाम नगर्यास्ते त्रिकूटगिरिमूर्द्धनि।
तत्राशोकवने सीता राक्षसीभिः सुरक्षिता॥ ५१॥
समुद्रमध्ये सा लङ्का शतयोजनदूरतः।
दृश्यते मे न सन्देहः सीता च परिदृश्यते॥ ५२॥
गृध्रत्वाद् दूरदृष्टिर्मे नात्र संशयितुं क्षमम्।
शतयोजनविस्तीर्णं समुद्रं यस्तु लङ्घयेत्॥ ५३॥

नयध्वं मां जलान्तिकमित्युक्त्या मृगपक्ष्यादीनामपि यथाशास्त्रं धर्माधिकारोऽस्तीति सूचयति॥ ४८॥

तत्सलिले समुद्रस्य जले॥ ४९॥

हरीश्वरैर्नीतः स्वस्थानं प्रापित इत्यर्थः॥ ५०॥

सुरक्षितास्तीति शेषः॥ ५१॥

समुद्रमध्ये इत्यनेन चतुर्दिक्षु समुद्रपरिक्षमेव तद्द्वीपमिति सूचितम् लङ्का मे मया दृश्यते सीता च दृश्यते॥ ५२॥

तत्र हेतुमाह गृध्रत्वादिति नात्र संशयितुं क्षमम् अत्र संशयो न कार्य इत्यर्थः॥ ५३। ५४॥

स एव जानकीं दृष्ट्वा पुनरायास्यति ध्रुवम्।
अहमेव दुरात्मानं रावणं हन्तुमुत्सहे॥ ५४॥
आद्रहमारमेकाकी किन्तुपक्षविवर्जितः।
यतध्वमिति यत्नेन(१) लङ्घितुं सरिताम्पतिम्।
ततो हत्वा रघुश्रेष्ठो रावणं राक्षसाधिपम्॥ ५५॥

उल्लङ्घ्य सिन्धुं शतयोजनायतं
लङ्कां प्रविश्याथ विदेहकन्यकाम्।
दृष्ट्वा समाभाष्य च वारिधिं पुन-
स्तर्त्तुं समर्थः कतमो विचार्यताम्॥ ५६॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्धाकाण्डे
सप्तमः सर्गः।

पक्षविवर्जित इत्यनेन बलातिशयेऽपि गमनशक्तिहीनत्वं सूचि-
तम्॥ ५५। ५६॥

इति श्रीमन्महाराजवि० श्रीरामवर्मणः ब्रताव-
ध्यात्मरामायणे सेतौ किष्किन्धाकाण्डे
सप्तमः सर्गः।

---

(१) यत ध्वमतियत्नेन इति वा पाठः।

अथ अष्टमः सर्गः ।

अथ ते कौतुकाविष्टाः सम्पातिं सर्वबानराः ।
पप्रच्छुर्भगवन् ! ब्रूहि स्वमुदन्तं समादितः ॥ १ ॥
सम्पातिः कथयामास स्ववृत्तान्तं पुराकृतम् ।
अहं पुरा जटायुश्च भ्रातरौ रूढ़यौवनौ ॥ २ ॥
बलेन दर्पितावावां बलजिज्ञासया खगौ ।
सूर्य्यमण्डलपर्य्यन्तं गन्तुमुत्पतितौ मदात् ॥ ३ ॥
बहुयोजनसाहस्रं गतौ तत्र प्रतापितः ।
जटायुस्तं परित्रातुं पक्षैराच्छाद्य मोहतः ॥ ४ ॥
स्थितोऽहं रश्मिभिर्दग्धपक्षोऽस्मिन् विन्ध्यमूर्द्धनि ।
पतितो दूरपतनान्मूर्च्छितोऽहं कपीश्वराः ॥ ५ ॥
दिनत्रयात् पुनः प्राणसहितो दग्धपक्षकः ।
देशं वा गिरिकूटान् वा न जाने भ्रान्तमानसः ॥ ६ ॥
शनैरुन्मील्य नयने दृष्ट्वा तत्राश्रमं शुभम् ।
शनैः शनैराश्रमस्य समीपं गतवानहम् ॥ ७ ॥

पक्षहीनत्वमस्य कुत इति वानराणां जिज्ञासां ज्ञात्वा तदुत्तरमाह सम्पातिरिति पुराकृतं स्ववृत्तान्तं स्वयन्द्व आत्मात्मीयोभयवाची स्वस्य भ्रातुश्च वृत्तान्तम् तमेवाह अहमित्यादि रूढ़यौवनौ यौवनमध्यं प्राप्तौ ॥ १ । २ ॥

अतएव बलदर्पितौ ॥ ३ ॥

जटायुः प्रतापितः कनिष्ठत्वात्तन्मोहतस्तं परित्रातुं पक्षैराच्छाद्य स्थितोऽहं सूर्य्यरश्मिभिर्दग्धपक्षोऽत्र पतितो दूरपतनान्मूर्च्छित आसमिति शेषः ॥ ४ । ५ ॥

दिनत्रयात्तदुत्तरं पुनः प्राणसहितो दग्धपक्षको यतोऽतो भ्रान्तमानसो देशादीन्न जाने ॥ ६ । ७ ॥

चन्द्रमा नाम मुनिराट् दृष्ट्वा मां विस्मितोऽवदत् ।
सम्पाते ! किमिदं तेऽद्य विरूपं केन वा कृतम् ? ॥ ८ ॥
जानामि त्वामहं पूर्वमत्यन्तं बलवानसि ।
दग्धौ किमर्थं ते पक्षौ ? कथ्यतां यदि मन्यसे ॥ ९ ॥
ततः स्वचेष्टितं सर्वं कथयित्वातिदुःखितः ।
अब्रुवन् मुनिशार्दूलं दग्धोऽहं दाववह्निना ॥ १० ॥
कथं धारयितुं शक्तो विपक्षो जीवितं ? प्रभो ! ।
इत्युक्तोऽथ मुनिर्वीक्ष्य मां दयार्द्रविलोचनः ॥ ११ ॥
शृणु वत्स ! वचो मेऽद्य श्रुत्वा कुरु यथेप्सितम् ।
देहमूलमिदं दुःखं देहः कर्मसमुद्भवः ॥ १२ ॥
कर्म प्रवर्त्तते देहेऽहंबुद्ध्या पुरुषस्य हि ।
अहङ्कारस्त्वनादिः स्यादविद्यासम्भवो जडः ॥ १३ ॥
चिच्छायया सदा युक्तस्तप्तायःपिण्डवत्सदा ।
तेन देहस्य तादात्म्याद्देहश्चेतनवान् भवेत् ॥ १४ ॥

अद्य ते इदं रूपं किं केन वा पूर्वं दृष्टं तदुत्तमं रूपं विरूपं कृतम् ॥ ८ ॥

पूर्वं बलवानसीति वर्त्तमानसामीप्ये लट् ॥ ९ ॥

दाववह्निना तप्त इत्यविनयेत्यर्थः ॥ १० ॥

विपक्षाः अभिनयति कथमिति ॥ ११ ॥

तत्र देहस्य तन्मूलस्य च तत्त्वज्ञानं विना छेत्तुमशक्यतया भोगैकनाश्यं दुःखमिति वक्तुमुपक्रमते देहेति ॥ १२ ॥

ननु कोऽसावकर्त्तृपदार्थो यत्र चिद्देहे तत्राह अहङ्कार इति अविद्याया जडत्वात्तत्सम्भवोऽसावपि जड इति भावः अविद्याकार्यत्वेऽपि तस्याहङ्कारस्यापरिच्छेदाद्देहादिरित्युक्तः ॥ १३ ॥

तप्तायःपिण्डो यथा वह्निना युक्तस्ततः पृथक्कर्त्तुमशक्यस्तथाऽक-

देहोऽहमिति बुद्धिः स्यादात्मनोऽहङ्कृतेर्बलात् ।
तन्मूल एषः संसारः सुखदुःखादिसाधकः ॥ १५ ॥
आत्मनो निर्विकारस्य मिथ्यातादात्म्यतः सदा ।
देहोऽहं कर्मकर्त्ताहमिति सङ्कल्प्य सर्वदा ॥ १६ ॥
जीवः करोति कर्माणि तत्फलैर्बध्यतेऽवशः ।
ऊर्द्धाधो भ्रमते नित्यं पापपुण्यात्मकः स्वयम् ॥ १७ ॥
कृतं मयाधिकं पुण्यं यज्ञदानादि निश्चितम् ।
स्वर्गं गत्वा सुखं भोक्ष्ये इति सङ्कल्पवान् भवेत् ॥ १८ ॥
तथैवाध्यासतस्तत्र चिरं भुक्त्वा सुखं महत् ।
क्षीणपुण्यः पतत्यर्वाक् अनिच्छन् कर्मचोदितः ॥ १९

अहङ्कारचित्त इत्यर्थः तेन चित्ततादात्म्यापन्नाहङ्कारेण चेतनवान् चैतन्यवानिव ॥ १४ ॥

एवमात्मनश्चेतनस्य अहङ्कृतेर्बलात् तत्सम्बन्धवत्त्वात् अहं देह इति बुद्धिः तत्कृत एषः संसारः सुखादिसाधकः कर्मद्वारेति बोध्यम् ॥ १५ ॥

एवं निर्विकारस्यापि आत्मनोऽहङ्कारादिभिर्मिथ्यातादात्म्यात् देहोऽहम् यद्वा ततोऽतिरिक्तोऽपि कर्मकर्त्ताहमिति सङ्कल्पपूर्वकं प्रायो देहोऽहमिति बुद्धिरेव सर्वस्य कस्यचिच्छास्त्राभावपुण्यवशात्तु बुद्धिविलयेऽपि कर्मकर्त्तेति बुद्धिरस्त्येवेति भावः ॥ १६ ॥

कर्माणि करोति अहङ्करोमीति सङ्कल्पादेवावशस्तत्फलैः सुखादिभिर्बध्यते अनेन यो नाहङ्कर्त्तेति भावयति तस्य नैव बन्ध इति सूचितं तद्बन्धप्रकारमाह ऊर्द्धेति पुण्येनोर्द्धं पापेनाधो भ्रमते इत्यर्थः ॥१७ ॥

तदेव विवृणोति कृतमिति इति सङ्कल्पवान् भवेत् स्वर्गतः सुखभोगीवेति शेषः ॥ १८ ॥

तथैवाध्यासतः अहं महापुण्यकर्त्तेत्यध्यासेन तत्र स्वर्गे अनिच्छन्नपि पततीति अवश इत्युक्तस्य विवरणम् ॥ १९ ॥

पतित्वा मण्डले चेन्द्रोस्ततो नीहारसंयुतः ।
भूमौ पतित्वा व्रीह्याद्रौ तत्र स्थित्वा चिरं पुनः ॥ २० ॥
भूत्वा चतुर्विधं भोज्यं पुरुषैर्भुज्यते ततः ।
रेतो भूत्वा पुनस्तेन ऋतौ स्त्रीयोनिसिञ्चितः ॥ २१ ॥
योनिरक्तेन संयुक्तं जरायुपरिवेष्टितम् ।
दिनेनैकेन कललं भूत्वा रूढ़त्वमाप्नुयात् ॥ २२ ॥
तत्पुनः पञ्चरात्रेण बुद्बुदाकारतामियात् ।
सप्तरात्रेण तदपि मांसपेशीत्वमाप्नुयात् ॥ २३ ॥
पक्षमात्रेण सा पेशी रुधिरेण परिप्लुता ।
तस्या एवाङ्कुरोत्पत्तिः पञ्चविंशतिरात्रिषु ॥ २४ ॥
ग्रीवा शिरश्च स्कन्धश्च पृष्ठवंशस्तथोदरम् ।
पञ्चधाङ्गानि चैकैकं जायन्ते मासतः क्रमात् ॥ २५ ॥

ततः पातपूर्वकं येन प्रकारेण गर्भे वासस्तदुपपादयति पतित्वेति इन्दोर्मण्डले पतित्वा ततो नीहारैस्तत्किरणद्वारा भूसम्बन्धैरेव सम्बद्धो भूत्वा भूमौ पतति ततो व्रीह्याद्रौ अनुशयित्वेन स्थित्वा चतुर्विधं भोज्यं भक्ष्यभोज्यलेह्यचोष्यरूपं तदन्नतमङ्गत्वा पुरुषैर्भुज्यते ततो भोजनानन्तरं रेतो भूत्वा स्थित इति शेषः ततस्तेन पुंसा स्त्रीयोनौ ऋतुकाले सिञ्चितः सिक्त आर्षत्वात्साधुः ॥ २० । २१ ॥

सिक्तः स जीव एकेन दिनेन जरायुपरिवेष्टितं योनिरक्तेन संयुक्तं कललं कललाख्यपरिणामवद्भूत्वा रूढत्वं दार्ढ्यमाप्नुयात् जरायुर्गर्भवेष्टनम् ॥२२ ॥

बुद्बुदाकारताम् तदाकारपरिणामविशेषम् एवमग्रेऽपि ॥ २३ ॥

रुधिरेण परिप्लुता भवतीति शेषः तस्या एव पेशीरूपपरिणामस्यैव पञ्चविंशतिरात्रिषु गतास्विति शेषः समासान्तोऽभावोऽनित्यत्वात् ॥२४॥

अङ्कुरानेवाह ग्रीवेत्यादि पञ्चधाङ्गानि पञ्चधाङ्गाङ्कुराः मासतः मासेनेत्यर्थः क्रमात् प्रथमं ग्रीवेत्यादिक्रमेण ॥ २५ ॥

पाणिपादौ तथा पार्श्वः कटिर्जानुस्तथैव च।
मासद्वयात्प्रजायन्ते क्रमेणैव न चान्यथा ॥ २६ ॥
त्रिभिर्मासैः प्रजायन्ते अङ्गानां सन्धयः क्रमात्।
सर्वाङ्गुल्यः प्रजायन्ते क्रमान्मासचतुष्टये ॥ २७ ॥
नासा कर्णौ च नेत्रे च जायन्ते पञ्चमासतः।
दन्तपङ्क्तिर्नखा गुह्यं पञ्चमे जायते तथा ॥ २८ ॥
अर्वाक् षण्मासतश्छिद्रं कर्णयोर्भवति स्फुटम्।
पायुर्मेढ्रमुपस्थं च नाभिश्चापि भवेन्नृणाम् ॥ २९ ॥
सप्तमे मासि रोमाणि शिरः केशास्तथैव च।
विभक्तावयवत्वं च सर्वं सम्पद्यतेऽष्टमे ॥ ३० ॥
जठरे वर्धते गर्भः स्त्रिया एवं विहङ्गम !।
पञ्चमे मासि चैतन्यं जीवः प्राप्नोति सर्वशः॥ ३१ ॥
नाभिसूत्राल्परन्ध्रेण मातृभुक्तान्नसारतः।
वर्धते गर्भगः पिण्डो न म्रियेत स्वकर्मतः ॥ ३२ ॥
स्मृत्वा सर्वाणि जन्मानि पूर्वकर्माणि सर्वशः।

पाणीत्याद्यन्वयमेव ॥ २६ । २७ ॥

पञ्चमासतः पञ्चमे मासि दन्ताद्यपि पञ्चमे एव जायते ॥ २८।२९ ॥

विभक्तावयवत्वं पृथक् स्थानविन्यस्तावयवत्वं एतत्सप्तमासाष्टमासयोर्गर्भो-पनिषदि वैद्यकसंहितासु शारीरके च स्फुटं विस्तरभयात्तन्नेह लि-ख्यते ॥ ३० ॥

एवं एवं रीत्या वर्धते एकजीवः चैतन्यं प्राप्नोति तदभिव्यक्तिं प्राप्नोतीत्यर्थः ॥ ३१ ॥

नाभीति नाभिसूत्रं नालाख्यं मातुरन्नमार्गा वरन्ध्रं तदीयाल्परन्ध्रेण गर्भजठरं प्राप्तान्मातृभुक्तान्नसारतो गर्भगः पिण्डो वर्धते अल्पर-न्ध्रप्राप्ताल्पाहारत्वेऽपि स्वकर्मतो न म्रियेत दृष्टत्वात् ॥ ३२ ॥

जठरानलतप्तोऽयमिदं वचनमब्रवीत् ॥ २३ ॥
नानायोनिसहस्रेषु जायमानोऽनुभूतवान् ।
पुत्रदारादिसम्बन्धं कोटिशः पशुबान्धवान् ॥ २४ ॥
कुटुम्बभरणासक्त्या न्यायान्यायैर्धनार्जनम् ।
कृतं नाकारवं विष्णुचिन्तां स्वप्नेऽपि दुर्भगः ॥ २५ ॥
इदानीं तत्फलं भुञ्जे गर्भदुःखं महत्तरम् ।
अशाश्वते शाश्वतवद्देहे तृष्णासमन्वितः ॥ २६ ॥
अकार्याण्येव कृतवान् न कृतं हितमात्मनः ।
इत्येवं बहुधा दुःखमनुभूय स्वकर्मतः ॥ २७ ॥
कदा निष्क्रमणं मे स्याद् गर्भान्निरयसन्निभात् ।
इत ऊर्ध्वं नित्यमहं विष्णुमेवानुपूजये ॥ २८ ॥
इत्यादि चिन्तयन् जीवो योनियन्त्रप्रपीडितः ।
जायमानोऽतिदुःखेन नरकात्पातकी यथा ॥ २९ ॥

सर्वाणि जन्मानि तत्र कृतानि कर्माणि च स्मृत्वा जठरानलयोगा-
दतिसन्तप्तः वचनमाह ॥ २२ ॥

नानेति पुत्रादिसम्बन्धमनुभूतवानिति सम्बन्धः ॥ २४ ॥

तथा कुटुम्बभरणासक्त्या तन्मात्रासक्त्या न तु धर्मासक्त्या न्याया-
न्यायैर्धर्म्माधर्म्मैरुपायैर्धनार्जनं कृतं मयेति शेषः तथा विष्णुचिन्तां
स्वप्नेऽपि नाकारवमहं न कृतवानित्यर्थः ॥ २५ ॥

तत्फलभूतं गर्भदुःखं भुञ्जे इत्यन्वयः अशाश्वते तृणाग्रःपतितजल-
बिन्दुवन्नश्वरे देहे शाश्वतवस्तुनीव ममेदं स्यादितीच्छायुक्तः ॥ २६ ॥

न कृतमित्यस्य मयेति शेषः अनुभूयेत्यस्य इदानीं गर्भदुःखं भुञ्जे
इत्यनेनान्वयः ॥ २७ । २८ ॥

योनियन्त्रप्रपीडितः जन्मकाले अतएवातिदुःखेन जायमानः बहिः
भवतीति शेषः नरकात्पातकीत्येको दृष्टान्तः ॥ २९ ॥

पूतिव्रणाच्चिपतितः कृमिरेव दृढापरः।
ततो बाल्यादिदुःखानि सर्वे एवं विभुञ्जते ॥ ४० ॥
त्वया चैवानुभूतानि सर्वत्र विदितानि च।
न वर्णितानि मे दृष्ट! यौवनादिषु सर्वतः ॥ ४१ ॥
एवं देहोऽहमित्यस्मादभ्यासान्निरयादिकम्।
गर्भवासादिदुःखानि भवन्त्यभिनिवेशतः ॥ ४२ ॥
तस्माद्देहद्वयादन्यमात्मानं प्रकृतेः परम्।
ज्ञात्वा देहादिममतां त्यक्त्वात्मज्ञानवान् भवेत् ॥ ४३ ॥
जाग्रदादिविनिर्मुक्तं सत्यज्ञानादिलक्षणम्।
शुद्धं बुद्धं तदा शान्तमात्मानमवधारयेत् ॥ ४४ ॥
चिदात्मनि परिज्ञाते दृष्टे मोहेऽप्यसम्भवे।

तथा पूतिव्रणाद्दुर्गन्धिव्रणाच्चिपतितोऽपरः कृमिरिव एषः पततीति शेषः ततो बाल्यादिदुःखानि भुनक्ति एवं सर्वे जन्तवो विभुञ्जते न कश्चिद्भेदेत्यर्थः ॥ ४० ॥

यानि सर्वाणि विदितानि तानि मया वर्णितानि यानि तु यौवनादिषु दुःखानि सर्वतः सर्वैः प्राप्याणि सर्वत्र सर्वेषु जन्तुषु विदितानि सर्वैर्ज्ञातानि त्वया चानुभूतानि सर्वविदितत्वादेव मया न वर्णितानि ॥ ४१ ॥

एवमिति इत्यस्मादित्याकारादभ्यासाज्जातादभिनिवेशतः अहङ्कारत्वाद्याकारात् निरयः स्वर्गादिश्च गर्भवासादिदुःखानि च भवन्तीत्यन्वयः ॥ ४२ ॥

देहद्वयात् स्थूलसूक्ष्मरूपात्मायुक्तादन्यं तर्हि प्रकृतिरेव सा नेत्याह प्रकृतेः परं ज्ञात्वा देहादिषु ममतां अहं ममेति बुद्धिविषयतां त्यक्त्वा आत्मज्ञानवान् आत्मैवेदं सर्वमिति ज्ञानवान् भवेत् ॥ ४३ ॥

ध्येयात्मस्वरूपमाह जाग्रदादीति जाग्रत्स्वप्नसुषुप्त्याख्यावस्थारहितं शुद्धं मायादोषवर्जितं बुद्धं बोधस्वरूपम् ॥ ४४ ॥

देहः पततु वास्वकर्मवेगेन तिष्ठतु ॥ ४५ ॥
योगिनो न हि दुःखं वा सुखं वाज्ञानसम्भवम् ।
तस्माद्देहेन सहितो यावत्प्रारब्धसंचयः ॥ ४६ ॥
तावत्तिष्ठ सुखेन त्वं धृतकञ्चुकसर्पवत् ।
अन्यद्वक्ष्यामि ते पक्षिन् ! शृणु मे परमं हितम् ॥ ४७ ॥
त्रेतायुगे दाशरथिर्भूत्वा नारायणोऽव्ययः ।
रावणस्य वधार्थाय दण्डकानागमिष्यति ॥ ४८ ॥
सीतया भार्यया सार्द्धं लक्ष्मणेन समन्वितः ।
तत्राश्रमे जनकजां भ्रातृभ्यां रहिते वने ॥ ४९ ॥
रावणश्चोरवन्नीत्वा लङ्कायां स्थापयिष्यति ।
तस्याः सुग्रीवनिर्दिष्टाद्वानराः परिमार्गणे ॥ ५० ॥
आगमिष्यन्ति जलधेस्तीरं तत्र समागमः ।
त्वया तैः कारणवशाद्भविष्यति न संशयः ॥ ५१ ॥
तदा सीतास्थितिं तेभ्यः कथयस्व यथार्थतः ।
तदैव तव पक्षौ द्वावुत्पत्स्येते पुनर्नवौ ॥ ५२ ॥

आत्मविद्या तत्कार्ये मोहे देहादिष्वहंममताख्ये नष्टे नाशं प्राप्ते देहस्थितौ नाशे वा ॥ ४५ ॥

योगिन आत्मतत्त्वाज्ञानजेन सुखदुःखेन भवतः यावत्प्रारब्धक्षयो भवति तावद्देहेन सहितः सुखं तिष्ठ यथा कञ्चुकवान् सर्पो यावत्तत्त्याज्यकालं तत् धृत्वा अनन्तरं त्यजति तद्वत् ॥ ४६—४९ ॥

परिमार्गणे तन्निमित्तम् ॥ ५० ॥

तीरमागमिष्यन्ति तैः सह कारणवशात् फलमिह कारणं पक्षोत्पत्तिरूपफलाय तैः समागमो भविष्यति ॥ ५१ ॥

तदेवाह तदैवेति तव पक्षौ द्वौ निश्चयमुत्पत्स्येते नूतनौ ॥५२।५३॥

सम्पातिरुवाच ।

बोधयामास मां चन्द्रनामा मुनिकुलेश्वरः ।
पश्यन्तु पक्षौ मे जातौ नूतनावतिकोमलौ ॥ ५३ ॥
स्वस्ति वोऽस्तु गमिष्यामि सीतां द्रक्ष्यथ निश्चयम् ।
यत्नं कुरुध्वं दुर्लङ्घ्यसमुद्रस्य विलङ्घने ॥ ५४ ॥
यन्नामस्मृतिमात्रतोऽपरिमितं संसारवारांनिधिं
तीर्त्वा गच्छति दुर्जनोऽपि परमं विष्णोः पदं शाश्वतम् ।
तस्यैव स्थितिकारिणस्त्रिजगतां रामस्य भक्ताः प्रियाः
यूयं किं न समुद्रमात्रतरणे शक्ताः कथं ? वानराः ॥ ५५ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्धाकाण्डे
अष्टमः सर्गः ।

निश्चयं द्रक्ष्यथ तत्र युष्मत्पक्षबलनिरूपणेन तद्वृत्तरावणवधोऽवश्यं भावी स च न सीतादर्शनं विनेति तदप्यवश्यं भविष्यतीति निश्चयः ॥५४॥

यन्नामस्मरणमात्रात् यः कश्चिद्दुर्जनोऽपि इयानिति परिच्छेदरहितं संसारसमुद्रं तीर्त्वा विष्णोः परं गच्छति एवं दृश्यमानप्रकारेण त्रिजगतां स्थितिकारिणः सर्वजगदुत्पत्तिस्थितिविलयकर्तुः स्थितिपदेनेतरदप्युपलक्ष्यते रामस्य भक्ताः प्रियाश्च यूयं शतयोजनपरिच्छिन्नस्य समुद्रमात्रस्य तरणे किं कुतो न शक्ताः कथं च न शक्ता इति व्यतिरेकालङ्कारः ॥५५॥

इति श्रीमत्सकलराजविप्रकुलरत्नसमर्थेत्यादिबि० श्रीरामवर्मणः कृतौ
श्रीमदध्यात्मरामायणसेतौ किष्किन्धाकाण्डे
अष्टमः सर्गः ।

---

अथ नवमः सर्गः ।

गते विहायसा गृध्रराजे वानरपुङ्गवाः ।
हर्षेण महताविष्टाः सीतादर्शनलालसाः ॥ १ ॥
जग्मुः समुद्रं पश्यन्तो नक्रचक्रभयंकरम् ।
तरङ्गादिभिरव्यक्तमाकाशमिव दुर्ग्रहम् ॥ २ ॥
परस्परमवोचन्वै कथमेनं तरामहे ।
उवाच चाङ्गदस्तत्र शृणुध्वं वानरोत्तमाः ॥ ३ ॥
भवन्तोऽत्यन्तबलिनः शूराश्च कृतविक्रमाः ।
को वात्र वारिधिं तीर्त्वा राजकार्यं करिष्यति ? ॥ ४ ॥
एतेषां वानराणां सः प्राणदाता न संशयः ।
तदुत्तिष्ठतु मे शीघ्रं पुरतो यो महाबलः ॥ ५ ॥
वानराणां च सर्वेषां रामसुग्रीवयोरपि ।
स एव पालको भूयान्नात्र कार्या विचारणा ॥ ६ ॥

गते इति पञ्चत्वंभाविति भावः हर्षेणेति महद्दरिष्टं गतमिति सीतादर्शनप्रत्ययेन सीतादर्शनवार्त्ता भावीति हर्षेण च ॥ १ ॥

नक्रचक्रं नक्रसमूहः तरङ्गादिभिः तरङ्गाः बहवा आदिका बहवो यस्मिन् दुर्ग्रहं दुःखग्राह्यं आकाशमिव अदर्शनात् वस्तुतः पारमविज्ञातत्वात् ॥ २ ॥

कथमेनन्तरामहे इति परस्परमवोचन् इत्यन्वयः ॥ ३ ॥

कृतविक्रमाः पूर्वं बहुशः कृतपराक्रमाः को राजकार्यं करिष्यति मद्धरिष्यति भेदः ॥ ४ ॥

यस्तारयिष्यति समुद्रमिति स एषां प्राणदाता अतः यो महाबलः स शीघ्रमुत्तिष्ठतु पुरोऽवस्थितस्त्वार्थः वचिः ॥ ५ ॥

भूयात्तद्वैविध्यं चार्थम् ॥ ६ । ७ ॥

इत्युक्ते युवराजेन तूष्णीं वानरसैनिकाः।
आसन्नोत्तुः किञ्चिदपि परस्परविलोकिनः॥ ७॥

अङ्गद उवाच।

उच्यतां वै बलं सर्वैः प्रत्येकं कार्यसिद्धये।
केन वा साध्यते कार्यं जानीमस्तदनन्तरम्॥ ८॥
अङ्गदस्य वचः श्रुत्वा प्रोचुर्वीरा बलं पृथक्।
योजनानां दशारभ्य दशोत्तरगुणं जगुः॥ ९॥
शतादर्वाग्जाम्बवांस्तु प्राह मध्ये वनौकसाम्।
पुरा त्रिविक्रमे देवे पादं भूमानलक्षणम्॥ १०॥
त्रिःसप्तकृत्वोऽहमगां प्रदक्षिणविधानतः।
इदानीं वार्धकग्रस्तो न शक्नोमि विलङ्घितुम्॥ ११॥
अङ्गदोऽप्याह मे गन्तुं शक्यं पारं महोदधेः।
पुनर्लङ्घनसामर्थ्यं न जानाम्यस्ति वा नवा॥ १२॥
तमाह जाम्बवान्वीरस्त्वं राजा नो नियामकः।

सर्वैर्युष्माभिः वै निश्चयेन प्रत्येकं स्व स्व बलं उच्यतां ततः कार्यसाधकं निर्धार्याम इत्यर्थः॥ ८॥

दशोत्तरगुणम् दशसंख्योत्तरो गुणो यस्य तत् एको दश पञ्च विंशतिः परश्चिंशदित्येवं क्रमेण॥ ९॥

जाम्बवांस्तु नवतियोजनानीत्याहेत्यर्थः पुरा त्रिविक्रमे देवेऽवतीर्णे सति तदीयं भूमानलक्षणं भूपरिच्छेदलक्षणं कार्यं यस्य तादृशं भूपरिच्छेदकं पादम्॥ १०॥

एकविंशतिवारं प्रदक्षिणविधानेन अहमगामगमदित्यर्थः इति शेषः॥ ११॥ १२॥

न युक्तं त्वां नियोक्तुं मे त्वं समर्थोऽसि यद्यपि ॥ १३ ॥

अङ्गद उवाच।

एवं चेत्पूर्ववत्सर्वे स्वप्स्यामो दर्भविष्टरे।
केनापि न कृतं कार्यं जीवितुं च न शक्यते ॥ १४ ॥
तमाह जाम्बवान्वीरो दर्शयिष्यामि ते सुत!।
येनास्माकं कार्यसिद्धिर्भविष्यत्यचिरेण च ॥ १५ ॥
इत्युक्त्वा जाम्बवान् प्राह हनूमन्तमवस्थितम्।
हनूमन्! किं रहस्तूष्णीं स्थीयते कार्यगौरवे ॥ १६ ॥
प्राप्तेऽस्मिन्नेव सामर्थ्यं दर्शयाद्य महाबल!।
त्वं साक्षाद्वायुतनयो वायुतुल्यपराक्रमः ॥ १७ ॥
रामकार्यार्थमेव त्वं जनितोऽसि महात्मना।
जातमात्रेण ते पूर्वं दृष्ट्वोद्यन्तं विभावसुम् ॥ १८ ॥
पक्वं फलं जिघृक्षामीत्युत्प्लुतं बालचेष्टया।

त्वन्नो नियामको अस्माकमाज्ञाकर्ता राजा त्वं यद्यपि समर्थोऽसि तथापि त्वामाज्ञप्तुं मे मया न युक्तम् ॥ १३ ॥

कार्यं केनापि न कृतं जीवितुं च न शक्यते राजभयादतो मरणनिश्चयेन स्वप्स्याम इत्यर्थः ॥ १४ ॥

कार्यसिद्धिर्भविष्यति अचिरेण च भविष्यति तं दर्शयिष्यामि ॥ १५ ॥

कार्यगौरवे गुरुतरकार्ये प्राप्तेऽस्मिन्नेव भवता किं तूष्णीं स्थीयते इत्यन्वयः ॥ १६ ॥

अतः सामर्थ्यं दर्शय ननु सामर्थ्याभावे किं दर्शयेयमिति चेत्तत्राह त्वमिति ॥ १७ ॥

जनितोऽसि उत्पादितोऽसि विभावसुं सूर्यम् ॥ १८ ॥

योजनानां पञ्चशतं पतितोऽसि ततो भुवि ॥ १९ ॥
अतस्त्वद्बलमाहात्म्यं को वा शक्नोति वर्णितुम् ।
उत्तिष्ठ कुरु रामस्य कार्यं नः पाहि सुव्रत ! ॥ २० ॥
श्रुत्वा जाम्बवतो वाक्यं हनूमानतिहर्षितः ।
चकार नादं सिंहस्य ब्रह्माण्डं स्फोटयन्निव ॥ २१ ॥
बभूव पर्वताकारस्त्रिविक्रम इवापरः ।
लङ्घयित्वा जलनिधिं कृत्वा लङ्कां च भस्मसात् ॥२२॥
रावणं सकुलं हत्वानेष्ये जनकनन्दिनीम् ।
यद्वा बद्ध्वा गले रज्ज्वा रावणं वामपाणिना ॥ २३ ॥
लङ्कां सपर्वतां धृत्वा रामस्याग्रे क्षिपाम्यहम् ।
यद्वा दृष्ट्वैव यास्यामि जानकीं शुभलक्षणाम् ॥ २४ ॥
श्रुत्वा हनूमतो वाक्यं जाम्बवानिदमब्रवीत् ।
दृष्ट्वैवागच्छ भद्रं ते जीवन्तीं जानकीं शुभाम् ॥ २५ ॥
पश्चाद्रामेण सहितो दर्शयिष्यसि पौरुषम् ।
कल्याणं भवताद्भद्र ! गच्छतस्ते विहायसा ॥ २६ ॥

जिघृक्षामीति अमृताहरणार्थं [illegible] योजनानां पञ्चशतमुत्पत्य ततो भुवि पतितः ॥ १९ ॥

कोऽस्मान् पाहि रक्ष ॥ २० ॥

सिंहस्य नादं तद्वदेव नादमित्यर्थः ॥ २१ । २२ ॥

[illegible] इति [illegible] रावणं गले बद्ध्वा एकहस्तेन गृहीत्वा वामपाणिना सपर्वतां लङ्कां धृत्वा रामाग्रे क्षिपामि ॥ २३ ॥

यद्वेति सीताया आनयने रामकीर्त्यभावादिति भावः दृष्ट्वैवेति ॥ २४ ॥

दृष्ट्वैवेति न तु तां गृहीत्वा नापि रावणादीन् गृहीत्वेत्यर्थः ॥ २५ ॥

भवतात् आशिषि लोट् ॥ २६ ॥

गच्छन्तं रामकार्यार्थं वायुस्त्वामनुगच्छतु।
इत्याशीर्भिः समामन्त्र्य विसृष्टः प्लवगाधिपैः॥ २७॥
महेन्द्राद्रिशिरो गत्वा बभूवाद्भुतदर्शनः॥ २८॥

महानगेन्द्रप्रतिमो महात्मा
सुवर्णवर्णोऽरुणचारुवक्त्रः।
महाफणीन्द्राभसुदीर्घबाहु-
र्वातात्मजोऽदृश्यत सर्वभूतैः॥ २९॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्धाकाण्डे
नवमः सर्गः।

---

अयं काण्डः समाप्तः।

वायुस्त्वामनुगच्छत्विति शकुनप्रार्थनं समामन्त्र्य योजयित्वा॥२७॥
अद्भुतदर्शनः अतिमहाशरीरत्वात्॥ २८॥
तदेवाह महानगेन्द्र इति॥ २९॥

इति श्रीमद्भकनराजविपद्बुरचरणसमर्पितात्मादिवि० श्रीरामवर्मकृतः
कृताविध्यात्मरामायणे सेतौ किष्किन्धाकाण्डे
नवमः सर्गः।

---

# अथ सुन्दरकाण्डम् ।

## अथ प्रथमः सर्गः ।

श्रीमहादेव उवाच ।

शतयोजनविस्तीर्णं समुद्रं मकरालयम् ।
लिलङ्घयिषुरानन्दसन्दोहो मारुतात्मजः ॥ १ ॥
ध्यात्वा रामं परात्मानमिदं वचनमब्रवीत् ।
पश्यन्तु वानराः सर्वे गच्छन्तं मां विहायसा ॥ २ ॥
अमोघं रामनिर्मुक्तं महाबाणमिवाखिलाः ।
पश्याम्यद्यैव रामस्य पत्नीं जनकनन्दिनीम् ॥ ३ ॥
कृतार्थोऽहं कृतार्थोऽहं पुनः पश्यामि राघवम् ।
प्राणप्रयाणसमये यस्य नाम सकृत् स्मरन् ॥ ४ ॥

शतेति लिलङ्घयिषुः स्वार्थे निच् आनन्दसन्दोहः तत्स्वरूपः तत्सम्भववान् वा ॥ १ । २ ॥

रामनिर्मुक्तं रामत्यक्तम् पश्यामीति भाविन्यपि वर्त्तमानत्वारोपोऽवश्यम्भावित्वद्योतनाय ॥ ३ ॥

कृतार्थः जगन्नाथदर्शनेनेति भावः मम समुद्रलङ्घनमकिञ्चित्करमित्याह प्राणेति ॥ ४ ॥

नरस्तीर्त्वा भवाम्भोधिमपारं याति तत्पदम् ।
किं पुनस्तस्य दूतोऽहं तदङ्गाङ्गुलिमुद्रिकः ॥ ५ ॥
तमेव हृदये ध्यात्वा लङ्घयाम्यल्पवारिधिम् ।
इत्युक्त्वा हनुमान् बाहू प्रसार्यायतबालधिः ॥ ६ ॥
ऋजुग्रीवोर्द्ध्वदृष्टिः सन्नाकुञ्चितपदद्वयः ।
दक्षिणाभिमुखस्तूर्णं पुप्लुवेऽनिलविक्रमः ॥ ७ ॥
आकाशात्त्वरितं देवैर्वीक्ष्यमाणो जगाम सः ।
दृष्ट्वाऽनिलसुतं देवा गच्छन्तं वायुवेगतः ॥ ८ ॥
परीक्षणार्थं सत्त्वस्य वानरस्येदमब्रुवन् ।
गच्छत्येष महासत्त्वो वानरो वायुविक्रमः ॥ ९ ॥
लङ्कां प्रवेष्टुं शक्तो वा न वा जानीमहे बलम् ।
एवं विचार्य नागानां मातरं सुरसाभिधाम् ॥ १० ॥

अपारमित्युभयार्थम् अपि विविधपरिच्छेदशून्यं तत्पदं तत्स्वरूपम् तदङ्गभूता या अङ्गुलिस्तद्भूषणभूता या मुद्रिका या अस्यास्तीत्यर्शआद्यच् ॥ ५ ॥

अल्पवारिधिमित्यनेनासारभवाम्भोधेर्व्यतिरेकालङ्कारः तं लङ्घयामीति किं वक्तव्यमित्यन्वयः बाहू इत्यादि वानरोत्प्लवनजातिवर्णनम् आयतबालधिः प्रसारितपुच्छः ॥ ६ ॥

ऋजुग्रीव ऊर्ध्वदृष्टिरित्यर्थः कर्मधारयः अनिलो वायुः तद्वद्विक्रमः ॥ ७ ॥

आकाशात् आकाशे स्थित्वेत्यर्थः ॥ ८ ॥

वानरस्य सत्त्वस्य वानरीयबलस्य परीक्षणार्थमिदमब्रुवन् विचारणायामित्यर्थः तद्दर्शयति एवं विचार्येति धातूनामनेकार्थत्वात् ब्रूञोऽपि विचारे वृत्तिः ॥ ९ ॥

लङ्काप्रवेशे शक्तोऽस्य वा नेति सन्देहस्तत्रास्य बलं जानीमहे निर्धारयाम इत्यर्थः ॥ १० ॥

अब्रवीद्देवतावृन्दः कौतूहलसमन्वितः।
गच्छ त्वं वानरेन्द्रस्य किंचिद्विघ्नं समाचर॥ ११॥
ज्ञात्वा तस्य बलं बुद्धिं पुनरेहि त्वरान्विता।
इत्युक्ता सा ययौ शीघ्रं हनूमद्विघ्नकारणात्॥ १२॥
आवृत्य मार्गं पुरतः स्थित्वा वानरमब्रवीत्।
एहि मे वदनं शीघ्रं प्रविशस्व महामते!॥ १३॥
देवैस्त्वं कल्पितो भक्ष्यः क्षुधासम्पीडितात्मनः।
तामाह हनुमान्मातरहं रामस्य शासनात्॥ १४॥
गच्छामि जानकीं द्रष्टुं पुनरागम्य सत्वरः।
रामाय कुशलं तस्याः कथयित्वा त्वदाननम्॥ १५॥
निवेक्ष्ये देहि मे मार्गं सुरसायै नमोऽस्तु ते।
इत्युक्ता पुनरेवाह सुरसा क्षुधिताऽस्म्यहम्॥ १६॥
प्रविश्य गच्छ मे वक्त्रं नो चेत्त्वां भक्षयाम्यहम्।
इत्युक्तो हनुमानाह मुखं शीघ्रं विदारय॥ १७॥
प्रविश्य वदनं तेऽद्य गच्छामि त्वरयान्वितः।
इत्युक्त्वा योजनायामदेहो भूत्वा पुरःस्थितः॥ १८॥
दृष्ट्वा हनूमतो रूपं सुरसा पञ्चयोजनम्।
मुखं चकार हनुमान् द्विगुणं रूपमादधत्॥ १९॥
ततश्चकार सुरसा योजनानां च विंशतम्।

देवतावृन्दः देवतासमूहः ॥ ११—१३ ॥

क्षुधया सम्पीडित आत्मा यस्यास्तस्याः भक्ष्यः ॥ १४ ॥ १५ ॥

निवेक्ष्ये प्रवेक्ष्यामि ॥ १६ ॥

मे वक्त्रं प्रविश्य ततो निःसृत्य गच्छ त्वं ॥ १७ ॥

योजनमात्रदीर्घदेहः ॥ १८ । १९ ॥

वक्त्रं चकार हनुमांस्त्रिंशद्योजनसम्मितम् ॥ २० ॥
ततश्चकार सुरसा पञ्चाशद्योजनायतम् ।
वक्त्रं तदा हनूमांस्तु बभूवाङ्गुष्ठसन्निभः ॥ २१ ॥
प्रविश्य वदनं तस्याः पुनरेत्य पुरःस्थितः ।
प्रविष्टो निर्गतोऽहं ते वदनं देवि! ते नमः ॥ २२ ॥
एवं वदन्तं दृष्ट्वा सा हनूमन्तमथाऽब्रवीत् ।
गच्छ साधय रामस्य कार्यं बुद्धिमतांवर! ॥ २३ ॥
देवैः सम्प्रेषिताहं ते बलं जिज्ञासुभिः कपे! ।
दृष्ट्वा सीतां पुनर्गत्वा रामं द्रक्ष्यसि गच्छ भो! ॥ २४ ॥
इत्युक्त्वा सा ययौ देवलोकं वायुसुतः पुनः ।
जगाम वायुमार्गेण गरुत्मानिव पक्षिराट् ॥ २५ ॥
समुद्रोऽप्याह मैनाकं मणिकाञ्चनपर्वतम् ।
गच्छत्येष महासत्त्वो हनूमान्मारुतात्मजः ॥ २६ ॥
रामस्य कार्यसिद्ध्यर्थं तस्य त्वं सचिवो भव ।
सगरैर्वर्धितो यस्मात् पुराहं सागरोऽभवम् ॥ २७ ॥
तस्यान्वये बभूवासौ रामो दाशरथिः प्रभुः ।
तस्य कार्याणुसिद्ध्यर्थं गच्छत्येष महाकपिः ॥ २८ ॥

त्रिंशद्योजनसम्मितं वक्त्रं चकारेति शेषः ॥ २०—२२ ॥
पुनर्गत्वा किष्किन्धामिति शेषः ॥ २४ । २५ ॥
मणिकाञ्चनपर्वतं रत्नादियुक्तत्वाद्भासुरं पर्वतम् ॥ २६ ॥
सचिवो भव मध्ये विश्रामदानेन सहायो भवेत्यर्थः । तत्सहायार्थे निमित्तं प्रकारान्तरेणाह सगरैरिति । पुरा पूर्वं सगरैर्वर्धित इति हेतोरहं सागराख्योऽभवम् ॥ २७ ॥
तस्य वंशे च रामस्तत्कार्यार्थं चायं गच्छति ॥ २८ ॥

त्वमुत्तिष्ठ जलात्तूर्णं त्वयि विश्रम्य गच्छतु ।
स तथेति प्रादुरभूज्जलमध्यान्महोन्नतः ॥ २९ ॥
नानामणिमयैः शृङ्गैस्तस्योपरि नराकृतिः ।
प्राह यान्तं हनूमन्तं मैनाकोऽहं महाकपे ! ॥ ३० ॥
समुद्रेण समादिष्टस्त्वद्विश्रामाय मारुते ! ।
आगच्छामृतकल्पानि जग्ध्वा पक्वफलानि मे ॥ ३१ ॥
विश्रम्यात्र क्षणं पश्चाद्गमिष्यसि यथासुखम् ।
एवमुक्तोऽथ तं प्राह हनूमान्मारुतात्मजः ॥ ३२ ॥
गच्छतो रामकार्यार्थं भक्षणं मे कथं भवेत् ? ।
विश्रामो वा कथं मे स्याद् ? गन्तव्यं त्वरितं मया ॥ ३३ ॥
इत्युक्त्वा स्पृष्टशिखरः कराभ्यां च ययौ कपिः ।
किञ्चिद्दूरं गतस्यास्य छायां छायाग्रहोऽग्रहीत् ॥ ३४ ॥
सिंहिका नाम सा घोरा जलमध्ये स्थिता सदा ।
आकाशगामिनां छायामाक्रम्याकृष्य भक्षयेत् ॥ ३५ ॥
तया गृहीतो हनुमांश्चिन्तयामास वीर्यवान् ।
केनेदं मे कृतं वेगरोधनं विघ्नकारिणा ॥ ३६ ॥

अतस्त्वमुत्तिष्ठेत्यन्वयः ॥ २९ ॥

नानामणिमयैः शृङ्गैर्महोन्नत इत्यन्वयः तस्योपरि नराकृतिर्मनुष्याकारेण स्थितो मैनाकः प्राह ॥ ३० ॥

विश्रम्येत्यर्थः ॥ ३१ । ३२ ॥

कथं भवेदित्यादेरनुचितं तदित्यर्थः तत्र हेतुर्गन्तव्यं त्वरितं ममेति ॥ ३३ ॥

कराभ्यां च स्पृष्टशिखरो ययावित्यन्वयः छायास्पर्शमात्रेण जन्तूनां गतिनिरोधेनाकर्षकत्वाच्छायाग्रह इत्युच्यते ॥ ३४ ॥

तदेवाह सिंहिकेति भक्षयति इत्यर्थे आर्षः ॥ ३५ । ३६ ॥

दृश्यते नैव कोऽप्यत्र विस्मयो मे प्रजायते ।
एवं विचिन्त्य हनुमानधोदृष्टिं प्रसारयत् ॥ ३७ ॥
तत्र दृष्ट्वा महाकायां सिंहिकां घोररूपिणीम् ।
पपात सलिले तूर्णं पद्भ्यामेवाहनद्रुषा ॥ ३८ ॥
पुनरुत्प्लुत्य हनुमान् दक्षिणाभिमुखो ययौ ।
ततो दक्षिणमासाद्य कूलं नानाफलद्रुमम् ॥ ३९ ॥
नानापक्षिमृगाकीर्णं नानापुष्पलतावृतम् ।
ततो ददर्श नगरं त्रिकूटाचलमूर्द्धनि ॥ ४० ॥
प्राकारैर्बहुभिर्युक्तं परिखाभिश्च सर्वतः ।
प्रवेक्ष्यामि कथं लङ्कां ? इति चिन्तापरोऽभवत् ॥ ४१ ॥
रात्रौ वेक्ष्यामि सूक्ष्मोऽहं लङ्कां रावणपालिताम् ।
एवं विचिन्त्य तत्रैव स्थित्वा लङ्कां जगाम सः ॥ ४२ ॥
धृत्वा सूक्ष्मं वपुर्द्वारं प्रविवेश प्रतापवान् ।
तत्र लङ्कापुरी साक्षाद्राक्षसीवेशधारिणी ॥ ४३ ॥
प्रविशन्तं हनूमन्तं दृष्ट्वा लङ्का व्यतर्जयत् ।
कस्त्वं वानररूपेण मामनादृत्य लङ्घिनीम् ॥ ४४ ॥

विस्मय आश्चर्यं यत्कस्याप्यदर्शनं तेनैरोषय आश्चर्यम् प्रसारयत् प्रासारयत् अडभाव आर्षः ॥ ३७ ॥

सिंहिकाम् तन्नाम्नीं राक्षसीम् ॥ ३८ ॥

दक्षिणं कूलं सागरस्येति शेषः ॥ ३९ ॥ ४० ॥

बहुभिः प्राकारैः अष्टदुर्गैर्नानाद्रुमैर्वनदुर्गैरप्यन्विभिः परिखाः प्राकारवेष्टितताः ॥ ४१ ॥

वेक्ष्यामि प्रवेक्ष्यामि सूक्ष्मः सूक्ष्मशरीरो भूत्वेत्यर्थः लङ्कां जगाम रात्राविति शेषः ॥ ४२ ॥

सूक्ष्मं वपुर्धृत्वा द्वारं प्रविवेश ॥ ४३ । ४४ ॥

प्रविश्य चौरवद्रात्रौ किं भवान् कर्त्तुमिच्छति ?।
इत्युक्त्वा रोषताम्राक्षी पादेनाभिजघान तम्॥ ४५ ॥
हनूमानपि तां वाममुष्टिनावज्ञयाहनत्।
तदैव पतिता भूमौ रक्तमुद्वमती भृशम्॥ ४६ ॥
उत्थाय प्राह सा लङ्का हनूमन्तं महाबलम्।
हनूमन्! गच्छ भद्रं ते जिता लङ्का त्वयानघ! ॥ ४७ ॥
पुराहं ब्रह्मणा प्रोक्ता ह्यष्टाविंशतिपर्य्यये।
त्रेतायुगे दाशरथी रामो नारायणोऽव्ययः॥ ४८ ॥
जनिष्यते योगमाया सीता जनकवेश्मनि।
भूभारहरणार्थाय प्रार्थितोऽयं मया क्वचित्॥ ४९ ॥
सभार्य्यो राघवो भ्रात्रा गमिष्यति महावनम्।
तत्र सीतां महामायां रावणोऽपहरिष्यति॥ ५० ॥
पश्चाद्रामेण साचिव्यं सुग्रीवस्य भविष्यति।
सुग्रीवो जानकीं द्रष्टुं वानरान् प्रेषयिष्यति॥ ५१ ॥
तत्रैको वानरो रात्रावागमिष्यति तेऽन्तिकम्।
त्वया च भर्त्सितः सोऽपि त्वां हनिष्यति मुष्टिना॥५२॥
तेनाहता त्वं व्यथिता भविष्यसि यदानघे!।

रात्रौ चौरवत्प्रविश्य गच्छसीति शेषः स त्वं क इत्येवः किं भवानित्यादिप्रश्नान्तरम्॥ ४५। ४६। ४७॥

अष्टाविंशतिपर्य्यये इति यद्यपि अस्मत् षड्विंशतितमे पर्य्याये त्रेतायां रामावतारोऽष्टविंशतितमे पर्य्याये द्वापरान्ते कृष्णावतार इत्युक्तं तथापि कल्पान्तरपरतया विरोधपरिहारोऽवसेयः॥ ४८॥

योगमाया च सीतेति जनिष्यत इत्यन्वयः क्वचित् अवतारपूर्वकाले प्रार्थिता जनिष्यत इत्यन्वयः॥ ४९। ५०॥

तदैव रावणस्यान्तो भविष्यति न संशयः ॥ ५३ ॥
तस्मात्त्वया जिता लङ्का जितं सर्वं त्वयानघ ! ।
रावणान्तःपुरवरे क्रीड़ाकाननमुत्तमम् ॥ ५४ ॥
तन्मध्येऽशोकवनिका दिव्यपादपसङ्कुला ।
अस्ति तस्यां महावृक्षः शिंशपा नाम मध्यगः ॥ ५५ ॥
तत्रास्ते जानकी घोरराक्षसीभिः सुरक्षिता ।
दृष्ट्वैव गच्छ त्वरितं राघवाय निवेदय ॥ ५६ ॥

धन्याहमप्यद्य चिराय राघवस्मृतिर्ममासीद्भवपाशमोचनी ।
तद्भक्तसङ्गोऽप्यतिदुर्लभो मम प्रसीदतां दाशरथिः सदा हृदि ५७
उल्लङ्घितेऽब्धौ पवनात्मजेन धरासुतायाश्च दशाननस्य ।
पुस्फोर वामाक्षिभुजश्च तीव्रं रामस्य दक्षाङ्गमतीन्द्रियस्य॥५८॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे सुन्दराकाण्डे
प्रथमः सर्गः ।

स्पष्टं सप्तम् ॥ ५१ । ५२ । ५३ ॥

यतस्त्वयाहं लङ्का जिता तस्मात् त्वया सर्वं रावणकुलं जितम्
अथ सीतास्थितिस्थानमाह रावणान्तःपुरेति ॥ ५४ । ५५ । ५६ ॥

यतो मे राघवस्मृतिरासीदतोऽहमपि धन्या तद्भक्तसङ्गस्त्वापि दुर्लभस्तं किं वक्तव्यमिति भावः प्रसीदतां प्रसन्नः स आस्ताम् ॥ ५७ ॥

पुस्फोर स्फुरितमभवत् भुजो वाम एव स्त्रिया वामाक्षिस्फुरणं शुभसूचकं पुंसोऽशुभदमिति भावः अतीन्द्रियस्य इन्द्रियाविषयस्य रामस्य दक्षाङ्गं पुस्फोर यद्वा रामसम्बन्धि अतीन्द्रियं गुप्तं बहिरिन्द्रियं तस्य दक्षाङ्गं दक्षिणभागः पुस्फोर तत् स्फुरणं च स्त्रीणामशुभसूचकं पुंसामित्याहुः ॥ ५८ ॥

इति श्रीमद्ब्रजराजवि० श्रीरामवर्म्मणः कृताव-
ध्यात्मरामायणे सेतौ सुन्दराकाण्डे
प्रथमः सर्गः ।

अथ द्वितीयः सर्गः।

ततो जगाम हनुमान् लङ्कां परमशोभनाम्।
रात्रौ सूक्ष्मतनुर्भूत्वा बभ्राम परितः पुरीम्॥ १॥
सीतान्वेषणकार्यार्थी प्रविवेश नृपालयम्।
तत्र सर्वप्रदेशेषु विविच्य हनुमान् कपिः॥ २॥
नापश्यज्जानकीं स्मृत्वा ततो लङ्काभिभाषितम्।
जगाम हनुमान् शीघ्रमशोकवनिकां शुभाम्॥ ३॥
सुरपादपसम्बाधां रत्नसोपानवापिकाम्।
नानापक्षिमृगाकीर्णां स्वर्णप्रासादशोभिताम्॥ ४॥
फलैरानम्रशाखाग्रपादपैः परिवारिताम्।
विचिन्वन् जानकीं तत्र प्रतिवृक्षं मरुत्सुतः॥ ५॥
ददर्शाभ्रंलिहं तत्र चैत्यप्रासादमुत्तमम्।
दृष्ट्वा विस्मयमापन्नो मणिस्तम्भशतान्वितम्॥ ६॥
समतीत्य पुनर्गत्वा किञ्चिद्दूरं स मारुतिः।
ददर्श शिंशपावृक्षमत्यन्तनिबिडच्छदम्॥ ७॥

तत इति सूक्ष्मतनुः सूक्ष्मवानररूपः॥ १॥
सीतान्वेषणकार्यार्थी सीतान्वेषणरूपकार्येच्छावान् विविच्य दृष्ट्वा॥
ततो लङ्काभाषितं स्मृत्वा हनूमाञ्छीघ्रं जगाम॥ ३॥
सुरपादपाः कल्पवृक्षादयः॥ ४॥
फलैरानम्राणि शाखाग्राणि येषां तैः पादपैः॥ ५॥
अभ्रंलिहमभ्रंस्पृशं चैत्यप्रासादं देवतास्थानविशेषम् मत्वा-
मणिस्तम्भादियुक्तत्वाच्च विस्मयम्॥ ६॥
समतीत्येति चैत्यप्रासादमिति शेषः॥ ७॥

अदृष्टातपमाकीर्णं सर्ववर्णविहङ्गमम्।
तन्मूले राक्षसीमध्ये स्थितां जनकनन्दिनीम्॥ ८॥
ददर्श हनुमान् वीरो देवतामिव भूतले।
एकवेणीं कृशां दीनां मलिनाम्बरधारिणीम्॥ ९॥
भूमौ शयानां शोचन्तीं रामरामेतिभाषिणीम्।
त्रातारं नाधिगच्छन्तीमुपवासकृशां शुभाम्॥ १०॥
शाखान्तच्छदमध्यस्थो ददर्श कपिकुञ्जरः।
कृतार्थोऽहं कृतार्थोऽहं दृष्ट्वा जनकनन्दिनीम्॥ ११॥
मयैव साधितं कार्य्यं रामस्य परमात्मनः।
ततः किलकिलाशब्दो बभूवान्तःपुराद्बहिः॥ १२॥
किमेतदिति सल्लीनो वृक्षपत्रेषु मारुतिः।
आयान्तं रावणं तत्र स्त्रीजनैः परिवारितम्॥ १३॥
दशास्यं विंशतिभुजं नीलाञ्जनचयोपमम्।
दृष्ट्वा विस्मयमापन्नो पत्रखण्डेष्वलीयत॥ १४॥
रावणो राघवेणाशु मरणं मे कथं भवेत्।

अत्यन्तनिबिडपत्रत्वादेवादृष्ट आतपो यत्र अनेन तम् सर्ववर्णविहङ्गमैः पक्षिभिराकीर्णं व्याप्तमित्यर्थं मयूरव्यंसकादित्वात्समासः॥ ८॥

एकवेणीं हरणदिनावधिसंस्काररहितामित्यर्थः यद्वा शोभार्थमन्यदा वेणीत्रयवन्त्यः पुरतो द्वयं पश्चादेकेति संप्रति तु संस्काररा-हित्यात् पृष्ठलम्बिनी एकैवेत्यर्थः दीनां स्वजनविरहाद्दीनामिव शोचन्तीम् आत्मानमिति शेषः॥ ९॥ १०॥

शाखानामन्ते प्रान्ते ये छदाः पत्राणि तेषां मध्यस्थः तद्दर्शन-जानन्दाभिनयः कृतार्थ इत्यादि॥ ११॥ १२॥

किमेतत् किं जन्योऽयं शब्दः॥ १३॥

अलीयत तद्दर्शनेन करिष्यमाणकार्यभङ्गभियेति भावः॥१४॥१५॥

सीतार्थमपि नायाति रामः किं कारणं भवेत्? ॥१५॥
इत्येवं चिन्तयन्नित्यं राममेव सदा हृदि ।
तस्मिन् दिने पररात्रौ रावणो राक्षसाधिपः ॥ १६ ॥
स्वप्ने रामेण सन्दिष्टः कश्चिदागत्य वानरः ।
कामरूपधरः सूक्ष्मो वृक्षाग्रस्थोऽनुपश्यति ॥ १७ ॥
इति दृष्ट्वाद्भुतं स्वप्नं स्वात्मन्येवानुचिन्त्य सः ।
स्वप्नः कदाचित्सत्यः स्यादेवं तत्र करोम्यहम् ॥ १८ ॥
जानकीं वाक्शरैर्विद्ध्वा दुःखितां नितरामहम् ।
करोमि दृष्ट्वा रामाय निवेदयतु वानरः ॥ १९ ॥
इत्येवं चिन्तयन् सीतासमीपमगमद्द्रुतम् ।
नूपुराणां किङ्किणीनां श्रुत्वा शिञ्जितमङ्गना ॥ २० ॥

इत्येवं चिन्तयन् रावणो रावणेनेति श्लोकोक्तं चिन्तयन्नित्यं सदा हृदि राममेव ध्यायन्नास्त इति शेषः अतस्तस्मिन्दिने पररात्रौ हनूमत्प्रवेशदिनरात्रिमध्ये पररात्रे इत्यर्थः समाधानाभावस्तदनित्यत्वात् ॥ १६ ॥

स्वप्ने निद्रासमये रामादिष्टः कश्चिद्वानरो लङ्कामागत्य वृक्षाग्रस्थोऽनुपश्यति सीतामिति शेषः ॥ १७ ॥

इति अद्भुतं स्वप्नं दृष्ट्वा अयं स्वप्नः कदाचित्सत्यो भवेत् अतस्तत्र सीतासमीपं गत्वा एवं करोमीति अचिन्तयदिति शेषः ॥ १८ ॥

यदचिन्तयत्तदाह जानकीमिति विद्ध्वेति ल्यबार्थः तां वाक्शरैर्विद्ध्वा नितरां दुःखितां करोमि तत् दृष्ट्वा वानरो रामाय निवेदयतु एवं हि रामः शीघ्रम् आगच्छेदिति भावः ॥ १९ ॥

नूपुराणि पादभूषणानि किङ्किण्यो जघनभूषणानि शिञ्जितं शब्दम् ॥ २० ॥

सीता सीता लीयमाना स्वात्मन्येव सुमध्यमा ।
अधोमुख्यश्रुनयना स्थितरामार्पितान्तरा ॥ २१ ॥
रावणोऽपि तदा सीतामालोक्याह सुमध्यमे ! ।
मां दृष्ट्वा किं वृथा सुभ्रु ! स्वात्मन्येव विलीयसे ? ॥२२॥
रामो वनचराणां हि मध्ये तिष्ठति सानुजः ।
कदाचिद्दृश्यते केश्चित्कदाचिन्नैव दृश्यते ॥ २३ ॥
मया तु बहुधा लोकाः प्रेषितास्तस्य दर्शने ।
न पश्यन्ति प्रयत्नेन वीक्ष्यमाणाः समन्ततः ॥ २४ ॥
किं करिष्यसि रामेण ? निःस्पृहेण सदा त्वयि ।
त्वया सदालिङ्गितोऽपि समीपस्थोऽपि सर्वदा ॥ २५ ॥
हृदयेऽस्य न च स्नेहस्त्वयि रामस्य जायते ।
त्वत्कृतान् सर्वभोगांश्च त्वद्गुणानपि राघवः ॥ २६ ॥
भुञ्जानोऽपि न जानाति कृतघ्नो निर्गुणोऽधमः ।

सीता सीताख्यपाकृना स्वशरीरे एव लीयमाना स्थितेत्यन्वयः रामेऽर्पितं स्थापितमन्तरं चित्तं यया ॥ २१ ॥

किमाह तदाह सुमध्यमे इत्यादि ॥ २२ ॥

लोकाः चारख्याः प्रयत्नेन समन्ततो वीक्ष्यमाणा अपि रामं न पश्यन्ति ॥ २४ ॥

त्वयि निःस्पृहेण इच्छाहीनेन पूर्णकामत्वादित्यान्तरोऽर्थः त्वया सदालिङ्गितोऽपि ध्यानेन सदा हृदि चिन्तनात् अतएव समीपस्थोऽपि सदा शक्तिशक्तिमतोरभेदात्सदालिङ्गितो विभुत्वाच्च समीपस्थो यद्यपि ॥२५॥

तथाऽप्यस्य रामस्य हृदये त्वयि त्वद्विषयस्नेहो न जायते अतएवे-यत्कार्यं त्वदुपेक्षा तस्येति भावः सर्वत्र समत्वात्तस्य न कापि स्नेह इति तत्त्वं किञ्च त्वत्कृतान् सर्वभोगांस्त्वया स्वशक्तिद्वारोपनीतान् सर्वभोगान् सर्वविषयान् तथा त्वद्गुणान् सत्त्वरजस्तमआदीन् भुञ्जा-

त्वमानीता मया साध्वी दुःखशोकसमाकुला ॥ २७ ॥
इदानीमपि नायाति भक्तिहीनः कथं व्रजेत् ? ।
निःसत्त्वो निर्ममो मानी मूढः पण्डितमानवान् ॥२८॥
नराधमं त्वद्विमुखं किं करिष्यसि ? भामिनि ! ।
त्वय्यतीव समासक्तं मां भजस्वासुरोत्तमम् ॥ २९ ॥
देवगन्धर्वनागानां यक्षकिन्नरयोषिताम् ।
भविष्यसि नियोक्त्री त्वं यदि मां प्रतिपद्यसे ॥ ३० ॥
रावणस्य वचः श्रुत्वा सीतामर्षसमन्विता ।
उवाचाधोमुखी भूत्वा निधाय तृणमन्तरे ॥ ३१ ॥
राघवाद्बिभ्यता नूनं भिक्षुरूपं त्वया धृतम् ।
रहिते राघवाभ्यां त्वं शुनीव हविरध्वरे ॥ ३२ ॥
हृतवानसि मां नीच ! तत्फलं प्राप्स्यसेऽचिरात् ।

योऽपि अहं भोक्तेति न जानाति तथाभिमानराहित्यात् अतएव कृतघ्नः अतएव निर्गुणः यो हि गुणवान् स उपकारं मनुत एव अधमः उपकारविस्मरणात् किन्तु न धमति शब्दविषयो भवतीत्यधमशब्दवाच्य इति यावत् कृतघ्नत्वाद्युपपादयति त्वमिति ॥ २६ ॥ २७ ॥

यतस्त्वयि भक्तिहीनोऽतः कथं व्रजेत् स्वस्थानतस्त्वत्परित्राणार्थमिमं देशमित्यर्थः निःसत्त्वो निर्बलः निर्ममो ममताहीनः त्वयि इयं ममेति बुद्धिहीनः ॥ २८ ॥

नराधमं पञ्चम्यर्थे बहुव्रीहिरिति कश्चित् किं करिष्यसि तादृशेऽनुरागेण किं प्रयोजनमित्यर्थः असुरोत्तममिति नराधमव्यतिरेक उक्तः ॥२९॥

देवगन्धर्वनागानां तद्योषितामित्यर्थः नियोक्त्री प्रभुतया आज्ञापयित्री प्रतिपद्यसे अङ्गीकरोषि ॥ २० ॥

निधाय तृणमन्तरे पतिव्रतायाः साक्षात्परपुरुषेण वार्त्तालापस्यानौचित्यादिति भावः त्वं च तृणतुल्य इत्यपि द्योतयितुं च ॥ २१ ॥

शुनीवेत्युपमया अत्यन्तपराक्रमराहित्यं सूचितम् ॥ २२ ॥

यदा रामशराघातविदारितवपुर्भवान् ॥ २३ ॥
प्राप्स्यसे मानुषं रामं गमिष्यसि यमान्तिकम् ।
समुद्रं शोषयित्वा वा शरैर्बद्ध्वाथ वारिधिम् ॥ २४ ॥
हन्तुं त्वां समरे रामो लक्ष्मणेन समन्वितः ।
आगमिष्यत्यसन्देहो द्रक्ष्यसे राक्षसाधम ! ॥ २५ ॥
त्वां सपुत्रं सहबलं हत्वा नेष्यति मां पुरम् ।
श्रुत्वा रक्षःपतिः क्रुद्धो जानक्याः परुषाक्षरम् ॥ २६ ॥
वाक्यं क्रोधसमाविष्टः खड्गमुद्यम्य सत्वरः ।
हन्तुं जनकराजस्य तनयां ताम्रलोचनः ॥ २७ ॥
मन्दोदरी निवार्यैनं पतिं पतिहिते रता ।
त्यजैनां मानुषीं दीनां दुःखितां कृपणां कृशाम् ॥ २८ ॥
देवगन्धर्वनागानां बह्व्यः सन्ति वराङ्गनाः ।
त्वामेव वरयन्त्युच्चैर्मदमत्तविलोचनाः ॥ २९ ॥

अचिरादिति च्छेदः अल्पेनैव कालेनेत्यर्थः यदा रामशराघातै-
र्विदारितवपुर्भवान् भविष्यतीति शेषः ॥ २३ ॥

तदा रामं मानुषं प्राप्स्यसि यमान्तिकं च गमिष्यसि शरैः समुद्रं
शोषयित्वा वा अद्य अथवा वारिधिं बद्ध्वा सेतुबन्धेनेति शेषः ॥ २४ ॥

तदागमनं च त्वमद्यपदमेव द्रक्ष्यसे इत्यन्वयः ॥ २५ ॥

जानक्याः परुषाक्षरं वाक्यं श्रुत्वा क्रुद्धोऽभवत् इति शेषः ॥ २६ ॥
ततः क्रोधसमाविष्टः खड्गमुद्यम्य जनकराजतनयां हन्तुमुद्यतोऽभव-
दिति शेषः ॥ २७ ॥

अन्यानुरक्तत्वात्तद्वियोगाच्च दैन्यादिर्विशिष्टाम् ॥ २८ ॥

या त्वामेव वरयन्ति ता बह्व्यः सन्तीति योजना मदेन काममदेन
मत्ते मदयुक्त इव विलोचने यासां ताः ॥ २९ ॥

ततोऽब्रवीद्दशग्रीवो राक्षसीर्विकृताननाः।
यथा मे वशगा सीता भविष्यति सकामना।
तथा यतध्वं त्वरितं तर्जनादरणादिभिः ॥ ४० ॥
द्विमासाभ्यन्तरे सीता यदि मे वशगा भवेत्।
तदा सर्वसुखोपेता राज्यं भोक्ष्यति सा मया ॥ ४१ ॥
यदि मासद्वयादूर्द्ध्वं मच्छय्यां नाभिनन्दति।
तदा मे प्रातराशाय हत्वा कुरुत मानुषीम् ॥ ४२ ॥
इत्युक्त्वा प्रययौ स्त्रीभी रावणोऽन्तःपुरालयम्।
राक्षस्यो जानकीमेत्य भीषयन्त्यः स्वतर्जनैः ॥ ४३ ॥
तत्रैका जानकीमाह यौवनं ते वृथा गतम्।
रावणेन समासाद्य सफलं तु भविष्यति ॥ ४४ ॥
अपरा चाह कोपेन किं विलम्बेन ? जानकीम्।
इदानीं छेद्यतामङ्गं विभज्य च पृथक् पृथक् ॥ ४५ ॥
अन्या तु खड्गमुद्यम्य जानकीं हन्तुमुद्यता।
अन्या करालवदना विदार्यास्यमभीषयत् ॥ ४६ ॥
एवं तां भीषयन्तीस्ता राक्षसीर्विकृताननाः।

सकामना मद्विषयकामनासहिता सती यदा मे वशगा भविष्यति मद्वशा तथा यतध्वमित्यन्वयः तर्जनं भीषणम् आदरणं सान्त्वम् ॥ ४० ॥ ४१ ॥
कुरुत पक्वां कुरुतेत्यर्थः ॥ ४२ ॥
स्वतर्जनैः स्वबुद्धिकल्पितभीषणोपायैः सक्रौर्ययोक्यैर्वा ॥ ४३ ॥
इदं सान्त्वस्याप्युपलक्षणं तदेवाह तत्रैकेति ॥ ४४ ॥
भीषणान्याह अपरा चेति किं विलम्बेन अस्या वधे इति शेषः जानकीम् इदानीमेव छेद्यताम् अस्या अङ्गं पृथक् पृथक् विभज्य पच्यतामिति शेषः ॥ ४५ ॥ ४६ ॥ ४७ ॥

निवार्य त्रिजटा वृद्धा राक्षसी वाक्यमब्रवीत् ॥ ४७ ॥
शृणुध्वं दुष्टराक्षस्यो महावाक्यं वो हितं भवेत् ॥४८ ॥
न भीषयध्वं रुदतीं नमस्कुरुत जानकीम् ।
इदानीमेव मे स्वप्ने रामः कमललोचनः ॥ ४९ ॥
आरुह्यैरावतं शुभ्रं लक्ष्मणेन समागतः ।
दग्ध्वा लङ्कां पुरीं सर्वां हत्वा रावणमाहवे ॥ ५० ॥
आरोप्य जानकीं स्वाङ्के स्थितो दृष्टोऽगमूर्धनि ।
रावणो गोमयह्रदे तैलाभ्यक्तो दिगम्बरः ॥ ५१ ॥
अवगाहत्य पुनरेवं कृत्वा वदनमालिकाम् ।
विभीषणस्तु रामस्य सन्निधौ हृष्टमानसः ॥ ५२ ॥
सेवां करोति रामस्य पदयोर्भक्तिसंयुतः ।
सर्वथा रावणं रामो हत्वा सकुलमञ्जसा ॥ ५३ ॥
विभीषणायाधिपत्यं दत्त्वा सीतां शुभाननाम् ।
अङ्के निधाय स्वपुरीं गमिष्यति न संशयः ॥ ५४ ॥
त्रिजटाया वचः श्रुत्वा भीतास्ता राक्षसस्त्रियः ।

महावाक्यं शृणुध्वं यदुक्तं वहो हितं भवेत् ॥ ४८ ॥
वाक्यमाह नेति इदानीमेव मे मया रामः स्वप्ने दृष्ट इत्यन्वयः॥ ४९॥
कथं दृष्टस्तदाह आरुह्येति समागतः संयुक्तः ॥ ५० ॥
स्वाङ्के जानकीमारोप्य अगस्य पर्वतस्य मूर्धनि अग्रभागे स्थितो दृष्टः एवं रामविषयं शुभस्वप्नमुक्त्वा रावणविषयमनिष्टस्वप्नमाह रावण इति ॥ ५१ ॥
वदनमालिकां स्वस्वमालां स्वहस्ते कृत्वा अवगाहदित्यर्थः नन्वेवं किं कृत्वा अराक्षसैव भविष्यतीत्याशङ्क्य नेत्याह विभीषण इति रामस्य सेवां करोति एवंविधः स्वप्ने दृष्टोऽतः सोऽत्र राज्यं करिष्यतीत्याह सर्वथेत्यादि ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥

तृणीमासंस्तत्र तत्र निद्रावशमुपागताः ॥ ५५ ॥
तर्जिता राक्षसीभिः सा सीता भीतातिविह्वला ।
त्रातारं नाधिगच्छन्ती दुःखेन परिमूर्छिता ॥ ५६ ॥
अश्रुभिः पूर्णनयना चिन्तयन्तीदमब्रवीत् ।
प्रभाते भक्षयिष्यन्ति राक्षस्यो मां न संशयः ।
इदानीमेव मरणं केनोपायेन मे भवेत् ॥ ५७ ॥

एवं सुदुःखेन परिप्लुता सा
विमुक्तकण्ठं रुदती चिराय ।
आलम्ब्य शाखां कृतनिश्चया मृतौ
न जानती कञ्चिदुपायमङ्गना ॥ ५८ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे सुन्दरकाण्डे
द्वितीयः सर्गः ।

त्रातारमप्राप्नुवती दुःखेन मूर्छिता मूर्छितेव अश्रुपूर्णनेत्रा चिन्तयन्तीदमात्मनः सख्याब्रवीत् ॥ ५६ ॥ ५७ ॥

मृतौ कृतनिश्चया मरणस्य कञ्चिदुपायं कमप्युपायमजानती शाखामालम्ब्य चिरायातिष्ठदितिशेषः ॥ ५८ ॥

इति श्रीमत्सकलराजविपद्दूरणसमर्थेत्यादिवि० श्रीरा-
मवर्मणः कृतावध्यात्मरामायणे सेतौ सुन्द-
रकाण्डे द्वितीयः सर्गः ।

अथ तृतीयः सर्गः ।

उद्बन्धनेन वा मोक्ष्ये शरीरं राघवं विना ।
जीवितेन फलं किं स्यान्मम रक्षोऽधिमध्यतः ॥ १ ॥
दीर्घा वेणी ममात्यर्थमुद्बन्धाय भविष्यति ।
एवं निश्चितबुद्धिं तां मरणायाथ जानकीम् ॥ २ ॥
विलोक्य हनुमान् किञ्चिद्विचार्यैतदभाषत ।
शनैः शनैः सूक्ष्मरूपो जानक्याः श्रोत्रगं वचः ॥ ३ ॥
इक्ष्वाकुवंशसम्भूतो राजा दशरथो महान् ।
अयोध्याधिपतिस्तस्य चत्वारो लोकविश्रुताः ॥ ४ ॥
पुत्रा देवसमाः सर्वैः लक्षणैरुपलक्षिताः ।
रामश्च लक्ष्मणश्चैव भरतश्चैव शत्रुहा ॥ ५ ॥
ज्येष्ठो रामः पितुर्वाक्याद्दण्डकारण्यमागतः ।
लक्ष्मणेन सह भ्रात्रा सीतया भार्यया सह ॥ ६ ॥
उवास गौतमीतीरे पञ्चवट्यां महामनाः ।
तत्र नीता महाभागा सीता जनकनन्दिनी ॥ ७ ॥

ततस्तदुपायं निश्चित्याहोद्बन्धनेन वेति ॥ १ ॥

उद्बन्धनसाधनमाह दीर्घा वेणीति समानान्वयम् एवं मरणाय निश्चितबुद्धिं जानकीं विलोक्येत्यन्वयः ॥ २ ॥

किञ्चिद्विचार्य यद्वचनावसर इति निश्चित्य सूक्ष्मरूपः सन् जानक्याः श्रवणगोचरं यथा भवति तथा शनैः शनैरभाषतेत्यन्वयः ॥ २ ॥

तस्य चाह इक्ष्वाकुमिति ॥ ४ ॥

लक्षणैः राजचिह्नोपलक्षितत्वलक्षणैः अनुजाः अमुं भ्रातर इत्यर्थः ॥५॥६

रावणेन नीतेत्यन्वयः ॥ ७ ॥

रहिते रामचन्द्रेण रावणेन दुरात्मना।
ततो रामोऽतिदुःखार्त्तो मार्गमाणोऽथ जानकीम् ॥८॥
जटायुषं पक्षिराजमपश्यत्पतितं भुवि।
तस्मै दत्त्वा दिवं शीघ्रं ऋष्यमूकमुपागमत् ॥ ९ ॥
सुग्रीवेण कृता मैत्री रामस्य विदितात्मनः।
तद्भार्य्याहारिणं हत्वा वालिनं रघुनन्दनः ॥ १०॥
राज्येऽभिषेच्य सुग्रीवं मित्रकार्य्यं चकार सः।
सुग्रीवस्तु समानाय्य वानरान् वानरप्रभुः ॥ ११ ॥
प्रेषयामास परितो वानरान् परिमार्गणे।
सीतायास्तत्र चैकोऽहं सुग्रीवसचिवो हरिः ॥ १२ ॥
सम्पातिवचनाच्छीघ्रमुल्लङ्घ्य शतयोजनम्।
समुद्रं नगरीं लङ्कां विचिन्वन् जानकीं शुभाम् ॥ १३॥

मार्गमाणः अन्वेषयन् ॥ ८ ॥

दिवं स्वर्लोकं तल्लोकवासमिति यावत् ॥ ९ ॥

रामस्य सङ्कल्पमात्रात् सर्वसाधकस्य न वानरमैत्र्याः प्रयोजनमि-त्यौद्धत्यपरिहाराय सुग्रीवेण कृतेत्युक्तं न तु रामेण कृतेति तद्भार्य्या-हारिणं सुग्रीवभार्य्याहारिणम् ॥ १० ॥

मित्रकार्य्यम् सुग्रीवकृतमित्रत्वतत्कार्य्यं सहायभूतान् समानीय नानापर्वतादिभ्यो दूतैर्वानरान् किष्किन्ध्यां समानाय्य ॥ ११ ॥

तान् वानरान् सीतायाः परिमार्गणे तद्विचित्यर्थं परितः प्रेषया-मासेत्यन्वयः ॥ १२ ॥

समुद्रमुल्लङ्घ्य लङ्कानगरीं दृष्ट्वा तत्र तत्र जानकीं विचिन्वन् अन्वे-षयन् शनैः क्रमेणाशोकवनिकां दृष्ट्वा तत्र तां विचिन्वन् शिंशपातरुं दृष्टवान् यत्र शिंशपामूले जानकी मद्भाग्यतोऽत्रागतोऽहम् कृतकृत्यः संवृत्त इति शेषः ॥ १३ ॥ १४ ॥ १५ ॥

शनैरशोकवनिकां विचिन्वन् शिंशपातलम् ।
अद्राक्षं जानकीमत्र शोचन्तीं दुःखसंयुताम् ॥ १४ ॥
रामस्य महिषीं देवीं कृतकृत्योऽहमागतः ।
इत्युक्त्वोपरराभाथ मारुतिर्बुद्धिमत्तरः ॥ १५ ॥
सीता क्रमेण तत्सर्वं श्रुत्वा विस्मयमाययौ ।
किमिदं मे श्रुतं व्योम्नि वायुना समुदीरितम् ॥ १६ ॥
स्वप्नो वा मे मनोभ्रान्तिर्यदि वा सत्यमेव तत् ।
निद्रा मे नास्ति दुःखेन जानाम्येतत् कुतो भ्रमः ॥ १७ ॥
येन मे कर्णपीयूषं वचनं समुदीरितम् ।
स दृश्यतां महाभागः प्रियवादी ममाग्रतः ॥ १८ ॥
श्रुत्वा तज्जानकीवाक्यं हनुमान् पत्रखण्डतः ।
अवतीर्य शनैः सीतापुरतः समवस्थितः ॥ १९ ॥
कलविङ्कप्रमाणाङ्गो रक्तास्यः पीतवानरः ।
ननाम शनकैः सीतां प्राञ्जलिः पुरतः स्थितः ॥ २० ॥
दृष्ट्वा तं जानकी भीता रावणोऽयमुपागतः ।

वायुनेति तस्य जगत्क्रियासाक्षित्वात्तेन कथितत्वसम्भावना ॥ १६ ॥

स्वप्नो वेत्यादिविकल्पत्रयं वाक्यसत्यत्वातिरिक्तं किञ्चित्कल्पकं प्रमाजनकं वाक्यमित्यर्थः तत्र दुःखहेतुका निद्राभावात् स्वप्नाभावः भ्रमोऽपि नेत्याह जानाम्येतत् एतत्पदार्थजातं यथास्थितस्वरूपेण जानामि यतो न भ्रमसम्भवः यद्वा भ्रान्तः स्वाभावे भ्रमत्वं न विकल्पयति मम च तथा विकल्पोऽतो न भ्रम इति भावः ॥ १७ ॥

तस्मात्सत्यत्वमेव निश्चित्याह येनेति स ममाग्रतो दृश्यतां ममाऽग्रतो भूत्वात्मानं दर्शयत्वित्यर्थः ॥ १८ ॥

पत्रखण्डतः पत्रसमूहतः ॥ १९ ॥

भाषायां चिमनाचिमनी कलविङ्कचटकः 'चटकः कलविङ्कः स्यात्तस्य

मां मोहयितुमायातो मायया वानराकृतिः ॥ २१ ॥
इत्येवं चिन्तयित्वा सा तूष्णीमासीदधोमुखी ।
पुनरप्याह तां सीतां देवि ! यत्त्वं विशङ्कसे ॥ २२ ॥
नाहं तथाविधो मातस्त्यज शङ्कां मयि स्थिताम् ।
दासोऽहं कोसलेन्द्रस्य रामस्य परमात्मनः ॥ २३ ॥
सचिवोऽहं हरीन्द्रस्य सुग्रीवस्य शुभप्रदे ! ।
वायोः पुत्रोऽहमखिलप्राणभूतस्य शोभने ! ॥ २४ ॥
तच्छ्रुत्वा जानकी प्राह हनुमन्तं कृताञ्जलिम् ।
वानराणां मनुष्याणां सङ्गतिर्घटते कथम् ? ॥ २५ ॥
यथा त्वं रामचन्द्रस्य दासोऽहमिति भाषसे ? ।
तामाह मारुतिः प्रीतो जानकीं पुरतः स्थितः ॥ २६ ॥
ऋष्यमूकमगाद्रामः शबर्या नोदितः सुधीः ।
सुग्रीवो ऋष्यमूकस्थो दृष्टवान् रामलक्ष्मणौ ॥ २७ ॥
भीतो मां प्रेषयामास ज्ञातुं रामस्य हृद्गतम् ।
ब्रह्मचारिवपुर्धृत्वा गतोऽहं रामसन्निधिम् ॥ २८ ॥

स्त्री घटका तयोः । पुच्छमत्र्ये चाटकेवचास्यमध्ये घटकैव हि इत्यमरः पीतवर्णो वानरः पीतवानरः ॥ २० ॥ २१ ॥ २२ ॥

शङ्कां रावणत्वशङ्काम् परमात्मन इति पदं तत्स्वरूपाभिज्ञत्वेन तद्दासत्वख्यापनाय ॥ २३ ॥ २४ ॥ २५ ॥

यथा त्वं दासोऽहमिति भाषसे तथा वानरमनुष्ययोः सङ्गतिः प्रतीयते सा च कथं घटत इत्यर्थः ॥ २६ ॥

शबर्येति भगवता त्वद्वृत्तान्ते शबरीं प्रति पृष्टे सति तया सुग्रीव-समीपं गच्छ स सीतामार्गणं करिष्यति इति तयोक्त इत्यर्थः ॥ २७ ॥

भीतो वालिप्रेरितत्वाशङ्कया ॥ २८ ॥

ज्ञात्वा रामस्य सद्भावं स्कन्धोपरि निधाय तौ ।
नीत्वा सुग्रीवसामीप्यं सख्यं चाकरवत्तयोः ॥ १९ ॥
सुग्रीवस्य हृता भार्य्या वालिना तं रघूत्तमः ।
जघानैकेन बाणेन ततो राज्येऽभ्यषेचयत् ॥ २० ॥
सुग्रीवं वानराणां सः प्रेषयामास वानरान् ॥ २१ ॥
दिग्भ्यो महाबलान् वीरान् भवत्याः परिमार्गणे ।
गच्छन्तं राघवो दृष्ट्वा मामभाषत सादरम् ॥ २२ ॥
त्वयि कार्य्यमशेषं मे स्थितं मारुतनन्दन ! ।
ब्रूहि मे कुशलं सर्वं सीतायै लक्ष्मणस्य च ॥ २३ ॥
अङ्गुलीयकमेतच्च परिज्ञानार्थमुत्तमम् ।
सीतायै दीयतां साधु मन्नामाक्षरमुद्रितम् ॥ २४ ॥
इत्युक्त्वा प्रददौ मह्यं कराग्रादङ्गुलीयकम् ।
प्रयत्नेन मया नीतं देवि ! पश्याङ्गुलीयकम् ॥ २५ ॥
इत्युक्त्वा प्रददौ देव्यै मुद्रिकां मारुतात्मजः ।
नमस्कृत्वा स्थितो दूराद् बद्धाञ्जलिपुटो हरिः ॥ २६ ॥

तौ रामलक्ष्मणौ सख्यं च अकरवं कारितवानित्यर्थः अकर्मावितत्वार्थः ॥ २८ ॥

तं वालिनं जघान वानराणां राज्येऽभ्यषेचयत् सुग्रीवमित्यन्वयः ॥२०

स सुग्रीवो भवत्याः परिमार्गणे तन्निमित्तं वानरान् प्रेषयामास ॥ २१ ॥ २२ ॥

अशेषं कार्य्यं त्वयि स्थितम् त्वमेव सकलकार्य्यसाधने समर्थः मे मम॥२३

मे एतदङ्गुलीयकं सीतायै परिज्ञानार्थं रामीय एवायमिति निश्चयार्थं दीयतां मन्नामाक्षरमुद्रितं मन्नामाक्षरमुद्रया युतम् ॥२४॥२५॥

नमस्कृत्वा मुद्रिकां ददौ पुनर्नमस्कृत्वा च दूरतः स्थितः अनेन दानेनास्यां किञ्चित्समीपमुपसृत इति ध्वन्यते ॥ २६ ॥

दृष्ट्वा सीता प्रमुदिता राममामाङ्कितां तदा ।
मुद्रिकां शिरसा धृत्वा स्रवदानन्दनेत्रजा ॥ ३७ ॥
कपे ! मे प्राणदाता त्वं बुद्धिमानसि राघवे ।
भक्तोऽसि प्रियकारी त्वं विश्वासोऽस्ति तवैव हि ॥३८॥
नोचेन्मत्सन्निधिं चान्यं पुरुषं प्रेषयेत् कथम् ? ।
हनूमन् ! दृष्टमखिलं मम दुःखादिकं त्वया ॥ ३९ ॥
सर्वं कथय रामाय यथा मे जायते दया ।
मासद्वयावधिप्राणाः स्थास्यन्ति मम सत्तम ! ॥ ४० ॥
नागमिष्यति चेद्रामो भक्षयिष्यति मां खलः ।
अतः शीघ्रं कपीन्द्रेण सुग्रीवेण समन्वितः ॥ ४१ ॥
वानरानीकपैः सार्द्धं हत्वा रावणमाहवे ।
सपुत्रं सबलं रामो यदि मां मोचयेत् प्रभुः ॥ ४२ ॥

मुद्रिकां दृष्ट्वा प्रमुदिता जाता ततः शिरसा धृत्वा स्रवदानन्दनेत्रजा जाता स्रवन्ति आनन्देन नेत्रजान्यम्बूनि यस्याः सा ॥ ३७ ॥

कपे मुद्रिकारक्षणात् बुद्धिमांस्त्वं मे प्राणदाताऽसि राघवे भक्तोऽसि तस्य प्रियकारी चासि अतो राघवस्य तवैव विश्वासोऽस्तीति मन्ये च ॥३८॥

विश्वासतां युक्त्या साधयति नोचेत् त्वयि विश्वासश्चेन्न स्यात् तदाऽन्यमविश्वस्तं पुरुषरूपं त्वां कथं मत्सन्निधिं प्रेषयेत् ॥ ३९ ॥

यथा मे मयि राघवस्य दया जायते तथा सर्वं राक्षसीकृततर्जनादि कथयेत्यर्थः मासद्वयेति अग्रे मरणमेव स्वदृष्ट एव रावणेन तथा प्रतिज्ञातत्वादिति भावः ॥ ४० ॥

तदेवाह नागमिष्यतीति ॥ ४१ ॥

वानरानीकपैः सार्द्धमत्रागत्य रावणसपुत्रसैन्यं हत्वा यदि मां प्रभुर्मोचयेत् तत्तस्य समादिति शेषः ॥ ४२ ॥

तत्तस्य सदृशं वीर्य्यं वीर ! वर्णय वर्णितम्।
यथा मां तारयेद्रामो हत्वा शीघ्रं दशाननम् ॥ ४३ ॥
तथा यतस्व हनुमन् ! वाचा धर्ममवाप्नुहि।
हनुमानपि तामाह देवि ! दृष्टो यथा मया ॥ ४४ ॥
रामः सलक्ष्मणः शीघ्रमागमिष्यति सायुधः।
सुग्रीवेण ससैन्येन हत्वा दशमुखं बलात् ॥ ४५ ॥
समानेष्यति देवि ! त्वामयोध्यां नात्र संशयः।
तमाह जानकी रामः कथं वारिधिमाततम् ॥ ४६ ॥
तीर्त्वा यास्यत्यमेयात्मा वानरानीकपैः सह ?।
हनूमानाह मे स्कन्धावारुह्य पुरुषर्षभौ ॥ ४७ ॥
आयास्यतः ससैन्यश्च सुग्रीवो वानरेश्वरः।
विहायसा क्षणेनैव तीर्त्वा वारिधिमाततम् ॥ ४८ ॥
निर्दहिष्यति रक्षौघांस्त्वत्कृते नात्र संशयः।
अनुज्ञां देहि मे देवि ! गच्छामि त्वरयान्वितः ॥ ४९ ॥
द्रष्टुं रामं सह भ्रात्रा त्वरयामि तवान्तिकम्।
देवि ! किञ्चिदभिज्ञानं देहि मे येन राघवः ॥ ५० ॥

तत्सदा वीर वर्णय आख्याहि च वर्णितं तस्य वीर्यं सदृशं भवेत् यथा वर्णितं भवेत् अन्यथा विपरीतमेवेत्यर्थः ॥ ४३ ॥

अतस्तथेति वाचा वचनकृत रामप्रेरणया धर्मं वन्दीमोचजम् यथा यथा रूपो दृष्टस्तथाजाने शीघ्रमागमिष्यतीत्यादि ॥ ४४ ॥ ४५ ॥

एवं हनूमन्तं जानकी आह किमाह राम इत्यादि ॥ ४६ ॥

हनूमानुत्तरयति मे स्कन्धावित्यादि ॥ ४७ ॥

आततं विस्तीर्णम् ॥ ४८ ॥ ४९ ॥

भ्रात्रा सह रामं द्रष्टुं गच्छामि गत्वा च तवान्तिकमानेतुं त्वर-

विश्वसेन्मां प्रयत्नेन ततो गन्ता समुत्सुकः ।
ततः किञ्चिद्विचार्यैव सीता कमललोचना ॥ ५१ ॥
विमुच्य केशपाशान्ते स्थितं चूडामणिं ददौ ।
अनेन विश्वसेद्रामस्त्वां कपीन्द्र ! सलक्ष्मणः ॥ ५२ ॥
अभिज्ञानार्थमन्यच्च वदामि तव सुव्रत ! ।
चित्रकूटगिरौ पूर्वमेकदा रहसि स्थितः ।
मदङ्के शिर आधाय निद्राति रघुनन्दनः ॥ ५३ ॥
ऐन्द्रः काकस्तदागत्य नखैस्तुण्डेन चासकृत् ।
मत्पादाङ्गुष्ठमारक्तं विददारामिषाशया ॥ ५४ ॥
ततो रामः प्रबुध्याथ दृष्ट्वा पादं कृतव्रणम् ।
केन भद्रे ! कृतं चैतद्विप्रियं मे दुरात्मना ॥ ५५ ॥
इत्युक्ता पुरतोऽपश्यद्वायसं मां पुनः पुनः ।
अभिद्रवन्तं रक्तास्यं नखतुण्डं चुकोप ह ॥ ५६ ॥
तृणमेकमुपादाय दिव्यास्त्रेणाभियोज्य तत् ।
चिक्षेप लीलया रामो वायसोपरि तज्ज्वलत् ॥ ५७ ॥
अभ्यद्रवद्वायसश्च भीतो लोकान् भ्रमन्पुनः ।

यामि राघवः यथा मां विश्वसेत् जानकीं सर्वथा दृष्टवानिति तथा किञ्चिदभिज्ञानं देहि ॥ ५० ॥

ततोऽहं समुत्सुकः रामदर्शनोत्सुकः प्रयत्नेन त्वद्दत्ताभिज्ञानं रक्षन् कृत्वा राघवसमीपमिति शेषः किञ्चिद्विचार्य तद्वचो युक्तं विचार्य॥५१॥५२

ऐन्द्रः इन्द्रलोकस्थः काकरूपधर इन्द्रपुत्र इत्यर्थः आमिषं मांसम्॥५॥

एतत् त्वत्पादाङ्गुष्ठविदारणरूपम् ॥ ५५ ॥

मां पुनः पुनरभिद्रवन्तं त्वन्मयः रक्तमास्यं नखतुण्डं यस्य तम् ॥ ५६ ॥ ५७ ॥

इन्द्रब्रह्मादिभिश्चापि न शक्यो रक्षितुं तदा ॥ ५८ ॥
रामस्य पादयोरग्रेऽपतद्भीत्या दयानिधेः।
शरणागतमालोक्य रामस्तमिदमब्रवीत् ॥ ५९ ॥
अमोघमेतदस्त्रं मे दत्त्वैकाक्षमितो व्रज।
सव्यं हृत्वा ततः काक एवं पौरुषवानपि ॥ ६० ॥
उपेक्षते किमर्थं मामिदानीं सोऽपि राघवः?।
हनूमानपि तामाह श्रुत्वा सीतानुभाषितम् ॥ ६१ ॥
देवि! त्वां यदि जानाति स्थितामत्र रघूत्तमः।
करिष्यति क्षणाद्भस्म लङ्कां राक्षसमण्डिताम् ॥ ६२ ॥
जानकी प्राह तं वत्स! कथं त्वं योत्स्यसेऽसुरैः?।
अतिसूक्ष्मवपुः सर्वे वानराश्च भवादृशाः ॥ ६३ ॥
श्रुत्वा तद्वचनं देव्यै पूर्वरूपमदर्शयत्।
मेरुमन्दरसङ्काशं रक्षोगणविभीषणम् ॥ ६४ ॥
दृष्ट्वा सीता हनूमन्तं महापर्वतसन्निभम्।

ज्वलत् अभिमन्त्रितम् तच्च वायसमभ्यद्रवत् स वायसोऽपि भीतः लोकान् ऐन्द्रब्राह्मान् भ्रमस्तत्र तैरपि तदा रक्षितुं शक्यो नाभवत्तदा ॥ ५८ ॥

रामपादाग्रे अपतत् ॥ ५९ ॥

ततः काको गत इति शेषः एवं पौरुषवानपि स राघवः इदानीमपि एवमवस्थावामपि मामुपेक्षते तत्किमर्थम् ॥ ६० ॥ ६१ ॥

जानाति वर्त्तमानसामीप्ये लट् ज्ञास्यतीत्यर्थः ॥ ६२ ॥

भवा त्वं सूक्ष्मवपुस्तथा सर्वेऽपि वानरा भवादृशाः भवद्वत् सूक्ष्मवपुष इति महावपुर्भी राक्षसैर्युद्धमसम्भावितमित्यर्थः ॥ ६३ ॥

श्रुत्वा तद्वचनं सीतया इति शेषः देव्यै सीतायै ॥ ६४ ॥ ६५ ॥

हर्षेण महताविष्टा प्राह तं कपिकुञ्जरम् ॥ ६५ ॥
समर्थोऽसि महासत्त्व ! द्रक्ष्यन्ति त्वां महाबलम् ।
राक्षसास्ते शुभः पन्था गच्छ रामान्तिकं द्रुतम् ॥ ६६ ॥
बुभुक्षितः कपिः प्राह दर्शनात्पारणं मम ।
भविष्यति फलैः सर्वैस्तव दृष्टौ स्थितैर्हि मे ॥ ६७ ॥
तथेत्युक्तः स जानक्या भक्षयित्वा फलं कपिः ।
ततः प्रस्थापितोऽगच्छज्जानकीं प्रणिपत्य सः ।
किञ्चिद्दूरमथो गत्वा स्वात्मन्येवानुचिन्तयत् ॥ ६८ ॥
कार्य्यार्थमागतो दूतः स्वामिकार्याविरोधतः ।
अन्यत्किञ्चिदसम्पाद्य गच्छत्यधम एव सः ॥ ६९ ॥
अतोऽहं किञ्चिदन्यच्च कृत्वा दृष्ट्वाथ रावणम् ।
सम्भाष्य च ततो रामदर्शनार्थं व्रजाम्यहम् ॥ ७० ॥
इति निश्चित्य मनसा वृक्षखण्डान् महाबलः ।

उत्पाट्याशोकवनिकां निर्वृक्षामकरोत् क्षणात् ॥ ७१ ॥

त्वां राक्षसो द्रक्ष्यन्ति दृष्ट्वा च रावणं कथयिष्यन्ति एवं सति को वेद किं भावीत्याशयः अतो रामान्तिकं द्रुतं गच्छ ते पन्थाः शुभोऽस्तु इतिः शेषः॥६६

कपिर्जानकीं प्राहाहं बुभुक्षितोऽस्मि अतस्तव दर्शनान्मम पारणमुचितमिति शेषः नन्वहं रिक्ता केन त्वां पारयामीति शङ्कायामाह तव दृष्टौ स्थितैः फलैर्मे पारणा भविष्यतीत्यर्थः ॥ ६७ ॥

ततस्तया प्रस्थापितो जानकीं प्रणिपत्य अगच्छत् अनुचिन्तयत् च अन्वचिन्तयत् अडभाव आर्षः ॥ ६८ ॥

अन्यत्किञ्चित् स्वाम्यासम्पादधिकमुत्कृष्टं कर्मेत्यर्थः ॥ ६९ ॥

अन्यत्किञ्चित् वीरकर्म रावणं दृष्ट्वा सम्भाष्य चेत्यन्वयः ॥ ७० ॥

वृक्षखण्डान् वृक्षसमूहान् उत्पाट्य निर्वृक्षामकरोत् ॥ ७१ ॥

सीताश्रयमगम्यञ्चा वनं शून्यं चकार सः।
उत्पाटयन्तं विपिनं दृष्ट्वा राक्षसयोषितः॥ ७२॥
अपृच्छन् जानकीं कोऽसौ वानराकृतिरुद्भटः॥ ७३॥

जानक्युवाच।

भवत्य एव जानन्ति मायां राक्षसनिर्मिताम्।
नाहमेनं विजानामि दुःखशोकसमाकुला॥ ७४॥
इत्युक्तास्त्वरितं गत्वा राक्षस्यो भयपीडिताः।
हनूमता कृतं सर्वं रावणाय न्यवेदयन्॥ ७५॥
देव! कश्चिन्महासत्त्वो वानराकृतिदेहभृत्।
सीतया सह सम्भाष्य ह्यशोकवनिकाङ्गणात्।
उत्पाट्य चैत्यप्रासादं बभञ्जामितविक्रमः॥ ७६॥
प्रासादरक्षिणः सर्वान् हत्वा तत्रैव तस्थिवान्।
तच्छ्रुत्वा तूर्णमुत्थाय वनभङ्गं महाप्रियम्॥ ७७॥
किङ्करान् प्रेषयामास नियुतं राक्षसाधिपः।
निर्भग्नचैत्यप्रासादप्रथमान्तरसंस्थितः॥ ७८॥
हनूमान् पर्वताकारो लोहस्तम्भकृतायुधः।

सीताश्रयमगं शिंशपावृक्षम् शून्यं वृक्षैरिति शेषः विपिनं वन-
खण्डान्॥ ७२॥ ७३॥

दुःखशोकाभ्यां युक्ताहमेनं न जानामि॥ ७४॥ ७५॥

वानराकृतिदेहभृत् वानरदेहसदृशदेह इत्यर्थः वानरे एवं पराक्र-
माभावाद्देवशक्तिः अशोकवनिकां अङ्गणादुत्पाट्य तत्रैव चैत्यप्रासादं बभञ्ज॥ ७६॥

तस्थिवान् स्थितः महाप्रियं भङ्गं तदप्रियं चेत्यर्थः॥ ७७॥

नियुतं दशकोटिः निर्भग्नो यश्चैत्यप्रासादस्तस्य प्रथमं यदन्तरं
प्रथमा वा भूमिस्तत्र संस्थितः॥ ७८॥

किञ्चिल्लाङ्गूलचलनो रक्तास्यो भीषणाकृतिः ॥ ७९ ॥
आपतन्तं महासत्त्वं राक्षसानां ददर्श सः।
चकार सिंहनादं च श्रुत्वा ते मुमुहुर्भृशम् ॥ ८० ॥
हनूमन्तमथो दृष्ट्वा राक्षसा भीषणाकृतिम्।
निर्जघ्नुर्विविधास्त्रौघैः सर्वराक्षसघातिनम् ॥ ८१ ॥
स तु उत्थाय हनुमान् मुद्गरेण समन्ततः।
निष्पिपेष क्षणादेव मशकानिव यूथपः ॥ ८२ ॥
निहतान् किङ्करान् श्रुत्वा रावणः क्रोधमूर्च्छितः।
पञ्चसेनापतींस्तत्र प्रेषयामास दुर्मदान् ॥ ८३ ॥
हनूमानपि तान् सर्वान् लोहस्तम्भेन चाहनत्।
ततः क्रुद्धो मन्त्रिसुतान् प्रेषयामास सप्त सः ॥ ८४ ॥
आगतानपि तान् सर्वान् पूर्ववद्वानरेश्वरः।
क्षणान्निःशेषतो हत्वा लोहस्तम्भेन मारुतिः ॥ ८५ ॥
पूर्वस्थानमुपाश्रित्य प्रतीक्षन् राक्षसान् स्थितः।
ततो जगाम बलवान् कुमारोऽक्षः प्रतापवान् ॥ ८६ ॥
तमुत्पपात हनुमान् दृष्ट्वाकाशे समुद्गरः।
गगनात्त्वरितो मूर्ध्नि मुद्गरेण व्यताडयत् ॥ ८७ ॥

लोहस्तम्भ एव कृतमायुधं येन सः किञ्चिल्लाङ्गूलचलन इति स्वभावोक्तिः ॥ ७९ ॥

ते किङ्करा नाम राक्षसाः ॥ ८० ॥

भीषणाकृतिं हनूमन्तं दृष्ट्वा तमन्वयः ॥ ८१ ॥

यूथपोऽत्र लोहस्तम्भः ॥ ८२ ॥ ८३ ॥

स रावणः ॥ ८४ ॥ ८५ ॥

राक्षसान् रावणप्रेषितान् ॥ ८६ ॥

तयोऽतिहर्षाद्धनुर्मातथमुथम्य वीर्यवान् ॥ ९६ ॥
जघान सारथिं साश्वं रथं चाचूर्णयत् क्षणात् ।
ततोऽन्यं रथमादाय मेघनादो महाबलः ॥ ९७ ॥
शीघ्रं ब्रह्मास्त्रमादाय बद्ध्वा वानरपुङ्गवम् ।
निनाय निकटं राज्ञो रावणस्य महाबलः ॥ ९८ ॥

यस्य नाम सततं जपन्ति ये-
ऽज्ञानकर्मकृतबन्धनं क्षणात् ।
सद्य एव परिमुच्य तत्पदं
यान्ति कोटिरविभासुरं शिवम् ॥ ९९ ॥
तस्यैव रामस्य पदाम्बुजं सदा
हृत्पद्ममध्ये सुनिधाय मारुतिः ।
सदैव निर्मुक्तसमस्तबन्धनः
किन्तस्य पाशैरितरैश्च बन्धनैः? ॥ १०० ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे सुन्दरकाण्डे
तृतीयः सर्गः ।

सिंहनादमकरोद् इन्द्रजिदिति शेषः ॥ ९६ । ९७ । ९८ ॥
यस्य रामस्य नाम ये प्राणिनो जपन्ति ते अज्ञानजन्यकर्मकृतं बन्धनं
संसारं परिमुच्य सद्यएव शिवाख्यं तत्पदं कोटिरविभासुरं यान्ति ॥ ९९ ॥
तस्य रामस्य पदाम्बुजं ध्याता मारुतिर्यतः सदैव निर्मुक्तानि सम-
स्तानि बन्धनानि कर्माणि यस्य तादृशो भवति अतस्तस्य पाशैरितरैर्वा
बन्धनैः किं दुःखमिति शेषः ॥ १०० ॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थेश्वरादिवि० श्रीरामवर्मकृतायां
ततौ श्रीमदध्यात्मरामायणे सेतौ सुन्दरकाण्डे
तृतीयः सर्गः ।

अथ चतुर्थः सर्गः ।

धान्तं कपीन्द्रं धृतपाशबन्धनं
विलोकयन्तं नगरं विभीतवत् ।
अताडयन्मुष्टितलैः सुकोपनाः
पौराः समन्तादनुयान्त ईप्सितुम् ॥ १ ॥
ब्रह्मास्त्रमेनं प्रणमात्तशक्तं
ज्ञात्वा गतं ब्रह्मवरेण सत्वरम् ।
ज्ञात्वा हनूमानपि फल्गुरज्जुभि-
र्धृतो ययौ कार्यविशेषगौरवात् ॥ २ ॥
सभान्तरस्थस्य च रावणस्य तं
पुरो निधायाह बलारिजित्तदा ।
बद्धो मया ब्रह्मवरेण वानरः
समागतोऽनेन हता महासुराः ॥ ३ ॥

धृतं सहस्तेन पाशबन्धनं येन तादृशं विशेषेण भीतवत् नगरं लङ्कां विलोकयन्तम् ईप्सितं कपीन्द्रं द्रष्टुं तमेवानुपश्चाद्यान्त इति पौरविशेषणम् ॥ १ ॥

प्रणमात्तशक्तं प्रणमात् शक्तः सम्बन्धो यस्य तादृशमेनं हनूमन्तं ब्रह्मास्त्रं कर्तृ ज्ञात्वा ब्रह्मवरेण त्वां मदस्त्रं न पीडयिष्यतीति ब्रह्मदत्तवरेण सत्वरं गतं हनूमान् तद्गमनं ज्ञात्वाऽपि फल्गुरज्जुभिर्धृतोऽपि कार्यविशेषस्य कर्तव्यरावणदर्शनादिरूपस्य गौरवात् बद्ध इव ययावित्यर्थः ॥ २ ॥

सभान्तरस्थस्य सभामध्यस्थस्य तं हनूमन्तम् बलारिजित् इन्द्रजित् ब्रह्मवरेण ब्रह्मवरलब्धब्रह्मास्त्रेण समागतः अक्षपीडामपहिंसुः समभ्यागत इत्यर्थः तद्वृत्तान्तमाह अनेनेत्यादि ॥ २ ॥

यदुक्तमनार्य्ये ! विचार्य्य मन्त्रिभि-
र्विधीयतामेष न लौकिको हरिः ।
ततो विलोक्याह स राक्षसेश्वरः
प्रहस्तमग्रे स्थितमञ्जनाद्रिभम् ॥ ४ ॥
प्रहस्त पृच्छैनमसौ किमागतः
किमत्र कार्य्यं कुत एव वानरः ।
वनं किमर्थं सकलं विनाशितं
हताः किमर्थं मम राक्षसा बलात् ॥ ५ ॥
ततः प्रहस्तो हनुमन्तमादरात्
पप्रच्छ केन प्रहितोऽसि ? वानर ! ।
भयं च ते मास्तु विमोक्ष्यसे मया
सत्यं वदस्वाखिलराजसन्निधौ ॥ ६ ॥
ततोऽतिहर्षात्पवनात्मजो रिपुं
निरीक्ष्य लोकत्रयकण्टकासुरम् ।
वक्तुं प्रचक्रे रघुनाथसत्कथां
क्रमेण रामं मनसा स्मरन्मुहुः ॥ ७ ॥
शृणु स्फुटं देवगणाद्यमित्र ! हे
रामस्य दूतोऽहमशेषहृत्स्थितेः ।

एष हरिर्न लौकिक इति तत्पराक्रमकथनम् अञ्जनाद्रिभम् अञ्ज-
नाचलवत् श्यामकान्तिम् ॥ ४ ॥

कुतः कस्माद्देशादागत इति शेषः ॥ ५ ॥

विमोक्ष्यसे बन्धनाद्धननाद्वा भयाद्वेति शेषः अखिलराजसन्निधौ
अखिललोकराजस्य रावणस्य सन्निधाविन्त्यर्थः ॥ ६ ॥ ७ ॥

देवगणादीनाममित्र यस्तो वादिना नामादिषकूहः अयमहदि-

यस्याखिलेशस्य हृताधुना त्वया
भार्य्या स्वनाशाय शुनेव सद्धविः ॥ ८ ॥
स राघवोऽभ्येत्य मतङ्गपर्वतं
सुग्रीवमैत्रीमनलस्य सन्निधौ ।
कृत्वैकबाणेन निहत्य वालिनं
सुग्रीवमेवाधिपतिं चकार तम् ॥ ९ ॥
स वानराणामधिपो महाबली
महाबलैर्वानरयूथकोटिभिः ।
रामेण सार्द्धं सह लक्ष्मणेन भो
प्रवर्षणेऽमर्षयुतोऽवतिष्ठते ॥ १० ॥
सञ्चोदितास्तेन महाहरीश्वरा-
धरासुतां मार्गयितुं दिशो दश ।
तत्राहमेकः पवनात्मजः कपिः
सीतां विचिन्वन् शनकैः समागतः ॥ ११ ॥
दृष्टा मया पद्मपलाशलोचना
सीता कपित्वाद्विपिनं विनाशितम् ।

स्थितेः अशेषहृदयेषु स्थितिर्यस्य सर्वान्तर्यामिण इत्यर्थः अनेन तत्र ततः कथमपि न मोक्ष इति सूचितं किञ्च त्वत्कृत्यं चिकीर्षोस्तस्यैव प्रेरणया सीता हृतेति सूचितम् ॥ ८ ॥

स राघवः सुग्रीवमैत्रीं कृत्वा वालिनं निहत्य तं प्रसिद्धपराक्रमं सुग्रीवः सर्ववानरैर्लङ्कां रोत्स्यत्येवेति सूचितं मित्रभार्याहारिणं त्वत्तोऽप्यधिकबलं वालिनं यो हतवान् स त्वां सर्वथा हनिष्यत्येवेति च सूचितम् ॥ ९ ॥

भो इति रावणसम्बोधनं प्रवर्षणे तदाख्ये पर्वते अमर्षयुतस्त्वद्विनाशोद्युतोऽवतिष्ठते ॥ १० ॥

धरासुतां जानकीम् अनेन किमागत इत्यस्य चोत्तरं दत्तम् ॥ ११ ॥

इदं तु सत्यं तव नास्ति विक्रिया
विकारहेतुर्न च तेऽद्वयत्वतः।
यथा नभः सर्वगतं न लिप्यते
तथा भवान् देहगतोऽपि सूक्ष्मकः।
देहेन्द्रियप्राणशरीरसङ्गत-
स्त्वात्मेति बुद्ध्याखिलबन्धभाग्भवेत्॥ १८॥
चिन्मात्रमेवाहमजोऽहमक्षरो
ह्यानन्दभावोऽहमिति प्रमुच्यते।
देहोऽप्यनात्मा पृथिवीविकारजो
न प्राण आत्मानिल एष एव सः॥ १९॥

नन्वेवं सत्यं वस्तु किमपि नास्त्येव किम् अस्तीत्याह इदं तु सत्यमिति त्वत्स्वरूपन्त्वित्यर्थः एतस्य विक्रिया नास्ति अविकारी चेतन एवैकः सत्यः ननु विकारहेत्वज्ञानमपि सत्यमेव नेत्याह ते विकारहेतुर्न च सत्य इति शेषः तत्र हेतुमाह अद्वयत्वतः 'एकमेवाद्वितीयं ब्रह्म' इत्यद्वैतप्रतिपादकश्रुतिविरोधात् तया हि सतो द्वितीयस्य निषेध इति भावः ननु चित्तसम्बन्धान्मम दुःखमस्त्येवेति चेन्नेत्याह यथा सर्वगतमपि नभः पृथिव्यादिरूपगन्धादिभिर्न लिप्यते सूक्ष्मत्वात्तथा देहगतोऽपि चित्तसमानाधिकरणोऽपि यतः सूक्ष्मकोऽतिसूक्ष्मो तत्तद्गतदुःखादिभिर्वस्तुतो न लिप्यते एवं च नीलं नभ इत्यादि प्रतीतिवदहं दुःखीत्यादिप्रतीतिर्भ्रम एवेति भावः ननु तर्हि मुक्तसंसारिव्यवस्था किं नास्त्येवास्तीत्याह देहेत्यादि देहोऽत्र सूक्ष्मः शरीरं स्थूलं तत्सङ्गतस्तदविवेकाध्यासात् तेष्वेव वा आत्मबुद्धिस्तयाखिलबन्धभाग्भवेत् अविवेक एव मुख्यं संसारकारणमिति भावः॥ १८॥

ननु तर्हि मुक्तिर्दुर्लभेति शङ्कायां तत्कारणमाह चिन्मात्रमिति विवेकज्ञान एव मोक्षकारणमिति तमाह तत्राद्यार्द्धेनात्मनि जडवैधर्म्यकम् अजत्वेनोत्पत्तिराहित्यम् अक्षरत्वेनाविनाशित्वम् आनन्दभावः

मनोऽप्यहङ्कारविकार एव नो
न चापि बुद्धिः प्रकृतेर्विकारजा ।
आत्मा चिदानन्दमयोऽविकारवान्
देहादिसङ्घाद्व्यतिरिक्त ईश्वरः ॥ २० ॥
निरञ्जनो मुक्त उपाधितः सदा
ज्ञात्वैवमात्मानमितो विमुच्यते ।
अतोऽहमात्यन्तिकमोक्षसाधनं
वक्ष्ये शृणुष्वावहितो महामते ॥ २१ ॥
विष्णोर्हि भक्तिः सुविशोधनं धिय-
स्ततो भवेज्ज्ञानमतीव निर्मलम् ।

तद्रूपः देहादौ तद्धर्ममाह देहोऽपीति पृथिवीविकारैस्तत्त्वमायु-भिर्जनित इति अनात्मा अनेनाचेतनत्वजन्यत्वादिर्धर्म उक्तं प्राणोऽप्यात्मा न यत एषो बहिर्हं श्वसमानो जडोऽनिल एव 'स प्राणो यः प्राणः स वायुः' इति श्रुतेः ॥ १९ ॥

मनोऽपि नात्मेत्याह मनोऽपीति नो इत्यस्यात्मेति शेषः यत-स्तत् अहङ्कारस्य विकारः न चापि बुद्धिरिति बुद्धिरहङ्कारोऽपि नात्मा यतः 'प्रकृतेर्विकाराच्चाहतो जायत' इति प्रकृतेर्विकारजा आत्मनि उक्तमेव वैधर्म्यं द्रढयितुं पुनराह आत्मेत्यादि स एवेश्वरः अनेन चेत-नानेकत्वं नेति दर्शितम् ॥ २० ॥

निरञ्जन इत्यस्यैव व्याख्या सदा उपाधितो मुक्तः उपाधिभूतचित्त-धर्मैर्दुःखादिभिरलिप्त इत्यर्थः एवमात्मानं ज्ञात्वा इतः संसाराद्विमुच्यते नन्वीदृशज्ञानमेव कथं स्यादत आहातोऽहमिति मोक्षस्यात्यन्तिकं साधन-नियतं साधनमित्यर्थः ॥ २१ ॥

प्रतिज्ञातमाह विष्णोर्हीति धियश्चित्तस्य नित्यानित्यविवेकद्वारा ज्ञानं आत्मा चिदानन्दमय इत्यादिनोक्तं ततः तद्विषयनिदिध्यासनतः

विशुद्धतत्त्वानुभवो भवेत्ततः
सम्यग्विदित्वा परमं पदं व्रजेत् ॥ २२ ॥
अतो भजस्वाद्य हरिं रमापतिं
रामं पुराणं प्रकृतेः परं विभुम्।
विसृज्य मौर्ख्यं हृदि शत्रुभावनां
भजस्व रामं शरणागतप्रियम्।
सीतां पुरस्कृत्य सपुत्रबान्धवो
रामं नमस्कृत्य विमुच्यसे भयात् ॥ २३ ॥
रामं परात्मानमभावयन् जनो
भक्त्या हृदिस्थं सुखरूपमद्वयम्।
कथं परं तीरमवाप्नुयाज्जनो
भवाम्बुधेर्दुःखतरङ्गमालिनः? ॥ २४ ॥
नोचेत्त्वमज्ञानमयेन वह्निना
ज्वलन्तमात्मानमरक्षितारिवत्।

विशुद्धतत्त्वानुभवो भवेत् अपरोक्षसाक्षात्कारो भवेत् तं परमं पदं ब्रह्मणाज्यम् ॥ २२ ॥

उपसंहरति अत इति यस्य भक्तिर्मोक्षसाधनं स विष्णुरयमेव तद्बोधके विशेषणे हरिं रमापतिमिति ननु दशरथपुत्त्रोऽयं न स इत्यत आह प्रकृतेः परमित्यादि दशरथपुत्रत्वादि तु कल्पितमित्याशयः मौर्ख्यं मूर्खत्वं मनुष्य इति बुद्धिरूपं तत्कृतां शत्रुत्वेन भावनां च विसृज्य भजस्व सम्प्रति युक्तं भजनप्रकारमाह सीतामिति ॥ २३ ॥

अथ व्यतिरेकमुखेन तत्सद्भावनाप्रकारमाह राममिति हृदिस्थमित्यनेनान्तर्यामितया प्रेरकत्वमुक्तम् सुखरूपोऽद्वितीयो मत्प्रेरक इत्येवमभावयन्निति यावत् दुःखरूपास्तरङ्गमाला यस्य तस्य ॥ २४ ॥

नो चेत् मदुक्ताकरणे तेन त्वं ज्वलन्तमात्मानमरक्षिता त्रुटि रूपं किञ्च

भवत्यधोऽधः स्वकृतैश्च पातकै-
र्विमोक्षयत्ता न च ते भविष्यति ॥ २५ ॥
श्रुत्वा मृताज्ञादृशमानभाषितं
तदायुसूनोर्दशकण्ठरोऽसुरः ।
अमृष्यमाणोऽतिरुषा कपीश्वरं
जगाद रक्ताञ्चितलोचनो ज्वलन् ॥ २६ ॥
कथं ममाग्रे विलपस्यभीतवत् ?
प्लवङ्गमानामधमोऽसि दुष्टधीः ।
क एष रामः कतमो वनेचरो ?
निहन्मि सुग्रीवयुतं नराधमम् ॥ २७ ॥
त्वां चाद्य हत्वा जनकात्मजां ततो
निहन्मि रामं सहलक्ष्मणं ततः ।
सुग्रीवमप्य बलिनं कपीश्वरं
सवानरैर्हन्म्यचिरेण वानर ! ।
श्रुत्वा दशग्रीववचः स मारुति-
र्विवृद्धकोपेन दहन्निवासुरम् ॥ २८ ॥
न मे समा रावणकोटयोऽधमा
रामस्य दासोऽहमपारविक्रमः ।

स्वकृतैः पातकैः सीताहरणादिभिररिभिः आत्मानमधो अधो नयसि प्रविशसीत्यर्थः आदौ विमोक्षयत्ता तत्तद्बन्धावनापि न भविष्यतीत्यर्थः ॥ २५ ॥
मृताज्ञादेति तदाज्ञादेन यथाय आज्ञादो यस्य तादृशं भाषित-मित्यर्थः ॥ २६ ॥
वनेचरः सुग्रीवः केषां मध्येऽतिपवितो न केषामपीत्यर्थः ॥ २७ ॥
विवृद्धकोपेन करणेनाधः असुरं दहन्निवाहेति शेषः ॥ २८ ॥

उत्प्लुत्योत्प्लुत्य सन्दीप्तपुच्छेन महता कपिः ।
ददाह लङ्कामखिलां साट्टप्रासादतोरणाम् ॥ ४२ ॥
हा तात ! पुत्र ! नाथेति क्रन्दमानाः समन्ततः ।
व्याप्ताः प्रासादशिखरेऽप्यारूढा दैत्ययोषितः ॥ ४३ ॥
देवता इव दृश्यन्ते पतन्त्यः पावकेऽखिलाः ।
विभीषणगृहं त्यक्त्वा सर्वं भस्मीकृतं पुरम् ॥ ४४ ॥
ततः उत्प्लुत्य जलधौ हनूमान्मारुतात्मजः ।
लाङ्गूलं मज्जयित्वान्तः स्वस्थचित्तो बभूव सः ॥ ४५ ॥
वायोः प्रियसखित्वाच्च सीतया प्रार्थितोऽनलः ।
न ददाह हरेः पुच्छं बभूवात्यन्तशीतलः ॥ ४६ ॥

यन्नामसंस्मरणधूतसमस्तपापा-
स्तापत्रयानलमपीह तरन्ति सद्यः ।
तस्यैव किं रघुवरस्य विशिष्टदूतः
सन्तप्यते कथमसौ प्रकृतानलेन ? ॥ ४७ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे सुन्दरकाण्डे चतुर्थः सर्गः ॥

हा तातेत्यादि क्रन्दमानाः प्रासादशिखरे आरूढा अपि व्याप्ता वह्निनेति शेषः ॥ ४३ ॥

वह्नौ पतन्त्यो देवता इव दृश्यन्ते ॥ ४४ ॥

जलधौ तत्समीपे उत्प्लुत्यान्तः समुद्रमध्ये लाङ्गूलं मज्जयित्वा स्वस्थचित्तो बभूव ॥ ४५ ॥

वायोः प्रियमित्रत्वात् सीताप्रार्थनेन पावकोऽग्निर्वायुपुत्रस्य हरेः पुच्छं न ददाह तापमात्रमेव न किन्त्वतिशीतलश्च बभूव ॥ ४६ ॥

यन्नामस्मरणेन धूतानि दूरीकृतानि समस्तपापानि येषां ते तापत्रय-माध्यात्मिकाधिभौतिकाधिदैविकभेदात्त्रयाणां वह्निमपि तरन्ति तेन नु पीडा न स्पर्शः ॥ ४७ ॥

इति चतुर्थः सर्गः ।

अथ पञ्चमः सर्गः ।

ततः सीतां नमस्कृत्य हनूमानब्रवीद्वचः ।
आज्ञापयतु मां देवि ! भवती रामसन्निधिम् ॥ १ ॥
गच्छामि रामस्त्वां द्रष्टुमागमिष्यति सानुजः ।
इत्युक्त्वा त्रिः परिक्रम्य जानकीं मारुतात्मजः ॥ २ ॥
प्रणम्य प्रस्थितो गन्तुं इदं वचनमब्रवीत् ।
देवि ! गच्छामि भद्रं ते तूर्णं द्रक्ष्यसि राघवम् ॥ ३ ॥
लक्ष्मणं च ससुग्रीवं वानरायुतकोटिभिः ।
ततः प्राह हनूमन्तं जानकी दुःखकर्षिता ॥ ४ ॥
त्वां दृष्ट्वा विस्मृतं दुःखमिदानीं त्वं गमिष्यसि ।
इतः परं कथं वर्त्ते रामवार्त्ताश्रुतिं विना ? ॥ ५ ॥

मारुतिरुवाच ।

यद्येवं देवि ! मे स्कन्धमारोह क्षणमात्रतः ।
रामेण योजयिष्यामि मन्यसे यदि जानकि ! ॥ ६ ॥

अथ लङ्कादाहेऽशोकवनस्थानदाहेऽपि सीतायाः दाहाभावे हनिश्च-यते पुनः सीतां दृष्ट्वा तामापृच्छ्य गन्तु इत्याह तत इति हे देवि ! रामसन्निधिं गच्छामि भवती मामाज्ञापयत्वित्यन्वयः ॥ १ ॥

सानुजो रामस्त्वां द्रष्टुमागमिष्यतीत्युक्त्वा जानकीं त्रिःपरिक्रम्य प्रदक्षिणं कृत्वा ॥ २ ॥

पुनः प्रणम्य गन्तुं प्रस्थित इदं वचनमाचष्ट अब्रवीत् ते भद्रमिति विनयोक्तिः ॥ ३ । ४ ॥

वार्त्ताश्रुतिं वार्त्ताश्रवणम् ।

यद्येवं रामवार्त्ताश्रवणं विना स्थातुमशक्यत्वम् यदि मन्यसे यद्ये-तत्तत्र चित्तं आचरेदिति शेषः ॥ ६ ॥

। सीतोवाच।

राम: सागरमाशोष्य बद्धा वा शरपञ्जरैः।
आगत्य वानरैः सार्द्धं हत्वा रावणमाहवे॥ ७॥
मां नयेद्यदि रामस्य कीर्त्तिर्भवति शाश्वती।
अतो गच्छ कथं चापि प्राणान् सन्धारयाम्यहम्॥ ८॥
इति प्रस्थापितो वीरः सीतया प्रणिपत्य ताम्।
जगाम पर्वतस्याग्रे गन्तुं पारं महोदधेः॥ ९॥
तत्र गत्वा महासत्त्वः पादाभ्यां पीडयन् गिरिम्।
जगाम वायुवेगेन पर्वतश्च महीतलम्॥ १०॥
ततो महीसमानत्वं त्रिंशद्योजनमुच्छ्रितः।
मारुतिर्गगनान्तस्थो महाशब्दं चकार सः॥ ११॥
तं श्रुत्वा वानराः सर्वे ज्ञात्वा मारुतिमागतम्।
हर्षेण महताविष्टाः शब्दं चक्रुर्महास्वनम्॥ १२॥
शब्देनैव विजानीमः कृतकार्य्यः समागतः।

आशोष्येति शुष्कः मार्गः एवथा तत्करण बद्धेति शरपञ्जरैः शरवृष्टैः॥ ७॥

यदि रावणं हत्वा मां नयेत्तर्हि रामस्य शाश्वती कीर्त्तिर्भवेत्कथं अपि कथञ्चिदर्थः॥ ८॥

महोदधेः पारं गन्तुं पर्वतस्याग्रे उपरिभागे जगाम॥ ९॥

महासत्त्वो महाबलस्तस्मोर्द्धं शिखरे गत्वा पर्वतश्च महीतलं जगामेत्यनुकर्षः।

तद्गमनमथ्यंशेन न किन्तु सम्पूर्ण एव गत इत्याह त्रिंशद्योजनं यावत् उच्छ्रितोऽपि महीसमानत्वं जगाम गगनान्तस्थः गगनमध्यस्थः॥ ११

तं महान्तं शब्दं महान् स्वनः प्रतिध्वनिर्यस्य तं शब्दं चक्रुः॥ १२॥

हनूमानेव पश्यध्वं वानरा वानरर्षभम् ॥ १३ ॥
एवं ब्रुवत्सु वीरेषु वानरेषु स मारुतिः ।
अवतीर्य्य गिरेर्मूर्ध्नि वानरानिदमब्रवीत् ॥ १४ ॥
दृष्टा सीता मया तत्र धर्षिता च कृशानना ।
सम्भाषितो दृशग्रीवस्ततोऽहं पुनरागतः ॥ १५ ॥
इदानीमेव गच्छामो रामसुग्रीवसन्निधिम् ।
इत्युक्ता वानराः सर्वे हर्षेणालिङ्ग्य मारुतिम् ॥ १६ ॥
केचिच्चुचुम्बुर्लाङ्गूलं ननृतुः केचिदुत्सुकाः ।
हनूमता समेतास्ते जग्मुः प्रस्रवणं गिरिम् ॥ १७ ॥
गच्छन्तो ददृशुर्वीरा वनं सुग्रीवरक्षितम् ।
मधुसंज्ञं तदा प्राहुरङ्गदं वानरर्षभाः ॥ १८ ॥
क्षुधिताः स्मो वयं वीर ! देह्यनुज्ञां महामते ! ।
भक्षयामः फलान्यद्य पिबामोऽमृतवन्मधु ॥ १९ ॥
सन्तुष्टा राघवं द्रष्टुं गच्छामोऽद्यैव सानुजम् ॥ २० ॥

अङ्गद उवाच ।

हनुमान् कृतकार्य्योऽयं पिबतैतत्प्रसादतः ।
जक्षध्वं फलमूलानि त्वरितं हरिसत्तमाः ॥ २१ ॥

हनूमानेवायं कृतकार्यः समागत इति मन्ये नैव आनीमः केचिद्वा-
नरा दृष्ट्वा वानरर्षभं पश्यध्वमित्याहुः ॥ १३ । १४ ॥

पूर्वं सीतापदोक्तौ पदान्तरोच्चारणपर्यन्तं क्रियापदबन्धेन
स्यादिति पूर्वं दृष्टेत्युक्तिः ॥ १५ । १६ ॥

केचिच्चुचुम्बुरित्यादि चपलचिह्नवानरजातिलक्षणम् ॥ १७–१९ ॥

सन्तुष्टाः फलभक्षणेन मधुपानेन च ॥ २० ॥

जक्षध्वं भक्षयध्वमित्यर्थः ॥ २१ ॥

ततः प्रविश्य हरयः पातुमारेभिरे मधु।
रक्षिणस्तानथाहत्य दधिवक्त्रेण नोदितान्॥ २२॥
पिबतस्ताड़यामासुर्वानरान् वानरर्षभाः।
ततस्तान् मुष्टिभिः पादैश्चूर्णयित्वा पपुर्मधु॥ २३॥
ततो दधिमुखः क्रुद्धः सुग्रीवस्य स मातुलः।
जगाम रक्षिभिः सार्द्धं यत्र राजा कपीश्वरः॥ २४॥
गत्वा तमब्रवीद्देव! चिरकालाभिरक्षितम्।
नष्टं मधुवनं तेऽद्य कुमारेण हनूमता॥ २५॥
श्रुत्वा दधिमुखेनोक्तं सुग्रीवो हृष्टमानसः।
दृष्टा मतो न सन्देहः सीता पवननन्दनः॥ २६॥
नो चेन्मधुवनं द्रष्टुं समर्थः को भवेन्मम।
तत्रापि वायुपुत्रेण कृतं कार्य्यं न संशयः॥ २७॥
श्रुत्वा सुग्रीववचनं हृष्टो रामस्तमब्रवीत्।
किमुच्यते त्वया राजन्! वचः सीताकथान्वितम्?॥ २८॥
सुग्रीवस्त्वब्रवीद्वाक्यं देव! दृष्टावनीसुता।
हनूमत्प्रमुखाः सर्वे प्रविष्टा मधुकाननम्॥ २९॥

दधिवक्त्रो नाम तद्रक्षिणां मुख्यस्तेन वाधिकृतः॥ २२॥
वानरर्षभाः दधिवक्त्रप्रेरिताः पिबतो वानरान् ताड़यामासुरिति-
अन्वयः॥ २३। २४॥
कुमारेणाङ्गदेन हनूमता च नष्टं नाशितमित्यर्थः॥ २५॥
दृष्टा आगत इति च्छेदः॥ २६॥
नो चेन्मम मधुवनं द्रष्टुं कः समर्थो भवेत्॥ २७॥
अतिहर्षात् बहुमानेन सुग्रीवं प्रति राजन्निति वचः॥ २८॥
अवनीसुता जानकी॥ २९॥

भक्षयन्ति स्म सकलं ताडयन्ति स्म रक्षिणः।
अज्ञात्वा देव! कार्य्यं ते द्रष्टुं मधुवनं मम॥ ३०॥
न समर्थास्ततो देवी दृष्टा सीतेति निश्चितम्।
रक्षिणो वो भयं मास्तु गत्वा ब्रूत ममाज्ञया॥ ३१॥
वानरानङ्गदमुखानानयध्वं ममान्तिकम्।
श्रुत्वा सुग्रीववचनं गत्वा ते वायुवेगतः॥ ३२॥
हनुमत्प्रमुखानूचुर्गच्छतेश्वरशासनात्।
द्रष्टुमिच्छति सुग्रीवः स रामो लक्ष्मणान्वितः॥ ३३॥
युष्मानतीव हृष्टास्ते त्वरयन्ति महाबलाः।
तथेत्यम्बरमासाद्य ययुस्ते वानरोत्तमाः॥ ३४॥
हनूमन्तं पुरस्कृत्य युवराजं तथाङ्गदम्।
रामसुग्रीवयोरग्रे निपेतुर्भुवि सत्वरम्॥ ३५॥
हनूमान् राघवं प्राह दृष्टा सीता निरामया।
साष्टाङ्गं प्रणिपत्याग्रे रामः पश्चाद्धरीश्वरम्॥ ३६॥
कुशलं प्राह राजेन्द्र! जानकी त्वां शुचान्विता।
अशोकवनिकामध्ये शिंशपामूलमाश्रिता॥ ३७॥

मम मधुवनं द्रष्टुं न समर्था इत्यन्वयः॥ ३०॥

भो रक्षिणो वो युष्माकं भयं वानरेभ्यस्तज्जनं मास्तु यतो ममाज्ञया गत्वा अङ्गदमुखान् वानरान् ब्रूत युष्मान् रामसुग्रीवावाकारयत इति शेषः इत्युक्त्वा ममान्तिकं मत्समीपं तानानयध्वम्॥ ३१-३२॥

अतीव हृष्टास्ते रामसुग्रीवलक्ष्मणाः युष्मान् स्वसमीपागमनाय त्वरयन्ति॥ ३४॥

भूपमध्योत्तरं राघवाश्वासनाय पूर्वं दृष्टा सीतेत्याह ततः क्रमेण रामसुग्रीवौ प्रणिपत्य॥ ३५। ३६॥

जानकीकुशलं प्राहेत्याह शुचा शोकेन॥ ३७॥

राक्षसीभिः परिवृता निराहारा कृशा प्रभो !।
हा राम ! रामरामेति शोचन्ती मलिनाम्बरा ॥३८॥
एकवेणी मया दृष्टा शनैराश्वासिता शुभा।
वृक्षशाखान्तरे स्थित्वा सूक्ष्मरूपेण ते कथाम् ॥ ३९ ॥
जन्मारभ्य तवात्यर्थं दण्डकागमनं तथा।
दशाननेन हरणं जानक्या रहिते त्वयि ॥ ४० ॥
सुग्रीवेण यथा मैत्री कृत्वा वालिनिबर्हणम्।
मार्गणार्थं च वैदेह्याः सुग्रीवेण विसर्जिताः ॥ ४१ ॥
महाबला महासत्त्वा हरयो जितकाशिनः।
गताः सर्वत्र सर्वे वै तत्रैकोऽहमिहागतः ॥ ४२ ॥
अहं सुग्रीवसचिवो दासोऽहं राघवस्य हि।
दृष्टा यज्जानकी भाग्यात् प्रयासः फलितोऽद्य मे ॥ ४३ ॥
इत्युदीरितमाकर्ण्य सीता विस्फारितेक्षणा।
केन वा कर्णपीयूषं श्रावितं मे शुभाक्षरम् ॥ ४४ ॥
यदि सत्यं तदा यातु मद्दर्शनपथं तु सः।
ततोऽहं वानराकारः सूक्ष्मरूपेण जानकीम् ॥ ४५ ॥

हा इति शोकव्यञ्जकमात्रम् ॥ ३८ ॥

जन्मारभ्य तव कथां ब्रुवता मया सूक्ष्मरूपेण वृक्षशाखान्तरे स्थित्वा शनैराश्वासितेत्यन्वयः ॥ ३९ ॥

तत्रार्थं विस्तरेण दण्डकागमनादिकथोक्तेति शेषः त्वयि रहिते देशान्तरं गते सति जानक्या दशाननेन हरणमित्यन्वयः ॥ ४० ॥

वालिनिबर्हणं तद्वधं कृत्वा यथा सुग्रीवेण मैत्री सफला कृतेति शेषः ॥ ४१—४४ ॥

सः मेनोक्तं सः इत्यर्थः ॥ ४५—४७ ॥

प्रणम्य प्राञ्जलिर्भूत्वा दूरादेव स्थितः प्रभो !।
पृष्टोऽहं सीतया कस्त्वमित्यादिबहुविस्तरम् ॥ ४६ ॥
मया सर्वं क्रमेणैव विज्ञापितमरिन्दम !।
मयार्पितं देव्यै भवद्दत्ताङ्गुलीयकम् ॥ ४७ ॥
तेन मामतिविश्वस्ता वचनं चेदमब्रवीत्।
यथा दृष्टास्मि हनुमन् ! पीड्यमाना दिवानिशम् ॥ ४८ ॥
राक्षसीनां तर्जनैस्तत्सर्वं कथय राघवे।
मयोक्तं देवि ! रामोऽपि त्वच्चिन्तापरिनिष्ठितः ॥ ४९ ॥
परिद्योतत्यहोरात्रं त्वद्वार्त्तां नाधिगम्य सः।
इदानीमेव गत्वाहं स्थितिं रामाय ते ब्रुवे ॥ ५० ॥
रामः श्रवणमात्रेण सुग्रीवेण सलक्ष्मणः।
वानरानीकपैः सार्धमागमिष्यति तेऽन्तिकम् ॥ ५१ ॥
रावणं सकुलं हत्वा नेष्यति त्वां स्वकम्पुरम्।
अभिज्ञां देहि मे देवि ! यथा मां विश्वसेद्विभुः ॥ ५२ ॥
इत्युक्ता सा शिरोरत्नं चूडापाशे स्थितं प्रियम्।
दत्त्वा काकेन यद्वृत्तं चित्रकूटगिरौ पुरा ॥ ५३ ॥
तदप्याहाश्रुपूर्णाक्षी कुशलं ब्रूहि राघवम्।

तेन अङ्गुलीयकदानेन राघवप्राप्तः सेवक इत्यतिविश्वस्ता राक्षसीनां तर्जनैः पीड्यमाना यथा दृष्टास्मि तत्सर्वं पीडनं राघवे कथय ॥ ४८ ॥
त्वच्चिन्तापरिनिष्ठितः त्वच्चिन्तायां स्थितः ॥ ४९ ॥
त्वद्वार्त्तां नाधिगम्य अहोरात्रं परिद्योचति त्वामितीति शेषः ॥५०॥५१॥
विश्वसेत् सत्यं जानकीं दृष्ट्वा आगत इति विश्वसेदित्यर्थः ॥ ५२ ॥
शिरोरत्नं दत्त्वा चित्रकूटगिरिस्थं काकवृत्तमप्याह ॥ ५३ ॥
ततः सन्देशमाहेति शेषः तमाहाश्रुपूर्णाक्षीति वक्ष्ये किञ्चिद्दुइक्तं

तच्छ्रेयं ब्रूहि मे किञ्चिद्दुरुक्तं भाषितं पुरा ॥ ५४ ॥
तत् क्षमस्वाज्ञभावेन भाषितं कुलनन्दन !।
तारयेन्मां यथा रामस्तथा कुरु कृपान्वितः ॥ ५५ ॥
इत्युक्त्वा रुदती सीता दुःखेन महताहता।
मयाप्याश्वासिता राम ! वदता सर्वमेव ते ॥ ५६ ॥
ततः प्रस्थापितो राम ! त्वत्समीपमिहागतः।
तदागमनवेलायामशोकवनिकां प्रियाम् ॥ ५७ ॥
उत्पाद्य राक्षसांस्तत्र बहून् हत्वा क्षणादहम्।
रावणस्य सुतं हत्वा रावणेनाभिभाष्य च ॥ ५८ ॥
लङ्कामशेषतो दग्ध्वा पुनरप्यगमं क्षणात्।
श्रुत्वा हनूमतो वाक्यं रामोऽत्यन्तप्रहृष्टधीः ॥ ५९ ॥
हनूमंस्ते कृतं कार्यं देवैरपि सुदुष्करम्।
उपकारं न पश्यामि तव प्रत्युपकारिणः ॥ ६० ॥
इदानीं ते प्रयच्छामि सर्वस्वं मम मारुते !।
इत्यालिङ्ग्य समाकृष्य गाढं वानरपुङ्गवम् ॥ ६१ ॥

दुर्वचो भाषितं तत् क्षमस्व तदज्ञभावेनाज्ञतया मया भाषितम् अतो यथा मां रामोऽस्माद्दुःखात्तारयेत्तथा कृपान्वितः कुरु इति तच्छ्रेयं ब्रूहीत्यन्वयः ॥ ५४–५५ ॥

महता दुःखेनाहता आसीदिति शेषः सर्वमेव वृत्तान्तं वदता मयापि सा आश्वासिता ॥ ५६ ॥

प्रियां रम्यामिति शेषः ॥ ५७ ॥

उत्पाद्य उत्पाटितवृक्षां कृत्वा ॥ ५८ ॥

पुनरप्यगमं त्वत्समीपमिति शेषः प्रहृष्टधीः प्रहृष्टचेताः ॥ ५९ ॥

प्रत्युपकारिणः मां प्रति कृतोपकारस्य ॥ ६० ॥

सर्वस्वम् आलिङ्गनम् ॥ ६१ ॥

साक्षूनेत्रो रघुश्रेष्ठः परां प्रीतिमवाप सः ।
हनूमन्तमुवाचेदं राघवो भक्तवत्सलः ॥ ६२ ॥
परिरम्भो हि मे लोके दुर्लभः परमात्मनः ।
अतस्त्वं मम भक्तोऽसि प्रियोऽसि हरिपुङ्गव ! ॥ ६३ ॥

यत्पादपद्मयुगलं तुलसीदलाद्यैः
सम्पूज्य विष्णुपदवीमतुलां प्रयान्ति ।
तेनैव किं पुनरसौ परिरब्धमूर्त्ति
रामेण वायुतनयः कृतपुण्यपुञ्जः ? ॥ ६४ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे सुन्दराकाण्डे
पञ्चमः सर्गः ।

समाप्तं काण्डः समाप्तः ।

---

सः अनन्तरं त्वाहिपरमैश्वर्यवान् ॥ ६२ ॥

आलिङ्गनस्य सर्वस्वत्वमुपपादयन्नाह परिरम्भ इति अतस्त्वं मम भक्तोऽसि अतस्त्वया अयं लब्ध इति शेषः ॥ ६३ ॥

कृतपुण्यपुञ्जो वायुतनयः तेनैव रामेण परिरब्धमूर्त्तिः रत्नुवां पदवीं प्राप्नोति किं पुनर्वक्तव्यमिति शेषः ॥ ६४ ॥

इति श्रीमद्भवराजवि० श्रीरामवर्म्मणः कृताव-
ध्यात्मरामायणे सेतौ सुन्दराकाण्डे
पञ्चमः सर्गः ।

---

# युद्धकाण्डम्।

अथ प्रथमः सर्गः।

श्रीमहादेव उवाच।

यथावद्भाषितं वाक्यं श्रुत्वा रामो हनूमतः।
उवाचानन्तरं वाक्यं हर्षेण महतान्वितः॥ १॥
कार्यं कृतं हनुमता देवैरपि सुदुष्करम्।
मनसापि यदन्येन स्मर्तुं (१) शक्यं न भूतले॥ २॥
शतयोजनविस्तीर्णं लङ्घयेत्कः पयोनिधिम्।
लङ्कां च राक्षसैर्गुप्तां को वा धर्षयितुं क्षमः॥ ३॥
भृत्यकार्यं हनुमता कृतं सर्वमशेषतः।
सुग्रीवस्येदृशो लोके न भूतो न भविष्यति॥ ४॥
अहं च रघुवंशश्च लक्ष्मणश्च कपीश्वरः।
जानक्या दर्शनेनाद्य रक्षिताः स्मो हनूमता॥ ५॥

यथावदिति॥ १॥
यदन्येन मनसा स्मर्तुमपि न शक्यमित्यन्वयः॥ २॥
धर्षयितुम् अधीकर्तनिकादिमार्गेण॥ ३॥
सुग्रीवस्येदृश इति भृत्य इति शेषः॥ ४॥
कपीश्वरः सुग्रीवः॥ ५॥

(१) कर्तुम् इति वा पाठः।

सर्वथा सुकृतं कार्य्यं जानक्याः परिमार्गणम् ।
समुद्रं मनसा स्मृत्वा सीदतीव मनो मम ॥ ६ ॥
कथं नक्रझषाकीर्णं समुद्रं शतयोजनम् ।
लङ्घयित्वा रिपुं हत्वा कथं द्रक्ष्यामि जानकीम्? ॥ ७ ॥
श्रुत्वा तु रामवचनं सुग्रीवः प्राह राघवम् ।
समुद्रं लङ्घयिष्यामो महानक्रझषाकुलम् ॥ ८ ॥
लङ्काञ्च विधमिष्यामो हनिष्यामोऽद्य रावणम् ।
चिन्तां त्यज रघुश्रेष्ठ । चिन्ता कार्य्यविनाशिनी ॥ ९ ॥
एतान् पश्य महासत्त्वान् शूरान् वानरपुङ्गवान् ।
त्वत्प्रियार्थं समुद्युक्तान् प्रवेष्टुमपि पावकम् ॥ १० ॥
समुद्रतरणे बुद्धिं कुरुष्व प्रथमं ततः ।
दृष्ट्वा लङ्कां दशग्रीवो हत इत्येव मन्महे ॥ ११ ॥
नहि पश्याम्यहं कञ्चित्त्रिषु लोकेषु राघव ।
गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे ॥ १२ ॥
सर्वथा नो जयो राम । भविष्यति न संशयः ।
निमित्तानि च पश्यामि तथाभूतानि सर्वशः ॥ १३ ॥

जानक्याः परिमार्गणरूपं कार्य्यमनेन सुकृतम् सम्यक् कृतम् एवं हनुमन्तं स्तुत्वा प्रकृतमाह समुद्रमित्यादि यतः सीदतीव ॥ ६ ॥

अतः कथमित्यादि ॥ ७ । ८ ॥

यतश्चिन्ता कार्य्यविनाशिनी अतस्त्यज ॥ ९ ॥

त्वत्प्रियनिमित्तं पावकं प्रवेष्टुमपि समुद्युक्तान् ॥ १० ॥

प्रथमं समुद्रतरणविषयं निश्चयमातिष्ठ त्वं: लङ्कादर्शनोत्तरकाल-मस्माभी रावणो हत इत्येव मन्महे एष एवास्माकं निश्चय इत्यर्थः ॥ ११ ॥

कञ्चित् कमपि ॥ १२ ॥

सुग्रीववचनं श्रुत्वा भक्तिवीर्यसमन्वितम् ।
अङ्गीकृत्याब्रवीद्रामो हनूमन्तं पुरःस्थितम् ॥ १४ ॥
येन केन प्रकारेण लङ्घयामो महार्णवम् ।
लङ्कास्वरूपं मे ब्रूहि दुःसाध्यं देवदानवैः ॥ १५ ॥
ज्ञात्वा तस्य प्रतीकारं करिष्यामि कपीश्वर ! ।
श्रुत्वा रामस्य वचनं हनूमान् विनयान्वितः ॥ १६ ॥
उवाच प्राञ्जलिर्देव ! यथादृष्टं ब्रवीमि ते ।
लङ्का दिव्या पुरी देव ! त्रिकूटशिखरे स्थिता ॥ १७ ॥
स्वर्णप्राकारसहिता स्वर्णाट्टालकसंयुता ।
परिखाभिः परिवृता पूर्णाभिर्निर्मलोदकैः(१) ॥ १८ ॥
नानोपवनशोभाढ्या दिव्यवापीभिरावृता ।
गृहैर्विचित्रशोभाढ्यैर्मणिस्तम्भमयैः शुभैः ॥ १९ ॥
पश्चिमद्वारमासाद्य गजवाहाः सहस्रशः ।
उत्तरे द्वारि तिष्ठन्ति साश्ववाहाः सपत्तयः ॥ २० ॥
तिष्ठन्त्यर्बुदसंख्याकाः प्राच्यामपि तथैव च ।

निमित्तानि शकुनानि ॥ १२ । १४ ॥
येन केन प्रकारेण समुद्रशोषणेन सेतुना वा देवदानवैर्दुःसाध्यं बोद्धुं चेति शेषः ॥ १५ ॥
प्रतीकारम् तन्नाशोपायम् ॥ १६ ॥
दिव्यत्वं च त्रिकूटशिखरस्थत्वेन चेतरासाध्यत्वम् ॥ १७ ॥
प्राकारो नगरवेष्टनभित्तिः परिखाः प्राकारस्य बाह्याः प्राकाराद्बहिर्दिक्स्थाः खाताः ॥ १८ ॥
वाप्यः सजलजाशयाः अवतरणसोपानसहिताः कूपविशेषाः ॥ १९ ॥
अर्बुदसंख्याकास्तिष्ठन्तीति शेषः ॥ २० । २१ । २२ ॥

(१) नानायन्त्रोपशोभिता इति पाठान्तरम् ।

रक्षिणो(१) राक्षसा वीरा द्वारं दक्षिणमाश्रिताः ॥२१॥
मध्यकक्षेऽप्यसंख्याता गजाश्वरथपत्तयः ।
रक्षयन्ति सदा लङ्कां नानास्त्रकुशलाः प्रभो ! ॥ २२ ॥
संक्रमैर्विविधैर्लङ्का शतघ्नीभिश्च संयुता ।
एवं स्थितेऽपि देवेश ! शृणु मे तत्र चेष्टितम् ॥ २३ ॥
दशाननबलौघस्य चतुर्थांशो मया हतः ।
दग्ध्वा लङ्कां पुरीं स्वर्णप्रासादो धर्षितो मया ॥ २४ ॥
शतघ्न्यः संक्रमाश्चैव नाशिता मे रघूत्तम ! ।
देव ! त्वद्दर्शनादेव लङ्का भस्मीकृता भवेत् ॥ २५ ॥
प्रयाणं कुरु देवेश ! गच्छामो लवणाम्बुधेः ।
तीरं सह महावीरैर्वानरौघैः समन्ततः ॥ २६ ॥
श्रुत्वा हनूमतो वाक्यमुवाच रघुनन्दनः ।
सुग्रीव सैनिकान् सर्वान् प्रस्थानायाभिनोदय ॥ २७ ॥
इदानीमेव विजयो मुहूर्तः परिवर्त्तते ।
अस्मिन्मुहूर्ते गत्वाहं लङ्कां राक्षससङ्कुलाम् ॥ २८ ॥
सप्राकारां सुदुर्धर्षां नाशयामि सरावणाम् ।
आनेष्यामि च सीतां मे दक्षिणाक्षि स्फुरत्यधः ॥२९॥
प्रयातु वाहिनी सर्वा वानराणां तरस्विनाम् ।

संक्रमाः परिखाः सर्वप्रवेशायोग्यामार्गाः मे चेष्टितं मत्कृतो व्यवहारः ॥२३॥२४
संक्रमा नाशिताः प्राकारपातनेन पूरयित्वा सर्वप्रवेशयोग्याः कृताः ॥२५॥
लवणाम्बुधेस्तीरं गच्छाम इत्यन्वयः ॥२६ । २७ ॥
विजयो अन्वर्थनामा ॥ २८ ॥
सुतरां दुर्द्धर्षामपि नाशयामि ॥ २९ ॥

(१) रक्षिनो इत्यपि पाठः ।

रचन्तु यूथपाः सेनामग्रे पृष्ठे च पार्श्वयोः ॥ ३० ॥
हनूमन्तमथारुह्य गच्छाम्यग्रेऽङ्गदं ततः।
आरुह्य लक्ष्मणो यातु सुग्रीव ! त्वं मया सह ॥ ३१ ॥
गयो(१)गवाक्षो गवयो मैन्दो द्विविद एव च।
नलो नीलः सुषेणश्च जाम्बवांश्च तथापरे ॥ ३२ ॥
सर्वे गच्छन्तु सर्वत्र सेनापाः शत्रुघातिनः।
इत्याज्ञाप्य हरीन् रामः प्रतस्थे सहलक्ष्मणः ॥ ३३ ॥
सुग्रीवसहितो हर्षात् सेनामध्यगतो विभुः।
वारणेन्द्रनिभाः सर्वे वानराः कामरूपिणः ॥ ३४ ॥
क्ष्वेलन्तः परिगर्जन्तो जग्मुस्ते दक्षिणां दिशम्।
भक्षयन्तो ययुः सर्वे फलानि च मधूनि च ॥ ३५ ॥
ब्रुवन्तो राघवस्याग्रे हनिष्यामोऽद्य रावणम्।
एवं ते वानरश्रेष्ठा गच्छन्त्यतुलविक्रमाः ॥ ३६ ॥
हरिभ्यामुह्यमानौ तौ शुशुभाते रघूत्तमौ।
नक्षत्रैः सेवितौ यद्वच्चन्द्रसूर्याविवाम्बरे ॥ ३७ ॥
आवृत्य पृथिवीं कृत्स्नां जगाम महती चमूः।

यूथपाः जाम्बवदाद्याः ॥ ३० ॥
त्वं मया सह याहीति शेषः ॥ ३१ । ३२ ॥
सेनापाः सेनापालाः ॥ ३३ ॥
वारणेन्द्राः गजेन्द्राः ॥ ३४ ॥
क्ष्वेलन्तः क्ष्वेलाः युद्धार्थं गच्छतां शूराणां गतिविशेषाः ॥३५।३६॥
हरिभ्यां हनूमदङ्गदाभ्याम् नक्षत्रसदृशा अन्ये हरयः हनूमदङ्गद-योरत्युच्चत्वादम्बरस्थचन्द्रसूर्योपमा ॥ ३७ ॥

(१) गजो इति वा पाठः।

प्रस्फोटयन्त:(१) पुच्छाग्रान् उद्वहन्तश्च पादपान् ॥ ३८ ॥
शैलानारोहयन्तश्च जग्मुर्मारुतवेगत: ।
असङ्ख्यातास्च सर्वत्र वानरा: परिपूरिता: ॥ ३९ ॥
हृष्टास्ते जग्मुरत्यर्थं रामेण परिपालिता: ।
गता चमूर्दिवारात्रं क्वचिन्नासज्जत क्षणम् ॥ ४० ॥
काननानि विचित्राणि पश्यन्मलयसह्ययो: ।
ते सह्यं समतिक्रम्य मलयं च तथा गिरिम् ॥ ४१ ॥
आययुश्चानुपूर्व्येण समुद्रं भीमनि:स्वनम् ।
अवतीर्य्य हनूमन्तं राम: सुग्रीवसंयुत: ॥ ४२ ॥
सलिलाभ्याससमासाद्य रामो वचनमब्रवीत् ।
आगता: स्मो वयं सर्वे समुद्रं मकरालयम् ॥ ४३ ॥
इतो गन्तुमशक्यं नो निरुपायेन वानरा: ।
अत्र सेनानिवेशोऽस्तु मन्त्रयामोऽस्य तारणे ॥ ४४ ॥

आहत्य आच्छाद्य प्रस्फोटयन्त: शौर्य्या वेगकृतमभ्याघातेन पादपानुद्वहन्त: हस्तैर्द्धार्यमिति शेष: ॥ ३८ ॥

सर्वत्र यावद्दर्शनपथदेशे ॥ ३९ ॥

न असज्जत आसक्ता नाभूत् अविश्रमं जगामेति यावत् ॥ ४० ॥

ते वानरा: ॥ ४१ ॥

आनुपूर्व्येण क्रमेण आययु: प्राप्ता: हनूमत: पश्चस्यर्थे आर्षी द्वितीया सुग्रीवयुतो राम: ॥ ४२ ॥

सलिलसमीपं प्राप्य सुग्रीवं प्रति रामो वचनमब्रवीदित्यन्वय: आगता: प्राप्ता: स्म: ॥ ४३ ॥

निरुपायेन उपायं विना अस्य तारणे अस्य समुद्रस्य तरणे स्वार्थे णिच् मन्त्रयाम: उपायामिति शेष: ॥ ४४ । ४५ ॥

(१) आस्फोटयन्त: इति वा पाठ: ।

श्रुत्वा रामस्य वचनं सुग्रीवः सागरान्तिके।
सेनां न्यवेशयत् क्षिप्रं रक्षितां कपिकुञ्जरैः॥ ४५॥
ते पश्यन्तो विषेदुस्तं सागरं भीमदर्शनम्।
महोन्नततरङ्गाढ्यं भीमनक्रभयङ्करम्॥ ४६॥
अगाधं गगनाकारं सागरं वीक्ष्य दुःखिताः।
तरिष्यामः कथं घोरं सागरं वरुणालयम्?॥ ४७॥
हन्तव्योऽस्माभिरद्यैव रावणो राक्षसाधमः।
इति चिन्ताकुलाः सर्वे रामपार्श्वे व्यवस्थिताः॥ ४८॥
रामः सीतामनुस्मृत्य दुःखेन महताहृतः।
विलप्य जानकीं सीतां बहुधा कार्य्यमानुषः॥ ४९॥
अद्वितीयश्चिदात्मैकः परमात्मा सनातनः।
यस्तु जानाति रामस्य स्वरूपं तत्त्वतो जनः॥ ५०॥
तस्य स्पृशति दुःखादि किमुतानन्दमव्ययम्?।
(१)दुःखहर्ष भयक्रोधलोभमोहमदादयः॥ ५१॥

विषेदुः दुःखिता बभूवुः महोन्नतैस्तरङ्गैराढ्यं सम्पन्नम्॥ ४६॥
गगनाकारं विपुलत्वेन तत्सादृश्यम् दुःखिता वानराः कथं तरिष्याम इत्यादेः इति चिन्ताकुला इत्यनेनान्वयः॥ ४७॥
अद्यैव हन्तव्यो हन्तुमर्हः॥ ४८॥
दुःखेन महताहृतः व्याप्तोऽभूदिति शेषः तत्र हेतुः कार्य्यमानुषः कार्य्यार्थमानुषः नाटितमानुषः नाटितमानुषत्वः एवं चेदं दुःखादि तस्य नटनमेवेति भावः॥ ४९॥
वस्तुतो न तस्य दुःखादि इत्याशयेनाद्वितीय इति 'द्वितीयाद्वै भयं भवति' इति श्रुतेस्तस्य न दुःखादीति भावः तदुपपादकं चिदात्मैक इति अनेकचेतनकल्पने गौरवात्सोऽद्वितीय एक इति भावः किञ्च यो रामस्य स्वरूपं तत्त्वतः

(१) दुःखशोक इति वा पाठः।

अज्ञानलिङ्गान्येतानि कुतः सन्ति चिदात्मनि ? ।
देहाभिमानिनो दुःखं नादेहस्य चिदात्मनः(१) ॥५२॥
सम्प्रसादे द्वयाभावात् सुखमात्रं हि दृश्यते ।
बुद्ध्याद्यभावात् संशुद्धे दुःखं तत्र न दृश्यते (२) ।
अतो दुःखादिकं सर्वं बुद्धेरेव न संशयः ॥ ५३ ॥

रामः परात्मा पुरुषः पुराणो
नित्योदितो नित्यसुखो निरीहः ।
तथापि मायागुणसङ्गतोऽसौ
सुखीव दुःखीव पिभाव्यते बुधैः ॥ ५४ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
प्रथमः सर्गः ।

तत्त्वमस्यादिवाक्यतो जानाति सोऽपि दुःखादिभयतो मुच्यते सर्वमानन्द-स्वरूपस्य भगवतो न दुःखादि इति किं वक्तव्यमिति भावः दुःखादीत्य-त्रादिशब्दग्राह्यमाह दुःखेति ॥ ५० । ५१ ॥

तत्त्वज्ञमपि तानि कुतो न स्पृशन्तीत्यत हेतुमाह अज्ञानलिङ्गा-नीति तस्य तत्त्वज्ञानेन नाशादिति भावः चिदात्मनि सर्वथाज्ञानरहिते तानि कुतः सन्ति कथं भवन्तीत्यर्थः तदेव द्रढयितुं पुनराह देहेति ॥५२॥

तस्य सुखरूपत्वे हेतुमाह सम्प्रसादे इति सुषुप्तावित्यर्थः द्वयाभा-वात् द्वितीयाभावात् ननु सुषुप्तेऽपि दुःखं कुतो न तत्राह बुद्ध्याद्यभावादिति अतो बुद्धिरहिते तत्र न दृश्यते अतो बुद्धेरेव तत्सर्वमित्यर्थः ॥ ५३ ॥

नित्योदितत्वेन मायारहितम् अबुधैर्मायागुणैः सङ्गतः तत्सङ्गत-त्वेन कल्पितः सुखीव दुःखीव च विभाव्यते ॥ ५४ ॥

इति श्रीमद्भक्तराजविपद्धरचरणसमर्पितात्मादिवि० श्रीरामवर्मणः
कृताध्यात्मरामायणसेतौ युद्धकाण्डे
प्रथमः सर्गः ।

---

(१) परमात्मनः इत्यपि पाठः । (२ न विद्यते इति पाठान्तरम् ।

अथ द्वितीयः वर्गः ।

लङ्कायां रावणो दृष्ट्वा कृतं कर्म हनूमता ।
दुष्करं दैवतैर्वापि क्रिया किञ्चिदवाङ्मुखः ॥ १ ॥
आहूय मन्त्रिणः सर्वानिदं वचनमब्रवीत् ।
हनूमता कृतं कर्म भवद्भिर्दृष्टमेव तम् ॥ २ ॥
प्रविश्य लङ्कां दुर्धर्षां दृष्ट्वा सीतां दुरासदाम् ।
हत्वा च राक्षसान् वीरानक्षं मन्दोदरीसुतम् ॥ ३ ॥
दग्ध्वा लङ्कामशेषेण लङ्घयित्वा च सागरम् ।
युष्मान् सर्वानतिक्रम्य स्वस्थोऽगात्पुनरेव सः ॥ ४ ॥
किं कर्त्तव्यमितोऽस्माभिर्यूयं मन्त्रविशारदाः ।
मन्त्रयध्वं प्रयत्नेन यत् कृतं मे हितं भवेत् ॥ ५ ॥
रावणस्य वचः श्रुत्वा राक्षसास्तमथाब्रुवन् ।
देव ! शङ्का कुतो रामात्तव लोकजितो रणे ? ॥ ६ ॥
इन्द्रस्तु बद्धा निक्षिप्तः पुत्रेण तव पत्तने ।
जित्वा कुबेरमानीय पुष्पकं भुज्यते त्वया ॥ ७ ॥
यमो जितः कालदण्डाद्भयं नाभूत्तव प्रभो ! ।

लङ्कायामिति दैवतैर्वापि दैवतैरपीत्यर्थः वा पादपूरणे ॥ १ ॥
अक्षं हत्वेति अनुकर्षः ॥ ३ ॥
स्वस्थ इत्यनेन भवत्कृतावज्ञैकृतराहित्यं सूचितम् ।
यत्कृतं सन्मे हितं भवेत्तन्मन्त्रयध्वमित्यन्वयः ॥ ५ ॥
लोकजितः इन्द्रादिलोकजयिनः ॥ ६ ॥
तदेवाहेन्द्रस्त्विति पत्तने पुरे कुबेरं जित्वा पुष्पकमानीय भुज्यत
इत्यन्वयः ॥ ७ ॥

वरुणो हुङ्कृतेनैव जितः सर्वेऽपि राक्षसाः ॥ ८ ॥
मयो महासुरो भीत्या कन्यां दत्त्वा स्वयं तव ।
त्वद्वशे वर्त्ततेऽद्यापि किमुतान्ये महासुराः? ॥ ९ ॥
हनूमद्धर्षणं यत्तु तदवज्ञाकृतं च नः ।
वानरोऽयं किमस्माकमस्मिन् पौरुषदर्शने ॥ १० ॥
इत्युपेक्षितमस्माभिर्धर्षणं तेन किं भवेत् ? ।
वयं प्रमत्ताः किं तेन वञ्चिताः स्मो हनूमता ? ॥ ११ ॥
जानीमो यदि तं सर्वे कथं जीवन् गमिष्यति ? ।
आज्ञापय जगत्कृत्स्नमवानरममानुषम् ॥ १२ ॥
कृत्वा यास्यामहे सर्वे प्रत्येकं वा नियोजय ।
कुम्भकर्णस्तदा प्राह रावणं राक्षसेश्वरम् ॥ १३ ॥
आरब्धं यत्त्वया कर्म स्वात्मनाशाय केवलम् ।
न दृष्टोऽसि तदा भाग्यात्त्वं रामेण महात्मना ॥ १४ ॥

यदा यमो जितस्तदा कालदण्डादपि भयं नाभूत्तत्कुतो मानुषा-
द्भयमिति भावः सर्वेऽपि राक्षसा इत्यस्य त्वदधीना इति शेषः ॥ ८।९ ॥
योऽस्माकं या तदवज्ञा तस्मिन्नवज्ञा तत्कृतमित्यर्थः अवज्ञाकार-
णमाह अयं वानरः किमस्माकं करिष्यतीति शेषः अस्मिन् वानरे
पौरुषस्य दर्शने किं फलं निष्फलं तत् ॥ १० ॥
इतीत्यादि धर्षणं तेन किं भवेदिति तस्योपेक्षाभावे इत्यादि कथं
किं कः पदार्थः इति वयं प्रमत्तास्तेन प्रमादेन हनूमता वञ्चिताः ॥ ११ ॥
यदि तं जानीमः अयमेवं रूप इति यदि जानीम इत्यर्थः गमि-
ष्यति गतः स्यादित्यर्थे आर्षम् ॥ १२ ॥
सर्वानाज्ञापय एकैकं वेत्यर्थः ॥ १२ ॥
यत्कर्म त्वया आरब्धं तत् केवलं स्वात्मनाशाय आरम्भकाल एव
नाशप्रसक्तः परन्तु भाग्याज्जीवितोऽसि यस्तदा रामेण न दृष्टोऽसि ॥१४॥

यदि पश्यति रामस्त्वां जीवन्नायासि रावण ! ।
रामो न मानुषो देवः साक्षान्नारायणोऽव्ययः ॥ १५ ॥
सीता भगवती लक्ष्मी रामपत्नी यशस्विनी ।
राक्षसानां विनाशाय त्वयानीता सुमध्यमा ॥ १६ ॥
विषपिण्डमिवागीर्य्य महामीनो यथा तथा ।
आनीता जानकी पश्चात्त्वया किं वा भविष्यति ॥ १७ ॥
यद्यप्यनुचितं कर्म त्वया कृतमजानता ।
सर्वं समं करिष्यामि स्वस्थचित्तो भव प्रभो ! ॥ १८ ॥
कुम्भकर्णवचः श्रुत्वा वाक्यमिन्द्रजिदब्रवीत् ।
देहि देव ! ममानुज्ञां हत्वा रामं सलक्ष्मणम् ।
सुग्रीवं वानरांश्चैव पुनर्यास्यामि(१)तेऽन्तिकम् ॥ १९ ॥

तत्रागतो भागवतप्रधानो
विभीषणो बुद्धिमतां वरिष्ठः ।
श्रीरामपादद्वयएकतानः
प्रणम्य देवारिमुपोपविष्टः ॥ २० ॥

जीवन्नायासीत्यत्र हेतुभूतं रामस्वरूपमाह राम इति ॥ १५ ॥
त्वया आनीतेति च्छेदः ॥ १६ ॥
विषपिण्डमिव तत्सदृशम् आगीर्य्य निगीर्य्य महामीनो यथा उपतापमेष्यति तथा त्वया जानकी आनीता अथ किं वा भविष्यतीति पश्चात्तप्स्यसे इति शेषः ॥ १७ ॥
सर्वं समं करिष्यामि पराक्रमेणेति भावः ॥ १८ । १९ ॥
एकतानः तन्मात्रविषयध्यानवान् देवारिं रावणं प्रणम्य उप तत्-समीपे आहत्वादुपविष्टः ॥ २० ॥

(१) पुनरायास्यते इति पाठः ।

विलोक्य कुम्भश्रवणादिदैत्यान्
मत्तप्रमत्तानतिविस्मयेन ।
विलोक्य कामातुरमप्रमत्तो
दशाननं प्राह विशुद्धबुद्धिः ॥ २१ ॥
न कुम्भकर्णेन्द्रजितौ च राजन्!
तथा महापार्श्वमहोदरौ तौ ।
निकुम्भकुम्भौ च तथातिकायः
स्थातुं न शक्ता युधि राघवस्य ॥ २२ ॥
सीताभिधानेन महाग्रहेण
ग्रस्तोऽसि राजन्! न च ते विमोक्षः ।
तामेव सत्कृत्य महाधनेन
दत्त्वाभिरामाय सुखी भव त्वम् ॥ २३ ॥
यावन्न रामस्य शिताः शिलीमुखा
लङ्कामभिव्याप्य शिरांसि रक्षसाम् ।
छिन्दन्ति तावद्रघुनायकस्य भो!
तां जानकीं त्वं प्रतिदातुमर्हसि ॥ २४ ॥

कुम्भश्रवणः कुम्भकर्णः आदिनेन्द्रजित् मत्तप्रमत्तान् अतिशयेन मत्तानित्यर्थः कामातुरं दशाननं विलोक्य प्राह ॥ २१ ॥

कुम्भकर्णेन्द्रजितौ यस्य युधि स्थातुं न शक्तौ तौ प्रसिद्धौ तौ महापार्श्वमहोदरावपि न शक्तौ तथा निकुम्भकुम्भावतिकायोऽपि न शक्तो अन्येषां का गणनेति भावः ॥ २२ ॥

न च ते विमोक्षः तेन महाग्रहादिति शेषः महाधनेन रत्नादिना ॥२३॥

अभिव्याप्येत्यनेन युगपत्सर्वदेशावच्छेदेन शिरश्छेदकथनं तेन पराक्रमातिशयवर्णनं तां दशाननस्य कातरातिरूपात् ॥ २४ ॥

यावन्नगाभाः कपयो महाबला
हरीन्द्रतुल्या नखदंष्ट्रयोधिनः।
लङ्कां समाक्रम्य विनाशयन्ति ते (१)
तावद्द्रुतं देहि रघूत्तमाय ताम् ॥ २५ ॥
जीवन्न(२)रामेण विमोक्ष्यसे त्वं
गुप्तः सुरेन्द्रैरपि शङ्करेण।
न देवराजाङ्कगतो न मृत्योः
पातालमूलामपि संप्रविष्टः ॥ २६ ॥
शुभं हितं पवित्रं च विभीषणवचः खलः।
प्रतिजग्राह नैवासौ म्रियमाण इवौषधम् ॥ २७ ॥
कालेन नोदितो दैत्यो विभीषणमथाऽब्रवीत्।
मद्दत्तभोगैः पुष्टाङ्गो मत्समीपे वसन्नपि ॥ २८ ॥
प्रतीपमाचरत्येष ममैव हितकारिणः।
मित्रभावेन शत्रुर्मे जातो नात्रास्ति संशयः ॥ २९ ॥
अनार्य्येण कृतघ्नेन सङ्गतिर्मे न युज्यते।
विनाशमभिकाङ्क्षन्ति ज्ञातीनां ज्ञातयः सदा ॥ ३० ॥

हरीन्द्रतुल्याः महासिंहसदृशा यावन्न विनाशयन्ति तावत्ततः प्राक् देहीत्यन्वयः ॥ २५ ॥

सुरेन्द्रैः कुबेरादिभिः देवराजः इन्द्रः न मृत्योः लोकं गतोऽपीति शेषः ॥ २६ । २७ ॥

दैत्यो रावणः मद्दत्तैर्भोगैः भोगसाधनैः ॥ २८ ॥

प्रतीपः प्रतिकूलम् ॥ २९ ॥

कृतघ्नत्वादेवानार्य्येण अनार्यान्तरव्यावृत्त्याह विनाशमिति ॥ ३० ॥

(१) नो इति वा पाठः। (२) यावन्न इति पाठान्तरम्।

योऽन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेवं निशाचर:।
दृश्चि तस्मिन् क्षणे एव(१) धिक् त्वां रक्ष:कुलाधमम्॥२१॥
रावणेनैवमुक्त: सन् परुषं स विभीषण:।
उत्पपात सभामध्यात् गदापाणिर्महाबल:॥ २२॥
चतुर्भिर्मन्त्रिभि: सार्धं गगनस्थोऽब्रवीद्वच:।
क्रोधेन महताविष्टो रावणं दशकन्धरम्।
मा विनाशमुपेहि त्वं प्रियवादिनमेव माम्॥ २३॥
धिक्करोषि तथापि त्वं ज्येष्ठो भ्राता पितु: सम:।
कालो राक्षसरूपेण जातो दशरथालये॥ २४॥
काली सीताभिधानेन जाता जनकनन्दिनी।
तावुभावागतावत्र भूमेर्भारापनुत्तये॥ २५॥
तेनैव प्रेरितस्त्वं तु न शृणोषि हितं मम।

योऽन्यो निशाचर: एवंविधं वाक्यं ब्रूयात् तस्मिन् क्षणे एव वधनकथनकाले एव हन्मि त्वं तु भ्रातृत्वादहनाघोऽस्य इति तव धिक्कार एव वध इत्याह धिगित्यादि॥ २१॥

परुषं धिगिति वचनम्॥ २२॥

रावणंप्रति वचोऽब्रवीदित्यन्वय: यदब्रवीत्तदाह मेति यद्यपि प्रियवादिनमेव माम्॥ २३॥

त्वं धिक्करोषि तथापि पितु: समो ज्येष्ठो भ्राता त्वमिति तव हितं ब्रवीमि इति शेष: तदाह काल इति सर्वसंहर्त्तेत्यर्थ:॥ २४॥

काली सर्वसंहारे सहायभूता शक्ति:॥ २५॥

तेनैव रामेण अन्तर्यामित्वाद्धीति भाव: अकर्त्तव्यमिवोक्तावं तवं तथा प्रेरकोऽसि तात्पर्यम् अन्तर्यामित्वमेव तव व्युत्पादयति श्रीराम इति

(१) तेन इति वा पाठ:।

श्रीरामः प्रकृतेः साक्षात्परस्तात् सर्वदा स्थितः ॥ ३६ ॥

बहिरन्तश्च भूतानां समः सर्व्वत्र संस्थितः ।
नामरूपादिभेदेन तत्तन्मय इवामलः ॥ ३७ ॥
यथा नानाप्रकारेषु काष्ठेष्वेको महानलः ।
तत्तदाकृतिभेदेन भिद्यते ज्ञानचक्षुषाम् ॥ ३८ ॥
पञ्चकोषादिभेदेन तत्तन्मय इवाबभौ ।
नीलपीतादियोगेन निर्मलः स्फटिको यथा ॥ ३९ ॥
स एव(१)नित्यमुक्तोऽपि स्वमायागुणबिम्बितः ।
कालः प्रधानं पुरुषोऽव्यक्तं चेति चतुर्विधः ॥ ४० ॥
प्रधानपुरुषाभ्यां स जगत् कृत्स्नं सृजत्यजः ।

प्रकृतेः साक्षाद्दूरदेशत्वर्थः एवं च प्रकृतिकार्य्यद्रष्टृत्वमर्थात्सिद्धं तत् किं प्रकृतिसम्बन्धस्तथा सति तद्धर्मलोपापत्तिः हरिद्रादिसम्बन्धाद्वस्त्रस्येवे-त्यत आह परस्तात् सर्वदेति पङ्कपद्मन्यायेन तद्धर्मासम्बद्धः ॥ ३६ ॥

प्रकृतिद्रष्टृत्वमेवाह बहिरिति समो न तु न्यूनाधिकभावेनापि वैषम्येण यथा कर्मफलप्रदत्वादिति भावः वस्तुतस्तद्व्यतिरिक्तं नैव किञ्चिद् अस्तीत्याह नामेति यत्किञ्चित् सत्त्वेन नामादि प्रतीयते तन्मयं तन्म-यत्वादेव तथा प्रतीतिविषय इति भावः ॥ ३७ ॥

एकस्यानेकरूपत्वं दृष्टान्तेन साधयति यथेति ॥ ३८ ॥

दार्ष्टान्तिके योजयति पञ्चेति अन्नमयप्राणमयमनोमयविज्ञान-मयानन्दमयाः पञ्च कोषाः आदिना भूतादीनि तत्तन्मयः स्थूलश-रीरम् ततः क्रमेण सूक्ष्मा अन्ये दृष्टान्तान्तरमाह नीलेति ॥ ३९ ॥

स एषः रामः स्वमायागुणाः सत्त्वादयस्तैर्बिम्बितः अर्थाद्बिम्ब-प्रभुः तेषु प्रतिबिम्बित इति वा ॥ ४० ॥

तत्र रजोगुणप्रतिबिम्बो प्रधानपुरुषावित्याह प्रधानेति प्रधाने-

(१) स एष इति वा ।

कालरूपेण कलनां जगतः कुरुतेऽव्ययः ॥ ४१ ॥
कालरूपी स भगवान् रामरूपेण मायया ॥ ४२ ॥
ब्रह्मणा प्रार्थितो देवस्त्वद्वधार्थमिहागतः।
तदन्यथा कथं कुर्य्यात्? सत्यसङ्कल्प ईश्वरः ॥ ४३ ॥
हनिष्यति त्वां रामस्तु सपुत्रबलवाहनम्।
हन्यमानं न शक्नोमि द्रष्टुं रामेण रावण! ॥ ४४ ॥
त्वां राक्षसकुलं(१) कृत्स्नं ततो गच्छामि राघवम्।
मयि याते सुखी भूत्वा रमस्व भवने चिरम् ॥ ४५ ॥

परिणामिपुरुषः स्वभोगापवर्गार्थं तत्प्रवर्त्तक इत्युभाभ्यां सृष्टिः तत्सत्त्वगुणप्रतिबिम्बं काल इत्याह कालरूपेणेति कलनाम् संहारम् अर्थात् सत्त्वगुणप्रतिबिम्बतोऽव्यक्तमित्युच्यते सः चान्तर्यामितया सर्वप्रवर्त्तको दुर्ज्ञेयतया चाव्यक्तमिति भावः ॥ ४१ ॥

तत्र कालरूपी संहारप्रधान इदानीं राम इत्याह कालेति ॥४२॥

ननु सर्वसमस्य भगवतो मद्वधे कथं प्रवृत्तिरत आह ब्रह्मणेति परिपालनमाहुरुग्रत्वेन दुष्टनिग्रहेऽपि न समत्वहानिः कर्मानुरूपफलदातृत्वमेव तस्य समत्वं तदननुरूपफलदाने हि तस्य वैषम्यमापद्येत न च तदस्ति यथानेकेषु कर्मानुरूपफलदो राजा सर्वेषु सम इत्येव व्यवह्रियते न तु विषम इति भावः अन्यथा करणाभावे हेतुः सत्यसङ्कल्पत्वम् ॥ ४३ ॥

हनिष्यतीति सत्यसङ्कल्पत्वादेवेति भावः नन्वेवमवश्यम्भाविनि मद्वधे तव गमनेन किं तत्राह हन्यमानमिति हे रावण! त्वां स्वामिबुद्धिविषयं स्वीयत्वबुद्धिविषयं च राक्षसकुलं हन्यमानं द्रष्टुं न शक्नोमि अतस्त्वयि राक्षसकुले च तां बुद्धिं विहाय रामे वानरेषु चोक्तबुद्धिं कृत्वा राघवं गच्छामि तथा बुद्धिकृतमेव च दुःखमिति भावः ॥४४।४५॥

---

(१) त्वां वध्यं कुमारञ्चमिति पाठान्तरम्।

विभीषणो रावणवाक्यतः क्षणात्
विसृज्य सर्वं सपरिच्छदं गृहम्।
जगाम रामस्य पदारविन्दयोः
सेवाभिकाङ्क्षी परिपूर्णमानसः॥ ४६ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
द्वितीयः सर्गः।

विसृज्य सर्वमित्यनेन वैराग्यमुक्तं भगवद्भजने तस्य तृष्णाकृतत्वात् परिपूर्णो मनसि भवो मानसो मनोरथो यस्य सः भगवद्भजनं कार्य्यमिति तस्य सार्वदिको मनोरथः॥ ४६ ॥

इति श्रीमत्सकलराजाधिराजमहाराजाधिराज श्रीरामवर्मणा
कृताध्यात्मरामायणटीकायां युद्धकाण्डे
द्वितीयः सर्गः।

---

द्वितीयः सर्गः।

विभीषणो महाभागश्चतुर्भिर्मन्त्रिभिः सह।
आगत्य गगने रामसम्मुखे समवस्थितः॥ १ ॥
उच्चैरुवाच भो स्वामिन्! राम! राजीवलोचन!।
रावणस्यानुजोऽहं ते दारहर्तुर्विभीषणः॥ २ ॥
नाम्ना भ्रात्रा निरस्तोऽहं त्वामेव शरणं गतः।
हितमुक्तं मया देव! तस्य चाविदितात्मनः (१) ॥ ३ ॥
सीतां रामाय वैदेहीं प्रेषयेति पुनः पुनः।
उक्तोऽपि न शृणोत्येष; कालपाशवशं गतः॥ ४ ॥
हन्तुं मां खड्गमादाय प्राद्रवद्राक्षसाधमः।
ततो चिरेण सचिवैश्चतुर्भिः सहितो भयात्॥ ५ ॥
त्वामेव भवमोक्षाय मुमुक्षुः शरणं गतः।
विभीषणवचः श्रुत्वा सुग्रीवो वाक्यमब्रवीत्॥ ६ ॥

विभीषण इति ॥ १ ॥

ते दारहर्तुः रावणस्याहमनुजो नाम्ना विभीषण इत्यन्वयः ॥ २ ॥

भ्रात्रा रावणेनाहं निरस्तः धिक्कृतः; अविदितात्मनः अविदित स्वस्वरूपस्य ॥ ३ ॥

प्रेषय सत्कृत्य प्रेषयेत्युक्तः कालरूपस्य तव पाशः अन्तर्यामितया प्रेरणा तदधीनतां प्राप्तः ॥ ४ ॥

अन्यवधमात्रमेव किं न त्वधिकमपीत्याह हन्तुमिति भयात् ॥५॥

तद्भयात् संसारे एव वैराग्येण तस्मादेव मोक्षाय तदिच्छावान् त्वां शरणं गत इत्यन्वयः ॥ ६ ॥

---

(१) तस्यैवाविदितात्मनः इति वा पाठः।

विश्वासार्हो न ते राम ! मायावी राक्षसाधमः ।
सीताहर्तुर्विशेषेण रावणस्यानुजो बली ॥ ७ ॥
मन्त्रिभिः सायुधैरस्मान् विवरे निहनिष्यति ॥ ८ ॥
तदाज्ञापय मे देव ! वानरैर्हन्यतामयम् ।
ममैवं भाति ते राम ! बुद्ध्या किं निश्चितं वद ।
श्रुत्वा सुग्रीववचनं रामः सस्मितमब्रवीत् ॥ ९ ॥
यदीच्छामि कपिश्रेष्ठ ! लोकान् सर्वान् सहेश्वरान् ।
निमिषार्द्धेन संहन्यां सृजामि निमिषार्द्धतः ॥ १० ॥
अतो मयाभयं दत्तं शीघ्रमानय राक्षसम् ॥ ११ ॥
सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥ १२ ॥
रामस्य वचनं श्रुत्वा सुग्रीवो हृष्टमानसः ।
विभीषणमथानाय्य दर्शयामास राघवम् ॥ १३ ॥
विभीषणस्तु साष्टाङ्गं प्रणिपत्य रघूत्तमम् ।
हर्षगद्गदया वाचा भक्त्या च परयान्वितः ॥ १४ ॥

सीताहर्तुरनुज इति विशेषणेन विश्वासार्हो नेत्यनेन अन्वयः ॥७॥
विवरे अस्माकं सुप्तावस्थादिरूपे छिद्रे ॥ ८ ॥
ममैवं बुद्धिः तव बुद्ध्यान्तःकरणेन किं निश्चितं तद्वदेत्यर्थः ॥९॥
यदीच्छामीति अनेन सत्यसङ्कल्प ईश्वरोऽहमिति सूचितं सहेश्वरान् सहेश्वरा इन्द्राद्याः ॥ १० ॥
अभयमिति च्छेदः ॥ ११ ॥

नन्वेवं विभेभ्योऽभयदानं नोचितम् इति चेत्तत्राह सकृदेवेति तवास्मीति प्रपन्नाय अङ्गीकृतवते याचते यत्नत्तम् अभयमिति शेषः सर्वभूतेभ्यः सर्वप्राणिभ्यः निकृष्टायापीति शेषः तादृशायाप्यभयं ददामीति मे व्रतं तस्मात्त्वमयथाशङ्के ने व्रतभङ्गः स्यादिति न किञ्चिद्वाच्यमिति भावः ॥१२॥१३॥

रामं श्यामं विशालाक्षं प्रसन्नमुखपङ्कजम् ।
धनुर्बाणधरं शान्तं लक्ष्मणेन समन्वितम् ॥ १५ ॥
कृताञ्जलिपुटो भूत्वा स्तोतुं समुपचक्रमे ॥ १६ ॥

विभीषण उवाच ।

नमस्ते राम ! (१) राजेन्द्र ! नमः सीतामनोरम ! ।
नमस्ते चण्डकोदण्ड ! नमस्ते भक्तवत्सल ! ॥ १७ ॥
नमोऽनन्ताय शान्ताय रामायामिततेजसे ।
सुग्रीवमित्राय च ते रघूणां पतये नमः ॥ १८ ॥
जगदुत्पत्तिनाशानां कारणाय महात्मने ।
त्रैलोक्यगुरवेऽनादिगृहस्थाय नमो नमः ॥ १९ ॥
त्वमादिर्जगतां राम ! त्वमेव स्थितिकारणम् ।
त्वमन्ते निधनस्थानं स्वेच्छाचारस्त्वमेव हि ॥ २० ॥
चराचराणां भूतानां बहिरन्तश्च राघव ! ।

रामं श्याममित्यादिध्यानप्रकारः ॥ १५ । १६ ॥

अथ स्तौति नमस्त इति ॥ १७ । १८ ॥

जगदिति 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतिबोधितजगत्स्थित्युत्पत्तिनाशकारणायेत्यर्थः त्रैलोक्यगुरवे अन्तर्यामितयेति भावः अनादिगृहस्थाय सदा मायाम्बिकया स्वशक्तिरूपया युतायेत्यर्थः ॥ १९ ॥

तदेव पुनः स्पष्टमाह त्वमादिरिति उत्पत्तिकारणस्थानमित्यर्थः निधनस्थानं लयस्थानम् एवं चोत्पत्त्यादयोऽपि त्वद्विवर्त्तभूता एव नातिरिक्ता इति सूचितं स्वेच्छाचारत्वेन न पराधीनत्वं सूचितम् ॥२०॥

---

(१) नाथ ! इति पाठान्तरम् ।

व्याप्यव्यापकरूपेण भवान् भाति जगन्मयः ॥ २१ ॥
त्वन्मायया हृतज्ञाना नष्टात्मानो विचेतसः ।
गतागतं प्रपद्यन्ते पापपुण्यवशात्सदा ॥ २२ ॥
तावत्सत्यं जगद्भाति शुक्तिकारजतं यथा ।
यावन्न ज्ञायते ज्ञानचेतसा नान्यगामिना ॥२३ ॥
त्वदज्ञानात्सदा युक्ताः (१) पुत्रदारगृहादिषु ।
रमन्ते विषयान् सर्वानन्ते दुःखप्रदान् विभो ! ॥ २४ ॥
त्वमिन्द्रोऽग्निर्यमो रक्षो वरुणश्च तथानिलः ।
कुबेरश्च तथा रुद्रस्त्वमेव पुरुषोत्तमः ॥ २५ ॥
त्वमणोरप्यणीयांश्च स्थूलात् स्थूलतरः प्रभो ! ।
त्वं पिता सर्वलोकानां माता धाता त्वमेव हि ॥ २६ ॥

व्याप्यव्यापकरूपेणेति यथा महामत्स्यस्याल्पमत्स्यो व्याप्यः ॥२१॥

हृतज्ञानाः आत्मस्वरूपं जगदिति ज्ञानहीनाः अतएव नष्टात्मानः अतएव नष्टकण्ठचामीकरवत् अज्ञातं स्वस्वरूपं येषां ते अतएव विचेतसः विरुद्धे प्रवृत्तिमार्गे चेतो येषां ते गतागतम् जन्ममरणरूपं संसारम् ॥२२ ॥

यावदन्यविषयरहितेन ज्ञानस्वरूपभवद्विषयचित्तेन भवान् न ज्ञायते तावज्जगत्सत्यं भाति त्वत्स्वरूपज्ञाने तु त्वमेव सर्वरूपेणैव भासीति ज्ञाने तु भासमानस्य जगतो मिथ्यात्वं भाति तथा यावत् शुक्तिकास्वरूपेण न ज्ञायते तावत्तत्र भातरजतं सत्यमिति भाति शुक्तिकाज्ञाने तु तन्मिथ्येति ज्ञायते तद्वत् ॥ २२ ॥

तदेव दार्ष्टान्ते पुनराह त्वदज्ञानादिति युक्ताः तत्रैव ममत्वाभिमानेन लीनचित्ताः रमन्ते पीत्वा भुञ्जन्ते अन्ते वियोगे दुःखप्रदानम् ॥२४॥

त्वमेव सर्वरूप इत्याह त्वमिति ॥ ॥ २५ ॥

अणीयान् सर्वथा दुर्ज्ञेयत्वात् स्थूलतरः विभुत्वात् मातापितृवत्सर्वत्र

(१) सक्ता इति पाठः ।

आदिमध्यान्तरहितः परिपूर्णोऽच्युतोऽव्ययः ।
त्वं पाणिपादरहितश्चक्षुःश्रोत्रविवर्जितः ॥ २७ ॥
श्रोता द्रष्टा ग्रहीता च जवनस्त्वं खरान्तक ।
कोशेभ्यो व्यतिरिक्तस्त्वं निर्गुणो निरुपाश्रयः ॥ २८ ॥
निर्विकल्पो निर्विकारो निराकारो निरीश्वरः (१) ।
षड्भावरहितोऽनादिः पुरुषः प्रकृतेः परः ॥ २९ ॥
मायया गृह्यमाणस्त्वं मनुष्य इव भाव्यसे ।
ज्ञात्वा त्वां निर्गुणमजं वैष्णवा मोक्षगामिनः ॥ ३० ॥

यमः पालने इत्याह त्वं पितेत्यादि ॥ २६ ॥

अच्युतः कयापि शक्त्या च्युतो हीनो न भवेत् सर्वशक्तिमत्त्वात् अव्ययः व्ययोऽत्र वृद्ध्यपचयस्तद्रहितः त्वं पाणीति 'अपाणिपादो जवनो ग्रहीता' इति श्रुतेः ॥ २७ ॥

विपरीतक्रमेण श्रोतृत्वाद्युक्तिः कोशेभ्यः अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेभ्यः पञ्चकोशेभ्यो व्यतिरिक्तस्तद्दोषास्पृष्टः निर्गुणः सतो निर्गुण इत्यर्थः मायाश्रयत्वात् गुणवानिव निरुपाश्रयः आधारान्तररहितः ॥ २८ ॥

निर्विकल्पः वस्तुतो निर्धर्मकत्वान्निर्विकल्पकज्ञानस्यैव विषयो न सविकल्पकस्येति भावः अतएव निराकारः स्वस्मात् स्वस्येश्वरस्य अभावान्निरीश्वरः उक्तं निर्विकारत्वं विवृणोति षड्भावरहित इति जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते नश्यतीति निरुक्तोक्तषड्भावविकारहीनः अतएवानादिः अनन्तः त्वन्निवर्त्त्य एवेति भावः प्रकृतिसम्बन्धादपि तेन विकार इत्याह प्रकृतेः परः तद्दोषगुणासंस्पृष्ट इत्यर्थः ॥२९॥

नन्वीदृशस्य मम प्रत्यक्षं कुतस्तत्राह माययेति इदं त्वद्दर्शनं माययैव तदेवाह मनुष्य इवेति एवं मायिकत्वात्स्य तव ज्ञानान्मुक्तिः

(१) निराकारो निरीहो निरुपाधिक इति पाठान्तरम् ।

अहं त्वत्पादसद्भक्तिनिश्रेणीं प्राप्य राघव ! ।
इच्छामि ज्ञानयोगाख्यं सौधमारोढुमीश्वर ! ॥ ३१ ॥
नमः सीतापते ! राम ! नमः कारुणिकोत्तम !
रावणारे ! नमस्तुभ्यं त्राहि मां भवसागरात् ॥ ३२ ॥
ततः प्रसन्नः प्रोवाच श्रीरामो भक्तवत्सलः ।
वरं वृणीष्व भद्रन्ते वाञ्छितं वरदोऽस्म्यहम् ॥ ३३ ॥
विभीषण उवाच ।
धन्योऽस्मि कृतकृत्योऽस्मि कृतकार्य्योऽस्मि राघव ! ।
त्वत्पाददर्शनादेव विमुक्तोऽस्मि न संशयः ॥ ३४ ॥
नास्ति मत्सदृशो धन्यो नास्ति मत्सदृशः शुचिः ।
नास्ति मत्सदृशो लोके राम ! त्वन्मूर्त्तिदर्शनात् ॥ ३५ ॥
कर्मबन्धविनाशाय त्वज्ज्ञानं भक्तिलक्षणम् ।

किन्तु पूर्वोक्तरूपज्ञानादेवेत्याह ज्ञात्वेति तज्ज्ञानकारणं यात्र नाथिके ब्रह्मरूपे भक्तिरित्यतज्ज्ञानमपि परम्परया तदुपयोगीति भावः ॥३०॥

तदेवाकाङ्क्षतीति भक्तिरूपां निश्रेणीं प्राप्य ज्ञानयोगाख्यं सौधं पूर्वोक्तज्ञानयोगाख्यं सौधम् ॥ ३१ ॥

सर्वविघ्नभङ्गापेक्षया नविरूपा भक्तिरेव सम्यगेति ध्यानवत्त्वाह नम इति ॥ ३२ ॥

वाञ्छितं वरं वृणीष्व यतोऽहं वरदोऽस्मीत्यन्वयः ॥ ३३ ॥

कृतकृत्यत्वम् सर्वधर्मजनककर्मकृतत्वम् अतएव धन्यत्वम् भगवद्दर्शनस्य सर्वधर्मरूपत्वमिति भावः कृतकार्य्यत्वं च धातूनामनेकार्थत्वात्प्राप्तसकलप्राप्यत्वम् प्राप्यं च सकलधर्मफलम् तदेवाह त्वत्पादेति उक्तिर्हि सर्वपुण्यफलम् ॥ ३४ ॥

तदेवाह नास्तीति ॥ ३५ ॥

कर्मकृतो बन्धः संसारस्तन्नाशफलं भक्तिलक्षणं करणं यस्य तादृशं

त्वद्ध्यानं परमार्थं च देहि मे रघुनन्दन ! ॥ ३६ ॥
न याचे राम ! राजेन्द्र ! सुखं विषयसम्भवम् ।
त्वत्पादकमले सक्ता भक्तिरेव सदास्तु मे ॥ ३७ ॥
ओमित्युक्त्वा पुनः प्रीतो रामः प्रोवाच राक्षसम् ।
शृणु वक्ष्यामि ते भद्र ! रहस्यं मम निश्चितम् ॥ ३८ ॥
मद्भक्तानां प्रशान्तानां योगिनां वीतरागिणाम् ।
हृदये सीतया नित्यं वसाम्यत्र न संशयः ॥ ३९ ॥
तस्मात्त्वं सर्वदा शान्तः सर्वकल्मषवर्जितः ।
मां ध्यात्वा मोक्ष्यसे नित्यं घोरसंसारसागरात् ॥ ४० ॥
स्तोत्रमेतत्पठेद्यस्तु लिखेद्यः शृणुयादपि ।
मत्प्रीतये ममाभीष्टं सारूप्यं समवाप्नुयात् ॥ ४१ ॥
इत्युक्त्वा लक्ष्मणं प्राह श्रीरामो भक्तभक्तिमान् ।
पश्यत्विदानीमेवैष मम सन्दर्शने फलम् ॥ ४२ ॥
लङ्काराज्येऽभिषेक्ष्यामि जलमानय सागरात् ।
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥ ४३ ॥
यावन्मम कथा लोके तावद्राज्यं करोत्वसौ ।

त्वद्विषयध्यानं देहि एवं फलं परमार्थं तस्य कारणं विना असम्भवात्-
त्कारणीभूतां भक्तिं प्रार्थयते त्वत्पादेति एतदेव उक्ता भक्तिरित्यर्थः
परमार्थं परम उत्कृष्टो मोक्षोऽर्थः प्रयोजनं परम्परया यस्य ॥ ३६ ॥

तदेव पुनराह न याचे इति ॥ ३७ ॥ ३८ ॥

मद्भक्तानामिति सर्वथा तव ध्यानविषयो भवामीति भावः ॥ ३९ ॥

शान्तः जितेन्द्रियः अतएव सर्वपापहीनः ॥ ४० ॥ ४१ ॥

मम सन्दर्शने फलं तत्रास्य एवं मोक्षरूपं कालान्तरभवमित्यत
इदानीं वाञ्छितमैहिकं पश्यत्व ॥ ४२—४४ ॥

इत्युक्त्वा लक्ष्मणेनाशु आनाय्य कलशेन तम् ॥ ४४ ॥
लङ्काराज्याधिपत्यार्थमभिषेकं रमापतिः ।
कारयामास सचिवैर्लक्ष्मणेन विशेषतः (१) ॥ ४५ ॥
साधु साध्विति ते सर्वे वानरास्तुष्टुवुर्भृशम् ।
सुग्रीवोऽपि परिष्वज्य विभीषणमथाब्रवीत् ॥ ४६ ॥
विभीषण ! वयं सर्वे रामस्य परमात्मनः ।
किङ्करास्तत्र मुख्यस्त्वं भक्त्या रामपरिग्रहात् ॥ ४७ ॥
रावणस्य विनाशे त्वं साहाय्यं कर्तुमर्हसि ।

विभीषण उवाच ।

अहं कियान् सहायत्वे रामस्य परमात्मनः ? ।
किन्तु दास्यं करिष्येऽहं भक्त्या मत्या त्वमायया(२) ॥ ४८ ॥
हयग्रीवेण सन्दिष्टः शुको नाम महासुरः ।
संस्थितो ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत् ॥ ४९ ॥
त्वामाह रावणो राजा भ्रातरं राक्षसाधिपः ।
महाकुलप्रसूतस्त्वं राजासि वनचारिणाम् ॥ ५० ॥

सचिवैश्चतुर्भिर्विभीषणसचिवैः ॥ ४५ ॥ ४६ ॥
मुख्यत्वहेतुर्भक्त्या रामपरिग्रहात् ॥ ४७ ॥
परमात्मत्वेन सहायानपेक्षता सूचिता अमायया अकपटेन ॥ ४८ ॥
हयग्रीवेणेति अम्बरे इत्यादि ॥ ४९ ॥
भ्रातरं वालिना भ्रातृत्वव्यवहारस्य मैत्रीकरणोत्तरं कृतत्वेन तद्-भ्रातृत्वात् भ्रातृत्वयं त्वामित्यन्वयः वनचारिणां वानराणाम् ॥ ५० ॥

---

(१) महात्मना इति वा पाठः ।
(२) त्वया सह इति पाठान्तरम् ।

मम भ्रातृसमानस्त्वं तव नास्त्यर्थविप्लवः ।
अहं यद्यहरं भार्य्यां राजपुत्रस्य किन्तव ? ॥ ५१ ॥
किष्किन्ध्यां याहि हरिभिर्लङ्का शक्या न दैवतैः ।
प्राप्तुं किं मानवैरल्पसत्त्वैर्वानरयूथपैः ? ॥ ५२ ॥
तं प्रापयन्त वचनं तूर्णमुत्प्लुत्य वानराः ।
प्रापयन्त तदा क्षिप्रं निहन्तुं दृढमुष्टिभिः ॥ ५३ ॥
वानरैर्हन्यमानस्तु शुको राममथाब्रवीत् ।
न दूतान् घ्नन्ति राजेन्द्र ! वानरान् वारय प्रभो ! ॥ ५४ ॥
रामः श्रुत्वा तदा वाक्यं शुकस्य परिदेवितम् ।
मावधिष्टेति रामस्तान् वारयामास वानरान् ॥ ५५ ॥
पुनरम्बरमासाद्य शुकः सुग्रीवमब्रवीत् ।
ब्रूहि राजन् ! दशग्रीवं किं वक्ष्यामि ? व्रजाम्यहम् ॥ ५६ ॥

सुग्रीव उवाच ।

यथा वाली मम भ्राता तथा त्वं राक्षसाधम ! ।
हन्तव्यस्त्वं मया यत्नात् सपुत्रबलवाहनः ॥ ५७ ॥
ब्रूहि मे रामचन्द्रस्य भार्य्यां हृत्वा क्व यास्यसि ? ।

अर्थविप्लवो मत्कृतोऽर्थनाशः. अहं यद्राजपुत्रस्य भार्य्यामहरं तत्र तव किं दुःखमिति शेषः ॥ ५१ ॥

दैवतैः दैवतैरपि ॥ ५२ ॥

निहन्तुं प्रापद्यन्त प्रयत्नाः कृतारम्भा इत्यर्थः ॥ ५३ ॥

घ्नन्ति राजान इति शेषः ॥ ५४—५६ ॥

यथा वालीति वक्रोक्तिः यथा जायापहारित्वाद्वाली मे वध्यस्तथा स्वामिभार्य्यापहारित्वात्त्वमपि वध्य इति भावः ॥ ५७ ॥

मे स्वामिनः श्रीरामचन्द्रस्य भार्य्यां हृत्वा क्व यास्यसीति ब्रूहीत्य-

ततो रामाज्ञया त्यक्त्वा शुकं बद्धान्वरक्षयत् ॥ ५८ ॥
शार्दूलोऽपि(१) ततः पूर्वं दृष्ट्वा कपिबलं महत् ।
यथावत्कथयामास रावणाय स राक्षसः ॥ ५९ ॥
दीर्घचिन्तापरो भूत्वा निःश्वस्यास मन्दिरे ।
ततः समुद्रमावेक्ष्य रामो रक्तान्तलोचनः ॥ ६० ॥
पश्य लक्ष्मण ! दुष्टोऽसौ वारिधिर्मामुपागतम् ।
नाभिनन्दति दुष्टात्मा दर्शनार्थं ममानघ ! ॥ ६१ ॥
जानाति मानुषोऽयं मे किं करिष्यति वानरैः ? ।
अद्य पश्य महाबाहो ! शोषयिष्यामि वारिधिम् ॥ ६२ ॥
पादेनैव गमिष्यन्ति वानरा विगतज्वराः ।
इत्युक्त्वा क्रोधताम्राक्ष आरोपितधनुर्धरः ॥ ६३ ॥
तूणीराद् बाणमादाय कालाग्निसदृशप्रभम् ।
सन्धाय चापमाकृष्य रामो वाक्यमथाब्रवीत् ॥ ६४ ॥

न्वयः शुकमन्वरक्षयत् वानरैः सुग्रीव इति शेषः अयमत्राशयः शुकवच-नात् सुग्रीवस्य भेदायोग्यत्वं निर्णीय विश्वस्तचित्तं स्थितेषु वानरेषु स्वनग-रगतस्यैतैरक्षयत्वं समुद्रव्यवधानान्निर्णीय घातादि मा करोत्विति ॥ ५८ ॥

शार्दूलो दर्शनमात्रे नियुक्तो न तु सुग्रीवभेदने इति तस्यापक्ष-पम् ॥ ५९ ॥

कपिबलस्यातिमहत्त्वश्रवणमात्रेण दीर्घचिन्तापरत्वं रावणस्य त्व-नेन शौर्य्यहानिः सूचिता ॥ ६० ॥

उपागतं स्वतटं प्राप्तम् अनभिनन्दने चिह्नमाह दर्शनार्थमिति नायातीति शेषः ॥ ६१ । ६२ ॥

आरोपितेति आरोपितस्य धनुर्धरतीत्यर्थः ॥ ६३ ॥

कालाग्नीति कालाग्नितुल्यकान्ति सन्धाय धनुषि योजयित्वेत्यर्थः ॥ ६४ ॥

---

(१) शार्दूलोऽपि इति वा पाठः

पश्यन्तु सर्वभूतानि रामस्य शरविक्रमम् ।
इदानीं भस्मसात्कुर्य्यां समुद्रं सरिताम्पतिम् ॥ ६५ ॥
एवं ब्रुवति रामे तु सशैलवनकानना ।
चचाल वसुधा द्यौश्च दिशश्च तमसावृताः ॥ ६६ ॥
चुक्षुभे सागरो वेलां भयाद्योजनमत्यगात् ।
तिमिनक्रझषा मीनाः प्रतप्ताः परितत्रसुः ॥ ६७ ॥
एतस्मिन्नन्तरे साक्षात्सागरो दिव्यरूपधृक् ।
दिव्याभरणसम्पन्नः स्वभासा भासयन् दिशः ॥ ६८ ॥
स्वान्तस्थदिव्यरत्नानि कराभ्यां परिगृह्य सः ।
पादयोः पुरतः क्षिप्त्वा रामस्योपायनं बहु ॥ ६९ ॥
दण्डवत्प्रणिपत्याह रामं रक्तान्तलोचनम् ।
त्राहि त्राहि जगन्नाथ ! राम ! त्रैलोक्यरक्षक ! ॥ ७० ॥
जडोऽहं राम ! ते सृष्टः सृजता निखिलं जगत् ।
स्वभावमन्यथा कर्त्तुं कः शक्तो ? दैवनिर्मितम् ॥ ७१ ॥

भस्मसात् कुर्य्यां भस्मसात्करोमीत्यर्थः ॥ ६५ ॥

तमसावृता आसन्निति शेषः ॥ ६६ ॥

सागरक्षोभमेवाह योजनं वेलामत्यगात् अतिक्रान्तः वेलामारभ्य योजनपर्य्यन्तं सजलो देशः शुष्को जात इत्यर्थः प्रतप्ताः जलौष्ण्यवशात् ॥ ६७ । ६८ ॥

उपायनं रत्नानि पादयोः क्षिप्त्वा ॥ ६९ ॥

प्रणिपत्य च राममाह इत्यन्वयः । ७० ॥

स्वस्य शीघ्रमनागमने हेतुमाह जडं इति जडः तमसाच्छादितज्ञानः एवञ्च तवैव स्वभावेन जडत्वेन मदनागमनमिति न मे दोष इति भावः ॥ ७१ ॥

स्थूलानि पञ्चभूतानि जडान्येव स्वभावतः ।
स्रष्टानि भवतैतानि त्वदाज्ञां लङ्घयन्ति न ॥ ७२ ॥
तामसादहमो राम ! भूतानि प्रभवन्ति हि ।
कारणानुगमात्तेषां जडत्वं तामसं स्वतः ॥ ७३ ॥
निर्गुणस्त्वं निराकारो यदा मायागुणान् प्रभो ! ।
लीलयाङ्गीकरोषि त्वं तदा वैराजनामवान् ॥ ७४ ॥
गुणात्मनो विराजश्च सत्त्वाद्देवा बभूविरे ।
रजोगुणात् प्रजेशाद्या मन्योर्भूतपतिस्तव ॥ ७५ ॥
त्वामहं मायया छन्नं लीलया मानुषाकृतिम् ॥ ७६ ॥
जडबुद्धिर्जडो मूर्खः कथं जानामि निर्गुणम् ? ।
दण्ड एव हि मूर्खाणां सन्मार्गप्रापकः प्रभो ! ॥ ७७ ॥

नतु तव जडत्वं कुत इति चेत्तत्राह स्थूलानीति स्वभावतो जडान्येव भवता सृष्टानि तामसाहङ्कारतस्त्वया तत्सृष्टेरिति भावः अतस्त्वदाज्ञारूपं जडत्वं न लङ्घयन्ति न त्यजन्तीति तेष्वप्यरूपं भूतमहमिति भावः ॥ ७२ ॥

तदेवाह तामसादीति अहमः अहङ्कारात् कारणगुणा हि कार्यगुणानारभन्त इति भावः ॥ ७३ ॥

नतु निर्गुणस्य मम कथं भूतस्रष्टृत्वमत आह निर्गुण इति निर्गुणो निराकारोऽपि लीलया यदा मायागुणानङ्गीकरोषि तदा स्रष्टृत्वाद्वैराजनामा स्वार्थेऽण् ॥ ७४ ॥

तत्र कस्माद्गुणात्कस्य सृष्टिस्तत्राह गुणात्मनो विराज इति देवा अत्र सनकादयः प्रजेशा मन्वाद्या इन्द्राद्याश्च मन्योस्तमसः भूतपतिः संहर्त्ता रुद्रः ॥ ७५ ॥

मायया छन्नं छन्नात्मस्वरूपं तदेवाह लीलयेति ॥ ७६ ॥

जडबुद्धिस्तमोहतत्वात् जडः स्वरूपेणापि जडरूपत्वात् अतएव मूर्खः त्वां निर्गुणं सर्वनियन्तृपरमेश्वरत्वेन कथं जानामीत्यर्थः इदानीं

भूतानाममरश्रेष्ठ ! पशूनां लगुड़ो यथा।
शरणं ते व्रजामीश ! शरण्य भक्तवत्सल ! ।
अभयं देहि मे राम ! लङ्कामार्गं ददामि ते ॥ ७८ ॥

श्रीराम उवाच।

अमोघोऽयं महाबाणः कस्मिन्देशे निपात्यताम्(१)।
लक्षं दर्शय मे शीघ्रं बाणस्यामोघपातिनः ॥ ७९ ॥
रामस्य वचनं श्रुत्वा करे दृष्ट्वा महाशरम्।
महोदधिर्महातेजा राघवं वाक्यमब्रवीत् ॥ ८० ॥
रामोत्तरप्रदेशे तु द्रुमकुल्य इति श्रुतः।
प्रदेशस्तत्र बहवः पापात्मानो दिवानिशम् ॥ ८१ ॥
बाधन्ते मां रघुश्रेष्ठ ! तत्र ते पात्यतां शरः।
रामेण सृष्टो बाणस्तु क्षणादाभीरमण्डलम् ॥ ८२ ॥
हत्वा पुनः समागत्य तूणीरे पूर्ववत् स्थितः।
ततोऽब्रवीद्रघुश्रेष्ठं सागरो विनयान्वितः ॥ ८३ ॥
नलः सेतुं करोत्वस्मिन् जले मे विश्वकर्मणः।
सुतो धीमान् समर्थोऽस्मिन् कार्य्ये लब्धवरो हरिः ॥ ८४

न त्वत्कृतदण्डात्त्वत्स्वरूपं ज्ञातमिति वदन् अर्थान्तरन्यासमाह दण्ड एवेति ॥ ७७ ॥
भूतानां प्राणिनाम् ॥ ७८ ॥
अमोघमनिष्फलं यथा भवति तथा पातिनः ॥ ७९ । ८० ॥
हे राम ! उत्तरप्रदेशे द्रुमकुल्यसंज्ञः ॥ ८१ ॥
तत्र तेषु पापात्मसु ॥ ८२ । ८३ ॥
ब्रह्मणो लब्धवरत्वात् अस्मिन् कार्य्ये सेतुबन्धनकार्य्ये ॥ ८४ ॥

---

(१) निपात्यते इति क्वचित् पाठः।

कीर्त्तिं जानन्तु(१)ते लोकाः सर्वलोकमलापहाम्।
इत्युक्त्वा राघवं नत्वा ययौ सिन्धुरदृश्यताम्॥ ८५॥
ततो रामस्तु सुग्रीवलक्ष्मणाभ्यां समन्वितः।
नलमाज्ञापयच्छीघ्रं वानरैः सेतुबन्धने॥ ८६॥

ततोऽतिहृष्टः प्लवगेन्द्रयूथपै-
र्महानगेन्द्रप्रतिमैर्युतोऽनलः।
बबन्ध सेतुं शतयोजनायतं
सुविस्तृतं पर्वतपादपैर्दृढम्॥ ८७॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
तृतीयः सर्गः।

कीर्त्तिं सेतुबन्धनकृतां या कीर्त्तिः सेत्वात्मिका दृष्टा सती सर्वलोकपापहर्त्री॥ ८५॥
वानरैः सहेति शेषः॥ ८६॥
पर्वतपादपैः पर्वतैः पादपैश्च॥ ८७॥

इति श्रीमत्सकलराजधिपदुद्धरणसमर्थैत्यादिवि० श्रीरामवर्मणः कृतौ
श्रीमदध्यात्मरामायणे सेतौ युद्धकाण्डे
तृतीयः सर्गः।

---

(१) गायन्तु इति केचित् पठन्ति।

अथ चतुर्थः सर्गः ।

सेतुमारभमाणस्तु तत्र रामेश्वरं शिवम् ।
संस्थाप्य पूजयित्वाह रामो लोकहिताय च ॥ १ ॥
प्रणमेत् सेतुबन्धं यो दृष्ट्वा रामेश्वरं शिवम् ।
ब्रह्महत्यादिपापेभ्यो मुच्यते मदनुग्रहात् ॥ २ ॥
सेतुबन्धे नरः स्नात्वा दृष्ट्वा रामेश्वरं हरम् ।
सङ्कल्पनियतो भूत्वा गत्वा वाराणसीं नरः ॥ ३ ॥
आनीय गङ्गासलिलं रामेशमभिषिच्य च ।
समुद्रे क्षिप्ततद्भारो ब्रह्म प्राप्नोत्यसंशयम् ॥ ४ ॥
कृतानि प्रथमेनाह्ना योजनानि चतुर्दश ।
द्वितीयेन तथा चाह्ना योजनानि तु विंशतिः ॥ ५ ॥
तृतीयेन तथा चाह्ना योजनान्येकविंशतिः ।
चतुर्थेन तथा चाह्ना द्वाविंशतिरिति श्रुतम् ॥ ६ ॥
पञ्चमेन त्रयोविंशद्योजनानि समन्ततः ।
बबन्ध सागरे सेतुं नलो वानरसत्तमः ॥ ७ ॥

सेतुमिति निर्विघ्नत्वार्थं दृढ्यां पुण्यार्थं च तदेवाह लोकहिताय चेति ॥ १ ॥

तदेव स्पष्टयति प्रणमेदिति ॥ २ ॥

सङ्कल्पनियतः सङ्कल्पपूर्वकमित्यर्थः मध्ये कार्यान्तरमकुर्वन्निति यावत् ॥ ३ ॥

क्षिप्ततद्भारः जलानयनपात्रादिभारः ॥ ४ ॥

चतुर्दशयोजनानि सेतुयुक्तानि कृतानि ॥ ५ । ६ ॥

त्रयोविंशदिति त्रयोविंशतिरित्यर्थं आर्षं बबन्ध एवं क्रमेण बबन्धेत्यर्थः ॥ ७ । ८ ॥

तेनैव जग्मुः कपयो योजनानां शतं द्रुतम् ।
असङ्ख्याताः सुवेलाद्रिं रुरुधुः प्लवगोत्तमाः ॥ ८ ॥
आरुह्य मारुतिं रामो लक्ष्मणोऽप्यङ्गदं तथा ।
दृष्ट्वा राघवो लङ्कामारुरोहाचलं महत् ॥ ९ ॥
दृष्ट्वा लङ्कां सुविस्तीर्णां नानाचित्रध्वजाकुलाम् ।
चित्रप्रासादसम्बाधां स्वर्णप्राकारतोरणाम् ॥ १० ॥
परिखाभिः शतघ्नीभिः संक्रमैश्च विराजिताम् ।
प्रासादोपरि विस्तीर्णप्रदेशे दशकन्धरः ॥ ११ ॥
मन्त्रिभिः सहितो वीरैः किरीटदशकोज्ज्वलः ।
नीलाद्रिशिखराकारः कालमेघसमप्रभः ॥ १२ ॥
रत्नदण्डैः सितच्छत्रैरनेकैः परिशोभितः ।
एतस्मिन्नन्तरे बद्धो मुक्तो रामेण वै शुकः ॥ १३ ॥
वानरैस्ताडितः सम्यक् दशाननमुपागतः ।
प्रहसन् रावणः प्राह पीडितः किम्परैः शुक ! ॥१४॥
रावणस्य वचः श्रुत्वा शुको वचनमब्रवीत् ।
सागरस्योत्तरे तीरेऽब्रुवन्ते वचनं यथा ।
तत्र उत्प्लुत्य कपयो गृहीत्वा मां क्षणात्ततः ॥ १५ ॥
मुष्टिभिर्नखदन्तैश्च हन्तुं लोप्तुं प्रचक्रमुः ।
ततो मां राम ! रक्षेति क्रोशन्तं रघुपुङ्गवः ॥ १६ ॥

सम्बाधेति सम्बाधबाहुल्यम् तोरणं पुरद्वारम् ॥ १०—१२ ॥
हे शुक त्वं परैः पीडितः किम् ॥ १४ ॥
ते तव वचनम् अब्रूवं सुग्रीवं प्रतीति शेषः ॥ १५ ॥
मुष्टिभिर्हन्तुं नखदन्तैर्लोप्तुं केशुं हे राम ! मां रक्षेति क्रोशन्तं मां दृष्ट्वा अयं विसृज्यतामिति वानरान् प्राह ॥ १६ । १७ ॥

विसृज्यतामिति प्राह विसृष्टोऽहं कपीश्वरैः।
ततोऽहमागतो भीत्वा दृष्ट्वा तद्वानरं बलम् ॥ १७ ॥
राक्षसानां बलौघस्य वानरेन्द्रबलस्य च।
नैतयोर्विद्यते सन्धिर्देवदानवयोरिव ॥ १८ ॥
पुरप्राकारमायान्ति क्षिप्रमेकतरं कुरु।
सीतां वास्मै प्रयच्छाशु युद्धं वा दीयतां प्रभो! ॥ १९॥
मामाह रामस्त्वं ब्रूहि रावणं मद्वचः शुक!।
यद्बलं च समाश्रित्य सीतां मे हृतवानसि ॥ २० ॥
तद्दर्शय यथाकामं ससैन्यः सहबान्धवः।
श्वःकाले नगरीं लङ्कां सप्राकारां सतोरणाम् ॥ २१ ॥
राक्षसं च बलं पश्य शरैर्विध्वंसितं मया।
घोररोषमहं मोक्ष्ये बलं धारय रावण! ॥ २२ ॥
इत्युक्त्वोपरराभाथ रामः कमललोचनः (१)।
एकस्थानगता यत्र चत्वारः पुरुषर्षभाः ॥ २३ ॥
श्रीरामो लक्ष्मणश्चैव सुग्रीवश्च विभीषणः।
एत एव समर्थास्ते लङ्कां नाशयितुं प्रभो!। ॥ २४ ॥
उत्पाट्य भस्मीकरणे सर्वे तिष्ठन्तु वानराः।

त्वदुक्तसन्धिभेदादि अवधारितमित्याह राक्षसानामिति ॥१८॥
आयान्ति वानरा इति शेषः ॥ १९ । २० ॥
श्वः काले श्वः प्रातःकाल इत्यर्थः नगरीं लङ्कामित्यत्र शरैर्विध्वं-
सितामिति लिङ्गविभक्तिविपरिणामेनान्वयः ॥ २१—२४ ॥

(१) कञ्जनिभेक्षण इति वा पाठः।

तस्य यांहृग्बलं दृष्टं रूपं प्रहरणानि(१) च ॥ २५ ॥
वधिष्यति पुरं सर्वमेकस्तिष्ठन्तु ते त्रयः।
पश्य वानरसेनां तामसंख्यातां प्रपूरिताम् ॥ २६ ॥
गर्जन्ति वानरास्तत्र पश्य पर्वतसन्निभाः।
न शक्यास्ते गणयितुं प्राधान्येन ब्रवीमि ते ॥ २७ ॥
एष योऽभिमुखो लङ्कां नदन् तिष्ठति वानरः।
यूथपानां सहस्राणां शतेन परिवारितः ॥ २८ ॥
सुग्रीवसेनाधिपतिर्नीलो नामाग्निनन्दनः।
एष पर्वतशृङ्गाभः पद्मकिञ्जल्कसन्निभः ॥ २९ ॥
स्फोटयत्यभिसंरब्धो लाङ्गूलं च पुनः पुनः।
युवराजोऽङ्गदो नाम वालिपुत्रोऽतिवीर्य्यवान् ॥ ३० ॥
येन दृष्टा जनकजा रामस्यातीव वल्लभा।
हनूमानेष विख्यातो हतो येन तवात्मजः ॥ ३१ ॥
श्वेतो रजतसङ्काशो महाबुद्धिपराक्रमः।
तूर्णं सुग्रीवमागम्य पुनर्गच्छति वानरः ॥ ३२ ॥

लङ्कानाशस्य प्रकारविशेषमाह उत्पाद्य भस्मीकरणे इति पुनर्वि-चार्य्य एको राम एव तत्कार्य्येऽलमित्याह तस्येति ॥ २५ ॥

प्रपूरिताम् प्रकर्षेण पूरिता लङ्का यया ताम् यद्वा रामतेजसा पूरिताम् ॥ २६-२८ ॥

अग्निनन्दनः अग्निपुत्रः अथाङ्गदं दर्शयति एष इति ॥ २९ ॥

लाङ्गूलं स्फोटयति भुव्याहन्ति ॥ ३० ॥

हनूमन्तं दर्शयति येनेति ॥ ३१ ॥

श्वेतः नाम्ना यः सुग्रीवसमीपमागत्य पुनर्गच्छति स श्वेतनामा॥३२

(१) तेजःप्रहरणानीति पाठान्तरम्।

यस्त्वेष सिंहसङ्काशः पश्यत्यतुलविक्रमः ।
रम्भो नाम महासत्त्वो लङ्कां नाशयितुं क्षमः ॥ २३ ॥
एष पश्यति वै लङ्कां दिधक्षन्निव वानरः ।
शरभो नाम राजेन्द्र ! कोटियूथपनायकः ॥ २४ ॥
पनसश्च महावीर्य्यो मैन्दश्च द्विविदस्तथा ।
नलश्च सेतुकर्त्तासौ विश्वकर्मसुतो बली ॥ २५ ॥
वानराणां वर्णने वा संख्याने वा क ईश्वरः ।
शूराः सर्वे महाकायाः सर्वे युद्धाभिकाङ्क्षिणः ॥ २६ ॥
शक्ताः सर्वे चूर्णयितुं लङ्कां रक्षोगणैः सह ।
एतेषां बलसंख्यानं प्रत्येकं वच्मि ते शृणु ॥ २७ ॥
एषां कोटिसहस्राणि नव पञ्च च सप्त च ।
तथा शङ्खसहस्राणि तथार्बुदशतानि च ॥ २८ ॥
सुग्रीवसचिवानां ते बलमेतत्प्रकीर्त्तितम् ।
अन्येषां तु बलं नाहं वक्तुं शक्तोऽस्मि(१)रावण ! ॥२९॥
रामो न मानुषः साक्षादादिनारायणः परः ।

रम्भाख्यं दर्शयति यश्चेति ॥ २३ ॥
शरभं दर्शयति एष इति ॥ २४ ॥
अथ पनसादीन् दर्शयति ॥ २५ ॥
वर्णने गुणकथने संख्याने गणने ॥ २६ ॥
रक्षोगणसहितां लङ्कामित्यर्थः बलसंख्यानं योद्धृगणनम् ॥ २७ ॥
एषां नीलाङ्गदहनूमच्छ्वेतरम्भशरभपनसमैन्दद्विविदानां दशानाम् नव पञ्चसप्त एकविंशतिरित्यर्थः ॥ २८ । २९ ॥

(१) शक्तोमीति तु कुत्रचित् पाठः ।

सीता साक्षाज्जगद्धेतु(१)श्चिच्छक्तिर्जगदात्मिका ॥ ४० ॥
ताभ्यामेव समुत्पन्नं जगत् स्थावरजङ्गमम् ।
तस्माद्रामश्च सीता च जगतस्तस्थुषश्च तौ ॥ ४१ ॥
पितरौ पृथिवीपाल ! तयोर्वैरी कथं भवेत् ? ।
अजानता त्वया नीता जगन्मातेव जानकी ॥ ४२ ॥
क्षणनाशिनि संसारे शरीरे क्षणभङ्गुरे ।
पञ्चभूतात्मके राजन्! चतुर्विंशतितत्त्वके ॥ ४३ ॥
मलमांसास्थिदुर्गन्धभूयिष्ठेऽहङ्कृतालये ।
कैवास्था व्यतिरिक्तस्य काये तव जडात्मके ? ॥ ४४ ॥
यत्कृते ब्रह्महत्यादिपातकानि कृतानि ते ।
भोगभोक्ता तु यो देहः स देहोऽत्र पतिष्यति ॥ ४५ ॥

जगदात्मिका जगत्स्वरूपा मायास्वरूपं दृश्यं जगदेव सूक्ष्मरूपेणेत्याशयः ॥ ४० ॥

समुत्पन्नं स्थूलरूपेणेत्यर्थः जगतस्तस्थुषश्च स्थावरजङ्गमात्मकस्य संसारस्य तौ सीतारामौ ॥ ४१ ॥

पितरौ मातापितरौ तयोर्वैरी तद्वैरवान् कथं भवेत् कथं जीवेदित्यर्थः जगन्मातेवेत्यनेनाद्यापि मातेति व्यङ्ग्यम् ॥ ४२ ॥

क्षणनाशित्वेनात्यन्तास्थिरत्वबोधनम् तत्र हेतुः पञ्चभूतात्मके इति चतुर्विंशतितत्त्वके तदात्मके बुध्यहङ्कारैकादशेन्द्रियपञ्चभूततद्गुणरूपादिपञ्चकात्मकत्वात् विकारद्वारा च प्रकृतेरप्यत्रानुगम इति चतुर्विंशतितत्त्वात्मकत्वम् ॥ ४३ ॥

अहङ्कारस्यालये स्थानभूते तेभ्यश्चतुर्विंशतिभ्यो भिन्नस्य जडात्मके देहे कैवास्था ॥ ४४ ॥

तस्य देहस्य कृते तत्पोषणादिनिमित्तम् यो देहः स्थूलः ॥ ४५ ॥

---

(१) जगद्धात्री इति केचित् पठन्ति ।

पुण्यपापे समायातो जीवेन सुखदुःखयोः ।
कारणे देहयोगादिनात्मनः कुरुतोऽनिशम् ॥ ४६ ॥
यावद्देहोऽस्मि कर्त्ताऽस्मि भोक्ताऽहं कुरुतेऽवशः ।
अभ्यासात्तावदेव स्याज्जन्मनाशादिसम्भवः ॥ ४७ ॥
तस्मात्त्वं त्यज देहादावभिमानं महामते ! ।
आत्मातिनिर्मलः शुद्धो विज्ञानात्माचलोऽव्ययः ॥ ४८ ॥
स्वाज्ञानवशतो बन्धं प्रतिपद्य विमुह्यति ।
तस्मात्त्वं शुद्धभावेन ज्ञात्वात्मानं सदा स्मर ॥ ४९ ॥
विरतिं भज सर्वत्र पुत्रदारगृहादिषु ।
निरयेष्वपि भोगः स्याच्छूकरतनावपि ॥ ५० ॥
देहं लब्ध्वा विवेकाढ्यं द्विजत्वं च विशेषतः ।

सुखदुःखयोः कारणे पुण्यपापे जीवेन सह समायातः समागते इत्यर्थं आर्षं तद् ते च पुण्यपापे देहयोगादिना आत्मनः सुखदुःखे कुरुतो न तु स्वतसी आत्मनः इत्यर्थः ॥ ४६ ॥

देहयोगः कीदृशः तत्राह यावदिति अभ्यासादहङ्कारममाकाराभ्यासात् अङ्गीकृत्य यावदवशोऽहं कुरुते इत्यर्थः एतेन ज्ञानिनो देहसम्बन्धेऽपि दुःखाद्यभावाद्देहयोगेनैव दुःखमित्ययुक्तमित्यपास्तम् अज्ञानाध्यासरूपस्यैव योगस्य विवक्षितत्वात् ॥ ४७ ॥

उपसंहरति तस्मादिति ॥ ४८ ॥

स्वाज्ञानं स्वस्वरूपस्य शुद्धत्वादेरज्ञानं तद्वशतो बन्धं शरीरादिसम्बन्धं प्राप्य मुह्यति पुनः पुनः कर्मसु प्रवर्तते आत्मानं शुद्धबुद्धत्वस्वभावं ज्ञात्वा सदा स्मरेदनेनाविच्छेदेन तत्स्मरणाभ्यासो मोक्ष इत्युक्तम् ॥ ४९ ॥

अथ तादृशज्ञानसाधनं वैराग्यमाह विरतिमिति ननु सर्वत्र विरतौ भोगसुखं हीयेतेति तत्राह निरयेष्वपीति एवञ्च देहभोगोऽपि हेय एवेति भावः ॥ ५० ॥

तत्रापि भारते वर्षे कर्म्मभूमौ सुदुर्लभम् ॥ ५१ ॥
को विद्वानात्मसात्कृत्वा देहं भोगानुगो भवेत्।
अतस्त्वं ब्राह्मणो भूत्वा पौलस्त्यतनयश्च सन् ॥ ५२ ॥
अज्ञानीव सदा भोगाननुधावसि किं मुधा ?!
इतः परं वा त्यक्त्वा त्वं सर्वसङ्गं समाश्रय ॥ ५३ ॥
राममेव परात्मानं भक्तिभावेन सर्वदा।
सीतां समर्प्य रामाय तत्पादानुचरो भव ॥ ५४ ॥
विमुक्तः सर्वपापेभ्यो विष्णुलोकं प्रयास्यसि।
नो चेद्गमिष्यसेऽधोऽधः पुनरावृत्तिवर्जितः।
अङ्गीकुरुष्व मद्वाक्यं हितमेव वदामि ते ॥ ५५ ॥

सत्सङ्गतिं कुरु भजस्व हरिं शरण्यं
श्रीराघवं मरकतोपलकान्तिकान्तम्।
सीतासमेतमनिशं धृतचापबाणं
सुग्रीवलक्ष्मणविभीषणसेविताङ्घ्रिम् ॥ ५६ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
चतुर्थः सर्गः।

सर्वथा दुर्लभं तत्रापि भारते वर्षे कर्मभूमौ सुतरां दुर्लभं विवेकाच्च्
तदायततायोग्यं देहं लब्ध्वा विशेषतश्च द्विजत्वं लब्ध्वा ॥ ५१ ॥
को विद्वान् देहमात्मसात् आत्माधीनं कृत्वा अर्थात्स्वं देहभोगानु
नुगो भवेदित्यन्वयः पौलस्त्यतनयश्चेत्यनेन विशुद्धवंशतोक्ता ॥ ५२ ॥
सर्वसङ्गं त्यक्त्वा राममेवाश्रयेत्यन्वयः ॥ ५३ । ५४ ॥
पुनरावृत्तिवर्जित इति पुनरावृत्त्या उत्तमलोकाद्वर्जितः सौख्य
द्भूत इत्यर्थः ॥ ५५ ॥
मरकतोपलो मरकतमणिस्तद्वत्कान्तं श्यामदेहम् ॥ ५६ ॥

इति चतुर्थः सर्गः।

अथ पञ्चमः सर्गः ।

श्रुत्वा शुकमुखोद्गीतं वाक्यमप्राननाशनम् ।
रावणः क्रोधताम्राक्षो दहन्निव तमब्रवीत् ॥ १ ॥
अनुजीव्य सुदुर्बुद्धे ! गुरुवद्भाषसे कथम् ? ।
शासिताहं त्रिजगतां त्वं मां शिक्षन्न लज्जसे ? ॥ २ ॥
इदानीमेव हन्मि त्वां किन्तु पूर्वकृतं तव ।
स्मरामि तेन रक्षामि त्वां यद्यपि वधोचितम् ॥ ३ ॥
इतो गच्छ विमूढ ! त्वमेवं श्रोतुं न मे क्षमम् ।
महाप्रसाद इत्युक्त्वा वेपमानो गृहं ययौ ॥ ४ ॥
शुकोऽपि ब्राह्मणः पूर्वं ब्रह्मिष्ठो ब्रह्मवित्तमः ।
वानप्रस्थविधानेन वने तिष्ठन् स्वकर्मकृत् ॥ ५ ॥
देवानामभिवृद्ध्यर्थं विनाशाय सुरद्विषाम् ।
चकार यज्ञविततिमविच्छिन्नां महामतिः ॥ ६ ॥
राक्षसानां विरोधीऽभूच्छुको देवहितोद्यतः ।
वज्रदंष्ट्र इति ख्यातस्तत्रैको राक्षसो महान् ॥ ७ ॥

श्रुत्वेति ॥ १ ॥

सुतरां दुर्मते मामनुजीव्य मम सेवको भूत्वेति यावत् गुरुवत्कथं भाषसे सर्वशिक्षकं मां शिक्षन् शिक्षयन् इत्यर्थः ॥ २ ॥

पूर्वकृतं पूर्वोपकृतं यद्यपि त्वं वधोचितस्तथापि तेन पूर्वोपकारस्मरणेन त्वां रक्षामीत्यन्वयः ॥ ३ ॥

एवंविधं वाक्यम् गृहं वैखानसाश्रमम् ॥ ४ ॥

अनुमेवार्थमितिहासपूर्वमाह शुकोऽपीति ॥ ५ ॥

अविच्छिन्नां यज्ञविततिं मध्ये विच्छेदरहितं यज्ञविस्तरम् ॥ ६ ॥

शुको देवहितोद्यत इति ज्ञात्वा राक्षसानां शुके विरोधो द्वेष्यत्वबुद्धिरभूत् ॥ ७ ॥

अन्तरं प्रेप्सुरातिष्ठच्छुक्रापकरणोद्यतः ।
कदाचिदागतोऽगस्त्यस्तस्याश्रमपदं मुनिः ॥ ८ ॥
तेन सम्पूजितोऽगस्त्यो भोजनार्थं निमन्त्रितः ।
गते स्नातुं मुनौ कुम्भसम्भवे प्राप्य चान्तरम् ॥ ९ ॥
अगस्त्यरूपधृक् सोऽपि राक्षसः शुक्रमब्रवीत् ।
यदि दास्यसि मे ब्रह्मन् ! भोजनं देहि सामिषम् ॥१०
बहुकालं न भुक्तं मे मांसं छागाङ्गसम्भवम् ॥ ११ ॥
तथेति कारयामास मांसभोज्यं सविस्तरम् ।
उपविष्टे मुनौ भोक्तुं राक्षसोऽतीव सुन्दरम् ।
शुक्रभार्य्यावपुर्धृत्वा तां चान्तर्मोहयन् खलः ॥ १२ ॥
नरमांसं ददौ तस्मै सुपक्वं बहुविस्तरम् ।
दत्त्वैवान्तर्दधे रक्षस्ततो दृष्ट्वा चुकोप सः ॥ १३ ॥
अमेध्यं मानुषं मांसमगस्त्यः शुक्रमब्रवीत् ।
अभक्ष्यं मानुषं मांसं दत्तवानसि दुर्मते ! ॥ १४ ॥
मत्तस्त्वं राक्षसो भूत्वा तिष्ठ त्वं मानुषाशनः ।

शुक्रापकरणे शुक्रस्यापकारे उद्यतः शुक्रापकारम् आतिष्ठत् अतिष्ठा-तवान् परन्तु पदमार्थं तस्य शुकस्य ॥ ८ ॥

अन्तरमवसरम् ॥ ९ ॥

सामिषं समांसम् ॥ १० ॥

मांसभोज्यम् मांसयुक्तभोज्यम् ॥ ११ ॥

तां च शुक्रभार्य्यां चान्तः तच्छरीरान्तर्मायया प्रविश्य मोहयन् मायया ततो बहिर्निःसरणाक्षमां कुर्वन् ॥ १२ ॥

सः अगस्त्यः अमेध्यं मानुषं मांसं दृष्ट्वा चुकोप कुपितश्च सन् अ-गस्त्यः शुक्रमब्रवीत् ॥ १३ । १४ ॥

इति शप्तः पुरा भीत्या प्राहागस्त्यं मुने! तथा ॥ १५ ॥
इदानीं भाषितं मेऽद्य मांसं देहीति विस्तरम्।
तथैव दत्तं मे देव ! किं मे शापं प्रदास्यसि ? ॥ १६ ॥
श्रुत्वा शुकस्य वचनं मुहूर्त्तं ध्यानमास्थितः।
ज्ञात्वा रक्षःकृतं सर्वं ततः प्राह शुकं सुधीः ॥ १७ ॥
तवापकारिणा सर्वं राक्षसेन कृतं त्विदम्।
अविचार्य्यैव मे दत्तः शापस्ते मुनिसत्तम ! ॥ १८ ॥
तथापि मे वचोऽमोघमेवमेव भविष्यति।
राक्षसं वपुरास्थाय रावणस्य सहायकृत् ॥ १९ ॥
तिष्ठ तावद्यदा रामो दशाननवधाय हि।
आगमिष्यति लङ्कायाः समीपं वानरैः सह ॥ २० ॥
प्रेषितो रावणेन त्वं चारो भूत्वा रघूत्तमम्।
दृष्ट्वा शापाद्विनिर्मुक्तो बोधयित्वा च रावणम् ॥ २१ ॥
तत्त्वज्ञानं ततो मुक्तः परं पदमवाप्स्यसि।
इत्युक्तोऽगस्त्यमुनिना शुको ब्राह्मणसत्तमः।
बभूव राक्षसः सद्यो रावणं प्राप्य संस्थितः।

यतस्त्वं मह्यं मानुषं मांसं दत्तवानसि अतस्त्वं मानुषाशनो राक्षसो भूत्वा तिष्ठ ॥ १५ ॥

अद्य मे विस्तरम् विस्तरयुतं मांसं देहीति इदानीमुक्तं तथैव मे मया दत्तमतो मे मम शापं किं प्रदास्यसि आश्चर्यमेतत् ॥ १६ । १७ । १८ ॥

यतो मे वचोऽमोघमनिष्फलमत एवमेव मदुक्तं भविष्यति तदेव कृत्तु शापान्तमाह राक्षसं वपुरिति ॥ १९ । २० ॥

तदागमनोत्तरं रावणेन प्रेषितश्चारो भूत्वा रघूत्तमं दृष्ट्वा शापाद्विनिर्मुक्तः रक्षःस्वभावाद्विनिर्मुक्तः ॥ २१ ॥

इदानीं चाररूपेण दृष्ट्वा रामं सहानुजम् ॥ २३ ॥
रावणं तत्त्वविज्ञानं बोधयित्वा पुनश्च तम् ।
पूर्ववद्ब्राह्मणो भूत्वा स्थितो वैखानसैः सह ॥ २४ ॥
ततः समागमद्वृद्धो माल्यवान् राक्षसो महान् ।
बुद्धिमान्नीतिनिपुणो राज्ञो मातुः प्रियः पिता ॥ २५ ॥
प्राह तं राक्षसं वीरं प्रशान्तेनान्तरात्मना ।
शृणु राजन् ! वचो मेऽद्य श्रुत्वा कुरु यथेप्सितम् ॥ २६ ॥
यदा प्रविष्टा नगरीं जानकी रामवल्लभा ।
तदादि पुर्य्यां दृश्यन्ते निमित्तानि दशानन ! ॥ २७ ॥
घोराणि नाशहेतूनि तानि मे वदतः शृणु ।
खरस्तनितनिर्घोषा मेघा अतिभयङ्कराः ॥ २८ ॥
शोणितेनाभिवर्षन्ति लङ्कामुष्णेन सर्वदा ।
रुदन्ति देवलिङ्गानि स्विद्यन्ति प्रचलन्ति च ॥ २९ ॥
कालिका: पाण्डुरैर्दन्तैः प्रहसन्त्यग्रतः स्थिता ।
खरा गोषु प्रजायन्ते मूषका नकुलैः सह ॥ ३० ॥

रावणं तत्त्वज्ञानं बोधयित्वा च ततो शुकः मत्समीपादागतेति तेन मुक्तः परं पदं वैखानसं पदम् ॥ २२ । २३ । २४ ॥

राज्ञो मातुः पिता राज्ञः प्रियश्चार्थः ॥ २५ । २६ ॥

तदादि जानकीप्रवेशदिनादारभ्य पुर्यां लङ्कायां घोराणि निमित्तानि उत्पाता दृश्यन्ते दशानन्ययः ॥ २७ ॥

घोरत्वविवरणं नाशहेतूनीति खरं कठोरं स्तनितं गर्जितं निर्घोषः वज्रपातः यद्वा येषां ते ॥ २८ ॥

देवलिङ्गानि देवस्थानभूताः प्रतिमाः स्विद्यन्ति स्वेदवन्ति भवन्ति ॥ २९ ॥

अग्रतः प्रतिराक्षसं पुरःस्थिता कालिका पाण्डुरैः दन्तैः प्रकाशितैः

मार्जारैश्च तु युध्यन्ति पन्नगा गरुडेन तु ।
करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ॥ २१ ॥
कालो गृहाणि सर्वेषां काले काले त्ववेक्षते ।
एतान्यन्यानि दृश्यन्ते निमित्तान्युद्भवन्ति च ॥२२॥
अतः कुलस्य रक्षार्थं शान्तिं कुरु दशानन ! ।
सीतां सत्कृत्य सधनां रामायाशु प्रयच्छ भो ! ॥२३॥
रामं नारायणं विद्धि विद्वेषं त्यज राघवे ।
यत्पादपोतमाश्रित्य ज्ञानिनो भवसागरम् ॥ २४ ॥
तरन्ति भक्तिपूतान्ता ततो रामो न मानुषः ।
भजस्व भक्तिभावेन रामं सर्वहृदालयम् ॥ २५ ॥
यद्यपि त्वं दुराचारो भक्त्या पूतो भविष्यसि ।
मद्वाक्यं कुरु राजेन्द्र ! कुलकौशलहेतवे ॥ २६ ॥
तत्तु माल्यवतो वाक्यं हितमुक्तं दशाननः ।

इति सर्वान् भक्षयामीत्याशयेन श्वासः मन्त्रुकसहिता मूषका मार्जार-भक्ष्या मार्जारैर्युध्यन्ति तेन रक्षोभक्ष्येभ्यो वानरमनुष्येभ्य एव रक्षसां भयमिति सूचितम् ॥ २० ॥

कालो मृत्युस्वरूपः काले काले वारं प्रातरवेक्षते। एतान्युक्तानि एवं जातीयकान्यन्यानि च जातानि दृश्यन्ते अन्यान्युद्भवन्ति जायन्ते ॥२१।२२॥

शान्ति उत्पातसूचितारिष्टनाशकं तदेव कर्माह सीतामिति॥२३॥

रामस्य नारायणत्वे गमकमाह यत्पादेति पोतो नौका ज्ञानि-नस्तरन्तीत्यन्वयः ॥ २४ ॥

भक्त्या पूतं पवित्रम् अन्तःकरणं येषां ते भक्तिपूतान्ताः आर्षो रेफलोपः सर्वेषां हृद्‌हृदयम् आलयः स्थानं यस्य तेन सर्वान्तर्यामित्वमित्यर्थः ॥२५॥

भक्तेस्तस्य तथापीत्याहि भक्त्या रामभक्त्या कुलस्य कुशलमेव कौशलं हेतवे तन्निमित्तमित्यर्थः ॥ २६ ॥

न मर्षयति दुष्टात्मा कालस्य वशमागतः ॥ ३७ ॥
मानवं कृपणं राममेकं शाखामृगाश्रयम् ।
समर्थं मन्यसे केन ? हीनं पित्रा मुनिप्रियम् ॥३८ ॥
रामेण प्रेषितो नूनं भाषसे त्वमनर्गलम् ।
गच्छ वृद्धोऽसि बन्धुस्त्वं सोढं सर्वं त्वयोदितम् ॥३९॥
इतो मत्कर्णपदवीं दहत्येतद्वचस्तव ।
इत्युक्त्वा सर्वसचिवैः सहितः प्रस्थितस्तदा ॥ ४० ॥
प्रासादाग्रे समासीनः पश्यन् वानरसैनिकान् ।
युद्धायायोजयत्सर्वराक्षसान् समुपस्थितान् ॥ ४१ ॥
रामोऽपि धनुरादाय लक्ष्मणेन समाहृतम् ।
दृष्ट्वा रावणमासीनं कोपेन कलुषीकृतः ॥ ४२ ॥
किरीटिनं समासीनं मन्त्रिभिः परिवेष्टितम् ।
शशाङ्कार्धनिभेनैव बाणेनैकेन राघवः ॥ ४३ ॥
श्वेतच्छत्रसहस्राणि किरीटदशकं तथा ।
चिच्छेद निमिषार्द्धेन तदद्भुतमिवाभवत् ॥ ४४ ॥

न मर्षयति न हि तत्त्वेन स्पृह्यतीत्यर्थः ॥ ३७ ॥

अमर्षमेव प्रकटयति मानवमिति कृपणम् असमर्थं शाखामृगाश्रयं शाखामृगा वानराः मुनिप्रियत्वेनातिनिःसारत्वं सूचितम् ॥ ३८ ॥

यतस्त्वं वृद्धो बन्धुरतस्त्वयोदितं सर्वं सोढम् ॥ ३९ ॥

इतस्तव वक्त्राद्विनिःसृतमेतद्वचः कर्णपदवीं दहति प्रस्थितः सभा-मध्यात्प्रासादं प्रति इति शेषः ॥ ४० ॥

समुपस्थितान् सन्निहितान् ॥ ४१ ॥

समाहृतं समानीय दत्तम् ॥ ४२ । ४३ ॥

श्वेतछत्रसहस्राणि अतिमहत्त्वादिद्योतनायानेकछत्रधारणा ॥ ४४ । ४५ ॥

लज्जितो रावणस्तूर्णं विवेश भवनं स्वकम्।
आहूय राक्षसान् सर्वान् प्रहस्तप्रमुखान् खलः ॥ ४५॥
वानरैः सह युद्धाय नोदयामास सत्वरः।
ततो भेरीमृदङ्गाद्यैः पणवानकगोमुखैः ॥ ४६ ॥
महिषोष्ट्रैः खरैः सिंहैर्द्वीपिभिः कृतवाहनाः।
खड्गशूलधनुःपाशयष्टितोमरशक्तिभिः ॥ ४७ ॥
लक्षिताः सर्वतो लङ्कां प्रतिद्वारमुपाययुः।
तत्पूर्वमेव रामेण नोदिता वानरर्षभाः ॥ ४८ ॥
उद्यम्य गिरिशृङ्गाणि शिखराणि महान्ति च।
तरूंश्चोत्पाट्य विविधान् युद्धाय हरियूथपाः ॥ ४९ ॥
प्रेक्षमाणा रावणस्य तान्यनीकानि भागशः।
राघवप्रियकामार्थं लङ्कामारुरुहुस्तदा ॥ ५० ॥
ते द्रुमैः पर्वताग्रैश्च मुष्टिभिश्च प्लवङ्गमाः।
ततः सहस्रयूथाश्च कोटियूथाश्च यूथपाः ॥ ५१ ॥

पणवानकगोमुखैः वाद्यविशेषैः ॥ ४६ ॥

कृतवाहनास्तद्वहनीयरथारूढाः खड्गादिभिरायुधैर्लक्षिताः तादृ-शायुधधरा इत्यर्थः ॥ ४७ ॥

लङ्कां सर्वतः प्रतिद्वारं चोपाययुः ॥ ४८ ॥

शृङ्गाणि सूक्ष्मोन्नतभागाः शिखराणि ततो विपुलानि युद्धाय स्थिता इति शेषः ॥ ४९ ॥

रावणस्य भागशः तत्तत्प्रदेशं स्वस्वरक्षणीयांशत्वेन गृहीत्वा स्थिता-नीति शेषः ॥ ५० ॥

ते द्रुमैरित्याद्यैरुपलक्षिता इति शेषः सहस्रयूथा सहस्रसंख्येया यूथा येषाम् ॥ ५१ ॥

कोटीशतयुतांश्चान्ये रुरुधुर्नगरं भृशम् ।
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ ५२ ॥
रामो जयत्यतिबलो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणानुपालितः ॥ ५३ ॥
इत्येवं घोषयन्तश्च समं युयुधिरेऽरिभिः ।
हनूमानङ्गदश्चैव कुमुदो नील एव च ॥ ५४ ॥
नलश्च शरभश्चैव मैन्दो द्विविद एव च ।
जाम्बवान् दधिवक्त्रश्च केशरी तार एव च ॥ ५५ ॥
अन्ये च बलिनः सर्वे यूथपाश्च प्लवङ्गमाः ।
द्वाराण्युत्प्लुत्य लङ्कायाः सर्वतो रुरुधुर्भृशम् ।
तदा वृक्षैर्महाकायाः पर्वताग्रैश्च वानराः ॥ ५६ ॥
निजघ्नुस्तानि रक्षांसि नखैर्दन्तैश्च वेगिताः ।
राक्षसाश्च तदा भीमा द्वारेभ्यः सर्वतो रुषा ॥ ५७ ॥
निर्गत्य भिन्दिपालैश्च खड्गैः शूलैः परश्वधैः ।
निजघ्नुर्वानरानीकं महाकाया महाबलाः ॥ ५८ ॥
राक्षसांश्च तथा जघ्नुर्वानरा जितकाशिनः ।
तथा बभूव समरो मांसशोणितकर्दमः ॥ ५९ ॥
रक्षसां वानराणां च सम्बभूवाद्भुतोपमः ।

आप्लवन्तः ऊर्ध्वं प्लवन्तः पुनरधःपतन्तः ॥ ५२ । ५३ ॥

अरिभिः राक्षसैः ॥ ५४ । ५५ ॥

सर्वतो रुरुधुः यथा रक्षसां बहिर्निर्गमो न भवति तथा स्वयमन्तः प्रविविशुरित्यर्थः ॥ ५६ ॥ ५७ ॥

निर्गत्य बलेन वानरान् ततो निःसार्य्य स्वयं च बहिरागत्येत्यर्थः॥५८

समरः मांसशोणिताभ्यां कर्दमयुतभूप्रदेशकः ॥ ५९ ॥

तै हयैश्च गजैश्चैव रथैः काञ्चनसन्निभैः ॥ ६० ॥
रौद्रोऽथाभूद्युयुधिरे नादयन्तो दिशो दश।
राक्षसाश्च कपीन्द्राश्च परस्परजयैषिणः ॥ ६१ ॥
राक्षसान् वानरा जघ्नुर्वानरांश्चैव राक्षसाः।
रामेण विष्णुना दृष्टा हरयो दिविजांसजाः ॥ ६२ ॥
बभूवुर्बलिनो हृष्टास्तदा पीतामृता इव।
सीताभिमर्षपापेन रावणेनाभिपालितान् ॥ ६३ ॥
हतश्रीकान् हतबलान् राक्षसान् जघ्नुरोजसा।
चतुर्थांशावशेषेण निहतं राक्षसं बलम् ॥ ६४ ॥
स्वसैन्यं निहतं दृष्ट्वा मेघनादोऽथ दुष्टधीः।
ब्रह्मदत्तवरः श्रीमानन्तर्धानं गतोऽसुरः ॥ ६५ ॥
सर्वास्त्रकुशलो व्योम्नि ब्रह्मास्त्रेण समन्ततः।
नानाविधानि शस्त्राणि वानरानीकमर्दयन् ॥ ६६ ॥
ववर्ष शरजालानि तदद्भुतमिवाभवत्।
रामोऽपि मानयन् ब्राह्ममस्त्रमस्त्रविदांवरः ॥ ६७ ॥
क्षणं तूष्णीमुवासाथ ददर्श पतितं बलम्।

अद्भुतोपमः अद्भुतान्युपमीयन्तेऽनेन सकलाद्भुतयुद्धोपमानभूत समरो बभूवेत्यन्वयः ॥ ६० ॥ ६१ ॥

विष्णुदृष्टत्वाद् वानराणां हृष्टत्वं बलित्वं च सीताया दुष्टभावस्पर्शजनितपापवता रावणेन पालितत्वाद्रक्षसां हतश्रीकत्वाद्व्यतिरेकालङ्कारः ॥ ६२ ॥ ६३ ॥ ६४ ॥

अन्तर्धानमदृश्यत्वम् ॥ ६५ ॥

ब्रह्मास्त्रेण युतानि नानाविधानि शस्त्राणि ववर्षेति शेषः। वानरसेनां पीडयन् रामोऽपि शरजालानि ववर्ष ॥ ६६ ॥ ६७ ॥

वानराणां रघुश्रेष्ठश्चुकोपानलसन्निभः ॥ ६८ ॥
चापमानय सौमित्रे ! ब्रह्मास्त्रेणासुरं चणात् ।
भस्मीकरोमि मे पश्य बलमद्य रघूत्तम ! ॥ ६९ ॥
मेघनादोऽपि तच्छ्रुत्वा रामवाक्यमतन्द्रितः ।
तूर्णं जगाम नगरं मायया मायिकोऽसुरः ॥ ७० ॥
पतितं वानरानीकं दृष्ट्वा रामोऽतिदुःखितः ।
उवाच मारुतिं शीघ्रं गत्वा चीरमहोदधिम् ॥ ७१ ॥
तत्र द्रोणगिरिर्नाम दिव्यौषधिसमुद्भवः ।
तमानय द्रुतं गत्वा सञ्जीवय महामते ! ॥ ७२ ॥
वानरौघान् महासत्त्वान् कीर्त्तिस्ते सुस्थिरा भवेत् ।
आज्ञाप्यमानमित्युक्त्वा जगामानिलनन्दनः ॥ ७३ ॥
आनीय च गिरिं सर्वान् वानरान् वानरर्षभः ।
जीवयित्वा पुनस्तत्र स्थापयित्वा ययौ द्रुतम् ॥ ७४ ॥
पूर्ववद्भैरवं नादं वानराणां बलौघतः ।
श्रुत्वा विस्मयमापन्नो रावणो वाक्यमब्रवीत् ॥ ७५ ॥

वानराणां बलं पतितं ददर्श ततश्चुकोप ॥ ६८ ॥

कुपितश्चाह चापमिति चापहस्तस्यापि कोपातिशयेन तद्विस्मरणादिव चापमानयेत्युक्तिः रघूत्तम ! लक्ष्मण ! ॥ ६९ ॥

रामवाक्यं श्रुत्वा भीतः स जगाम माययाऽदृश्यः सन्नेव जगाम ॥ ७० ॥ ७१ ॥

दिव्यौषधिसमुद्भवः दिव्यौषधीनां समुद्भवो यस्मिन्निर्दिष्टः सञ्जीवय वानरौघानित्यन्वयः ॥ ७२ ॥

आज्ञाप्यमानमिति च्छेदः शिघ्रश्रवणस्य हनूमत एतत्सर्वं न सन्दिग्धव्यम् ॥ ७३–७६ ॥

राघवो मे महान् शत्रुः प्राप्तो दैवविनिर्मितः ।
हन्तुं तं समरे शीघ्रं गच्छन्तु मम यूथपाः ॥ ७६ ॥
मन्त्रिणो बान्धवाः शूरा ये च मत्प्रियकाङ्क्षिणः ।
सर्वे गच्छन्तु युद्धाय त्वरितं मम शासनात् ॥ ७७ ॥
ये न गच्छन्ति युद्धाय भीरवः प्राणविप्लवात् ।
तान् हनिष्याम्यहं सर्वान् मच्छासनपराङ्मुखान् ॥७८॥
तच्छ्रुत्वा भयसन्त्रस्ता निर्जग्मू रणकोविदाः ।
अतिकायः प्रहस्तश्च महानादमहोदरौ ॥ ७९ ॥
देवशत्रुर्निकुम्भश्च देवान्तकनरान्तकौ ।
अपरे बलिनः सर्वे ययुर्युद्धाय वानरैः ॥ ८० ॥
एते चान्ये च बहवः शूराः शतसहस्रशः ।
प्रविश्य वानरं सैन्यं ममन्थुर्बलदर्पिताः ॥ ८१ ॥
भुशुण्डैर्भिन्दिपालैश्च बाणैः खड्गैः परश्वधैः ।
अन्यैश्च विविधैरस्त्रैर्निजघ्नुर्हरियूथपान् ॥ ८२ ॥
ते पादपैः पर्वताग्रैर्नखदंष्ट्रैश्च मुष्टिभिः ।
प्राणैर्विमोचयामासुः सर्वराक्षसयूथपान् ॥ ८३ ॥
रामेण निहताः केचित् सुग्रीवेण तथापरे ।
हनूमता चाङ्गदेन लक्ष्मणेन महात्मना ॥ ८४ ॥
यूथपैर्वानराणां ते निहताः सर्वराक्षसाः ।

मन्त्रिणो ये च बान्धवास्ते सर्वे गच्छन्तु यतस्ते मत्प्रियकाङ्क्षिणः ॥७७॥
प्राणविप्लवात् प्राणनाशभयात् एवं च प्राणनाशे सर्वथा प्राप्ते यशो
रक्षणाय युद्धार्थं गमनमेव न्याय्यमिति भावः ॥ ७८ ॥ ७९ ॥
वानराणामिदं वानरमार्गं तत्सैन्यं प्रविश्य ममन्थुरणात् तत्सैन्यमेव॥८१॥
भुशुण्डिभिन्दिपाला आयुधविशेषाः ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८ ।

रामतेजः समाविश्य वानरा बलिनोऽभवन् ॥ ८५ ॥
राममक्तिविहीनानामेवं मक्तिः कुतो भवेत् ॥ ८६ ॥
सर्वेश्वरः सर्वमयो विधाता
मायामनुष्यत्वविडम्बनेन ।
सदा चिदानन्दमयोऽपि रामो
युद्धादिलीलां वितनोति मायाम् ॥ ८७ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
सप्तमः सर्गः ।

रामतेजः समाविश्य प्राप्य तत्तेजः समावेशेन बलवन्तो हेतुमाह रामभक्तीति ॥ ८६ ॥

सर्वेश्वरः सङ्कल्पमात्रेण सर्वसंहारसमर्थोऽपि मायया मनुष्यत्वविडम्बनं तद्दशरथं तेन हेतुना तन्निर्वाहाय युद्धादिलीलारूपां मायां वितनोति ॥ ८७ ॥

इति श्रीमद्‌राजराजर्षि० श्रीरामवर्मणः कृताव-
ध्यात्मरामायणे सेतौ युद्धकाण्डे
सप्तमः सर्गः ।

अथ षष्ठः सर्गः ।

श्रुत्वा युद्धे बलं नष्टमतिकायमुखं महत् ।
रावणो दुःखसन्तप्तः क्रोधेन महताहृतः ॥ १ ॥
निधायेन्द्रजितं लङ्कारक्षणार्थं(१) महाद्युतिः ।
स्वयं जगाम युद्धाय रामेण सह राक्षसः ॥ २ ॥
दिव्यं स्यन्दनमारुह्य सर्वशस्त्रास्त्रसंयुतम् ।
राममेवाभिदुद्राव राक्षसेन्द्रो महाबलः ॥ ३ ॥
वानरान् बहुशो हत्वा बाणैराशीविषोपमैः ।
पातयामास सुग्रीवप्रमुखान् यूथनायकान् ॥ ४ ॥
गदापाणिं महासत्त्वं तत्र दृष्ट्वा विभीषणम् ।
उत्ससर्ज महाशक्तिं मयदत्तां विभीषणे ॥ ५ ॥
तामापतन्तीमालोक्य विभीषणविघातिनीम् ।
दत्ताभयोऽयं रामेण वधार्हो नायमासुरः ॥ ६ ॥
इत्युक्त्वा लक्ष्मणो भीमं चापमादाय वीर्यवान् ।
विभीषणस्य पुरतः स्थितोऽकम्प इवाचलः ॥ ७ ॥

श्रुत्वेति अतिकायमुखं तत्प्रधानम् ॥ १ ॥
लङ्कारक्षणार्थं इन्द्रजितं लङ्कायां निधाय स्थापयित्वा ॥२॥२॥
आशीः सर्पास्यान्तर्गता जिह्वा दन्त इत्यन्ये ॥ ४ ॥
महासत्त्वं महाबलम् मयदत्तां मन्दोदरीपित्रा दत्ताम् ॥ ५ ॥
विभीषणविघातिनीं तत्प्राणहरां रामदत्ताभयत्वादयम् असुर एव आसुरः वधार्हो न यस्मिन् माहात्म्यातिरिक्तोऽस्मीयेवेति ॥ ६ ॥
उक्त्वा विचार्य विभीषणं पुरतस्तं पृष्ठतः कृत्वा शक्तिसंमुखे स्थितः ॥ ७

(१) रक्षणार्थम् इति पाठान्तरम् ।

सा शक्तिर्लक्ष्मणतनुं विवेशामोघशक्तितः ।
यावन्त्यः शक्तयो लोके मायायाः सम्भवन्ति हि ॥ ८ ॥
तासामाधारभूतस्य लक्ष्मणस्य महात्मनः ।
मायाशक्त्या भवेत् किं वा ? शेषांशस्य हरेस्तनोः ॥ ९ ॥
तथापि मानुषं भावमापन्नस्तदनुव्रतः ।
मूर्च्छितः पतितो भूमौ तमादातुं दशाननः ॥ १० ॥
हस्तैस्तोलयितुं शक्तो न बभूवातिविस्मितः ।
सर्वस्य जगतः सारं विराजं परमेश्वरम् ॥ ११ ॥
कथं लोकाश्रयं विष्णुं तोलयेल्लघु राक्षसः ? ।
अगृहीतकामं सौमित्रिं रावणं वीक्ष्य मारुतिः ॥ १२ ॥
आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना ।
तेन मुष्टिप्रहारेण जानुभ्यामपतद्भुवि ॥ १३ ॥
आस्यैश्च नेत्रश्रवणैरुद्वमन् रुधिरं बहु ।

अमोघशक्तितः अमोघसामर्थ्यवत्त्वात् नन्वेवं कथं लक्ष्मणजीवनं तत्राह यावन्त्य इति सम्भवन्ति प्रकटिता भवन्ति ॥ ८ ॥

ईश्वरचैतन्यसम्बन्धादेव जडायां मायायां सर्वशक्तिप्रादुर्भाव इति तासामाधारभूतो लक्ष्मणोऽतः सर्वशक्तिपालकस्य मायाशक्त्या माया-निर्मितया शक्त्या न क्षतिरिति भावः ॥ ९ ॥

नन्वेवं मूर्च्छापि कुतस्तत्राह तथापि इति तदनुव्रतः नटवत् अन्यथा रावणस्य मनुष्यत्वज्ञाने तन्मृतिर्दुर्लभेत्याशयेन मूर्च्छादिनाटनमिति भावः ॥ १० ॥

तोलयितुं चालयितुमपि न शक्तो बभूव सुतरामुत्थापयितुं तेन तेन चातिविस्मित आसीत् तत्र हेतुमाह सर्वस्येति विराजं सर्वजग-द्रूपेण भासमानम् अतएव जगतः सारम् ॥ ११ ॥ १२ ॥

अपतत् रावणः ॥ १३ ॥ १४ ॥ १५ ॥

विघूर्णमाननयनो रथोपस्थ उपाविशत्॥ १४ ॥
अथ लक्ष्मणमादाय हनूमान् रावणार्दितम्।
आनयद्रामसामीप्यं बाहुभ्यां परिगृह्य तम्॥ १५ ॥
हनूमतः सुहृत्त्वेन भक्त्या च परमेश्वरः।
लघुत्वमगमद्देवो गुरूणां गुरुरप्यजः॥ १६ ॥
सा शक्तिरपि तं त्यक्त्वा ज्ञात्वा नारायणांशजम्।
रावणस्य रथं प्रागाद्रावणोऽपि शनैस्ततः॥ १७ ॥
संज्ञामवाप्य जग्राह बाणासनमथो रुषा।
राममेवाभिदुद्राव दृष्ट्वा रामोऽपि तं क्रुधा॥ १८ ॥
आरुह्य जगतां नाथो हनूमन्तं महाबलम्।
रथस्थं रावणं दृष्ट्वा अभिदुद्राव राघवः॥ १९ ॥
ज्याशब्दमकरोत्तीव्रं वज्रनिष्पेषनिष्ठुरम्(१)।
रामो गम्भीरया वाचा राक्षसेन्द्रमुवाच ह॥ २० ॥
राक्षसाधम! तिष्ठाद्य क्व गमिष्यसि मे पुरः?।
कृत्वापराधमेवं मे सर्वत्र समदर्शिनः॥ २१ ॥

भक्त्या तस्य स्वभक्तत्वादिति भावः गुरूणां गरिष्ठानाम्॥ १६ ॥
नारायणांशजं तत्त्वेन स्वाविषयं ज्ञात्वा॥ १७ ॥
बाणासनं धनुः॥ १८ ॥
रावणं रथस्थं दृष्ट्वा लोकदृष्ट्या तत्रास्थाय हनूमन्तमारुह्याभिदुद्राव॥ १९ ॥
वज्रस्य निष्पेषो निर्घातः॥ २० ॥
मे पुरः तिष्ठ क्व गमिष्यसि सर्वत्र समदर्शिनः तेनेतो गमनेऽपि मद्दृष्टयविषये गमनं न सम्भावितमिति भावः किञ्च यद्यप्यहं सर्वत्र समदर्शी तथापि अपराधं कृत्वा जीवनं दुर्लभम् एतावदेव मे समद-

(१) निस्वनम् इति वा पाठः।

येन बाणेन निहता राक्षसास्ते जनालये।
तेनैव त्वां हनिष्यामि तिष्ठाद्य मम गोचरे ॥ २२ ॥
श्रीरामस्य वचः श्रुत्वा रावणो मारुतात्मजम्।
वहन्तं राघवं संख्ये शरैस्तीक्ष्णैरताडयत् ॥ २३ ॥
हतस्यापि शरैस्तीक्ष्णैर्वायुसूनोः स्वतेजसा।
व्यवर्धत पुनस्तेजो ममर्द च महाकपिः ॥ २४ ॥
ततो दृष्ट्वा हनूमन्तं सव्रणं रघुसत्तमः।
क्रोधमाहारयामास कालरुद्र इवापरः ॥ २५ ॥
साश्वं रथं ध्वजं सूतं शस्त्रौघं धनुरञ्जसा।
छत्रं पताकां तरसा चिच्छेद शितसायकैः(१) ॥ २६ ॥
ततो महाशरेणाशु रावणं रघुसत्तमः।
बिभेद वज्रकल्पेन पाकारिरिव पर्वतम् ॥ २७ ॥
रामबाणहतो वीरश्चचाल च मुमोह च।
हस्तान्निपतितश्चापस्तं समीक्ष्य रघूत्तमः ॥ २८ ॥
अर्धचन्द्रेण चिच्छेद तत्किरीटं रविप्रभम्।

शितत्वं यत्कर्मानुरूपफलदत्वम् अन्यथा वैषम्यनैर्घृण्ये आपद्येते इति भावः ॥ २१ ॥

अन्यदपि समर्थशीलत्वमाह येनेति न तु विषादिविघ्नादिभिरित्याशयः ॥ २२ ॥

रावणं वहन्तं हनूमन्तमताडयत् ॥ २३ ॥

स्वतेजसा स्वीयेन स्वतरौद्रतेजसा तेजो व्यवर्धत यद्वा रामः स्वतेजसा हनूमतस्तेजो व्यवर्धत व्यवर्धयदित्यर्थः ॥ २४ ॥ २५ ॥

अञ्जसा शीघ्रं युगपदेवेति यावत् ॥ २६ ॥

पाकारिरिन्द्रः ॥ २७ ॥

तं कपीन्द्र तादृशावस्थं रावणं समीक्ष्य ॥ २८ ॥

(१) वक्ररोपितैः इति पाठान्तरम्।

अनुजानामि गच्छ त्वमिदानीं बाणपीडितः ॥ २९ ॥
प्रविश्य लङ्कामाश्वास्य श्वः पश्यसि बलं मम ।
रामबाणेन संविद्धो हतदर्पोऽथ रावणः ॥ ३० ॥
महत्या लज्जया युक्तो लङ्कां प्राविशदातुरः ।
रामोऽपि लक्ष्मणं दृष्ट्वा मूर्च्छितं पतितं भुवि ॥ ३१ ॥
मानुषत्वमुपाश्रित्य लीलयानुशुशोच ह ।
ततः प्राह हनूमन्तं वत्स ! जीवय लक्ष्मणम् ॥ ३२ ॥
महौषधीः समानीय पूर्ववत् वानरानपि ।
तथेति राघवेणोक्तो जगामाशु महाकपिः ॥ ३३ ॥
हनूमान् वायुवेगेन क्षणात्तीर्त्वा महोदधिम् ।
एतस्मिन्नन्तरे चारा रावणाय न्यवेदयन् ॥ ३४ ॥
रामेण प्रेषितो देव ! हनूमान् क्षीरसागरम् ।
गतो नेतुं लक्ष्मणस्य जीवनार्थं महौषधीः ॥ ३५ ॥
श्रुत्वा तच्चारवचनं राजा चिन्तापरोऽभवत् ।
जगाम रात्रावेकाकी कालनेमिगृहं क्षणात् ॥ ३६ ॥
गृहागतं समालोक्य रावणं विस्मयान्वितः ।

तादृशावस्थस्य वीरस्य हननानौचित्यं मत्वा कार्य्यशेषं च विचार्य्य किरीटमेव चिच्छेद ततो रावणं प्रति उवाचेति शेषः तदेवाहानुजानामीति ॥ २९ ॥

लङ्कां प्रविश्याश्वास्य श्वो बलं पश्यसीत्युक्त इति शेषः ॥ ३० ॥ ३१ ॥

जीवयेत्यनेन वस्तुतः शोकाभाव उक्तः ॥ ३२ ॥

वानरानपि अपिना लक्ष्मणम् ॥ ३३ ॥

क्षणान्महोदधिं तीर्त्वा गत्वौषधीरानयामीति प्रतिज्ञायेति शेषः जगामेत्यनेनान्वयः प्रस्थातुमुद्यत इत्यर्थः ॥ ३४ ॥

नेतुम् आनेतुम् ॥ ३५ ॥ ३६ ॥

कालनेमिरुवाचेदं प्राञ्जलिर्भयविह्वलः
अर्घ्यादिकं ततः कृत्वा रावणस्याग्रतः स्थितः ॥ ३७ ॥
किन्ते करोमि ? राजेन्द्र ! किमागमनकारणम् ? ।
कालनेमिमुवाचेदं रावणो दुःखपीड़ितः ॥ ३८ ॥
ममापि कालवशतः कष्टमेतदुपस्थितम् ।
मया शक्त्या(१) हतो वीरो लक्ष्मणः पतितो भुवि॥३९॥
तं जीवयितुमानेतुमोषधीर्हनुमान् गतः ।
यथा तस्य भवेद्विघ्नं तथा कुरु महामते ! ॥ ४० ॥
मायया मुनिवेशेन मोहयस्व महाकपिम् ।
कालात्ययो यथा भूयात् तथा कृत्वैहि मन्दिरे ॥ ४१ ॥
रावणस्य वचः श्रुत्वा कालनेमिरुवाच तम् ।
रावणेश ! वचो मेऽद्य शृणु धारय तत्त्वतः ॥ ४२ ॥
प्रियं ते करवाण्येव न प्राणान् धारयाम्यहम् ।
मारीचस्य यथारण्ये पुराभून्मृगरूपिणः ॥ ४३ ॥
तथैव मे न सन्देहो भविष्यति दशानन ! ।
हताः पुत्राश्च पौत्राश्च बान्धवा राक्षसाश्च ते ॥ ४४ ॥

स्थितः कालनेमिः ॥ ३७ ॥
किमागमनकारणमिति रावणं पप्रच्छेति शेषः ॥ ३८ ॥
कष्टमेवाह ममेति ॥ ३९ ॥
गतः युद्धभूमेः प्रस्थित इत्यर्थः ॥ ४० ॥
कालात्ययः अस्तमसूर्योदयरूपः ॥ ४१ ॥
हे ईश रावणेति च्छेदः धारय हृदये इति शेषः ॥ ४२ ॥ ४३ ॥
तथैव मे भविष्यति मृत्युरेव भविष्यतीत्यर्थः ॥ ४४ ॥

---

(१) मम शक्त्या इति वा पाठः ।

घातयित्वाऽसुरकुलं(१)जीवितेनापि किमत्र ? ।
राज्येन वा सीतया वा किन्देहेन जडात्मना ? ॥ ४५ ॥
सीतां प्रयच्छ रामाय राज्यं देहि बिभीषणे ।
वनं याहि महाबाहो ! रम्यं मुनिगणाश्रयम् ॥ ४६ ॥
स्नात्वा प्रातः शुभजले कृत्वा सन्ध्यादिकाः क्रियाः ।
तत(२)एकान्तमाश्रित्य सुखासनपरिग्रहः ॥ ४७ ॥
विसृज्य सर्वतः सङ्गमितरान्विषयान् बहिः ।
बहिः प्रवृत्ताक्षगणं शनैः प्रत्यक् प्रवाहय ॥ ४८ ॥
प्रकृतेर्भिन्नमात्मानं विचारय सदानघ ।
चराचरं जगत् कृत्स्नं देहबुद्धीन्द्रियादिकम् ॥ ४९ ॥
आब्रह्मस्तम्बपर्यन्तं दृश्यते श्रूयते च यत् ।
सैषा प्रकृतिरित्युक्ता सैव मायेति कीर्त्तिता ॥५० ॥

असुरकुलमितिच्छेदः किं किं फलं जडात्मना जडस्वरूपेण ॥ ४५ ॥
एवं जीवितादौ वैराग्यमुपदिश्य कर्तव्यमुपदिशति सीतामिति रम्यत्वोपपादकं मुनिगणाश्रयमिति ॥ ४६ ॥
यत्रैव पद्मासनादौ स्थित्वा स्थाता सुखं लभते तत्सुखासनम्॥४७॥
बहिः क्षत्वेति शेषः दूरे कृत्वा इत्यर्थः बहिः प्रवृत्तं बाह्यविषयेषु प्रवृत्तमक्षगणमिन्द्रियगणं प्रत्यक् प्रवाहय आत्मविषयं कुरु सर्वसङ्गत्यागस्य मनस आत्मविषयत्वकरणमेव सर्वेन्द्रियाणामात्मविषयत्वकरणम् ॥४८॥
तदेवोपपादयति प्रकृतेरिति प्रकृतिस्वरूपमाह चराचरमिति एतदेव प्रकृतिरित्यर्थः ॥ ४९ ॥
किं विशेषेण दृश्यं सर्वमेव मायेत्याहाब्रह्मेति ॥ ५० ॥

(१) घातयित्वा सुतकुलम् इति पाठान्तरम् ।
(२) तत्र इति वा पाठः ।

सर्गस्थितिविनाशानां जगद्वृक्षस्य कारणम् ।
लोहितश्वेतकृष्णादिप्रजाः सृजति सर्वदा ॥ ५१ ॥
कामक्रोधादिपुत्राद्यान् हिंसातृष्णादिकन्यकाः ।
मोहयत्यनिशं देवमात्मानं स्वैर्गुणैर्विभुम् ॥ ५२ ॥
कर्तृत्वभोक्तृत्वमुखान् स्वगुणानात्मनीश्वरे ।
आरोप्य स्ववशं कृत्वा तेन क्रीडति सर्वदा ॥ ५३ ॥
शुद्धोऽप्यात्मा यया युक्तो पश्यतीव सदा बहिः(१) ।
विस्मृत्य च स्वमात्मानं मायागुणविमोहितः ॥ ५४ ॥
यदा सद्गुरुणा युक्तो बोध्यते बोधरूपिणा ।
निवृत्तदृष्टिरात्मानं पश्यत्येव सदा स्फुटम् ॥ ५५ ॥
जीवन्मुक्तः सदा देही मुच्यते प्राकृतैर्गुणैः ।

सैव जगद्वृक्षस्य सर्गादिकारणं लोहितेत्यादि स्वस्य त्रिगुणात्मकत्वात् राजससात्त्विकतामसाः प्रजाः सृजति ॥ ५१ ॥

तथा कामक्रोधादीन् पुत्रान् हिंसाद्याश्च कन्यकाः सृजति स्वसृष्टस्य जगतो दृढ्यर्थमित्यर्थः एवं सृष्ट्वा आत्मानमात्मपदवाच्यं विभुं देवं स्वैर्गुणैः पदार्थैर्मोहयति तेष्वहं ममेति बुद्धिमन्तं करोति ॥ ५२ ॥

स्वनिष्ठान् जगत्कर्तृत्वादीन् गुणान् सन्निधानेन तत्रारोप्य स्ववशं कृत्वा अहं कर्तृत्वादिबुद्धिमत्त्वकरणमेव तस्य वशीकरणम् ॥ ५३ ॥

शुद्धोऽप्ययं दर्शनादिविकारहीनोऽपि पश्यतीव बहिर्विषयान् स्वमात्मानं स्वस्वरूपं विस्मरणे हेतुर्मायागुणविमोहितत्वम् ॥ ५४ ॥

तर्हि किं सर्वथा विस्मृतस्वस्वरूपस्य बन्ध एव नेत्याह यदेति बोधरूपिणा ज्ञानस्वरूप एवाहमिति जानता जीवन्मुक्तेनेत्यर्थः निवृत्तदृष्टिः बहिर्विषयेभ्य इति शेषः आत्मानं शुद्धबुद्धमुक्तस्वभावमात्मस्वरूपम् ॥५५॥

तादृश सद्गुरूपदेशाच्चिदिध्यासनसम्पत्त्या जीवन्मुक्तिदशां प्राप्तः

(१) पश्यन्निव हि सर्वदा इत्यपि पाठः ।

त्वमप्येवं सदात्मानं विचार्य्य नियतेन्द्रियः ॥ ५६ ॥
प्रकृतेरन्यमात्मानं ज्ञात्वा मुक्तो भविष्यसि।
ध्यातुं यद्यसमर्थोऽसि सगुणं देवमाश्रय ॥ ५७ ॥
हृत्पद्मकर्णिके स्वर्णपीठे मणिगणान्विते।
मृदुश्लक्ष्णतरे तत्र जानक्या सह संस्थितम् ॥ ५८ ॥
वीरासनं विशालाक्षं विद्युत्पुञ्जनिभाम्बरम्(१)।
किरीटहारकेयूरकौस्तुभादिभिरन्वितम् ॥ ५९ ॥
नूपुरैः कटकैर्भातं तथैव वनमालया।
लक्ष्मणेन धनुर्हस्तकरेण परिसेवितम् ॥ ६० ॥
एवं ध्यात्वा सदात्मानं रामं सर्वहृदि स्थितम्।
भक्त्या परमया युक्तो मुच्यते नात्र संशयः ॥ ६१ ॥
शृणु वै चरितं तस्य भक्तैर्नित्यमनन्यधीः।
एवं चेत्कृतपूर्वाणि पापानि च महान्त्यपि।

प्राकृतैर्गुणैः सुखदुःखादिभिर्न युज्यते अतो मदुपदेशात् त्वमात्मानमेवं विचार्य्य मदुक्तात्मस्वरूपं विचारेण दृढीकृत्य ॥ ५६ ॥

ध्यातुमिति मदुक्तप्रकारेण ध्यातुमित्यर्थः ॥ ५७ ॥

सगुणं ध्येयं रूपमाह हृत्पद्मेति तत्कर्णिकायां स्वर्णपीठे स्थित-मित्यन्वयः श्लक्ष्णं स्निग्धम् ॥ ५८ ॥

वीरासनं वीरासनस्थं विद्युत्पुञ्जनिभाम्बरं पीताम्बरमित्यर्थः॥५९॥

भातं शोभमानम् धनुर्हस्तकरेण एकं स्वसैकं रामस्येति ख्यातम्॥६०॥

सर्वहृदि स्थितमित्यनेन एवम्भूतः सर्वप्रेरकत्वेन ध्येयः एवं चि-न्तनस्य स्वतन्त्रत्वाभावनिषेधे हेत्वाद्दिह्नानिर्भवतीत्यर्थः ॥ ६१ ॥

(१) निभाम्बरम् इति वा पाठः।

क्षणादेव विनश्यन्ति यथाऽग्नेस्तूलराशयः(१)॥ ६२ ॥
भजस्व रामं परिपूर्णमेकं विहाय वैरं निजभक्तियुक्तः ।
हृदा सदा भावितभावरूपमनामरूपं पुरुषं पुराणम्॥ ६३

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
षष्ठः सर्गः ।

भक्तैः कथ्यमानमिति शेषः कृतपूर्वाणि पूर्वं कृतानि यथाग्नेः सकाशात् तूलराशयो नश्यन्ति तद्वत् ॥ ६२ ॥

वैरं वैरभावम् निजभक्तियुक्तः अनन्यभक्तियुक्तः हृदा हृदयेन सदा भावितं भावस्य सत्तारूपस्य ब्रह्मणो रूपं शुद्धबुद्धमुक्तस्वभावं येन तम् वस्तुतः स एव ब्रह्मेत्यादिना ॥ ६३ ॥

इति श्रीमत्सकलराजधिराजकुलकुमुदकर्णधारचन्द्रिकामर्दैत्यादि० श्रीरामवर्मणः कृतावध्यात्मरामायणे सेतौ युद्धकाण्डे
षष्ठः सर्गः ।

---

(१) तूलराशयः इति वा पाठः ।

अथ सप्तमः सर्गः।

कालनेमिवचः श्रुत्वा रावणोऽमृतसन्निभम्।
जज्वाल क्रोधताम्राक्षः सर्पिरद्भिरिवाग्निमत् ॥ १ ॥
निहन्मि त्वां दुरात्मानं मच्छासनपराङ्मुखम्।
परैः किञ्चित् गृहीत्वा त्वं भाषसे रामकिङ्करः ॥ २ ॥
कालनेमिरुवाचेदं रावणं देव! किं क्रुधा?।
न रोचते मे वचनं यदि? गत्वा करोमि तत् ॥ ३ ॥
इत्युक्त्वा प्रययौ शीघ्रं कालनेमिर्महासुरः।
नोदितो रावणेनैव हनूमद्विघ्नकारणात् ॥ ४ ॥
स गत्वा हिमवत्पार्श्वे तपोवनमकल्पयत्।
तत्र शिष्यैः परिवृतो मुनिवेशधरः खलः ॥ ५ ॥
गच्छतो मार्गमासाद्य वायुसूनोर्महात्मनः।
ततो गत्वा ददर्शाथ हनूमानाश्रमं शुभम् ॥ ६ ॥
चिन्तयामास मनसा श्रीमान् पवननन्दनः।
पुरा न दृष्टमेतन्मे मुनिमण्डलमुत्तमम्(१) ॥ ७ ॥

अग्निमत् ज्वलितम् सर्पिर्घृतं जलसंयोगाद्यथा महाज्वालावद्भवति तथा जज्वालेत्यर्थः ॥ १ ॥

परैर्धनं किञ्चिद् गृहीत्वा धनलोभात् रामकिङ्करतां प्राप्त इव भाषसे ॥२

यदि मे वचो न रोचते तदा गत्वा तत् त्वदाज्ञामेव करोमि ॥ २ ॥

रावणेनैव स्वयमेव नोदित इत्यर्थः ॥ ४ ॥

खलः धूर्त्तः अतएव मुनिवेशधरो न तु मुनिः ॥ ५ ॥

गच्छतो वायुसूनोर्मार्गमासाद्य तदीयमार्गमध्ये तपोवनमकल्पयदित्यर्थः ॥ ६—७ ॥

---

(१) मुनिमण्डलविभूषितम् इति वा पाठः।

मार्गो विभ्रंशितो वा मे भ्रमो वा चित्तसम्भवः ।
यद्वाविश्राममपरं दृष्ट्वा मुनिमशेषतः ॥ ८ ॥
पीत्वा जलं ततो यामि द्रोणाचलमनुत्तमम् ।
इत्युक्त्वा प्रविवेशाथ सर्वतो योजनालयम् ॥ ९ ॥
आश्रमं कदलीशालखर्जूरपनसादिभिः ।
समाहृतं पक्वफलैर्नम्रशाखैश्च पादपैः ॥१०॥
वैरभावविनिर्मुक्तं शुभं निर्मलचत्वरम् ।
तस्मिन्महाश्रमे रम्ये कालनेमिः स राक्षसः ॥ ११ ॥
इन्द्रयोगं समास्थाय चकार शिवपूजनम् ।
हनूमानभिवाद्याह गौरवेण महासुरम् ॥ १२ ॥
भगवन् ! रामदूतोऽहं हनूमान्नाम नामतः ।
रामकार्येण महता क्षीराब्धिं गन्तुमुद्यतः ॥ १३ ॥
तृष्णा मां बाधते ब्रह्मन् ! उदकं कुत्र विद्यते ।
यथेच्छं पातुमिच्छामि कथ्यतां मे मुनीश्वर ! ॥ १४ ॥
तच्छ्रुत्वा मारुतेर्वाक्यं कालनेमिस्तमब्रवीत् ।
कमण्डलुगतं तोयं मम त्वं पातुमर्हसि । १५ ॥

मार्गो मे विभ्रंशितः त्यक्तः मार्गान्तरे आगतमिति यावत् उत्त अनाश्रमे आश्रमत्वभ्रमः अथवा किमनेन विचारेणेत्याह यद्वेति मुनि-मिति जातावेकवचनं अशेषतो समीचीनं दृष्ट्वेत्यर्थः ॥ ८–९ ॥

उक्तगुणैः पादपैश्च समाहृतमाश्रमं प्रविवेशेत्यन्वयः ॥ १० ॥

वैरभावविनिर्मुक्तं यत्राश्रमे अहिनकुलादयोऽपि परस्परवैरभावं त्यक्त्वा तिष्ठन्ति तमित्याश्रमविशेषणम् ॥ ११ ॥

इन्द्रयोगः कपटम् ॥ १२–१४ ॥

मम कमण्डलुगतमित्यन्वयः ॥ १५ ॥

भुङ्क्ष्व चेमानि पक्वानि फलानि तदनन्तरम् ।
निवसस्व सुखेनात्र निद्रामेहि त्वरास्तु मा ॥ १६ ॥
भूतं भव्यं भविष्यच्च जानामि तपसा स्वयम् ।
उत्थितो लक्ष्मणः सर्वे वानरा रामवीक्षिताः ॥१७॥
तच्छ्रुत्वा हनुमानाह कमण्डलुजलेन मे ।
न शाम्यत्यधिका तृष्णा ततो दर्शय मे जलम् ॥१८॥
तथेत्याज्ञापयामास बटुं मायाविकल्पितम् ।
बटो ! दर्शय विस्तीर्णं वायुसूनोर्जलाशयम् ॥ १९ ॥
निमील्य चाक्षिणी तोयं पीत्वागच्छ ममान्तिकम् ।
उपदेक्ष्यामि ते मन्त्रं येन द्रक्ष्यसि चौषधीः ॥ २० ॥
तथेति दर्शितं शीघ्रं बटुना सलिलाशयम् ।
प्रविश्य हनुमान् तोयमपिबन्मीलितेक्षणः ॥ २१ ॥
ततश्चागत्य मकरी महामाया(१)महाकपिम् ।
अग्रसत्तं महावेगात् मारुतिं घोररूपिणी ॥ २२ ॥
ततो ददर्श हनुमान् ग्रसन्तीं मकरीं रुषा ।
दारयामास हस्ताभ्यां वदनं सा ममार ह ॥२३॥

तदनन्तरं जलपानानन्तरं गमने त्वरा मास्तु ॥ १६—१७ ॥
जलं जलाशयम् ॥ १८ ॥
मायाविकल्पितं स्वमायया कल्पितं बटुं शिष्यम् ॥ १९ ॥
अथ हनूमन्तं प्रत्याह निमील्य चेति ॥ २० ॥
तथेति उक्त्वेति शेषः अपिबदिति च्छेदः ॥ २१ ॥
महामाया बहुमायावती मकरी मकराकारा ॥ २२—२३ ॥

(१) महाकाया इति पाठान्तरम् ।

ततोऽप्सरोंचे दृष्टमे दिव्यरूपधराङ्गना।
धान्यमालीति विख्याता हनूमन्तमथाब्रवीत् ॥ २४
त्वत्प्रसादादहं शापाद्विमुक्तास्मि कपीश्वर!।
शप्ताहं मुनिना पूर्वमप्सरा कारणान्तरे ॥ २५ ॥
आश्रमे यस्तु ते दुष्टः कालनेमिर्महासुर।
रावणप्रहितो मार्गे विघ्नं कर्तुं तवानघ! ॥ २६ ॥
मुनिवेशधरो नासौ मुनिविप्रविहिंसकः।
जहि दुष्टं यच्छ शीघ्रं द्रोणाचलमनुत्तमम् ॥२७॥
गच्छाम्यहं ब्रह्मलोकं त्वत्स्पर्शाद्धूतकल्मषा।
इत्युक्त्वा सा ययौ स्वर्गं हनूमानप्ययाश्रमम् ॥ २८ ॥
आगतं तं समालोक्य कालनेमिरभाषत।
किं विलम्बेन महता तव? वानरसत्तम! ॥ २९ ॥
गृहाण मत्तो मन्त्रांस्त्वं देहि मे गुरुदक्षिणाम्।
इत्युक्तो हनुमान् मुष्टिं दृढं बद्धाह राक्षसम् ॥ ३० ॥
गृहाण दक्षिणामेतामित्युक्त्वा निजघान तम्।
विसृज्य मुनिवेशं सः कालनेमिर्महासुरः ॥ ३१ ॥
युयुधे वायुपुत्रेण नानामायाविधानतः।
महामायिकदूतोऽसौ हनूमान्मायिनां रिपुः ॥ ३२ ॥
जघान मुष्टिना शीर्ष्णि भग्नमूर्धा ममार सः।
ततः क्षीरनिधिं गत्वा दृष्ट्वा द्रोणं महागिरिम् ॥३३॥

इति विख्याता अप्सरा इति शेषः ॥ २४—२६ ॥
असौ न मुनिः किन्तु मुनिवेशधरः ॥ २७—२८ ॥
महता विलम्बेन किं कृतं अतिविलम्बः किं कृत इत्यर्थः ॥२९-३१॥
महामायिको रामः मायिनां हैत्यानाम् ॥ ३२—३५ ॥

अदृष्ट्वा चौषधीस्तत्र गिरिमुत्पाट्य सत्वरः।
गृहीत्वा वायुवेगेन गत्वा रामस्य सन्निधिम्॥ ३४॥
उवाच हनुमान् राममानीतोऽयं महागिरिः।
यद्युक्तं कुरु देवेश! विलम्बो नात्र युज्यते॥ ३५॥
श्रुत्वा हनूमतो वाक्यं रामः सन्तुष्टमानसः।
गृहीत्वा चौषधीः शीघ्रं सुषेणेन महामतिः॥ ३६॥
चिकित्सां कारयामास लक्ष्मणाय महात्मने।
ततः सुप्तोत्थित इव बुद्धा प्रोवाच लक्ष्मणः॥ ३७॥
तिष्ठ तिष्ठ क्व गन्तासि हन्मीदानीं दशानन!।
इति ब्रुवन् तमालोक्य मूर्ध्न्यवघ्राय राघवः॥ ३८॥
मारुतिं प्राह वत्साद्य त्वत्प्रसादान्महाकपे!।
निरामयं प्रपश्यामि लक्ष्मणं भ्रातरं मम॥ ३९॥
इत्युक्त्वा वानरैः सार्धं सुग्रीवेण समन्वितः।
बिभीषणमतेनैव युद्धाय समवस्थितः॥ ४०॥
पाषाणैः पादपैश्चैव पर्वताग्रैश्च वानराः।
युद्धायाभिमुखा भूत्वा ययुः सर्वे युयुत्सवः॥ ४१॥
रावणो विव्यथे रामबाणैर्विद्धो महासुरः।

गृहीत्वा तासां तेजोऽभिज्ञार्थं स्वयं गृहीत्वा सुषेणस्य वैद्यत्वात्तेन चिकित्सां कारयामास एतेन वैद्यकशास्त्राभिनिविष्टस्यैव प्रविष्टस्यैव चिकित्साधिकार इति सूचितम्॥ ३६॥

बुद्धा मोहं त्यक्त्वा॥ ३७—३८॥

मम भ्रातरमहं निरामयं गतपीडं पश्यामीत्यन्वयः॥ ३९॥

बिभीषणमतेनैव तस्य लङ्काभिज्ञत्वात्॥ ४०॥

युद्धायाभिमुखाः युद्धं कर्तुं रिपूणामभिमुखा इत्यर्थः॥ ४१॥

मातङ्ग इव सिंहेन गरुडेनेव पन्नगः ॥ ४२ ॥
अभिभूतोऽभमद्राजा राघवेण महात्मना।
सिंहासने समाविश्य राक्षसानिदमब्रवीत् ॥ ४३ ॥
मानुषेणैव मे मृत्युमाह पूर्वं पितामहः।
मानुषो हि न मां हन्तुं शक्तोऽस्ति भुवि कश्चन ॥ ४४ ॥
ततो नारायणः साक्षान्मानुषोऽभून्न संशयः।
रामो दाशरथिर्भूत्वा मां हन्तुं समुपस्थितः ॥ ४५ ॥
अनरण्येन यत्पूर्वं शप्तोऽहं राक्षसेश्वर!।
उत्पत्स्यते च मद्वंशे परमात्मा सनातनः ॥ ४६ ॥
तेन त्वं पुत्रपौत्रैश्च बान्धवैश्च समन्वितः।
हनिष्यसे न सन्देह इत्युक्त्वा मां दिवं गतः ॥ ४७ ॥
स एव रामः सञ्जातो मदर्थे मां हनिष्यति।
कुम्भकर्णस्तु मूढात्मा सदा निद्रावशं गतः ॥ ४८ ॥
तं विबोध्य महासत्त्वमानयन्तु ममान्तिकम्।

मातङ्गो गजः ॥ ४२ ॥

राघवेणाभिभूतोऽभमत् व्यद्रमिति शेषः। समाविश्येति उपविश्ये-त्यर्थः ॥ ४३ ॥

मृत्युमेतद्देहप्राणवियोगम् ॥ ४४ ॥

समुपस्थितः सन्नागत इत्यर्थः ॥ ४५—४६ ॥

हनिष्यसे इत्यन्तः शापः न सन्देह इति तत्रैव शिरोकरणं स चानरण्यो मामित्युक्त्वा दिवं गत इत्यन्वयः ॥ ४७ ॥

मदर्थे मद्वधार्थे इत्यर्थः स मां हनिष्यति हनिष्यत्येवेति सनिश्चया-भिलाषः इदं सर्वं रजस्तमोजन्यत्वान्मोहमात्र फलायेति बोध्यं मूढात्मा अज्ञानतमःप्रकृतिः निद्राप्रियत्वात् ॥ ४८ ॥

इत्युक्तास्ते महाकायास्तूर्णं गत्वा तु यत्नतः ॥ ४९ ॥
विबोध्य कुम्भश्रवणं निन्यू रावणसन्निधिम् ।
नमस्कृत्य स राजानमासनोपरि संस्थितः ॥ ५० ॥
तमाह रावणो राजा भ्रातरं दीनया गिरा ।
कुम्भकर्ण ! निबोध त्वं महत्कष्टमुपस्थितम् ॥ ५१ ॥
रामेण निहताः शूराः पुत्राः पौत्राश्च बान्धवाः ।
किं कर्त्तव्यमिदानीं मे ? मृत्युकाल उपस्थिते(१) ॥ ५२ ॥
एष दाशरथी रामः सुग्रीवसहितो बली ।
समुद्रं सबलस्तीर्त्वा मूलं नः परिक्रन्तति ॥ ५३ ॥
ये राक्षसा मुख्यतमास्ते हता वानरैर्युधि ।
वानराणां क्षयं युद्धे न पश्यामि कदाचन ॥ ५४ ॥
नाशयस्व महाबाहो ! यदर्थं परिबोधितः ।
भ्रातुरर्थे महासत्त्व(२) ! कुरु कर्म सुदुष्करम् ॥ ५५ ॥
श्रुत्वा तद्रावणेन्द्रस्य वचनं परिदेवितम् ।

महासत्त्वं महाबलम् ॥ ४९ ॥
निन्युः प्रापयामासुः ॥ ५०—५१ ॥
मृत्युकाले उपस्थिते इदानीं मे किं कर्त्तव्यं तद्वदेति शेषः ॥५२॥
सबलः ससैन्यः मूलं सेनाम् ॥ ५३ ॥
वानराः नाशनीया इति चेत्तत्राह वानराणां युद्धे क्षयं नाशं न पश्यामि अनन्तत्वात् हनूमतौषध्यानयनेन जीवनाच्च ॥ ५४ ॥
अतस्तद्वानराणां बलं हनूमत्सहितं नाशयस्व ॥ ५५ ॥
रावणेन्द्रस्य सर्वश्रेष्ठस्य रावणस्येत्यर्थः यद्वा लोकरावणानां श्रेष्ठस्य

(१) मृत्युकालः समागतः इति वा पाठः ।
(२) महाबाहो इति पाठान्तरम् ।

कुम्भकर्णो जहासोच्चैर्वचनं चेदमब्रवीत् ॥ ५६ ॥
पुरा मन्त्रविचारे ते गदितं यन्मया नृप ! ।
तदद्य त्वामुपगतं फलं पापस्य कर्मण: ॥ ५७ ॥
पूर्वमेव मया प्रोक्तो रामो नारायण: पर:(१) ।
सीता च योगमायेति बोधितोऽपि न बुध्यसे ॥ ५८ ॥
एकदाहं वने सानौ विशालायां स्थितो निशि ।
दृष्टो मया मुनि: साक्षान्नारदो दिव्यदर्शन: ॥ ५९ ॥
तमब्रुवं महाभाग ! कुतो गन्तासि मे वद ।
इत्युक्तो नारद: प्राह देवानां मन्त्रणे स्थित: ॥ ६० ॥
तत्रोत्पन्नमुदन्तं ते वक्ष्यामि शृणु तत्त्वत: ।
युवाभ्यां पीड़िता देवा: सर्वे विष्णुमुपागता: ॥ ६१ ॥
ऊचुस्ते देवदेवेशं स्तुत्वा भक्त्या समाहिता: ।
जहि रावणमक्षोभ्यं देव ! त्रैलोक्यकण्टकम् ॥ ६२ ॥

परिदेवितम् परिदेवनरूपं वचनम् ॥ ५६ ॥

यत्पापस्य कर्मण: फलं भावित्वेन ते मया गदितं तदद्योपगतं प्राप्तम्॥५७

रामो नारायण इति पूर्वमेव प्रोक्त: कथित: तवेति शेष: एवमनेकप्रकारै: रामस्य नारायणत्वं न बुध्यसे तस्यैतत् फलमागतमिति शेष:॥५८

ननु त्वयेदं कथं ज्ञातं तत्राह एकदेति सानौ पर्वतशिखरे विशालायां शिलायामिति शेष: विशालायां नगर्यामित्यन्ये ॥ ५९ ॥

कुतो गन्तासि कुत आगतोऽसीत्यर्थे आर्षं देवानां मन्त्रणे देवानां विचारस्थाने इत्यर्थ: तत्र स्थितोऽहं तत आगत इति प्राहेत्यन्वय: ॥ ६० ॥

युवाभ्यां रावणकुम्भकर्णाभ्याम् ॥ ६१ ॥

अक्षोभ्यं केनाप्यप्रापणीयक्षोभं जहीत्यत्र हेतुगर्भं विशेषणं त्रैलोक्यकण्टकमिति ॥ ६२ ॥

(१) प्रभु: इति केचित् पठन्ति ।

मानुषेण मृतिस्तस्य कल्पिता ब्रह्मणा पुरा।
अतस्त्वं मानुषो भूत्वा जहि रावणकण्टकम् ॥ ६३ ॥
तथेत्याह महाविष्णुः सत्यसङ्कल्प ईश्वरः।
जातो रघुकुले देवो राम इत्यभिविश्रुतः ॥ ६४ ॥
स हनिष्यति वः सर्वानित्युक्त्वा प्रययौ मुनिः।
अतो जानीहि रामं त्वं परं ब्रह्म सनातनम् ॥ ६५ ॥
त्यज वैरं भजस्वाद्य मायामानुषरूपिणम्।
भजतो भक्तिभावेन प्रसीदति रघूत्तमः ॥ ६६ ॥
भक्तिर्जनित्री ज्ञानस्य भक्तिर्मोक्षप्रदायिनी।
भक्तिहीनेन यत्किञ्चित् कृतं सर्वमसत्समम् ॥ ६७ ॥
अवताराः सुबहवो विष्णोर्लीलानुकारिणः।
तेषां सहस्रसदृशो रामो ज्ञानमयः शिवः(१) ॥ ६८ ॥
रामं भजन्ति निपुणा मनसा वचसानिशम्।
अनायासेन संसारं तीर्त्वा यान्ति हरेः पदम् ॥ ६९ ॥

रावणकण्टकं रावणरूपं कण्टकम् ॥ ६३ ॥

विष्णोरीश्वरत्वद्योतकं सत्यसंकल्पत्वम् ॥ ६४–६५ ॥

मायया मानुषशरीरं न तस्य वस्तुतो मानुषः कश्चिज्जीव इत्यर्थः भजत इति द्वितीयाबहुवचनम् ॥ ६६ ॥

भक्तान् प्रसीदति इत्यस्योपपत्तये भक्तेरुत्कर्षमाह भक्तिरिति ज्ञानजनकत्वादेव तस्यामोक्षदत्वं किं बहुना कर्म भक्तिहीनं कृतं असत्समं असत्तुल्यं फलाजनकमित्यर्थः ॥ ६७ ॥

सर्वावतारेष्वयं मुख्योऽवतार इत्याहावतारा इति लीलानुकारिणस्तत्त्ज्जातिचेष्टानुकरणशीलस्येत्यर्थः ॥ ६८ ॥

ये निपुणा रामं भजन्ति ते संसारं तीर्त्वा हरेः पदं यान्ति ॥ ६९ ॥

(१) ज्ञानवतांवरः इति वा पाठः।

ये राममेव सततं भुवि शुद्धसत्त्वा
ध्यायन्ति तस्य चरितानि पठन्ति सन्तः ।
मुक्तास्त एव भवभोगमहाहिपाशैः
सीतापतेः पदमनन्तसुखं प्रयान्ति ॥ ७० ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे

सप्तमः सर्गः ।

शुद्धसत्त्वाः शुद्धान्तःकरणाः भवः संसारो भोगः शरीरं यस्य तादृशो यो महानहिः कालसर्पस्तदीयैः पाशैर्बन्धनैर्मुक्ताः सीतापतेरनन्तसुखं पदं शुद्धं ब्रह्म प्रयान्ति प्राप्नुवन्ति ॥ ७० ॥

इति श्रीमत्सकलराजविपद्धरणसमर्थत्वादिवि॰ श्रीरामवर्मणः

कृतावध्यात्मरामायणसेतौ युद्धकाण्डे

सप्तमः सर्गः ।

अथ अष्टमः सर्गः ।

कुम्भकर्णवचः श्रुत्वा भ्रुकुटीविकटाननः ।
दशग्रीवो जगादेदमासनादुत्पतन्निव ॥ १ ॥
त्वमानीतो न मे ज्ञानबोधनाय सुबुद्धिमान् ।
मया कृतं समीकृत्य युध्यस्व यदि रोचते ? ॥ २ ॥
नो चेद्गच्छ सुषुप्स्यर्थं निद्रा त्वां बाधतेऽधुना ।
रावणस्य वचः श्रुत्वा कुम्भकर्णो महाबलः ॥ ३ ॥
रुष्टोऽयमिति विज्ञाय तूर्णं युद्धाय निर्ययौ ।
स लङ्घयित्वा प्राकारं महापर्वतसन्निभः ॥ ४ ॥
निर्ययौ नगरात्तूर्णं भीषयन् हरिसैनिकान् ।
स ननाद महानादं समुद्रमभिनादयन् ॥ ५ ॥
वानरान् कालयामास बाहुभ्यां भक्षयन् रुषा ।
कुम्भकर्णं तदा दृष्ट्वा सपक्षमिव पर्वतम् ॥ ६ ॥
दुद्रुवुर्वानराः सर्वे कालान्तकमिवाखिलाः ।
भ्रमन्तं हरिवाहिन्यां मुद्गरेण महाबलम् ॥ ७ ॥
कालयन्तं हरीन् वेगात् भक्षयन्तं समन्ततः ।

ज्वलतमिव क्रोधादिति शेषः ॥ १ ॥
समीकृत्य अङ्गीकृत्य मत्समव्यवहारो भूत्वा ॥ २ । ४ ॥
अभिनादयन् स्वनादप्रतिध्वनियुतं कुर्वन् ॥ ५ ॥
कालयामास पीडयामास ॥ ६ ॥
कालान्तकमिव कालमिवान्तकमिव च तं दृष्ट्वा दुद्रुवुरित्यर्थः। मुद्गरेण युतमिति शेषः ॥ ७ ॥

चूर्णयन्तं मुद्गरेण पाणिपादैरनेकधा ॥ ८ ॥
कुम्भकर्णं तदा दृष्ट्वा गदापाणिर्विभीषणः ।
ननाम चरणौ तस्य भ्रातुर्ज्येष्ठस्य बुद्धिमान् ॥ ९ ॥
विभीषणोऽहं भ्रातर्मे दयां कुरु महामते ! ।
रावणस्तु मया भ्रातर्बहुधा परिबोधितः ॥ १० ॥
सीतां देहीति रामाय रामः साक्षाज्जनार्दनः ।
न शृणोति च मां हन्तुं खड्गमुद्यम्य चोक्तवान् ॥ ११ ॥
धिक् त्वां गच्छेति मां हत्वा पदा पापिभिरावृतः ।
चतुर्भिर्मन्त्रिभिः सार्द्धं रामं शरणमागतः ॥ १२ ॥
तच्छ्रुत्वा कुम्भकर्णोऽपि ज्ञात्वा भ्रातरमागतम् ।
समालिङ्ग्य च(१) वत्स ! त्वं जीव रामपदाश्रयः ॥ १३ ॥
कुलसंरक्षणार्थाय राक्षसानां हिताय च ।
महाभागवतोऽसि त्वं पुरा मे नारदाच्छ्रुतम् ॥ १४ ॥

पाणिपादैश्च लीलयैव चूर्णयन्तं एकवस्त्वाभाव आर्षः एवमनेकप्रकारेण चूर्णयन्तम् ॥ ८ ॥

बुद्धिमान् सर्वास्ववस्थासु ज्येष्ठो मन्तव्य इति सदाचाराभिज्ञः ॥ ९ ॥ १०

परिबोधनप्रकारमाह सीतामित्यादि इति बोधितस्तच्च शृणोति श्रुतवान् विपरीतं खड्गमुद्यम्य हन्तुमुद्यत इति शेषः ततः कथञ्चिन्निवृत्तो मां पदा हत्वा उक्तवांश्च ॥ ११ ॥

किमुक्तवांस्तदाह धिक्त्वां गच्छेति ततोऽहं चतुर्भिर्मन्त्रिभिरिति ॥ १२

समालिङ्ग्य चाहेति शेषः तदेवाह वत्सत्वमिति ॥ १३ ॥

ननु मे जीवनं कथं सम्भाव्यते तत्राह महाभागवतोऽसीति भगवद्भक्तस्य ते नाशः कथमपि न सम्भाव्य इति भावः ॥ १४ ॥

---

(१) समालिङ्ग्याह इति वा पाठः ।

गच्छ तात ! ममेदानीं दृश्यते न च किञ्चन ।
मदीयो वा परो वापि मदमत्तविलोचनः ॥ १५ ॥
इत्युक्तोऽश्रुमुखो भ्रातुश्चरणावभिवन्द्य सः ।
रामपार्श्वमुपागत्य चिन्तापर उपस्थितः ॥ १६ ॥
कुम्भकर्णोऽपि हस्ताभ्यां पादाभ्यां पेषयन् हरीन् ।
चचार वानरीं सेनां कालयन् गन्धहस्तिवत् ॥ १७ ॥
दृष्ट्वा तं राघवः क्रुद्धो वायव्यं शस्त्रमादरात् ।
चिक्षेप कुम्भकर्णाय तेन चिच्छेद राक्षसः ॥ १८ ॥
समुद्गरं दक्षहस्तं तेन घोरं ननाद सः ।
सहस्तः पतितो भूमावनेकानर्दयन् कपीन् ॥ १९ ॥
पर्य्यन्तमाश्रिताः सर्वे वानरा भयवेपिताः ।
रामराक्षसयोर्युद्धं पश्यन्तः पर्य्यवस्थिताः ॥ २०
कुम्भकर्णश्छिन्नहस्तः शालमुद्यम्य वेगतः ।
समरे राघवं हन्तुं दुद्राव तमथोऽच्छिनत् ॥ २१ ॥
शालेन सहितं वामहस्तमैन्द्रेण राघवः ।
छिन्नबाहुमथायातं नर्दन्तं वीक्ष्य राघवः ॥ २२ ॥

यतोऽहं मद्येन मत्तोऽनेकशो मम स्वीयपरविभागेन किमपि न दृश्यतेऽतस्त्वं गच्छ कदाचित्त्वमपि प्रहारसम्भवात् ॥ १५ ॥

चिन्तापरः कुम्भकर्णः कथं नाशमेष्यतीति चिन्तापरः ॥ १६ ॥

मत्त-गन्धं समाघ्रायान्ये गजाः पलायन्ते स गन्धगजः स यथा क्षुद्रपशून् कालयन् चरति तद्वदयं चचार ॥ १७ ॥

वायव्यं शस्त्रं वायव्यास्त्राभिमन्त्रितं शस्त्रम् ॥ १८ । १९ ॥

पर्यन्तमाश्रिता युद्धभूमध्ये स्थिता हस्तपातभयात्प्रान्तमाश्रिता इत्यर्थः ॥ २०—२४ ॥

द्वाभ्यां चन्द्रौ निशितावादायास्य पदद्वयम्।
चिच्छेद पतितौ पादौ लङ्काद्वारि महास्वनौ॥ २३॥
निकृत्तपाणिपादोऽपि कुम्भकर्णोऽतिभीषणः।
वड़वामुखवद्वक्त्रं व्यादाय रघुनन्दनम्॥ २४॥
अभिदुद्राव निनदन् राहुश्चन्द्रमसं यथा।
अपूरयत् शिताग्रैश्च सायकैस्तद्रघूत्तमः॥ २५॥
शरपूरितवक्त्रोऽसौ चुक्रोशातिभयङ्करः।
अथ सूर्य्यप्रतीकाशमैन्द्रं शरमनुत्तमम्॥ २६॥
वज्राशनिसमं रामश्चिक्षेपासुरमृत्यवे।
स तत्पर्वतसङ्काशं स्फुरत्कुण्डलदंष्ट्रकम्॥ २७॥
चकर्त्त रक्षोऽधिपतेः शिरो वृत्रमिवाशनिः।
तच्छिरः पतितं लङ्काद्वारि कायो महोदधौ॥ २८॥
शिरोऽस्य रोधयद्द्वारं कायो नक्राद्यचूर्णयत्।
ततो देवाः स ऋषयो गन्धर्वाः पन्नगाः खगाः॥ २९॥
सिद्धा यक्षा गुह्यकाश्च अप्सरोभिश्च राघवम्।
ईडिरे कुसुमासारैर्वर्षन्तश्चाभिनन्दिताः॥ ३०॥
आजगाम तदा रामं द्रष्टुं देवमुनीश्वरः।

वड़वामुखं नाम समुद्रे शतयोजनविस्तीर्णं वाड़वाग्निवासस्थानम्। २५। २६॥

स शरः तत् शिरः॥ २७॥

शिरो लङ्काद्वारि पतितम् कायो महोदधौ पतित इति शेषः॥२८॥

अस्य शिरो द्वारं रोधयत् अरुन्धदित्यर्थः अडभाव आर्षः निकृत्त-शरीरं नक्रादि समुद्रे कायमातात् खगाः पक्षिणः॥ २९॥

अप्सरोभिः सहेति शेषः ईडिरे तुष्टुवुः कुसुमासारैः रामं वर्षन्तः अभिनन्दयन्तो बभूवुरिति शेषः॥ ३०॥ ३१॥

नारदो गगनात्तूर्णं स्वभासा भासयन् दिशः ॥ ३१ ॥
राममिन्दीवरश्याममुदाराङ्गं धनुर्धरम् ।
ईषत्ताम्रविशालाक्षमैन्द्रास्त्राञ्चितबाहुकम् ॥ ३२ ॥
दयार्द्रदृष्ट्या पश्यन्तं वानरान् शरपीडितान् ।
दृष्ट्वा गद्गदया वाचा भक्त्या स्तोतुं प्रचक्रमे ॥ ३३ ॥

नारद उवाच ।

देवदेव ! जगन्नाथ ! परमात्मन् ! सनातन ! ।
नारायणाखिलाधार ! विश्वसाक्षिन् ! नमोऽस्तु ते ॥ ३४ ॥
विशुद्धज्ञानरूपोऽपि त्वं लोकानतिवञ्चयन् ।
मायया मनुजाकारः सुखदुःखादिमानिव ॥ ३५ ॥
त्वं मायया गूह्यमानः सर्वेषां हृदि संस्थितः ।
स्वयं ज्योतिःस्वभावस्त्वं व्यक्त एवामलात्मनाम् ॥ ३६ ॥
उन्मीलयन् सृजस्येतन्नेत्रे राम ! जगत्त्रयम् ।
उपसंह्रियते सर्वं त्वया चक्षुर्निमीलनात् ॥ ३७ ॥

ऐन्द्रास्त्रेण युक्तौ बाहू यस्य तम् ॥ ३२ ॥ ३३ ॥

देवानां हिरण्यगर्भादीनामपि देवपूज्य परमात्मन् सर्वे जीवा अंशा यस्य तादृश अतएव सनातन सदाभव नित्य सर्वः नारं जीवसमूहस्तस्यायनम् अखिलाधार जगदुत्पत्तिस्थितिनाशकारण विश्वसाक्षिन् अन्तर्यामितयेति भावः ॥ ३४ ॥

अतिवञ्चयन् स्वस्वरूपगोपनेन संसारपातिनः कुर्वन् एतदपि मायाकृतमेव तत्त्वतस्त्वय्यारोपितं बोध्यम् ॥ ३५ ॥

सर्वेषां हृदि स्थितोऽपि स्वप्रकाशोऽपि त्वं मायया गूह्यमानो भवसि तर्हीदृशत्वे किं मानमित्यत आह अमलात्मनां व्यक्त एवेति तदनुभव एव तव तादृशत्वे प्रमाणम् इति भावः ॥ ३६ ॥

उन्मीलयन्निति तव निमेषोन्मेषमात्रेण सृष्टिप्रलयाविति भावः ॥ ३७ ॥

यस्मिन् सर्वमिदं भाति यतश्चैतच्चराचरम्।
यस्मान्न किञ्चिल्लोकेऽस्मिन् तस्मै ते ब्रह्मणे नमः॥ ३८॥
प्रकृतिं पुरुषं कालं व्यक्ताव्यक्तस्वरूपिणम्।
यं जानन्ति मुनिश्रेष्ठास्तस्मै रामाय ते नमः॥ ३९॥
विकाररहितं शुद्धं ज्ञानरूपं श्रुतिर्जगौ।
त्वां सर्वजगदाकारमूर्त्तिं चाप्याह सा श्रुतिः॥ ४०॥
विरोधो दृश्यते देव! वैदिको वेदवादिनाम्।
निश्चयं नाधिगच्छन्ति त्वत्प्रसादं विना बुधाः॥ ४१॥
मायया क्रीडतो देव! न विरोधो मनागपि।
रश्मिजालं रवेर्यद्वद्दृश्यते जलवद्भ्रमात्॥ ४२॥
भ्रान्तिज्ञानात्तथा राम! त्वयि सर्वं प्रकल्प्यते।

यस्मिन्निति यदाधारत्वादिदं भातीति व्यवहारविषयः भानस्य त्वद्रूपत्वादिति भावः यत एतच्चराचरं जायते यस्मिन् लीयते येन तिष्ठति चेत्यर्थः सार्वविभक्तिकस्तसिः यस्मादधिकं न किञ्चित्तस्मै ब्रह्मरूपिणे नम इत्यर्थः॥ ३८॥

यं प्रकृतिं जानन्ति शक्तिशक्तिमतोरभेदात् यं पुरुषं जानन्ति अंशांशिनोरभेदात् 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति गीतोक्तेः व्यक्तस्वरूपःकालो निमिषादिः अव्यक्तः जपरूपस्तदुभयरूपं कालं यं त्वां जानन्ति तस्मै नमः॥ ३९। ४०॥

विकाररहितत्वसर्वाकारत्वयोरापाततो विरोधो दृश्यते जगतो विकाररूपत्वात्॥ ४१॥

त्वत्प्रसादलभ्यं निश्चयमाह माययेति एवं च जगदाकाररूपत्वं मायिकमिति न विरोधः मायिकत्वज्ञानं च जगति त्वत्प्रसादं विना दुर्लभमिति भावः ननु मायिकत्वेऽपि जगतस्तद्रूपत्वं भगवतः कथमित्यत्राह रश्मिजालमिति तथा तत्र मरुदेशावच्छिन्ने रविरश्मिजाले जलभ्रमो मृगाणाम्॥ ४२॥

तथा त्वयि जगत् भ्रान्तिज्ञानात् शुक्तौ रजतमिव प्रकल्प्यते जनैः

मनसो विषयो देव ! रूपं ते निर्गुणं परम् ॥ ४३ ॥
कथं दृश्यं भवेद्देव ! दृश्याभावे जपेत् कथम् ? ।
अतस्तवावतारेषु रूपाणि निपुणा भुवि ॥ ४४ ॥
भजन्ति बुद्धिसम्पन्नास्तरन्त्येव भवार्णवम् ।
कामक्रोधादयस्तत्र बहवः परिपन्थिनः ॥ ४५ ॥
भीषयन्ति सदा चेतो मार्जारा मूषकं यथा ।
त्वन्नाम स्मरतां नित्यं त्वद्रूपमपि मानसे ॥ ४६ ॥
त्वत्पूजानिरतानां ते कथामृतपरात्मनाम् ।
त्वद्भक्तसङ्गिनां राम ! संसारो गोष्पदायते ॥ ४७ ॥
अतस्ते सगुणं रूपं ध्यात्वाहं सर्वदा हृदि ।
मुक्तश्चरामि लोकेषु पूज्योऽहं सर्वदैवतैः ॥ ४८ ॥

माययापि निरधिष्ठानकभ्रमोत्पादनासम्भवात् अतस्त्वं तद्रूप इत्युच्यसे यत्तु ते वास्तवं निर्गुणं रूपं तन्मनसः श्रवणमननिदिध्यासनादिसंस्कृतस्य मनसो विषयः 'दृश्यते परया बुद्ध्या' इति श्रुतेः ॥ ४२ ॥

तत्तव निर्गुणं रूपं दृश्यं चक्षुरादिविषयः कथं भवेत् दृश्याभावे दृश्यत्वाभावे कथं भजेत् सेवेत् अतः तज्ज्ञानासम्भवात् तद्रूपाविचारे-ष्ववतारस्वरूपाणि भजन्ति तावतैव भवार्णवं तरन्त्येव ॥ ४४ ॥ ४५ ॥

भीषयन्ति त्वद्ध्यानान्निवर्त्तयन्ति ध्यानदार्ढ्योपायमाह त्वन्नामस्मरतां सतां त्वद्रूपमपि मानसे भवतीति शेषः नामस्मरणमेव भगवद्रूपध्याने दृढ उपाय इति भावः ॥ ४६ ॥

सगुणसेवापि मोक्षदेत्याह त्वत्पूजेत्यादि गोष्पदायते इत्यनेन तस्य अल्पतरत्वं सूच्यते ॥ ४७ ॥

अतो निर्गुणसेवाया दुष्करत्वात् सगुणसेवाया अपि मोक्षदत्वाच्चे-त्यर्थः मुक्तः संसारबन्धात् मुक्ताचरणं स्वस्य सूचितम् अतएव सर्वदेवतैः पूज्यः ॥ ४८ ॥

राम! त्वया महत्कार्य्यं कृतं देवहितेच्छया।
कुम्भकर्णवधेनाद्य भूभारोऽयं गतः प्रभो! ॥ ४९ ॥
श्वो हनिष्यति सौमित्रिरिन्द्रजितारमाहवे।
हनिष्यसेऽथ रामस्त्वं परश्वो दशकन्धरम् ॥ ५० ॥
पश्यामि सर्वं देवेश! सिद्धैः सह नभो गतः।
अनुगृह्णीष्व मां देव! गमिष्यामि सुरालयम् ॥ ५१ ॥
इत्युक्त्वा राममामन्त्र्य नारदो भगवान् ऋषिः।
ययौ देवैः पूज्यमानो ब्रह्मलोकमकल्मषम् ॥ ५२ ॥
भ्रातरं निहतं श्रुत्वा कुम्भकर्णं महाबलम्।
रावणः शोकसन्तप्तो रामेणाक्लिष्टकर्मणा ॥ ५३ ॥
मूर्च्छितः पतितो भूमावुत्थाय विललाप ह।
पितृव्यं निहतं श्रुत्वा पितरं चातिविह्वलम् ॥ ५४ ॥
इन्द्रजित् प्राह शोकार्त्तं त्यज शोकं महामते!।

एवं स्वस्वरूपेण स्तुत्वा प्रकृतकर्मणापि स्तौति रामेति गतः गत-
प्रायः ॥ ४९ ॥

श्व इति इदं तद्वधस्यावश्यम्भावकताद्योतकं वाल्मीक्युक्त्या अग्निवे-
श्योक्त्या च दिनत्रयेणेन्द्रजितो वधः प्रतीयते अपेऽत्रापि वक्ष्यति
'अहोरात्रैस्त्रिभिर्वीरः कथञ्चिद्विनिपातित' इति एवं 'परश्वः' इत्यपि
अग्निवेश्यरामायणे अष्टादशाहानि रामरावणयोर्द्वन्द्वयुद्धस्योक्तेः ॥ ५० ॥

नभोगतः नभःपदेन भूर्लोकोर्द्ध्वलोकास्तदन्यतमस्थितः सर्वं युद्ध-
वृत्तान्तं पश्यामि साक्षात्करोमि त्वद्भक्तिजनितज्ञानोत्कर्षेण ज्ञानप्रतिब-
न्धकस्य सर्वेन्द्रियतमसो निरसनात् अनेन गमनानुमार्थकं युद्धदर्श-
नार्थं स्थेयमित्याशङ्कापरो निराकृतः ॥ ५१ । ५२ ॥

रामेण निहतं श्रुत्वेत्यन्वयः ॥ ५३ ॥

पितरं चातिविह्वलं दृष्ट्वेति शेषः ॥ ५४ ॥

अयि जीवति राजेन्द्र! मेघनादे महाबले ॥ ५५
दुःखस्यावसरः कुत्र देवान्तक! महामते!।
व्येतु ते दुःखमखिलं स्वस्थो भव महीपते! ॥ ५६ ॥
सर्वं समीकरिष्यामि हनिष्यामि च वै रिपून्।
गत्वा निकुम्भिलां सद्यस्तर्पयित्वा हुताशनम् ॥ ५७ ॥
लब्ध्वा रथादिकं तस्मादजेयोऽहं भवाम्यरेः।
इत्युक्त्वा त्वरितं गत्वा निर्द्दिष्टं हवनस्थलम् ॥ ५८ ॥
रक्तमाल्याम्बरधरो रक्तगन्धानुलेपनः।
निकुम्भिलास्थले मौनी हवनायोपचक्रमे।
विभीषणोऽथ तच्छ्रुत्वा मेघनादस्य चेष्टितम् ॥५८॥
प्राह रामाय सकलं होमारम्भं दुरात्मनः।
समाप्यते चेद्धोमोऽयं मेघनादस्य दुर्मतेः।
तदाऽजेयो भवेद्राम! मेघनादः सुरासुरैः ॥ ६० ॥
अतः शीघ्रं लक्ष्मणेन घातयिष्यामि रावणिम्।
आज्ञापय मया सार्द्धं लक्ष्मणं बलिनां वरम्।

शोकार्त्तं रावणं प्राह अजेत्यादि ॥ ५५ ॥

देवान्तकेति देवनाशकस्य मनुष्यमात्रात् दुःखावसरः कोऽर्थः ॥५६॥

समीकरिष्यामि तदीयसुतस्य हननेनात्मीयं सर्वदुःखं दुःखेन समं करिष्यामीत्यर्थः तद्देशाच हनिष्यामीति तदुपायमाह गत्वेति ॥ ५७ ॥

लब्ध्वेत्यस्य योत्स्यामीति शेषः तस्माद्रथादिलाभात् अजेयः युद्ध इति शेषः निर्द्दिष्टमुक्तं हवनायोपचक्रमे इत्यन्वयः ॥ ५८ । ५८ ॥

दुरात्मनः इन्द्रजितः तदा अजेय इति च्छेदः ॥ ६० ॥

शीघ्रं होमसमाप्तेः प्रागेव [illegible] [illegible] [illegible] तं [illegible]दिति

हनिष्यति न सन्देहो मेघनादं तवानुजः(१) ॥ ६१ ॥

श्रीरामचन्द्र उवाच।

अहमेव गमिष्यामि हन्तुमिन्द्रजितं रिपुम्।
आग्नेयेन महास्त्रेण सर्वराक्षसघातिना ॥ ६२ ॥
विभीषणोऽपि तं प्राह नासावन्यैर्निहन्यते।
यस्तु द्वादशवर्षाणि निद्राहारविवर्जितः ॥ ६३ ॥
तेनैव मृत्युर्निर्दिष्टो ब्रह्मणास्य दुरात्मनः।
लक्ष्मणस्तु अयोध्याया निर्गम्यायात्त्वया सह ॥ ६४ ॥
तदादि निद्राहारादीन्न जानाति रघूत्तम !।
सेवार्थं तव राजेन्द्र ! ज्ञातं सर्वमिदं मया ॥ ६५ ॥
तदाज्ञापय देवेश ! लक्ष्मणं त्वरया मया(२)।
हनिष्यति न सन्देहः शेषः साक्षाद्धराधरः ॥ ६६ ॥

त्वमेव साक्षाज्जगतामधीशो
नारायणो लक्ष्मण एव शेषः।

सन्देहो मास्त्वित्याह हनिष्यतीति ॥ ६१ ॥

रामो मायामानुष्यं नाटयन्नाह अहमेवेति ॥ ६२ ६३ ॥

लक्ष्मणस्तु तादृश इत्याह लक्ष्मणस्त्विति त्वया सह यत्प्रभृत्यागत ॥ ६४ ॥

तदादि निद्रादीनि न जानाति न स्मरति चतुर्दशवर्षं तु दूरापास्तमित्यर्थः तत्र ज्ञाने हेतुः सेवार्थं सेवेति ॥ ६५ ॥

मया सहेति शेषः ॥ ६६ ॥

---

(१) तवाज्ञया इति वा पाठः।

(२) त्वं मया सह इति पाठान्तरम्।

युवां धराभारनिवारणार्थं
जातौ जगन्नाटकसूत्रधारौ ॥ ६७ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
अष्टमः सर्गः।

तस्य शेषत्वमेव द्रढयितुं पुनराह त्वमेवेति जगतो निर्माणरूपं
नाटकं तस्य सूत्रधारौ हस्तकारणौ ॥ ६७ ॥

इति श्रीमन्महाराजाधिराजरामवर्मकृतायां श्रीरामवर्मीयाख्यायां
व्याख्यायां श्रीमदध्यात्मरामायणे सेतौ युद्धकाण्डे
अष्टमः सर्गः।

---

नवमः सर्गः ।

विभीषणवचः श्रुत्वा रामो वाक्यमथाब्रवीत् ।
जानामि तस्य रौद्रस्य मायां कृत्स्नां विभीषण ! ॥१॥
स हि ब्रह्मास्त्रविच्छूरो मायावी च महाबलः ।
जानामि लक्ष्मणस्यापि स्वरूपं मम सेवनम् ॥ २ ॥
ज्ञात्वैवासमहं तूष्णीं भविष्यत्कार्य्यगौरवात् ।
इत्युक्त्वा लक्ष्मणं प्राह रामो ज्ञानवतां वरः ॥ ३ ॥
गच्छ लक्ष्मण ! सैन्येन महता जहि रावणिम् ।
हनूमत्प्रमुखैः सर्वैर्यूथपैः(१)सह लक्ष्मण ! ॥ ४ ॥
जाम्बवानृक्षराजोऽयं सह सैन्येन संवृतः ।
विभीषणश्च सचिवैः सह त्वामभियास्यति ॥ ५ ॥
अभिज्ञस्तस्य देशस्य जानाति विवराणि सः ।
रामस्य वचनं श्रुत्वा लक्ष्मणः सविभीषणः ॥ ६ ॥

विभीषणेति तस्य इन्द्रजितः रौद्रस्य अतितामसस्य ॥ १ ॥

मम सेवनं मत्परिचरणं निद्रादिराहित्यरूपम् ॥ २ ॥

पूर्वं वनवाससमयेऽहं तस्य निद्राहारादिराहित्यं ज्ञात्वापि भविष्यतः कार्य्यस्येन्द्रजिद्वधरूपस्य गुरुत्वात् तूष्णीभावं तं न निषिद्धवानित्यर्थः इत्युक्त्वा विभीषणमिति शेषः ॥ ३ ॥

लक्ष्मणेति द्विःसम्बोधनमादरपूर्वमन्यासाध्यत्वसूचनाय ॥ ४ ॥

ससैन्यसंवृत ऋक्षराजः सचिवसहितो विभीषणश्च त्वामभियास्यति अनुयास्यति ॥ ५ ॥

विभीषणस्यानुगमनं कार्य्यसाधकमित्याहाभिज्ञ इति तस्य इन्द्रजिन्निकुम्भिलादेशस्य विवराणि रिपूणां छिद्राणि ॥ ६ ॥

---

(१) वानरपतिना इति वा पाठः ।

जग्राह कार्मुकं श्रेष्ठमन्यद्भीमपराक्रमः ।
रामपादावुपस्पृश्य हृष्टः सौमित्रिरब्रवीत् ॥ ७ ॥
अद्य मत्कार्मुकोन्मुक्ताः शरा निर्भिद्य रावणिम् ।
गमिष्यन्ति हि पातालं स्नातुं भोगवतीजले ॥ ८ ॥
एवमुक्त्वा स सौमित्रिः परिक्रम्य प्रणम्य तम् ।
इन्द्रजिन्निधनाकाङ्क्षी ययौ त्वरितविक्रमः ॥ ९ ॥
वानरैर्बहुसाहस्रैर्हनूमान् पृष्ठतोऽन्वगात् ।
विभीषणश्च सहितो मन्त्रिभिस्त्वरितं ययौ ॥ १० ॥
जाम्बवत्प्रमुखा ऋक्षाः सौमित्रिं त्वरयान्वगुः ।
गत्वा निकुम्भिलादेशं लक्ष्मणो वानरैः सह ॥ ११ ॥
अपश्यद् बलसङ्घातं दूराद्राक्षससङ्कुलम् ।
धनुरायस्य सौमित्रिर्यत्तोऽभूद्भूरिविक्रमः ॥ १२ ॥
अङ्गदेन च वीरेण जाम्बवान् राक्षसाधिपः ।
तदा विभीषणः प्राह सौमित्रिं पश्य राक्षसान् ॥ १३ ॥
यदेतद्राक्षसानीकं मेघश्यामं विलोक्यते ।
अस्यानीकस्य(१)महतो भेदने यत्नवान् भव ॥ १४ ॥

स्पृश्येति आर्षं स्पृष्ट्वा इत्यर्थः ॥ ७ ॥
भोगवती पातालगङ्गा ॥ ८ ॥
संख्यावाचकः स्वतः सन्निवार्य तं रामम् ॥ ९–११ ॥
बलसङ्घातम् इन्द्रजिद्रक्षणार्थं स्थितं राक्षससङ्कुलं राक्षसव्याप्तम् ।
अङ्गदेन वीरेण जाम्बवान् यत्तोऽभूदित्यनुकर्षः राक्षसाधिप इत्युत्तरार्द्धस्य विभीषणाश्रयि राक्षसान् इन्द्रजिद्रक्षकान् ॥ १२ । १४ ॥

(१) पद्मानीकस्य इति पाठान्तरम् ।

राक्षसेन्द्रसुतोऽप्यस्मिन् भिन्ने दृश्यो भविष्यति ।
अभिद्रवाशु यावद्वै नैतत्कर्म समाप्यते ॥ १५ ॥
जहि वीर ! दुरात्मानं हिंसापरमधार्मिकम् ।
विभीषणवचः श्रुत्वा लक्ष्मणः शुभलक्षणः ॥ १६ ॥
ववर्ष शरवर्षाणि राक्षसेन्द्रसुतं प्रति ।
पाषाणैः पर्वताग्रैश्च वृक्षैश्च हरियूथपाः ॥ १७ ॥
निजघ्नुः सर्वतो दैत्यान् तेऽपि वानरयूथपान् ।
परश्वधैः सितैर्बाणैरसिभिर्यष्टितोमरैः ॥ १८ ॥
निजघ्नुर्वानरानीकं तदा शब्दो महानभूत् ।
स संप्रहारस्तुमुलः संजज्ञे हरिरक्षसाम् ॥ १९ ॥
इन्द्रजित् स्वबलं सर्वमर्द्यमानं विलोक्य सः ।
निकुम्भिलाञ्च होमञ्च त्यक्त्वा शीघ्रं विनिर्गतः ॥ २० ॥
रथमारुह्य सधनुः क्रोधेन महतागमत् ।
समाह्वयित्वा सौमित्रिं (१) युद्धाय रथमूर्द्धनि ॥ २१ ॥

अस्मिन् रक्षोऽनीके भिन्ने त्वच्छरभेदेन पलायिते एतत्कर्म इन्द्रजिद्धवनकर्म ॥ १६ ॥

राक्षसेन्द्रसुतं प्रति तल्लक्ष्यीकृत्य प्रतीत्यर्थः ॥ १७ ॥

ते राक्षसाः ॥ १८ ॥

शब्दः शूराणां सिंहनादरूपः ॥ १९ ॥

निकुम्भिलां च होमं चेति केवलं कर्मत्याग एव न किन्तु तद्देशत्यागोऽपीत्यर्थः ॥ २० ॥

महता क्रोधेन युक्तो युद्धाय सौमित्रिं सम्यक्समाह्वयित्वा रथमूर्द्धनि रथमूलमध्यभागम् अगमत् प्राप्तः छान्दसत्वात् आर्षः ॥ २१ ॥

---

(१) समर्थयित्वा समरे इत्यपि पाठः ।

सौमित्रे ! मेघनादोऽहं मया जीवन्न मोक्ष्यसे ।
तत्र दृष्ट्वा पितृव्यं स प्राह निष्ठुरभाषणम् ॥ २२ ॥
इहैव जातः संवृद्धः साक्षाद्भ्राता पितुर्मम ।
स त्वं स्वजनमुत्सृज्य परभृत्यत्वमागतः ॥ २३ ॥
कथं द्रुह्यसि पुत्राय ? पापीयानसि दुर्मतिः ।
इत्युक्त्वा लक्ष्मणं दृष्ट्वा हनूमत्पृष्ठतः स्थितम् ॥ २४ ॥
उद्यदायुधनिस्त्रिंशे रथे महति संस्थितः ।
महाप्रमाणमुद्यम्य घोरं विस्फारयन् धनुः ॥ २५ ॥
अद्य वो मामका बाणाः प्राणान् पास्यन्ति वानराः ! ।
ततः शरं दाशरथिः सन्धायामित्रकर्षणः ॥ २६ ॥
ससर्ज राक्षसेन्द्राय क्रुद्धः सर्प इव श्वसन् ।
इन्द्रजिद्रक्तनयनो लक्ष्मणं समुदैक्षत ॥ २७ ॥
शक्राशनिसमस्पर्शैर्लक्ष्मणेनाहतः शरैः ।
मुहूर्त्तमभवन्मूढः पुनः प्रत्याहृतेन्द्रियः ॥ २८ ॥

समाह्वयन्नाह सौमित्रे इति निष्ठुरभाषणं निष्ठुरवाक्यम् ॥ २२ ॥
परभृत्यत्वमागत इत्यस्मादहं त्वां धिगिति शेषः ॥ २३ ॥
द्रुह्यसि मदीयं छिद्रं शत्रुभ्यो दर्शयसीत्यर्थः पृष्ठतः "सार्वविभक्तिकस्तसिः" षष्ठी इत्यर्थः ॥ २४ ॥
उद्यन्ति प्रकाशं स्थितानि आयुधानि निस्त्रिंशाश्च यस्मिन् तादृशे रथे इत्यर्थः महाप्रमाणं सार्धहस्तवितस्ति ॥ २५ ॥
भो वानरा युष्माकं प्राणान्मम बाणाः पास्यन्ति इति अवददिति शेषः दाशरथिर्लक्ष्मणः ॥ २६ ॥
इन्द्रजित् क्रोधाद्रक्तनयनो बाणपातसमकालं लक्ष्मणमपश्यत् ॥ २७ ॥
ततः शरैराहतः पीडितो मूढः मूर्च्छितः अभवत् प्रत्याहृतेन्द्रियः प्राप्तेन्द्रियज्ञानः पुनर्व्यपगतमूर्च्छोऽभवदिति यावत् ॥ २८ ॥

ददर्शावस्थितं वीरं वीरो दशरथात्मजम् ।
सोऽभिचक्राम सौमित्रिं क्रोधसंरक्तलोचनः ॥ २९ ॥
शरान् धनुषि सन्धाय लक्ष्मणं चेदमब्रवीत् ।
यदि ते प्रथमे युद्धे न दृष्टो मे पराक्रमः ॥ ३० ॥
अद्य त्वां दर्शयिष्यामि तिष्ठेदानीं व्यवस्थितः ।
इत्युक्त्वा सप्तभिर्बाणैरभिविव्याध लक्ष्मणम् ॥ ३१ ॥
दशभिश्च हनूमन्तं तीक्ष्णधारैः शरोत्तमैः ।
ततः शरशतेनैव संप्रयुक्तेन वीर्यवान् ॥ ३२ ॥
क्रोधद्विगुणसंरब्धो निर्बिभेद विभीषणम् ।
लक्ष्मणोऽपि तथा शत्रुं शरवर्षैरवाकिरत् ॥ ३३ ॥
तस्य बाणैः सुसंविद्धं कवचं काञ्चनप्रभम् ।
व्यशीर्यत रथोपस्थे तिलशः पतितं भुवि ॥ ३४ ॥
ततः शरसहस्रेण संक्रुद्धो रावणात्मजः ।
बिभेद समरे वीरं लक्ष्मणं भीमविक्रमम् ॥ ३५ ॥
व्यशीर्यतापतद्दिव्यं कवचं लक्ष्मणस्य च ।
कृतप्रतिकृतान्योऽन्यं बभूवतुरभिद्रुतौ ॥ ३६ ॥
अभीक्ष्णं निश्वसन्तौ तौ युद्धे तां तुमुलं पुनः ।

सौमित्रिमभिचक्राम तत्संमुखं जगामेत्यर्थः ॥ २९—३१ ॥

संप्रयुक्तेन धनुषः सकाशात् प्रेरितेन ॥ ३२ । ३३ ॥

सुसंविद्धं सुतरां सम्यक् विद्धं रथमध्ये विशीर्णं तत्र पुनर्बाणैस्तिलशः खण्डितं भुवि पतितम् ॥ ३४ । ३५ ॥

दिव्यमपि लक्ष्मणस्य कवचं तद्बाणैर्व्यशीर्यतापतच्च अन्योऽन्यं कृतप्रतिकृतौ कृते प्रतिकृतं याभ्यां तादृशौ बभूवतुरित्यर्थः ॥ २६ ॥

शरसंवृतसर्वाङ्गौ सर्वतो रुधिरोक्षितौ ॥ ३७ ॥
सुदीर्घकालं तौ वीरावन्योऽन्यं निशितैः शरैः ।
अयुध्येतां महासत्त्वौ जयाजयविवर्ज्जितौ ॥ ३८ ॥
एतस्मिन्नन्तरे वीरो लक्ष्मणः पञ्चभिः शरैः ।
रावणेः सारथिं साश्वं रथं च समचूर्णयत् ॥ ३९ ॥
चिच्छेद कार्मुकं तस्य दर्शयन् हस्तलाघवम् ।
सोऽन्यत्तु कार्मुकं भद्रं सज्यं चक्रे त्वरान्वितः ॥ ४० ॥
तच्चापमपि चिच्छेद लक्ष्मणस्त्रिभिराशुगैः ।
तमेव च्छिन्नधन्वानं विव्याधानेकसायकैः ॥ ४१ ॥
पुनरन्यत् समादाय कार्मुकं भीमविक्रमः ।
इन्द्रजिल्लक्ष्मणं बाणैः शतैरादित्यसन्निभैः ॥ ४२ ॥
विभेद वानरान् सर्वान् बाणैरापूरयन् दिशः ।
तत ऐन्द्रं समादाय लक्ष्मणो रावणिं प्रति ॥ ४३ ॥
सन्धायाकृष्य कर्णान्तं कार्मुकं दृढनिष्ठुरम् ।
उवाच लक्ष्मणो वीरः स्मरन् रामपदाम्बुजम् ॥ ४४ ॥
धर्म्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि ।
त्रिलोक्यामप्रतिद्वन्द्वस्तदेनं जहि रावणिम् ॥ ४५ ॥
इत्युक्त्वा बाणमाकर्णादिकृष्य तमजिह्मगम् ।
लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति ॥ ४६ ॥

उक्तं चत्वाश्चर्यं दृष्टृभिर्विस्मिय श्लाघमयक्यं च ॥ ३७ ॥
जयाजयविवर्ज्जितावित्यनेन समयुद्धतोक्ता ॥ ३८—४२ ॥
ऐन्द्रं ऐन्द्रास्त्राभिमन्त्रितं यद्वा अगस्त्यद्वारा इन्द्रदत्तं तूणीरा-
द्रामेण दत्तमित्यर्थः ॥ ४३—४५ ॥

सशरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् ।
प्रमथ्येन्द्रजितः कायात् पातयामास भूतले ॥ ४७ ॥
ततः प्रमुदिता देवाः कीर्त्तयन्तो रघूत्तमम् ।
ववर्षुः पुष्पवर्षाणि स्तुवन्तश्च मुहुर्मुहुः ॥ ४८ ॥
जहर्ष शक्रो भगवान् सह देवैर्महर्षिभिः ।
आकाशेऽपि च देवानां शुश्रुवे दुन्दुभिस्वनः ॥ ४९ ॥
विमलं गगनं चासीत् स्थिराभूद्विश्वधारिणी ।
निहतं रावणिं दृष्ट्वा जयजल्पसमन्वितः ॥ ५० ॥
गतश्रमः स सौमित्रिः शङ्खमापूरयद्रवे ।
सिंहनादं ततः कृत्वा ज्याघ्रष्टमकरोद्विभुः ॥ ५१ ॥
तेन नादेन संहृष्टा वानराश्च गतश्रमाः ।
वानरेन्द्रैश्च सहितः स्तुवद्भिर्हृष्टमानसैः ॥ ५२ ॥
लक्ष्मणः परितुष्टात्मा ददर्शाभ्येत्य राघवम् ।
हनूमद्राक्षसाभ्यां च सहितो विनयान्वितः ॥ ५३ ॥
ववन्दे भ्रातरं रामं ज्येष्ठं नारायणं विभुम् ।
त्वत्प्रसादाद्रघुश्रेष्ठ ! हतो रावणिराहवे ॥ ५४ ॥
श्रुत्वा तल्लक्ष्मणाद्वाक्यं तमालिङ्ग्य रघूत्तमः ।

तं बाणं ऐन्द्रास्त्रम् ॥ ४६ । ४७ ॥

रघूत्तमं कीर्त्तयन्तः तत्र चानु कीर्त्तयन्तः तैरेव स्तुवन्तश्चेत्यर्थः ॥ ४८ । ४९ ॥

स्थिराभूत् तावत्पर्यन्तं राक्षसभारेण कम्पमानैवासीदिति व्यङ्ग्यं जयजल्पः हृष्टो जयशब्दः ॥ ५० । ५१ ॥

गतश्रमा आसन्निति शेषः स्तुवद्भिर्लक्ष्मणमिति शेषः ॥ ५२ ॥

राक्षसो विभीषणः ॥ ५३ । ५४ ॥

मूर्ध्न्यवघ्राय मुदितः सस्नेहमिदमब्रवीत् ॥ ५५ ॥
साधु लक्ष्मण ! तुष्टोऽस्मि कर्म ते दुष्करं कृतम् ।
मेघनादस्य निधने जितं सर्वमरिन्दम ! ॥ ५६ ॥
अहोरात्रैस्त्रिभिर्वीरः कथञ्चिद्विनिपातितः ।
निःसपत्नः कृतोऽस्म्यद्य निर्यास्यति हि रावणः ॥ ५७ ॥
पुत्रशोकान्मया योद्धुं तं हनिष्यामि रावणम् ।
मेघनादं हतं श्रुत्वा लक्ष्मणेन महाबलम् ॥ ५८ ॥
रावणः पतितो भूमौ मूर्च्छितः पुनरुत्थितः ।
विललापातिदीनात्मा पुत्रशोकेन रावणः ॥ ५९ ॥
पुत्रस्य गुणकर्माणि संस्मरन् पर्यदेवयत् ।
अद्य देवगणाः सर्वे लोकपाला महर्षयः ॥ ६० ॥
हतमिन्द्रजितं ज्ञात्वा सुखं स्वप्स्यन्ति निर्भयाः ।
इत्यादिबहुशः पुत्रलालसो विललाप ह ॥ ६१ ॥
ततः परमसंक्रुद्धो रावणो राक्षसाधिपः ।
उवाच राक्षसान् सर्वान् निनाशयिषुराहवे ॥ ६२ ॥
स पुत्रवधसन्तप्तः शूरः क्रोधवशं गतः ।
संवीक्ष्य रावणो बुद्ध्या हन्तुं सीतां प्रदुद्रुवे ॥ ६३ ॥

लक्ष्मणात्तत् इन्द्रजिन्निधनं श्रुत्वेत्यर्थः ॥ ५५ ॥
सर्वराक्षसकुलम् ॥ ५६ । ५७ ॥
मया योद्धुं निर्यास्यतीत्यन्वयः ॥ ५८ । ५९ ॥
पर्यदेवयत् शोकं कृतवानित्यर्थः ॥ ६० ॥
पुत्रलालसः पुत्रे लालसा प्रीतिर्यस्य सः ॥ ६१ ॥
सर्वान् राक्षसान् निनाशयिषुरभिहन्तुमिच्छुराहवे युद्धाय गच्छन्निति-
शेषः ॥ ६२ ॥

खड्गपाणिमथायान्तं क्रुद्धं दृष्ट्वा दशाननम् ।
राक्षसीमध्यगा सीता भयशोकाकुलाभवत् ॥ ६४ ॥
एतस्मिन्नन्तरे तस्य सचिवो बुद्धिमान् शुचिः ।
सुपार्श्वो नाम मेधावी रावणं वाक्यमब्रवीत् ॥ ६५ ॥
ननु नाम दशग्रीव ! साक्षाद्वैश्रवणानुजः ।
वेदविद्याव्रतस्नातः स्वकर्मपरिनिष्ठितः ॥ ६६ ॥
अनेकगुणसम्पन्नः कथं स्त्रीवधमिच्छसि ? ।
अस्माभिः सहितो युद्धे हत्वा रामं च लक्ष्मणम् ।
प्राप्स्यसे जानकीं शीघ्रमित्युक्तः स न्यवर्तत ॥ ६७ ॥

ततो दुरात्मा सुहृदा निवेदितं
वचः सुधर्म्यं प्रतिगृह्य रावणः ।
गृहं जगामाशु शुचा विमूढधीः
पुनः सभां च प्रययौ सुहृद्वृतः ॥ ६८ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
नवमः सर्गः ।

शुचा संवीक्ष्य सीतानाशे रामनाश इति विचार्येत्यर्थः ॥ ६१–६६॥
हे दशग्रीव वैश्रवणानुजत्वादिभिर्ननु नाम अतिशयेन प्रसिद्धः कथं स्त्रीवधमिच्छसीत्यन्वयः ॥ ६६ ॥
इति सुपार्श्वेनोक्तः स रावणो न्यवर्तत निवृत्तः ॥ ६७ ॥
शुचा शोकेन विमूढधीः सभागमनमेव तदवसरे युक्तम् तस्य गृहगमनं निमोहः ॥ ६८ ॥

इति श्रीमद्ब्रह्मराजर्षि० श्रीरामवर्मणः कृताव-
ध्यात्मरामायणे सेतौ युद्धकाण्डे
नवमः सर्गः ।

अथ दशमः सर्गः ।

स विचार्य सभामध्ये राक्षसैः सह मन्त्रिभिः ।
निर्य्ययौ येऽवशिष्टास्तै राक्षसैः सह राघवम्(१) ॥ १ ॥
शलभः शलभैर्युक्तः प्रज्वलन्तमिवानलम् ।
ततो रामेण निहताः सर्वे ते राक्षसा युधि ॥ २ ॥
स्वयं रामेण निहतस्तीक्ष्णबाणेन वक्षसि ।
व्यथितस्त्वरितं लङ्कां प्रविवेश दशाननः ॥ ३ ॥
दृष्ट्वा रामस्य बहुशः पौरुषं चाप्यमानुषम् ।
रावणो मारुतेश्चैव शीघ्रं शुक्रान्तिकं ययौ ॥ ४ ॥
नमस्कृत्य दशग्रीवः शुक्रं प्राञ्जलिरब्रवीत् ।
भगवन् ! राघवेणैवं लङ्का राक्षसयूथपैः ॥ ५ ॥
विनाशिता महादैत्या निहताः पुत्रबान्धवाः ।
कथं मे दुःखसन्दोहस्त्वयि तिष्ठति सद्गुरौ ? ॥ ६ ॥
इति विज्ञापितो दैत्यगुरुः प्राह दशाननम् ।
होमं कुरु प्रयत्नेन रहसि त्वं दशानन ! ॥ ७ ॥
यदि विघ्नो न चेद्धोमे तर्हि होमानलोत्थितः ॥ ८ ॥
महान् रथश्च वाहाश्च चापतूणीरसायकाः ।

॥ १ । २ । ३ ॥
चापी पादपूरणे मारुतेश्च पौरुषं दृष्ट्वेति सम्बन्धः ॥ ४ ॥
एवं प्रकारेण राक्षसयूथपैः सह लङ्का विनाशितेत्यन्वयः ॥ ५ ॥
तदेवाह महादैत्या इत्यादि दुःखसन्दोहो दुःखसमूहः ॥ ६—८ ॥

(१) निर्ययौ राक्षसो रामं शिष्टैश्च सह राक्षसैः इति पाठान्तरम् ।

सम्भविष्यन्ति तेयुक्तस्त्वमजेयो भविष्यसि ॥ ९ ॥
गृहाण मन्त्रान्मद्दत्तान् गच्छ होमं कुरु द्रुतम्।
इत्युक्तस्त्वरितं गत्वा रावणो राक्षसाधिपः ॥ १० ॥
गुहां पातालसदृशीं मन्दिरे स्वे चकार ह।
लङ्काद्वारकपाटादिबद्ध्वा सर्वत्र यत्नतः ॥ ११ ॥
होमद्रव्याणि सम्पाद्य यान्युक्तान्याभिचारिके।
गुहां प्रविश्य चैकान्ते मौनी होमं प्रचक्रमे ॥१२॥
उत्थितं धूममालोक्य महात्मा रावणानुजः।
रामाय दर्शयामास होमधूमं भयाकुलः ॥ १३ ॥
पश्य राम! दशग्रीवो होमं कर्त्तुं समारभत्।
यदि होमः समाप्तः स्यात्तदाजेयो भविष्यति ॥ १४ ॥
अतो विघ्नाय होमस्य प्रेषयाशु हरीश्वरान्।
तथेति रामः सुग्रीवसम्मतेनाङ्गदं कपिम् ॥ १५ ॥
हनूमत्प्रमुखान् वीरान् आदिदेश महाबलान्।
प्राकारं लङ्घयित्वा ते गत्वा रावणमन्दिरम् ॥ १६ ॥
दशकोट्यः प्लवङ्गानां गत्वा मन्दिररक्षकान्।
चूर्णयामासुरश्वांश्च गजांश्च न्यहनन् क्षणात् ॥ १७ ॥
ततश्च सरमा नाम प्रभाते हस्तसंज्ञया।

तूष्णीरक्षकाः तूष्णीरस्थिताः वायका दूतवर्गः सम्भविष्यन्ति त्वां अन्यत्र प्राप्स्यन्ति ॥९।१०॥

सर्वत्र सर्व्वदिक्षु आदिमा अन्यान्यपि छिद्राणि ॥ ११ । १२ ॥

रावणानुजो विभीषणः ॥ १३ ॥

समारभत् आरब्धवान् अजेय इति च्छेदः ॥ १४—१७ ॥

विभीषणस्य भार्या सा होमस्थानमसूचयत् ॥ १८ ॥
गुहापिधानपाषाणमङ्गदः पादघट्टनैः।
चूर्णयित्वा महासत्त्वः प्रविवेश महागुहाम् ॥ १९ ॥
दृष्ट्वा दशाननं तत्र मीलिताक्षं दृढासनम्।
ततोऽङ्गदाज्ञया सर्वे वानरा विविशुर्द्रुतम् ॥ २० ॥
तत्र कोलाहलं चक्रुस्ताडयन्तश्च सेवकान्।
सम्भारांश्चिक्षिपुस्तत्र होमकुण्डे समन्ततः ॥ २१ ॥
स्रुवमाच्छिद्य हस्ताच्च रावणस्य बलाद्रुषा।
तेनैव सञ्जघानाशु हनूमान् प्लवगाग्रणीः ॥ २२ ॥
अन्ति दृन्तैश्च काष्ठैश्च वानराश्चमितस्ततः।
न जहौ रावणो ध्यानं हतोऽपि विजिगीषया ॥ २३ ॥
प्रविश्यान्तःपुरे वेश्मन्यङ्गदो वेगवत्तरः।
समानयत् केशबन्धे धृत्वा मन्दोदरीं शुभाम् ॥ २४ ॥
रावणस्यैव पुरतो विलपन्तीमनाथवत्।
विददाराङ्गदस्तस्याः कञ्चुकं रत्नभूषितम् ॥ २५ ॥
मुक्ता विमुक्ताः पतिताः समन्ताद्रत्नसञ्चयैः।
श्रोणिसूत्रं निपतितं त्रुटितं रत्नचित्रितम् ॥ २६ ॥

विभीषणस्य भार्या सरमा नाम इसंज्ञया होमस्थानमसूचयत् ज्ञापितवती ॥ १८ ॥
पादघट्टनैः पादाघातैः ॥ १९ । २० ॥
सम्भारान् होमसाधनानि ॥ २१ ॥
हनूमान् स्रुवमाच्छिद्य तेनैव जघान ॥ २२—२४ ॥
विददार नखैः विदीर्णं कृतवान् ॥ २५ ॥
ततः कञ्चुकाद्विच्युता विभक्ता मुक्ताः रत्नसञ्चयैस्ततो विभक्तैः सह

कटिप्रदेशाद्विस्रस्ता नीवी तस्यैव पश्यतः ।
भूषणानि च सर्वाणि पतितानि समन्ततः ॥ २७ ॥
देवगन्धर्वकन्याश्च नीता हृष्टैः प्लवङ्गमैः ।
मन्दोदरी रुरोदाथ रावणस्याग्रतो भृशम् ॥ २८ ॥
क्रोशन्ती करुणं दीना जगाद दशकन्धरम् ।
निर्लज्जोऽसि परैरेवं केशपाशे विकृष्यते ॥ २९ ॥
भार्य्या तवैव पुरतः किं जुहोषि न लज्जसे ? ।
हन्यते पश्यतो यस्य भार्य्या पापैश्च शत्रुभिः ॥ ३० ॥
मर्त्तव्यं तेन तत्रैव जीवितान्मरणं वरम् ।
हा मेघनाद ! ते माता क्लिश्यते बत वानरैः ॥ ३१ ॥
त्वयि जीवति मे दुःखमीदृशं च कथं भवेत् ? ।
भार्य्या लज्जा च सन्त्यक्ता भर्त्रा मे जीविताशया ॥ ३२ ॥
श्रुत्वा तद्देवितं राजा मन्दोदर्य्या दशाननः ।
उत्तस्थौ खड्गमादाय त्यज देवीमिति ब्रुवन् ॥ ३३ ॥
जघानाङ्गदमव्यग्रः कटिदेशे दशाननः ।

भूमौ पतिता इत्यर्थः त्रुटितं वानराणामाकर्षणेन भग्नम् ॥ २६ ॥

तस्य रावणस्य पश्यत एवेत्यर्थः ॥ २७ ॥

नीता रावणहोमस्थानमिति शेषः ॥ २८ ॥

करुणं यथा स्यात्तथा क्रोशन्ती जगादेत्यन्वयः त्वं निर्लज्जोऽसि यत्तव भार्य्या तवैवाग्रे परैर्वानरैः केशपाशे धृत्वा विकृष्यते च ॥ २९ ॥

अतः किं जुहोषि किञ्च लज्जसे तदेवाह हन्यते पश्यत इत्यादि ॥ ३० । ३१ ॥

त्वयि जीवति ईदृशं दुःखं भवेत् न भवेदेव त्वत्त्यागात्तु मे इदं दुःखं प्राप्तं च पादपूरणे मे भर्त्रा जीविताशया भार्य्या लज्जा चेत्युभयमपि त्यक्तमित्यर्थः ॥ ३२ । ३३ ॥

ततोत्सृज्य ययुः सर्वे विध्वंस्य द्रुवनं महत् ॥ २४ ॥
रामपार्श्वमुपागम्य तस्थुः सर्वे प्रहर्षिताः।
राघवस्तु ततो भार्य्यामुवाच परिसान्त्वयन् ॥ २५ ॥
दैवाधीनमिदं भद्रे! जीवता किन्न दृश्यते?।
त्यज शोकं विशालाक्षि! ज्ञानमालम्ब्य निश्चितम्॥२६॥
अज्ञानप्रभवः शोकः शोको ज्ञानविनाशकृत्।
अज्ञानप्रभवाहंधीः शरीरादिष्वनात्मसु ॥ २७ ॥
तन्मूलः पुत्रदारादिसम्बन्धः संसृतिस्ततः।
हर्षशोकभयक्रोधलोभमोहस्पृहादयः ॥ २८ ॥
अज्ञानप्रभवा ह्येते जन्ममृत्युजरादयः (१)।

ततोत्सृज्य तत्र उत्सृज्येति च्छेदः आर्षः सन्धिः महत् महाफलजनकं द्रुवनमित्यर्थः ॥ २४ ॥ २५

जीवता प्राणिना किं न दृश्यते असम्भावितमपि दृश्यत इत्यर्थः ततो ममेदृग्व्यवस्थेति शोकं त्यज ज्ञानं भावि दुर्व्यक्रमिति ज्ञानम् ॥ २६ ॥

अज्ञानकृतस्य वस्तुनो ज्ञानेन नाश इति वेदुर्वेभिरमज्ञानकृतमेवेत्याहाज्ञानेति अतएव कर्त्तव्याकर्त्तव्यविषयज्ञाननाशकोऽतः सर्वथा ज्ञानालम्बेन यन्त्यक्तुं शक्य इति भावः किं बहुना सर्वः संसार एवाज्ञानमूलकस्तन्मूलस्य शरीरादिष्वहंज्ञानस्याज्ञानप्रभवत्वादित्याहाज्ञानप्रभवेति ॥ २७ ॥

पुत्रदारादिसम्बन्ध एते मदीया इत्यध्यासः ततः संसृतिः जन्मकर्मोत्पत्तिः एवं हर्षादयो जन्माद्याश्चाज्ञानमूलाः तत्तज्जनककर्मणामज्ञानजन्यत्वात् इदं लब्धमिति हर्षजनकस्येदं मे नष्टमिति शोकजनकस्यायं वे हन्तेत्यादिभयादिजनकज्ञानस्याज्ञानमूलकत्वाच्च ॥ २८ ॥

---

(१) मोहमदादय इत्यपि पठनीयम्।

आत्मा तु केवलः शुद्धो व्यतिरिक्तो ह्यलेपकः ॥ ३९ ॥
आनन्दरूपो ह्यात्मा सर्वभावविवर्जितः ।
न संयोगो वियोगो वा विद्यते केनचित् सतः ॥ ४० ॥
एवं ज्ञात्वा स्वमात्मानं त्यज शोकमनिन्दिते ! ।
इदानीमेव गच्छामि हत्वा रामं सलक्ष्मणम् ॥ ४१ ॥
आगमिष्यामि नो चेत्मां दारयिष्यति सायकैः ।
श्रीरामो वज्रकल्पैश्च ततो गच्छामि तत्पदम् ॥ ४२ ॥
तदा त्वया मे कर्तव्या क्रिया मच्छासनात्प्रिये ! ।
सीतां हत्वा मया सार्धं त्वं प्रवेक्ष्यसि पावकम् ॥ ४३ ॥
एवं श्रुत्वा वचस्तस्य रावणस्यातिदुःखिता ।
उवाच नाथ ! मे वाक्यं शृणु सत्यं तथा कुरु ॥ ४४ ॥
अजेयो न राघवो जेतुं त्वया चान्यैः कदाचन ।
रामो देववरः(१) साक्षात् प्रधानपुरुषेश्वरः ॥ ४५ ॥

आत्मना तु वास्तवो न केनापि सम्बन्ध इत्याह आत्मा त्विति द्वाभ्यां व्याख्यातमेतत् ॥ ३९ ॥

सर्वभावैः सुखदुःखैर्विवर्जितः तदेवाह न संयोग इति तद्बुद्धिरेव युक्ततया हर्षशोकादिकरणमिति भावः ॥ ४० ॥ ४१ ॥

दारयिष्यति दारणेन नाशयिष्यतीत्यर्थः वज्रकल्पैः सायकैर्दारयिष्यतीत्यन्वयः ततस्तत्पदं सर्वोत्तमं स्थानं वैकुण्ठं गमिष्यामि ॥ ४२ ॥

सीतां हत्वा त्वया मे क्रिया सपिण्डीकरणान्ता कर्त्तव्या 'पुत्त्राभावे पत्नी स्यात्' इति स्मृतेः यद्वा मया सार्द्धं पावकं प्रवेक्ष्यसि सत्यामिच्छायामिति शेषः ॥ ४३ ॥

सत्यं वाक्यं शृणु तथा कुरु न मद्वाक्यार्थमतुलितं चेत्यर्थः ॥४४॥

प्रधानस्य प्रकृतेः पुरुषाणां जीवानां चेश्वरः नियन्ता ॥४५॥

---

(१) रामो नारायणः इति पाठान्तरम् ।

मत्स्यो भूत्वा पुरा कल्पे मनुं वैवस्वतं प्रभुः ।
ररक्ष सकलापद्भ्यो राघवो भक्तवत्सलः ॥ ४६ ॥
रामः कूर्मोऽभवत्पूर्वं लक्षयोजनविस्तृतः ।
समुद्रमथने पृष्ठे दधार कनकाचलम् ॥ ४७ ॥
हिरण्याक्षोऽतिदुर्वृत्तो हतोऽनेन महात्मना ।
क्रोड़रूपेण वपुषा क्षौणीमुद्धरता क्वचित् ॥ ४८ ॥
त्रिलोककण्टकं दैत्यं हिरण्यकशिपुं पुरा ।
हतवान्नारसिंहेन वपुषा रघुनन्दनः ॥ ४९ ॥
विक्रमैस्त्रिभिरेवासौ बलिं बद्धा जगत्त्रयम् ।
आक्रम्यादात् सुरेन्द्राय भृत्याय(१) रघुसत्तमः ॥ ५० ॥
राक्षसाः क्षत्रियाकारा जाता भूमेर्भारावहाः ।
तान् हत्वा बहुशो रामो भुवं जित्वा ददात्मनेः ॥ ५१ ॥
स एव साम्प्रतं जातो(२( रघुवंशे परात्परः ।
भवदर्थे रघुश्रेष्ठो मानुषत्वमुपागतः ॥ ५२ ॥
तस्य भार्या किमर्थं वा हृता सीता वनाद्बलात् ? ।
मम पुत्त्रविनाशार्थं स्वस्यापि निधनाय च (३) ॥ ५३ ॥

तदेव बोधयन्ती तदवतारानाह मत्स्य इति द्वेऽन्नपुराणे प्रसिद्धम् ॥ ४६ । ४७ ॥

क्रोडरूपेण वाराहरूपेण ॥ ४८ । ४९ ॥

जगत्त्रयमाक्रम्य पादैरिति शेषः ॥ ५० ॥

रामः परशुरामः मुनेः कश्यपस्य ॥ ५१ ॥

भवदर्थे भवन्नाशार्थम् ॥ ५२ । ५३ ॥

---

(१) त्रिदिवं इत्यपि पठनीयः । (२) साम्प्रतं रामो इति वा पाठः ।
(३) तत्रापि निधनाय च इति केचित् पठन्ति ।

दूतः परं वा वैदेहीं प्रेषयस्व रघूत्तमे ।
विभीषणाय राज्यं तु दत्त्वा गच्छामहे वनम् ॥ ५४ ।
मन्दोदरीवचः श्रुत्वा रावणो वाक्यमब्रवीत् ।
कथं भद्रे ! रणे पुत्रान् भ्रातॄन्(१)राक्षसमण्डलम् ॥५५॥
घातयित्वा राघवेण जीवामि वनगोचरः ? ।
रामेण सह योत्स्यामि रामबाणैः सुशीघ्रगैः ॥ ५६ ॥
विदार्यमाणो यास्यामि तद्विष्णोः परमं पदम् ।
जानामि राघवं विष्णुं लक्ष्मीं जानामि जानकीम् ।
ज्ञात्वैव जानकी सीता मया नीता वनाद्बलात् ॥५७॥
रामेण निधनं प्राप्य यास्यामीति परं पदम् (२) ।
विमुच्य त्वां तु संसाराद्गमिष्यामि सह प्रिये । ॥५८॥
परानन्दमयी शुद्धा सेव्यते या मुमुक्षुभिः ।
तां गतिं तु गमिष्यामि हतो रामेण संयुगे ॥ ५९ ॥

रघूत्तमे तत्समीपमित्यर्थः ॥ ५४ । ५५ ॥

राघवेण घातयित्वा कथं जीवामि जीवने प्रियतावुद्धिं करोमि मरणस्य सन्निहितत्वाद्विपरीतबुद्धिं रावणस्याह रामेण सहेत्यादि जानामि राघवमिति च ॥ ५६ । ५७ ॥

रामेण निधनं प्राप्य परं पदं यास्यामीति ज्ञात्वैव जानकी मया-हृतेत्यन्वयः हे प्रिये! त्वां विमुच्य त्यक्त्वा संसाराद् स्वत्वोपि पश्चात् संसारं सन्त्यज्य सतीर्बन्धुभिः सह गमिष्यामि ॥ ५८ ॥

गम्यते प्राप्यते या गतिः स्थानं परानन्दमयी दुःखराहित्याद् ब्रह्म-लोकैकदेशवैकुण्ठरूपा शुद्धा रजस्तमोऽसंस्पृष्टसत्त्वमयी या मुमुक्षुभिः

---

(१) निहतान् इति पाठान्तरम् ।
(२) शुभं निजं इति वा पाठः ।

प्रक्षाल्य कल्मषाणीह मुक्तिं यास्यामि दुर्लभाम् ॥ ६० ॥

क्लेशादिपञ्चकतरङ्गयुतं भ्रमाढ्यं
दारात्मजाप्तधनबन्धुझषाभियुक्तम् ।
और्वानलाभनिजरोषमनङ्गजालं
संसारसागरमतीत्य हरिं व्रजामि ॥ ६१ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
दशमः सर्गः ।

सेत्स्यते इत्यनाद्युपायनाभिः प्राप्यते रामेण संयुगे हतस्त्वां गतिं गमिष्यामि ॥ ५९ ॥

इह कल्मषाणि राक्षसदेहेन कृतानि पापानि अन्तकाले रामनामस्मरणाद्राममूर्तिदर्शनाच्च प्रक्षाल्य दूरीकृत्य मुक्तिं यास्यामि ॥ ६० ॥

क्लेशादीति अविद्यास्मिता रागद्वेषाभिनिवेशाः पञ्चक्लेशा इति योगशास्त्रोक्ताः तत्राविद्या अनित्याशुचिदुःखरूपा नात्मसु नित्यशुचिसुखात्मत्वख्यातिः शुक्तिरजतादिज्ञानानि च अस्मिता शरीराद्व्यतिरिक्त आत्मा नास्तीत्येवं प्रत्ययः रागद्वेषौ प्रसिद्धौ अभिनिवेशो मरणादित्रासः तज्जन्याः स्थूलदेहत्व आदिपदग्राह्याः यासां ध्यानहेयत्वं योगशास्त्रे उक्तं तद्रूपास्तरङ्गा यत्र तं येन युतं तत्परिवर्तितरूपभ्रमेणाढ्यं दारादिरूपैर्झषैर्मत्स्यैर्युक्तं तत्तत्पापिनां रोष एवौर्वानलाभो यत्र शोषकत्वात्तं अनङ्गः कामस्तस्य जालं बन्धकत्वाद्यत्र तं कामेन हि तत्तद्विषये जनो बध्यते ॥ ६१ ॥

इति श्रीमत्सकलराजविपद्दूरयशसमर्थेनादिवि० श्रीरामवर्मणः
कृतौ श्रीमदध्यात्मरामायणसेतौ युद्धकाण्डे
दशमः सर्गः ।

अथ एकादशः सर्गः ।

इत्युक्त्वा वचनं प्रेम्णा राज्ञीं मन्दोदरीं तदा ।
रावणः प्रययौ योद्धुं रामेण सह संयुगे ॥ १ ॥
दृढं स्यन्दनमास्थाय वृतो घोरैर्निशाचरैः ।
चक्रैः षोडशभिर्युक्तं सवरूथं सकूबरम् ॥ २ ॥
पिशाचवदनैर्घोरैः खरैर्युक्तं भयावहम् ।
सर्वास्त्रशस्त्रसहितं सर्वोपस्करसंयुतम् ॥ ३ ॥
निश्चक्रामाथ सहसा रावणो भीषणाकृतिः ।
आयान्तं रावणं दृष्ट्वा भीषणं रणकर्कशम् ॥ ४ ॥
सन्त्रस्ताभूत्तदा सेना वानरी रामपालिता ॥ ५ ॥
हनूमानथ चोत्प्लुत्य रावणं योद्धुमाययौ ।
आगत्य हनुमान् रक्षोवक्षस्यतुलविक्रमः ॥ ६ ॥
मुष्टिबद्धं दृढं बद्ध्वा ताडयामास वेगतः ।
तेन मुष्टिप्रहारेण जानुभ्यामपतद्रथे ॥ ७ ॥
मूर्च्छितोऽथ मुहूर्त्तेन रावणः पुनरुत्थितः ।
उवाच च हनूमन्तं शूरोऽसि मम सम्मतः ॥ ८ ॥
हनूमानाह तं धिङ्मां यस्त्वं जीवसि रावण ! ।
त्वं तावन्मुष्टिना वक्षो मम ताडय रावण ! ॥ ९ ॥
पश्चान्मया हतः प्राणान्मोक्ष्यसे नात्र संशयः ।

इत्युक्त्वेति ॥ १ ॥
वरूथो रथगुप्तिः ॥ २ ॥
उपस्करो युद्धसामग्री ॥ ३ ॥
रणकर्कशं अतिनिर्दयम् ॥ ४–१२ ॥

तथेति मुष्टिना वज्री रावणेनापि ताडितः ॥ १० ॥
विघूर्णमाननयनः विचित्राम्बरमाययौ ।
संग्राममवाप्य कपिराट् रावणं हन्तुमुद्यतः ॥ ११ ॥
ततोऽन्यत्र गतो भीत्या रावणो राक्षसाधिपः ।
हनूमानङ्गदश्चैव नलो नीलस्तथैव च ॥ १२ ॥
चत्वारः समवेताग्रे दृष्ट्वा राक्षसपुङ्गवान् ।
अग्निवर्णं तथा सर्परोमाणं खड्गरोमकम् ॥ १३ ॥
तथा वृश्चिकरोमाणं निजघ्नुः क्रमशोऽसुरान् ।
चत्वारश्चतुरो हत्वा राक्षसान् भीमविक्रमान् ॥ १४ ॥
सिंहनादं पृथक् कृत्वा रामपार्श्वमुपागताः ।
ततः क्रुद्धो दशग्रीवः सन्दश्य दशनच्छदम् ॥ १५ ॥
विवृत्य नयने क्रूरो राममेवान्वधावत ।
दशग्रीवो रथस्थस्तु रामं वज्रोपमैः शरैः ॥ १६ ॥
आजघान महाघोरैर्धाराभिरिव तोयदः ।
रामस्य पुरतः सर्वान् वानरानपि विव्यधे ॥ १७ ॥
ततः पावनसङ्काशैः शरैः काञ्चनभूषणैः ।
अभ्यवर्षद्रणे रामो दशग्रीवं समाहितः ॥ १८ ॥
रथस्थं रावणं दृष्ट्वा भूमिष्ठं रघुनन्दनम् ।
आहूय मातलिं शक्रो वचनञ्चेदमब्रवीत् ॥ १९ ॥

समवेताग्रे इति च्छेदः सन्निरार्थः ॥ १३ । १४ ॥

पृथक् सिंहनादं कृत्वा प्रत्येकं सिंहनादं कृत्वेत्यर्थः दशनच्छदं ओष्ठम् ॥ १५ ॥

विवृत्य क्रोधवशाद्विस्तार्य ॥ १६ ॥

तोयदो धाराभिरिव पर्वतमिति शेषः विव्यधे व्यधयामास अन्तर्भावितण्यर्थः ॥ १७–१९ ॥

एवेन मम भूमिष्ठं शीघ्रं याहि रघूत्तमम्।
त्वरितं भूतलं गत्वा कुरु कार्यं ममानघ! ॥ २० ॥
एवमुक्तोऽथ तं नत्वा मातलिर्देवसारथिः।
ततो हयैश्च संयोज्य हरितैःस्यन्दनोत्तमम् ॥ २१ ॥
स्वर्गाज्जयार्थं रामस्य ह्युपचक्राम मातलिः।
अब्रवीच्च ततो राममप्रतर्क्यं रथे स्थितः।
प्राञ्जलिर्देवराजेन प्रेषितोऽस्मि रघूत्तम! ॥ २२ ॥
रथोऽयं देवराजस्य विजयाय तव प्रभो!।
प्रेषितश्च महाराज! धनुरैन्द्रं च भूषितम्॥ २३॥
अभेद्यं कवचं खड्गं दिव्यतूणीयुगं तथा।
आरुह्य च रथं राम! रावणं जहि राक्षसम्॥ २४ ॥
मया सारथिना देव! वृत्रं देवपतिर्यथा।
इत्युक्तस्तं परिक्रम्य नमस्कृत्य रथोत्तमम् ॥ २५ ॥
आरुरोह रथं रामो लोकान् लक्ष्म्या नियोजयन्।
ततोऽभवन्महायुद्धं भैरवं रोमहर्षणम्॥ २६ ॥
महात्मनो राघवस्य रावणस्य च धीमतः।

मम कार्यं रामस्य रथेन योजनरूपम् ॥ २० ॥

हरितैः हरितवर्णैः ॥ २१ ॥

उपचक्राम रामसमीपमाजगामेत्यर्थः अप्रतर्क्यं रथे अन्यैः सर्वैर-दृश्यरथे प्राञ्जलिरब्रवीदित्यन्वयः किमब्रवीत्तदाह देवराजेनेत्यादि ॥ २२ ॥

अयं देवराजस्य रथ इतिरूपबोधनं स च तव विजयाय तेन प्रेषितः ऐन्द्रं स्वीयं धनुश्च तेन प्रेषितम् ॥ २३—२५ ॥

लोकान् लक्ष्म्या नियोजयन् रावणवधसाध्यकार्यावधिरक्षणबोधने-नानन्दयन्नित्यर्थः ॥ २६—२८ ॥

आग्नेयेन च आग्नेयं दैवं दैवेन राघवः ॥ २७ ॥
अस्त्रं राक्षसराजस्य जघान परमास्त्रवित् ।
ततस्तु ससृजे घोरं राक्षसं चास्त्रमस्त्रवित् ॥ २८ ॥
क्रोधेन महताविष्टो रामस्योपरि रावणः ।
रावणस्य धनुर्मुक्ताः सर्पा भूत्वा महाविषाः ।
शराः काञ्चनपुङ्खाभा राघवं परितोऽपतन् ॥ २९ ॥
तैः शरैः सर्पवदनैर्वमद्भिरनलं मुखैः ।
दिशश्च विदिशश्चैव व्याप्तास्तत्र तदाभवन् ॥ ३० ॥
रामः सर्पांस्ततो दृष्ट्वा समन्तात्परिपूरितान् ।
सौपर्णमस्त्रं तद् घोरं पुरः प्रावर्तयद्रणे ॥ ३१ ॥
रामेण मुक्तास्ते बाणा भूत्वा गरुड़रूपिणः ।
चिच्छिदुः सर्पबाणांस्तान् समन्तात्सर्पशत्रवः । ॥३२॥
अस्त्रे प्रतिहते युद्धे रामेण दशकन्धरः ।
अभ्यवर्षत्ततो रामं घोराभिः शरवृष्टिभिः ॥ ३३ ॥
ततः पुनः शरानीकै राममक्लिष्टकारिणम् ।
अर्दयित्वा तु घोरेण मातलिं प्रत्यविध्यत ॥ ३४ ॥
पातयित्वा रथोपस्थे रथकेतुं च काञ्चनम् ।
ऐन्द्रानश्वानभ्यहनद्रावणः क्रोधमूर्च्छितः ॥ ३५ ॥

अनलमग्निम् ॥ ३० ॥
पुरः रावणसम्मुखे ॥ ३१–३२ ॥
घोरेण बाणेनेति शेषः ॥ ३४ ॥
रथोपस्थे रथकेतुं पातयित्वेत्यनेन तस्य केतपातादिवत् शरैर्भञ्जीकरणं विवक्षितं क्रोधमूर्च्छितः उच्छ्रितक्रोध इत्यर्थः ॥ ३५ ॥

विषेदुर्देवगन्धर्वाश्चारणाः पितरस्तथा।
आर्त्ताकारं हरिं दृष्ट्वा व्यथिताश्च महर्षयः॥ ३६॥
व्यथिता वानरेन्द्राश्च बभूवुः सविभीषणाः।
दशास्यो विंशतिभुजः प्रगृहीतशरासनः॥ ३७॥
ददृशे रावणस्तत्र मैनाक इव पर्वतः।
रामस्तु भ्रुकुटिं बद्ध्वा क्रोधसंरक्तलोचनः॥ ३८॥
कोपं चकार सदृशं निर्दहन्निव राक्षसम्।
धनुरादाय देवेन्द्रधनुराकारमद्भुतम्॥ ३९॥
गृहीत्वा पाणिना बाणं कालानलसमप्रभम्।
निर्दहन्निव चक्षुर्भ्यां ददृशे रिपुमन्तिके॥ ४०॥
पराक्रमं दर्शयितुं तेजसा प्रज्वलन्निव।
प्रचक्रमे कालरूपी सर्वलोकस्य पश्यतः॥ ४१॥
विकृष्य चापं रामस्तु रावणं प्रतिविध्य च।
हर्षयन् वानरानीकं कालान्तक इवाबभौ॥ ४२॥
क्रुद्धं रामस्य वदनं दृष्ट्वा युद्धं प्रधावतः।
तत्रसुः सर्वभूतानि चचाल च वसुन्धरा॥ ४३॥
रामं दृष्ट्वा महारौद्रमुत्पातांश्च सुदारुणान्।
त्रस्तानि सर्वभूतानि रावणं चाविशद्भयम्॥ ४४॥

आर्त्ताकारं आर्त्तसदृशाकारं अभिनीततदाकारं न तु वस्तुतस्तदाकारम्॥ ३६–३८॥

सदृशं कोपं आत्मनः सदृशं कोपं देवेन्द्रधनुर्वाकाशे दृश्यमानमिन्द्रधनुरिति ख्यातं तत्सदृशम्॥ ३९॥ (आत्मनेपदमार्षम्) ॥ ४०॥

कालरूपी रामस्तद्रूपमनुसन्धाय प्रचक्रमे रावणवधार्थमिति शेषः॥ ४१–४४॥

विमानस्थाः सुरगणाः सिद्धगन्धर्वकिन्नराः ।
ददृशुः सुमहायुद्धं लोकसम्वर्त्तकोपमम् ।
ऐन्द्रमस्त्रं समादाय रावणस्य शिरोऽच्छिनत् ॥ ४५ ॥
मूर्द्धानो रावणस्याथ बहवो रुधिरोक्षिताः ।
गगनात्प्रपतन्ति स्म तालादिव फलानि हि ॥ ४६ ॥
न दिनं न च वै रात्रिर्न सन्ध्या न दिशोऽपि वा ।
प्रकाशन्ते न तद्रूपं दृश्यते तत्र सङ्गरे ॥ ४७ ॥
ततो रामो बभूवाथ विस्मयाविष्टमानसः ।
शतमेकोत्तरं छिन्नं शिरसां चैकवर्चसाम् ॥ ४८ ॥
न चैव रावणः शान्तो दृश्यते जीवितक्षयात् ।
ततः सर्वास्त्रविद्वीरः कौशल्यानन्दवर्द्धनः ॥ ४९ ॥
अस्त्रैश्च बहुभिर्युक्तश्चिन्तयामास राघवः ।
यैर्यैर्बाणैर्हता दैत्या महाबलपराक्रमाः ॥ ५० ॥
त एते निष्फलं याता रावणस्य निपातने ।
इति चिन्ताकुले रामे समीपस्थो विभीषणः ॥ ५१ ॥
उवाच राघवं वाक्यं ब्रह्मदत्तवरो ह्यसौ ।

लोकसम्वर्त्तकोपमं सर्वलोकप्रलयकरं डीवकादियुद्धसदृशम् ॥ ४५ ॥
मूर्द्धानः रामबाणकृत्ता इति शेषः ॥ ४६ ॥
न दिनमित्यादि अनेनानेकदिनं रामरावणयोर्निरन्तरं युद्धं वृत्तमिति सूचितम् तद्रूपं छिन्नमस्तकरावणरूपं पुनः पुनः शिरः प्रादुर्भावात् ॥ ४७ ॥

तदेवाह तत इति एकवर्चसां तुल्यतेजसाम् ॥ ४८ ॥
शान्तो गतचेष्टः ॥ ४९ । ५० ॥
निष्फलत्वं याताः प्राप्ताः निष्फला जाता इति क्वचित् पाठः ॥५१॥५२॥

विच्छिन्ना बाहवोऽप्यस्य(१)विच्छिन्नानि शिरांसि च॥५२॥
उत्पत्स्यन्ति पुनः शीघ्रमित्याह भगवानजः।
नाभिदेशेऽमृतं तस्य कुण्डलाकारसंस्थितम्॥ ५३॥
तच्छोषयानलास्त्रेण तस्य मृत्युस्ततो भवेत्।
विभीषणवचः श्रुत्वा रामः शीघ्रपराक्रमः॥ ५४॥
पावकास्त्रेण संयोज्य नाभिं विव्याध रक्षसः।
अनन्तरं च चिच्छेद शिरांसि च महाबलः॥ ५५॥
बाहूनपि च संरब्धो रावणस्य रघूत्तमः।
ततो घोरां महाशक्तिमादाय दशकन्धरः॥ ५६॥
विभीषणवधार्थाय चिक्षेप क्रोधविह्वलः।
चिच्छेद राघवो बाणैस्तां शितैर्हेमभूषितैः॥ ५७॥
दशग्रीवशिरश्छेदात्तदा तेजो विनिर्गतम्।
म्लानरूपो बभूवाथ छिन्नैः शीर्षैर्भयङ्करैः॥ ५८॥
एकेन मुख्यशिरसा बाहुभ्यां रावणो बभौ।
रावणस्तु पुनः क्रुद्धो नानाशस्त्रास्त्रवृष्टिभिः॥ ५९॥
ववर्ष रामं तं रामस्तथा बाणैर्ववर्ष च।

कुण्डलाकारे गर्त्ते संस्थितम्॥५३॥
अनलास्त्रेणाग्नेयास्त्रेण॥ ५४–५६॥
शितैस्तीक्ष्णैः॥ ५७॥
तेजोपगमाच्च म्लानरूपो बभूव॥ ५८॥
मुख्यशिरसैवानेनाष्यानि युद्धादिकाले एव प्रादुर्भवन्तीति सूचितम्
॥ ५९–६१॥

(१) बाहवो राम! इति वा पाठः।

ततो युद्धमभूत् घोरं तुमुलं लोमहर्षणम् ॥ ६० ॥
अथ संस्मारयामास मातली राघवं तदा ।
विसृज्यास्मै वधायास्य नास्त्रं शीघ्रं रघूत्तम ! ॥ ६१ ॥
विनाशकालः प्रथितो यः सुरैः सोऽद्य वर्त्तते ।
उत्तमाङ्गं न चैतस्य छेत्तव्यं राघव ! त्वया ॥ ६२ ॥
नैव शीर्षाणि प्रभो ! वध्यो वध्य एव हि मर्म्मणि ।
ततः संस्मारितो रामस्तेन वाक्येन मातलेः ॥ ६३ ॥
जग्राह समरं दीप्तं निःश्वसन्तमिवोरगम् ।
यस्य पार्श्वे तु पवनः फले भास्करपावकौ ॥ ६४ ॥
शरीरमाकाशमयं गौरवे मेरुमन्दरौ ।
पर्वस्वपि च विन्यस्ता लोकपाला महौजसः ॥ ६५ ॥
आज्वल्यमानं वपुषा शान्तभास्करवर्चसा ।
तमुग्रमस्त्रं लोकानां भयनाशनमद्भुतम् ॥ ६६ ॥
अभिमन्त्र्य ततो रामस्तं महेषुं महाभुजः ।
वेदप्रोक्तेन विधिना सन्दधे कार्मुके बली ॥ ६७ ॥
तस्मिन् सन्धीयमाने तु राघवेण शरोत्तमे ।
सर्वभूतानि वित्रेसुश्चचाल च वसुन्धरा ॥ ६८ ॥

प्रथितः कथितः उत्तमाङ्गं शिरः ॥ ६२ ॥
मर्म्मणि उरसकूर्पे ॥ ६२ । ६३ ॥

आकाशमयमित्यनेनातिसूक्ष्मत्वं सूचितं आकाशपदेन व्यापकत्वादि-रत्नगर्भो वा गौरवे मेरुमन्दरौ यस्य सदृशाविति शेषः ॥ ६५ ॥
भास्करवर्चसा शान्तं तस्य स्वतेजः प्रकाशं यस्य स्वकोऽर्थवाची शस्त्र-पर्यायोऽत्र ॥ ६६ ॥
वेदप्रोक्तेन ब्रह्मास्त्रविधिना कार्मुके धनुषः ॥ ६७ ॥ ६८ ॥

स रावणाय संक्रुद्धो भृशमानम्य कार्मुकम् ।
चिक्षेप परमायत्तस्तमस्त्रं मर्मघातिनम् ॥ ६९ ॥
स वज्र इव दुर्द्धर्षो वज्रपाणिविसर्जितः ।
कृतान्त इव घोरास्यो न्यपतद्रावणोरसि ॥ ७० ॥
स भिन्नमर्मा महावीरः शरीरान्तकरः परः(१) ।
बिभेद हृदयं तूर्णं रावणस्य महात्मनः ॥ ७१ ॥
रावणस्याहरत्प्राणान् विवेश धरणीतले ।
स शरो रावणं हत्वा रामतूणीरमाविशत् ॥ ७२ ॥
तस्य हस्तात् पपाताशु सशरं कार्मुकं महत् ।
गतासुर्भ्रमिवेगेन राक्षसेन्द्रोऽपतद्भुवि ॥ ७३ ॥
तं दृष्ट्वा पतितं भूमौ हतशेषाश्च राक्षसाः ।
हतनाथा भयत्रस्ता दुद्रुवुः सर्वतो दिशम् ॥ ७४ ॥
दशग्रीवस्य निधनं विजयं राघवस्य च ।
ततो विनेदुः संहृष्टा वानरा जितकाशिनः ॥ ७५ ॥
वदन्तो रामविजयं रावणस्य च तद्वधम् ।
अथान्तरीक्षे व्यनदत् सौम्यस्त्रिदशदुन्दुभिः ॥ ७६ ॥

भृशमतिशयेन ॥६९॥

वज्रपाणिना त्यक्तो वज्र इव स बाणो रावणोरसि न्यपतत्॥७०॥७१॥

वेगवशाद्रावणप्राणहरणोत्तरं भूमौ प्रविश्य पुनः स्वाधिष्ठातृदेवतातेजोवशाद्रामतूणीरं प्रविष्टः ॥ ७२ ॥

भ्रमि इति शरपतनकालजातभ्रमिवेगेन ॥ ७३ ॥ ७४ ॥

दशग्रीवनिधनं रामविजयं च दृष्ट्वा विदुद्रुवुरित्यन्वयः ॥ ७५ ॥

ततो रामजयं रावणस्य तद्वधं-ततो रामाद्वधं च वदन्तो विनेदुरनेन

---

(१) शरः इत्यपि पाठान्तरम् ।

अपात पुष्पवृष्टिश्च समन्ताद्राघवोपरि ।
तुष्टुवुर्मुनयः सिद्धाश्चारणाश्च दिवौकसः ॥ ७७ ॥
अथान्तरीक्षे ननृतुः सर्वतोऽप्सरसो मुदा ।
रावणस्य च देहोत्थं ज्योतिरादित्यवत् स्फुरत् ॥ ७८ ॥
प्रविवेश रघुश्रेष्ठं देवानां पश्यतां सताम् ।
देवा ऊचुरहो भाग्यं रावणस्य महात्मनः ॥ ७९ ॥
वयं तु सात्त्विका देवा विष्णोः कारुण्यभाजनाः ।
भयदुःखादिभिर्व्याप्ताः संसारे परिवर्त्तिनः ॥ ८० ॥
अयं तु राक्षसः क्रूरो ब्रह्महातीव तामसः ।
परदाररतो विष्णुद्वेषी तापसहिंसकः ॥ ८१ ॥
पश्यत्सु सर्वभूतेषु राममेव प्रविष्टवान् ॥
एवं ब्रुवत्सु देवेषु नारदः प्राह सस्मितः ॥ ८२ ॥
शृणुतात्र सुरा ! यूयं धर्मतत्त्वविचक्षणाः ।

भावयः सिंहनादांश्चक्रुरित्यर्थः ॥ ७६ । ७७ ॥

सूर्यवत् स्फुरत् रावणस्य देहोत्थं तेजो रघुश्रेष्ठं प्रविवेश तं प्रविश्य तदाश्रया वैकुण्ठलोकं जगामेति बोध्यम् ॥ ७८ । ७९ ॥

वयन्त्विति वयं देवा अपि तेजसा दीप्यमाना अपि सात्त्विका अपि सत्त्वप्रधाना अपि विष्णोर्भगवतः करुणापात्रभूता अपि भयदुःखादिव्याप्ताः पुनः पुनः संसारभाजश्च ॥ ८० ॥

अयं राक्षसः क्रूरोऽपि ब्रह्महापि अत्यन्ततामसोऽपि परदाररतत्वादिगुणोऽपि ॥ ८१ ॥

रामं प्रविष्टवान् तत्प्रवेशेन मोक्षद्वारं लब्धवान् वैकुण्ठगतानां प्रतिहारे स्थितिलाभात् इत्यायर्थमित्यर्थः ॥ ८२ ॥

रावणो द्वेषसंयुक्तोऽपि भक्तैः सह रामचरितं शुकसारणादिभ्यः

रावणो राघवद्वेषादनिशं हृदि भावयन् ॥ ८३ ॥
भृत्यैः सह सदा रामचरित्रं द्वेषसंयुतः।
श्रुत्वा रामात् स्वनिधनं भयात् सर्वत्र राघवम् ॥ ८४ ॥
पश्यन्ननुदिनं स्वप्ने राममेवानुपश्यति।
क्रोधोऽपि रावणस्याशु गुरुबोधाधिकोऽभवत् ॥ ८५ ॥
रामेण निहतस्यान्ते निर्धूताशेषकल्मषः।
रामसायुज्यमेवाप(१) रावणो मुक्तबन्धनः ॥ ८६ ॥
पापिष्ठो वा दुरात्मा परधनपरदारेषु सक्तो यदि स्या-
न्नित्यं स्नेहात् भयाद्वा रघुकुलतिलकं भावयन् संस्मरेतः।

श्रुत्वा तद्द्वेषादनिशमन्तं हृदि भावयन् अत्र श्रुत्वा भावयन्नित्यनेन श्रव-णमननिदिध्यासनसम्पदुक्ता मननमनुक्तमपि अर्थाक्षिप्तं बोध्यम् तथा रामात् स्वनिधनं श्रुत्वा भयात्सर्वत्र राघवं पश्यन् इदं फलं लब्धवानिति शेषः तस्य च दर्शनस्य सार्वकालिकत्वमाह अनुदिनं स्वप्नेऽपि राममेव पश्यति अनेन साक्षात्कार उक्तः एवं सगुणविषयत्वादेषां वैकुण्ठलोक-प्राप्तिद्वारा मोक्षजनकत्वम् दहराद्युपासनावदिति बोध्यम् ॥ ८३।८४॥

उपसंहरति क्रोधोऽपीति अपिना यः प्रीत्यैवमाचरेत् तस्य सुक्तिः सर्वथेति ध्वनितं गुरुबोधः गुरुसेवाजन्यो बोधस्तद्वत् अधिकः सर्वधर्माधिकोऽभवदित्यर्थः ॥ ८५ ॥

भगवतो हस्तात् मृत्युरप्येवं फलक इत्याह रामेणेति सह समाने देशे युक्तस्तस्य भावः सायुज्यं समानलोकवास इत्यर्थः तदेवाभिप्रेत्याग्रे वक्ष्यति वैकुण्ठं यातीति ॥ ८६ ॥

दुरात्मा परानिष्टादिचिन्तकः पापिष्ठत्वं कायिकपापवत्त्वं तदेव स्फुटयति परधनपरदारेत्यादि स्नेहाद्भयाद्वेत्यादि स्नेहाद्भयाद्वेत्यने-नोभयोस्तुल्यफलत्वं स्नेहाद्गोप्यादि भयाद्रावणादिवत् स्नेहवतामे-

(१) मेवाशु इति वा पाठः।

भूत्वा युद्धान्तरङ्गो (१)भवगतजनितानेकदोषैर्विमुक्तः
सद्यो रामस्य विष्णोः सुरवरविनुतं याति वैकुण्ठमाद्यम्॥८७॥
हत्वा युद्धे दशास्यं त्रिभुवनविषमं वामहस्तेन चापं
भूमौ विष्टभ्य तिष्ठन्नितरकरधृतं भ्रामयन् बाणमेकम्।
आरक्तोपान्तनेत्रः शरदलितवपुः सूर्यकोटिप्रकाशो
वीरश्रीबन्धुराङ्गस्त्रिदशपतिनुतः पातु मां वीररामः॥८८॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
एकादशः सर्गः।

ऐहलौकिकसुखाधिक्यं विशेषः इति बोध्यं पारलौकिकं तु फलं तुल्यमित्याशयेन वाशब्दः अन्तरङ्गं अन्तःकरणं तच्छुद्धं यस्य सः सुरवरो ब्रह्मा॥ ८७॥

त्रिभुवनस्य विषमं दुःखदं शरैर्दलितं विदारितं वपुर्यस्य स बन्धुराङ्गः यथोचितं नतोन्नताङ्गः एवं ध्यातः त्वां सर्वभयापहमिति तत्त्वेषु प्रसिद्धम्॥ ८८॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थत्वादिवि० श्रीरामवर्मणा
कृतावध्यात्मरामायणसेतौ युद्धकाण्डे
एकादशः सर्गः।

---

(१) युद्धान्तरात्मा इति पाठान्तरम्।

अथ द्वादशः वर्गः ।

रामो विभीषणं दृष्ट्वा हनूमन्तं तथाङ्गदम् ।
लक्ष्मणं कपिराजं च जाम्बवन्तं तथापरान् ॥ १ ॥
परितुष्टेन मनसा सर्वानेवाब्रवीद्वचः ।
भवतां बाहुवीर्य्येण निहतो रावणो मया ॥ २ ॥
कीर्त्तिः स्थास्यति वः पुण्या यावच्चन्द्रदिवाकरौ ।
कीर्त्तयिष्यन्ति भवतां कथां त्रैलोक्यपावनीम् ॥ ३ ॥
ययोपेतां(१) कलिहरां यास्यन्ति परमां गतिम् ।
एतस्मिन्नन्तरे दृष्ट्वा रावणं पतितं भुवि ॥ ४ ॥
मन्दोदरीमुखाः सर्वाः स्त्रियो रावणपालिताः ।
पतिता रावणस्याग्रे शोचन्त्यः पर्य्यदेवयन् ॥ ५ ॥
विभीषणः सुग्रीवार्त्तो शोकेन महताहतः ।
पतितो रावणस्याग्रे बहुधा पर्य्यदेवयत् ॥ ६ ॥
रामस्तु लक्ष्मणं प्राह बोधयस्व विभीषणम् ।
करोतु भ्रातृसंस्कारं किं विलम्बेन ? मानद ! ॥ ७ ॥

राम इति ॥ १ ॥

तेषां वीराणामत्युत्कर्षं वाक्यमाह भवतामिति एवंविधवाक्येन बोधिता वीरा रणे प्राणव्ययेनापि स्वाभीष्टं साधयन्तीति सूचितम् ॥२॥

अथ पारितोषिकं ददाति कीर्त्तिरिति वः पुण्या कीर्त्तिः स्थास्यतीति किञ्च यया कीर्त्त्या संयुक्तामिमां भवतां विजयकथां ये कीर्त्तयिष्यन्ति ते परमाकृतिं यास्यन्ति ॥ ३—५ ॥

पर्य्यदेवयत् शोकेन विलापमेत्यर्थः ॥ ६ ॥

(१) ययोपेतामिति वा पाठः ।

स्त्रियो मन्दोदरीमुख्याः पतिता विलपन्ति च ।
निवारयतु ताः सर्वा राक्षसी रावणप्रिया ॥ ८ ॥
एवमुक्तोऽथ रामेण लक्ष्मणोऽगाद्विभीषणम् ।
उवाच मृतकोपान्ते पतितं मृतकोपमम् ॥ ९ ॥
शोकेन महताविष्टं सौमित्रिरिदमब्रवीत् ।
यं शोचसि त्वं दुःखेन कोऽयं तव? विभीषण! ॥१०॥
त्वं वास्य कतमः सृष्टेः पुरेदानीमतःपरम् ।
यद्वत्तोयौघपतिताः सिकता यान्ति तद्वशा ॥ ११ ॥
संयुज्यन्ते वियुज्यन्ते तथा कालेन देहिनः ।
यथा धानासु वै धाना भवन्ति न भवन्ति च ॥ १२ ॥

बोधयस्व शोकापनयनवाक्यैः संसारानित्यत्वं बोधयेत्यर्थः ॥७।८॥

मृतकस्य रावणस्य समीपे मृतकतुल्यतया निश्चेष्टं पतितम् ॥९॥

अयं तव कः आत्मनः शुद्धबुद्धस्वभावत्वान्न केनापि सम्बन्ध इति भावः ॥ १० ॥

किन्तु सृष्टेः पुरा तवास्य कश्चित्सम्बन्धो नैवासीत् एवमतः परमिदानीं च न कश्चित्सम्बन्धः पूर्वापरकालयोः सम्बन्धाभावेन मध्येऽपि न वास्तवः सम्बन्धः किन्त्वाभिमानिक एवेति भावः तदेव दृष्टान्तेनाह यद्वदिति तोयौघे पतिताः सिकता जलवेगाहृता किञ्चिद्दूरं मिलिता यान्ति ततः काश्चित् गुरुतया अधस्तिष्ठन्ति लघुतया विलीयन्ते वा अपरा गच्छन्ति तासां यथा न कश्चित् सम्बन्धः ॥ ११ ॥

एवं देहिनः कालेन तद्वेगेन संयुज्यन्ते वियुज्यन्ते च वस्तुतस्तेषां न कश्चित्सम्बन्ध इत्यर्थः दृष्टान्तान्तरमाह यथेति धाना भृष्टयवास्तासु अध्वाधरभावेन काश्चिद्धानाः स्थिरं भवन्ति ततः शुष्कत्वात्तासां स्निग्धत्वाभावात्ततो न भवन्ति वियुज्यन्ते ॥ १२ ॥

एवं भूतेषु भूतानि प्रेरितानीशमायया ।
त्वं चेमे वयमन्ये च तुल्याः कालवशोद्भवाः ॥ १३ ॥
जन्ममृत्यू यदा यस्मात्तदा तस्माद्भविष्यतः ।
ईश्वरः सर्वभूतानि भूतैः सृजति ह्यव्ययः ॥ १४ ॥
आत्मसृष्टैरस्वतन्त्रैरनपेक्षोऽपि बालवत् ।
देहेन देहिनो जीवा देहाद्देहोऽभिजायते ॥ १५ ॥
बीजादेव यथा बीजं देहान्य(१) इव शाश्वतः ।

एवमीशमायया प्रेरितानि भूतानि भूतेषु संयुज्यन्ते वियुज्यन्ते चेत्यर्थः एवमयं संयोगो वियोगश्च तवैवेति न किन्तु सर्वेषामस्माकं तुल्य इत्याह त्वं चेमे वयमित्यादि अस्माकमप्येवं वियोगो भावीति भावः॥१३॥

यदा यस्मिन् काले यस्माज्जन्ममृत्यू कर्मसहकृतौ भगवता कल्पितौ तदा तस्मिन् काले तौ भविष्यत एव न त्वन्यथेत्यर्थः ॥ १४ ॥

यथा बालो अनपेक्षोऽपि बाल्यस्वभावादेव सृष्टैर्मृण्मयादिभिश्चित्रैः स्वनिर्मितानि तादृशानि सृजति द्वे स्त्रीपुरुषाकारे कृत्वा तृतीयमेकं निर्माय इदं जातमनयोरपत्यमिति व्यवहरति परस्पराभिघातेन नाशयति चैवमीश्वर अनपेक्षोऽपि सर्जनजन्यफलानपेक्षोऽपि आत्मसृष्टैरेव भूतैः प्राणिभिः स्त्रीपुरुषाख्यव्यवहारद्वारा पराणि सृजति ततः केनचित्कश्चिद्धन्ति च ननु तेषामेव तत्र कर्तृत्वमस्त्वित्याह अस्वतन्त्रैरिति कर्ममात्रपालनेऽपि स्वातन्त्र्यरहितैः ननु तत् किं सृज्यमानदेह एव जीवो नेत्याह देहेनेति जीवास्तेन देहेन नतु देहिनो देहात्मान एव ते नतु देहः किमपि कारणमेव नेत्याह देहादिति कर्मद्वारेति शेषः ॥१५॥

अस्य व्यवहारस्यानादित्वे दृष्टान्तमाह बीजादेवेति स च देहादन्य इव अन्य एवेत्यर्थः भेदकं धर्ममाह शाश्वत इति तेन नित्यत्वानित्यत्वाभ्यां देहदेहिनोर्भेद उक्तः वस्तुतस्तस्य देहिव्यवहारप्रयोजको देह-

(१) देहेभ्य इति पाठान्तरम् ।

देहिदेहविभागोऽयमविवेककृतः पुरा ॥ १६ ॥
नानात्वं जन्मनाशश्च क्षयो वृद्धिः क्रियाफलम् ।
द्रष्टुराभान्त्यतद्धर्मा यथाऽग्नेर्दारुविक्रियाः ॥ १७ ॥
त इमे देहसंयोगादात्मना भान्त्यसद्ग्रहात् ।
यथा यथा तथा चान्यत् ध्यायतो सदसद्ग्रहात् ॥१८ ॥
प्रसुप्तस्यानहं(१) भावात्तदा भाति न संसृतिः ।
जीवतोऽपि तथा तद्वद्विमुक्तस्यानहङ्कृतेः ॥ १९ ॥

बद्धस्योऽपि कल्पित एवेत्याह देहीति अविवेककृतः अन्तःकरणेनात्मनोऽविवेकात् अहं ममेत्यादि बुद्धिरिति भावः एवञ्च देह एव ममताबुद्धेरवास्तवत्वे भ्रात्रादौ ममत्वबुद्धिः सुतरामवास्तवीति सूचितम् ॥ १६ ॥

वस्तुतो भ्रात्रादौ स्वातिरिक्तत्वबुद्धिर्मायादिबुद्धिश्च सर्वं मिथ्यैव शुक्तिरजतादिबुद्धिवदित्याह नानात्वमिति नानात्वं भेदः क्रियाफलं सुखदुःखे एते अतद्धर्मा अनात्मधर्मा द्रष्टुस्तद्दृष्टित्वेन भान्ति अन्तःकरणतत्कार्यधर्मा एवैते तदविवेकात् आत्मनि भान्ति यथा दारुगतवक्रत्वादिना तद्गताग्नेर्वक्रत्वादिति भावः ॥ १७ ॥

त इमे नानात्वादयः देहसंयोगाद्देहपदेनान्तःकरणमप्युपलक्ष्यते असद्ग्रहोऽहं ममता बुद्धिः यथा सदसद्वान्यत्किञ्चिद्वस्तु अभ्यासात् ध्यायतो भृङ्गकीटन्यायेन तथा प्रथा भवति ध्यायमानवस्तुसदसत्त्वाभ्यां ध्यातुरपि सदसत्त्वप्रथा भवति तद्वत् अनेन वास्तवता मायादीनां निराकृता एवं च शोको निरालम्ब इति तात्पर्यम् ॥ १८ ॥

ज्ञानाच्च दुःखनिवृत्तिरित्याह प्रसुप्तस्येति यथा प्रसुप्तस्याहम्भावाभावात्संसृतिर्न भाति प्रलापोऽत्र सुषुप्तिः तथा विमुक्तस्य तत्त्वज्ञानाज्जीवन्मुक्तस्य जीवतोऽपि अनहङ्कृतेः अहङ्काराभावात्तथा संसाराभावात्तत्कार्यः दुःखशोकाद्यभाव इत्यर्थः ॥ १९ ॥

---

(१) विमुक्तस्यानहं इत्यपि पाठः ।

तस्मान्मायामनोधर्मं(१) जह्यहं ममताभ्रमम्।
रामभद्रे भगवति मनो धेह्यात्मनीश्वरे ॥ २० ॥
सर्वभूतात्मनि परे मायामानुषरूपिणि।
बाह्येन्द्रियार्थसम्बन्धात् त्याजयित्वा मनः शनैः ॥ २१ ॥
तत्र दोषान् दर्शयित्वा रामानन्दे नियोजय।
देहबुद्ध्या भवेद्भ्राता पिता माता सुहृत्प्रियः ॥ २२ ॥
विलक्षणं यदा देहात् जानात्यात्मानमात्मना।
तदा कः कस्य वा बन्धुर्भ्राता माता पिता सुहृत् ?॥२३॥
मिथ्याज्ञानवशाज्जाता दारागारादयः सदा।
शब्दादयश्च विषया विविधाश्चैव सम्पदः ॥ २४ ॥
बलं कोषो भृत्यवर्गो राज्यं भूमिः सुतादयः।
अज्ञानजत्वात्सर्वे ते क्षणसङ्गमभङ्गुराः ॥ २५ ॥

उपसंहरति तस्मादिति मायामनोधर्मं मायापरिणाममनोधर्मं अहंममताभ्रमञ्जहि अन्यधर्मस्यान्यनिष्ठत्वेन यच्छाङ्ग्रमत्वं मायापरिणामत्वेन मनसो जडत्वमुक्तं मनोमात्रान्तःकरणम् आत्मनीश्वरे इत्यनेन तस्यैव शुद्धमात्मत्वं मन्ये तत्प्रतिबिम्बत्वादात्मव्यवहारमात्रमिति भावः ॥२०॥

उक्तमेव पुनराह सर्वभूतात्मनीति बाह्येन्द्रियविषयसम्बन्धात् मनो दूरीकृत्य भगवति नियोजय तत्सम्बन्धत्यागोपायमाह तत्र दोषानिति ननु भगवति तदनुसन्धानेऽपि कथं संसारहानिस्तत्राह देहबुद्ध्येति देहे अन्तःकरणादावात्मबुद्ध्येत्यर्थः भगवतो मनसानुसन्धाने तत्प्रसादाद्देहभिन्नात्मप्रतीतौ तदविवेककृतसंसारस्य स्वत एव हानिरिति भावः॥२१—२३॥

तदेव पुनर्दर्शयन्नाह मिथ्येति अगारं गृहम् ॥ २४ ॥

अज्ञानस्याजस्रं परिणामस्वभावतया तज्जन्यानां क्षणसङ्गमभङ्गुरत्वम् ॥ २५ ॥

---

( १ ) मनोमात्रमिति वा पाठः।

अथोत्तिष्ठ हृदा रामं भावयन् भक्तिभावितम्।
अनुवर्त्तस्व राज्यादि भुञ्जन् प्रारब्धमन्वहम्॥ २६॥
भूतं भविष्यदभजन् वर्त्तमानमथाचरन्।
विहरस्व यथान्यायं भवद्दोषैर्न लिप्यसे॥ २७॥
आज्ञापयति रामस्त्वां यद्भ्रातुः साम्परायिकम्।
तत् कुरुष्व यथाशास्त्रं रुदतीश्चापि योषितः॥ २८॥
निवारय महाबुद्धे! लङ्कां गच्छन्तु मा चिरम्।
श्रुत्वा यथावद्वचनं लक्ष्मणस्य विभीषणः॥ २९॥
त्यक्त्वा शोकं च मोहं च रामपार्श्वमुपागमत्।
विमृश्य बुद्ध्या धर्मज्ञो धर्मार्थसहितं वचः॥ ३०॥
रामस्यैवानुवृत्त्यर्थमुत्तरं पर्य्यभाषत।
नृशंसमनृतं क्रूरं त्यक्तधर्मव्रतं प्रभो!॥ ३१॥
नार्होऽस्मि देव! संस्कर्त्तुं परदाराभिमर्शिनम्।
श्रुत्वा तद्वचनं प्रीतो रामो वचनमब्रवीत्॥ ३२॥
मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम्।
क्रियतामस्य संस्कारो ममाप्येष यथा तव॥ ३३॥

प्रारब्धं भोगं विना दुस्त्यजमिति बुद्ध्वा राज्यादिभुञ्जन्ननुवर्त्तस्व तत्पालने यतस्व॥ २६॥

भूतं भविष्यञ्चाभजन् कथमिदं गतं कथमग्रे भविष्यतीत्यविचारयन् एवं भवद्दोषैर्न लिप्यसे॥ २७। २८॥

यथावद्वचनं यथोक्तं वचनम्॥ २९॥

विमृश्य भगवच्छत्रोः क्रियाकरणे भगवतो दुःखं स्यादिति विचार्य॥ ३०—३२॥

निर्वृत्तं निष्पन्नं यथा तव भ्राता तथा ममापि मरणेन विरोधस्यापगमात्॥ ३३॥

रामाज्ञां शिरसा धृत्वा शीघ्रमेव बिभीषणः।
सान्त्ववाक्यैर्महाबुद्धिं राज्ञीं मन्दोदरीं तदा ॥ ३४ ॥
सान्त्वयामास धर्मात्मा धर्मबुद्धिर्बिभीषणः।
त्वरयामास धर्मज्ञः संस्कारार्थं स्वबान्धवान् ॥ ३५ ॥
चित्यां निवेश्य विधिवत्पितृमेधविधानतः।
आहिताग्नेर्यथा कार्य्यं रावणस्य विभीषणः ॥ ३६ ॥
तथैव सर्वमकरोद्बन्धुभिः सह मन्त्रिभिः।
ददौ च पावकं तस्य विधियुक्तं बिभीषणः ॥ ३७ ॥
स्नात्वा चैवार्द्रवस्त्रेण तिलान् दर्भाभिमिश्रितान्।
उदकेन च संमिश्रान् प्रदाय विधिपूर्वकम् ॥ ३८ ॥
प्रदाय चोदकं तस्मै मूर्द्ध्ना चैनं प्रणम्य च।
ताः स्त्रियोऽनुनयामास सान्त्वमुक्त्वा(१) पुनःपुनः॥ ३९॥
गम्यतामिति ताः सर्वा विविशुर्नगरं तदा।
प्रविष्टासु च सर्वासु राक्षसीषु बिभीषणः ॥ ४० ॥
रामपार्श्वमुपागत्य तदातिष्ठद्विनीतवत्।
रामोऽपि सह सैन्येन सुग्रीवः सह लक्ष्मणः ॥ ४१ ॥

सान्त्ववाक्यैः शोकापनोदकवाक्यैः ॥ ३४ । ३५ ॥

आहिताग्नेरग्निहोत्रिणो यथा कार्य्यं योग्यं तथैवौर्द्ध्वदेहिकमकरोत् ॥ ३६ ॥

विधियुक्तं मन्त्रादियुक्तम् ॥ ३७ ॥ ३८ ॥

प्रदाय चोदकं तस्मै इति शुद्धं जलं करकादिपात्रे अश्वत्थशाखायां तदुद्देशेन वह्नुत्वर्थः अनुनयामास विगतशोकाश्चकार ॥ ३९ ॥

गम्यतामिति बिभीषणेनोक्ता इति शेषः ॥४० ॥

---

(१) सान्त्वयित्वा इति पाठान्तरम्।

हर्षं लेभे रिपून् हत्वा यथा वृत्रं शतक्रतुः ।
मातलिश्च तदा रामं परिक्रम्याभिवन्द्य च ॥ ४२ ॥
अनुज्ञातश्च रामेण ययौ स्वर्गं विहायसा ।
ततो हृष्टमना रामो लक्ष्मणं चेदमब्रवीत् ॥ ४३ ॥
विभीषणाय मे लङ्काराज्यं दत्तं पुरैव हि ।
इदानीमपि गत्वा त्वं लङ्कामध्ये विभीषणम् ॥ ४४ ॥
अभिषिञ्चय विप्रैश्च मन्त्रवद्विधिपूर्वकम् ।
इत्युक्तो लक्ष्मणस्तूर्णं जगाम सह वानरैः ॥ ४५ ॥
लङ्कां सुवर्णकलशैः समुद्रजलसंयुतैः ।
अभिषेकं शुभं चक्रे राक्षसेन्द्रस्य धीमतः ॥ ४६ ॥
ततः पौरजनैः सार्द्धं नानोपायनपाणिभिः ।
विभीषणः ससौमित्रिरुपायनपुरस्कृतः ॥ ४७ ॥
दण्डप्रणाममकरोद्रामस्याक्लिष्टकर्मणः ।
रामो विभीषणं दृष्ट्वा प्राप्तराज्यं मुदान्वितः ॥ ४८ ॥
कृतकृत्यमिवात्मानममन्यत सहानुजः ।
सुग्रीवं च समालिङ्ग्य रामो वाक्यमथाब्रवीत् ॥ ४९ ॥
सहायेन त्वया वीर ! जितो मे रावणो महान् ।

युद्धमूर्ध्नि हतस्य सद्यः शीघ्रत्वात् सदेहस्यैव सर्वं प्रेतकृत्यं समाप्य रामसमीपमागमनम् ॥४१—४५॥

लङ्कां जगामेत्यन्वयः ततः स्वर्णकलशैः राघवेन्द्रस्याभिषेकं प्रचक्रे ॥४६॥

उपायनपुरस्कृतोऽग्रे कृतं उपायनं येन सः आहिताग्न्यादित्वात् परनिपातः ॥४७॥

आगत्य दण्डप्रणामं दण्डवत्प्रणामम् ॥ ४८ ॥

कृतकृत्यमिव प्रतिज्ञातार्थसिद्ध्येति भावः ॥ ४९ ॥

विभीषणोऽपि लङ्कायामभिषिक्तो मयानघ ! ॥ ५० ॥
ततः प्राह हनूमन्तं पार्श्वस्थं विनयान्वितम्।
विभीषणस्यानुमतिं गच्छ त्वं रावणालयम् ॥ ५१ ॥
जानक्यै सर्वमाख्याहि रावणस्य वधादिकम्।
जानक्याः प्रतिवाक्यं मे शीघ्रमेव निवेदय ॥ ५२ ॥
एवमाज्ञापितो धीमान् रामेण पवनात्मजः।
प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ॥ ५३ ॥
प्रविश्य रावणगृहं शिंशपामूलमाश्रिताम्।
ददर्श जानकीं तत्र कृशां दीनामनिन्दिताम् ॥ ५४ ॥
राक्षसीभिः परिवृतां ध्यायन्तीं राममेव हि।
विनयावनतो भूत्वा प्रणम्य पवनात्मजः ॥ ५५ ॥
कृताञ्जलिपुटो भूत्वा प्रह्वो भक्त्याग्रतः स्थितः।
तं दृष्ट्वा जानकी तूष्णीं स्थित्वा पूर्वस्मृतिं ययौ ॥ ५६ ॥
ज्ञात्वा तं रामदूतं(१) सा हर्षात्सौम्यमुखी भवत्।
स तां सौम्यमुखीं दृष्ट्वा तस्याः पवननन्दनः।
रामस्य भाषितं सर्वमाख्यातुमुपचक्रमे ॥ ५७ ॥

अनघानघ देवैरपि दुर्जयः विभीषणः पूर्वं प्रतिज्ञाताभिषेकः ॥ ५० ॥
विभीषणस्यानुमते लङ्काधीशत्वात् तदाज्ञां गृहीत्वा ॥ ५१-५२ ॥
अनिन्दितां रावणतिरस्कारादप्राप्तनिन्दाम् ॥ ५४ ॥ ५५ ॥
भक्त्याग्रतः प्रह्वत्वादेहैतुकवचनं पूर्वमागतो यः स एवायमिति स्मृतिं
स्मरणं ययौ प्राप्तवती ॥ ५६ ॥
भवत् अभवदित्यर्थः अडभाव आर्षः रामस्य भाषितं रामभाषितं
वृत्तान्तम् ॥ ५७ ॥

(१) ज्ञात्वा रामस्य दूतं इति केचित् वदन्ति।

देवि ! रामः ससुग्रीवो विभीषणसहायवान्।
कुशली वानराणां(१)च सैन्यैश्च सह लक्ष्मणः ॥ ५८ ॥
रावणं ससुतं हत्वा सबलं सह मन्त्रिभिः।
त्वामाह कुशलं रामो राज्ये कृत्वा विभीषणम् ॥ ५९ ॥
श्रुत्वा भर्त्तुः प्रियं वाक्यं हर्षगद्गदया गिरा।
किं ते प्रियं करोम्यद्य ? न पश्यामि जगत्त्रये ॥ ६० ॥
समन्ते प्रियवाक्यस्य रत्नान्याभरणानि च।
एवमुक्तस्तु वैदेह्या प्रत्युवाच प्लवङ्गमः ॥ ६१ ॥
रत्नौघाद्विविधाद्वापि देवराज्याद्विशिष्यते।
हतशत्रुं विजयिनं रामं पश्यामि सुस्थिरम् ॥ ६२ ॥
तस्य तद्वचनं श्रुत्वा मैथिली प्राह मारुतिम्।
सर्वे सौम्या गुणाः सौम्य ! त्वय्येव परिनिष्ठिताः ॥ ६३ ॥
रामं द्रक्ष्यामि शीघ्रं मामाज्ञापयतु राघवः।
तथेति तां नमस्कृत्य ययौ द्रष्टुं रघूत्तमम् ॥ ६४ ॥
जानक्या भाषितं सर्वं रामस्याग्रे न्यवेदयत्।

वानराणां सैन्यैः सहैव लक्ष्मणश्च कुशली सर्वे कुशलिन इत्यर्थः ॥ ५८
राज्ये विभीषणं कृत्वा इत्यनेन निरवशेषसर्वकार्यसिद्धिरुक्ता ॥ ५९ ॥
ते प्रियवाक्यस्य समं रत्नादिषु न किञ्चित्पश्यामि ॥ ६० । ६१ ॥
देवराज्यादित्यस्य अपीति शेषः प्राप्तजयस्य रामस्य सर्वतोऽप्यभिकं निरवधिफलदातृत्वादिति भावः ॥ ६२ ॥
सौम्याः सोमवत् चन्द्रवत्प्रियदर्शनाः शोभमाना इति यावत्सौम्य सोमवत्प्रियदर्शन ॥ ६३ । ६४ ॥

(१) कुशलं वानराणामिति पुस्तकान्तरे दृष्टम्।

यन्निमित्तोऽयमारम्भ: कर्मणां च फलोदय: ॥ ६५ ॥
तां देवीं शोकसन्तप्तां द्रष्टुमर्हसि मैथिलीम्।
एवमुक्तो हनुमता रामो ज्ञानवतां वर: ॥ ६६ ॥
मायासीतां परित्यक्तुं जानकीमनले स्थिताम्।
आदातुं मनसा ध्यात्वा राम: प्राह बिभीषणम् ॥ ६७ ॥
गच्छ राजन्! जनकजामानयाशु ममान्तिकम्।
स्नातां विरजवस्त्राढ्यां सर्वाभरणभूषिताम् ॥ ६८ ॥
बिभीषणोऽपि तच्छ्रुत्वा जगाम सह मारुति:।
राक्षसीभि: सुवृद्धाभि: स्नापयित्वा तु मैथिलीम् ॥ ६९ ॥
सर्वाभरणसम्पन्नामारोप्य शिबिकोत्तमे।
याष्टीकैर्बहुभिर्गुप्तां कञ्चुकोष्णीषिभि: शुभाम् (१) ॥ ७० ॥
तां द्रष्टुमागता: सर्वे वानरा जनकात्मजाम्।
तान् वारयन्तो बहव: सर्वतो वेत्रपाणय: ॥ ७१ ॥
कोलाहलं प्रकुर्वन्तो रामपार्श्वमुपाययु:।
दृष्ट्वा तां शिबिकारूढां दूरादेव रघूत्तम: ॥ ७२ ॥

कर्मणां युद्धादीनां फलोदयरूपां तां देवीमित्यन्वय: ॥ ६५ । ६६ ॥
अनले अग्नौ स्थितां जानकीमादातुं मनसा ध्यात्वा निश्चित्य प्राहेत्यन्वय: ॥ ६७ ॥
विरजवस्त्राणि निर्मलवस्त्राणि तदाढ्यां तै: शोभिताम् ॥ ६८ ॥
बहुमारुति: समासेऽपि वैकल्पिकत्वात्तत्वाभाव: ॥ ६९ ॥
शिबिकोत्तमे सर्वशिबिकाश्रेष्ठे उत्तमे शिबिकारूपे वाहने याष्टीकै: आचारवयाद्यष्टिहस्तै रक्षकै: बहुभिर्गुप्ताम् ॥ ७० । ७१ ॥
कोलाहलं प्रकुर्वन्त: दूरे तिष्ठतेति वदन्त: ॥ ७२ ॥

---

(१) द्रष्टुं दूरमपि पाठ:।

विभीषण ! किमर्थं ते ? वानरान् वारयन्ति हि ।
पश्यन्तु वानराः सर्वे मैथिलीं मातरं यथा ॥ ७३ ॥
पादचारेण सा यातु जानकी मम सन्निधिम् ।
श्रुत्वा तद्रामवचनं शिबिकायवरुह्य सा ॥ ७४ ॥
पादचारेण शनकैरागता रामसन्निधिम् ।
रामोऽपि दृष्ट्वा तां मायासीतां कार्य्यार्थनिर्मिताम् ॥ ७५ ॥
अवाच्यवादान् बहुशः प्राह तां रघुनन्दनः ।
अमृष्यमाणा सा सीता वचनं राघवोदितम् ॥ ७६ ॥
लक्ष्मणं प्राह मे शीघ्रं प्रज्वालय हुताशनम् ।
विश्वासार्थं हि रामस्य लोकानां प्रत्ययाय च ॥ ७७ ॥
राघवस्य मतं ज्ञात्वा लक्ष्मणोऽपि तदैव हि ।
महाकाष्ठचयं कृत्वा ज्वालयित्वा हुताशनम् ॥ ७८ ॥
रामपार्श्वमुपागम्य तस्थौ तूष्णीमरिन्दमः ।
ततः सीता परिक्रम्य राघवं भक्तिसंयुता ॥ ७९ ॥
पश्यतां सर्वलोकानां देवराक्षसयोषिताम् ।
प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ॥ ८० ॥
बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपगा ।
यथा मे हृदयं नित्यं नापसर्पति राघवात् ॥ ८१ ॥

ते याष्टीकाः ॥ ७३ ॥

सा या सूर्यचन्द्रादिभिरपि तत्त्वतोऽज्ञाता तादृशीं वानराः सुखेन पश्यन्त्वित्याशयः शिबिकात् शिबिकायाः लिङ्गव्यत्ययश्च आर्षः ॥७४।७५॥

अवाच्यवादान् वक्ष्यमाणकर्कशवचनानि परपुरुषगृहे स्थितासि भिक्षुत्वामित्यादीनि ॥ ७६ ॥

प्रत्ययाय विश्वासाय ॥ ७७—८१ ॥

तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥ ८२ ॥
एवमुक्त्वा तदा सीता परिक्रम्य हुताशनम् ।
विवेश ज्वलनं दीप्तं निर्भयेन हृदा सती (१) ॥ ८३ ॥
दृष्ट्वा ततो भूतगणाः ससिद्धाः
सीतां महावह्निगतां भयार्त्ताः ।
परस्परं प्राहुरहो स सीतां
रामः श्रियं स्वां कथमत्यजज्ज्ञः ? ॥ ८४ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
द्वादशः सर्गः ।

सर्वतः पातु शीतो भवत्वित्यर्थः ॥ ८२ । ८३ ॥
ज्ञः सर्वज्ञोऽपि रामः कथं सीतामत्यजत् वह्निप्रवेशमनुज्ञातवा-
निति प्राहुः ॥ ८४ ॥

इति श्रीमत्सकलराजविपद्धरणसमर्थेत्यादिवि० श्रीरामवर्मणः
कृतावध्यात्मरामायणे सेतौ युद्धकाण्डे
द्वादशः सर्गः ।

---

(१) तदा सती इति वा पाठः ।

अथ त्रयोदशः सर्गः ।

ततः शक्रः सहस्राक्षो यमश्च वरुणस्तथा ।
कुबेरश्च महातेजाः पिनाकी वृषवाहनः ॥ १ ॥
ब्रह्मा ब्रह्मविदां श्रेष्ठो मुनिभिः सिद्धचारणैः ।
पितरो ऋषयः साध्या गन्धर्वाप्सरसोरगाः ॥ २ ॥
एते चान्ये विमानाग्र्यैराजग्मुर्यत्र राघवः ।
अब्रुवन् परमात्मानं रामं प्राञ्जलयश्च ते ॥ ३ ॥
कर्ता त्वं सर्वलोकानां साक्षी विज्ञानविग्रहः ।
वसूनामष्टमोऽसि त्वं रुद्राणां शङ्करो भवान् ॥ ४ ॥
आदिकर्तासि लोकानां ब्रह्मा त्वं चतुराननः ।
अश्विनौ घ्राणभूतौ ते चक्षुषी चन्द्रभास्करौ ॥ ५ ॥
लोकानामादिरन्तोऽसि नित्य एकः सदोदितः ।
सदा शुद्धः सदा बुद्धः सदा मुक्तोऽगुणोऽद्वयः ॥ ६ ॥
त्वन्मायासंवृतानां त्वं भासि मानुषविग्रहः ।
त्वन्नाम स्मरतां राम ! सदा भासि चिदात्मकः ॥ ७ ॥

तत इति ॥ १—३ ॥

साक्षी अन्तर्यामितया सर्वद्रष्टा अथ सर्वात्मत्वमाह वसूनामित्यादि ॥ ४ ॥

आदिकर्त्ता सृष्टेः प्रथमकर्त्ता विराड्रूपमाहाश्विनावित्यादि इदं पुराणमरोक्तस्य सर्वस्योपलक्षणम् ॥ ५ ॥

आदिरुत्पत्तिमत् अन्तो नाशवत् सदोदितः रात्रिदिनव्यवहारहीनः शुद्धः मायागुणास्पृष्टः अतएव सदा बुद्धः ज्ञानस्वरूपः अतएव मुक्तोऽसंसारी अगुणोऽद्वय इति च्छेदः ॥ ६ ॥

त्वन्मायया संवृतानां संवृतज्ञानानां चिदात्मकः शुद्धज्ञानस्वरूपः ॥ ७ ॥

रावणेन हृतं स्थानमस्माकं तेजसा सह ।
त्वयाद्य निहतो दुष्टः पुनः प्राप्तं पदं स्वकम् ॥ ८ ॥
एवं स्तुवत्सु देवेषु ब्रह्मा साक्षात्पितामहः ।
अब्रवीत्प्रणतो भूत्वा रामं सत्यपथे स्थितम् ॥ ९ ॥

ब्रह्मोवाच

वन्दे देवं विष्णुमशेषस्थितिहेतुं
त्वामध्यात्मज्ञानिभिरन्तर्हृदि भाव्यम् ।
हेयाहेयद्वन्द्वविहीनं परमेकं
सत्तामात्रं सर्वहृदिस्थं दृशिरूपम् ॥ १० ॥
प्राणापानौ निश्चयबुद्ध्या हृदि रुद्ध्वा
छित्त्वा सर्वं संशयबन्धं विषयौघान् ।
पश्यन्तीशं यं गतमोहा यतयस्तं
वन्दे रामं रत्नकिरीटं रविभासम् ॥ ११ ॥

तेजसा सह स्थानं हृतं तेजोऽपि हृतं स्थानं चेत्यर्थः ॥ ८।९ ॥

अशेषस्य स्थितिकारणं अध्यात्मज्ञानिभिः आत्मविषयतत्त्वज्ञानवन्तः हेये दुःखरूपे तत्साधने तद्रूपद्वन्द्वविहीनं कूटस्थत्वात् सत्तामात्रं सर्वस्य हृदि तिष्ठतीति व्यवहारनियामकं दृशिमिति 'इक् कृष्यादिभ्य' इति इक्प्रत्ययः ॥ १० ॥

निश्चयबुद्ध्या हठयोगेनावश्यं भगवन्तं साक्षात्कुर्यामित्येवं रूपेण कुम्भकेन हृदि प्राणापानौ रुद्ध्वा सञ्चारहीनौ कृत्वा तत्र प्राण ऊर्ध्वसञ्चारी अपानोऽधश्चारी श्रवणादिभिरीश्वरविषयं संशयबन्धम् ईश्वरोऽस्ति न वा साकाररूपो वा शरीरी वेत्यादिसंशयरूपं बन्धनं एवं संशयस्यैव संसारमूलकारणत्वात् विषयौघांश्च छित्त्वा ततोऽन्तःकरणं विशुद्धं कृत्वा तत्रेश्वरविषयसन्देहस्य श्रवणादिना च्छेदः विषयाणां चानित्याशुचित्वप्रतिसन्धानेन त्यागः गतमोहाः संयतमनसः यं पश्यन्ति तं रामं वन्दे इत्यन्वयः ॥ ११ ॥

मायातीतं माधवमाद्यं जगदादिं
मानातीतं मोहविनाशं मुनिवन्द्यम् ।
योगिध्येयं योगविधानं परिपूर्णं
वन्दे रामं रञ्जितलोकं रमणीयम् ॥ १२ ॥
भावाभावप्रत्ययहीनं भवमुख्यै-
र्भोगासक्तैरर्चितपादाम्बुजयुग्मम् ।
नित्यं शुद्धं बुद्धमनन्तं प्रणवाख्यं
वन्दे रामं वीरमशेषासुरदावम्(१) ॥ १३ ॥
त्वं मे नाथो नाथितकार्याखिलकारी
मानातीतो माधवरूपोऽखिलधारी ।

मायातीतं तद्गुणास्पृष्टम् आद्यमित्यस्यैव विवरणं जगदादिमिति मानातीतं देशकालवस्तुपरिच्छेदशून्यं मोहविनाशं सेवकानां मोहनाशकं योगविधानं योगविधातारं योगमार्गप्रवर्त्तकम् ॥ १२ ॥

भावाभावप्रत्ययहीनं संसारे मिथ्यात्वाच्च तस्य भावप्रत्ययो नाप्यभावप्रत्ययो दृश्यत्वात्तेनानिर्वचनीयत्वज्ञानविषयस्तस्य स इति सूचितं यद्वा अज्ञानां भावाभावप्रत्ययाविषयं शास्त्रतः सत्त्वात् प्रत्यक्षेणानुपलम्भाच्च तत्त्वम् यद्वा भावो दृश्यमभावस्तुच्छं तद्विषयज्ञानाविषयं अदृश्यत्वादतुच्छत्वाच्च भोगासक्तैर्भोगेष्वसक्तैर्भक्तिभोगैर्भवमुख्यैः शिवादिभिः पूजितचरणकमलं नित्यं कालत्रयाबाध्यम् शुद्धं मायादोषास्पृष्टं बुद्धं ज्ञानस्वरूपम् अनन्तं देशाद्यपरिच्छेद्यं प्रणव आख्या नाम यस्य तं प्रणवाख्यं 'तस्य वाचकः प्रणव' इति पातञ्जलसूत्रात् अशेषासुरदावं सर्वदैत्यनाशकमित्यर्थः ॥ १२ ॥

मे अस्मभ्यं त्वं नाथः नाथत्वमेवोपपादयति नाथितकार्याखिलकारी प्रार्थितसकलकार्यकर्त्ता अखिलशब्दस्य परनिपात आर्षः माना-

(१) अशेषं सुरभावमिति वा पाठः ।

भक्त्या गम्यो भावितरूपो भवहारी
योगाभ्यासैर्भावितचेतः सहचारी ॥ १४ ॥
त्वामाद्यन्तं लोकततीनां परमीशं
लोकानां नो लौकिकमानैरधिगम्यम् ।
भक्तिश्रद्धाभावसमेतैर्भजनीयं
वन्दे रामं सुन्दरमिन्दीवरनीलम् ॥ १५ ॥
को वा ज्ञातुं त्वामतिमानं(१) गतमानं
मानासक्तो माधव ! शक्तो मुनिमान्यम् ।
वृन्दारण्ये वन्दितवृन्दारकवृन्दं
वन्दे रामं भवमुखवन्द्यं सुखकन्दम् ॥ १६ ॥

तीतः देशतः कालतो रूपतश्चेत्येवं त्रिविधपरिच्छेदशून्यः मा लक्ष्मी-स्तस्याः पतिः भक्त्यानन्यशरणत्वरूपया गम्यः प्राप्यः भावितरूपः सन् भवस्य संसारस्य हारी हर्त्ता योगाभ्यासैर्भावितं विहीनदोषं तथा शुद्धं यच्चेतोऽन्तःकरणं तत्र सहचारी तद्वृत्तिविषय इत्यर्थः 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुतेः ॥ १४ ॥

लोकततीनां परम्पराणाम् आद्यन्तं सृष्टिनाशहेतुम् लोकानां पर-मीशं पालनहेतुम् लौकिकमानैर्लौकिकैः प्रमाणैर्न अधिगम्यं अशक्यं शास्त्रैकगम्यमित्यर्थः भक्तिः परमेश्वरे तत्र आदौ प्रीतिः श्रद्धा ततः फलावश्यम्भावनिश्चयः तद्रूपैर्भावैश्चित्तधर्मैर्युक्तैः पुरुषैः सेव्यम् ॥ १५ ॥

हे माधव ! अतिमानं सर्वतोऽतिव्यापकं गतमानं जगति यत्तया परिच्छेद्यम् ईदृशं त्वां ज्ञातुं मानासक्तः मानेषु प्रमाणेषु इन्द्रियेष्वसक्तः को वा शक्तः समर्थः कृष्णावतारे वृन्दारण्ये स्थित्वा मायया वन्दितं नमस्कृतं वृन्दारकाणां देवानां वृन्दं येन भवमुख्यैः शिवादिभिर्वन्द्यं सुखकन्दं सुखजनकं त्वां वन्दे ॥ १६ ॥

(१) त्वामभिमाना इति पाठान्तरम् ।

नानाशास्त्रैर्वेदकदम्बैः प्रतिपाद्यं
नित्यानन्दं निर्विषयज्ञानमनादिम्(१)।
मत्सेवार्थं मानुषभावं प्रतिपन्नं
वन्दे रामं मरकतवर्णं मथुरेशम्॥ १७ ॥

श्रद्धायुक्तो यः पठतीमं स्तवमाद्यं
ब्राह्मं ब्रह्मज्ञानविधानं भुवि मर्त्यः।
रामं श्यामं कामितकामप्रदमीशं
ध्यात्वा ध्याता पातकजालैर्विगतः स्यात्॥ १८ ॥

श्रुत्वा स्तुतिं लोकगुरोर्विभावसुः
स्वाङ्के समादाय विदेहपुत्रिकाम्।
विभ्राजमानां विमलारुणद्युतिं
रक्ताम्बरां दिव्यविभूषणान्विताम्॥ १९ ॥

प्रोवाच साक्षी जगतां रघूत्तमं
प्रपन्नसर्वार्त्तिहरं हुताशनः।

नानाशास्त्रैः निर्णीतार्था ये वेदकदम्बा वेदसमूहास्तैः प्रतिपाद्यम् निर्विषयज्ञानं निर्विकल्पकज्ञानविषयं बाह्यविषयाविषयकज्ञानविषयमित्यर्थः मत्सेवार्थं रावणादिवधेनेति शेषः मथुरेशं कथं मत् ज्ञाय मथुराराज्यदानात्तत्त्वं कृष्णावताराभिप्रायेण च॥ १७ ॥

ब्राह्मं ब्रह्मकृतं ब्रह्मज्ञानविधानं तज्जनकं कामितकामप्रदम् अभीष्टवस्तुदातारं तादृशं ध्यात्वा यः पठति स ध्याता पुरुषः पातकजालैर्विगतः हीनः स्यात्॥ १८ ॥

विभावसुरग्निः दिव्यविभूषणान्विता तद्युक्ताम्॥ १९ ॥

---

(१) निर्विशेषज्ञानमनादिम् इति क्वचित् वदन्ति।

गृहाण देवीं रघुनाथ ! जानकीं
पुरा त्वया मय्यवरोपितां वने ॥ २० ॥
विधाय मायाजनकात्मजां हरे !
दशाननप्राणविनाशनाय च ।
हतो दशास्यः सह पुत्रबान्धवै-
र्निराकृतोऽनेन भरो भुवः प्रभो ! ॥ २१ ॥
तिरोहिता सा प्रतिबिम्बरूपिणी
कृता यदर्थं कृतकृत्यतां गता ।
ततोऽतिहृष्टां परिगृह्य जानकीं
रामः प्रहृष्टः प्रतिपूज्य पावकम् ॥ २२ ॥
स्वाङ्के समावेश्य सदानपायिनीं
श्रियं त्रिलोकीजननीं श्रियः पतिः ।
दृष्ट्वाथ रामं जानकात्मजायुतं
श्रिया स्फुरन्तं सुरनायको मुदा ॥ २३ ॥
भक्त्या गिरा गद्गदया समेत्य
कृताञ्जलिः स्तोतुमथोपचक्रमे ।

जगतां साक्षी तत्पु यद्यपापहृष्टा मय्यवरोपितां स्थापिताम् ॥२०॥

मायाजनकात्मजां मायारूपां तां जनकात्मजासदृशीं मायया विधाय निर्मायेति यावत् पुरा मय्यवरोपितामिति पूर्वेणान्वयः इदानीं तन्निर्माणकृत्यस्य मातस्तां मायानिर्मितां मयि सीतेत्याह हत इति अनेन दशास्यवधेन ॥ २१ ॥

प्रतिबिम्बरूपिणी सीता प्रतिबिम्बरूपा यदर्थं सा कृता निर्मिता तद्विषयतः कृतकृत्यतां गता अतस्तिरोहिता सीता ॥ २२ ॥

सुरनायक इन्द्रः ॥ २३ ॥

इन्द्र उवाच ।

भजेऽहं सदा राममिन्दीवराभं
भवारण्यदावानलाभाभिधानम् ।
भवानीहृदा(१) भावितानन्दरूपं
भवाभावहेतुं भवादिप्रपन्नम् ॥ २४ ॥

सुरानीकदुःखौघनाशैकहेतुं
नराकारदेहं निराकारमीड्यम् ।
परेशं परानन्दरूपं वरेण्यं
हरिं राममीशं भजे भारनाशम् ॥ २५ ॥

प्रपन्नाखिलानन्ददोहं प्रपन्नं
प्रपन्नार्त्तिनिःशेषनाशाभिधानम् ।
तपोयोगयोगीशभावाभिभाव्यं
कपीशादिमित्रं भजे राममित्रम् ॥ २६ ॥

भक्त्या समेत्य भक्तियुक्तो भूत्वा इन्दीवरं नीलोत्पलं तदाभं तत्कान्तिम् भवारण्यस्य संसारारण्यस्य दावानलाभं तत्तुल्यं तन्नाशकत्वादभिधानं नाम यस्य तं भवानीहृदा पार्वतीहृदयेन भावितं ध्यातमानन्दरूपं यस्य तं भवाभावहेतुं संसारनिराकरणं भवादिभिः प्रपन्नं सेवितम् ॥ २४ ॥

सुरसमूहस्य यो दुःखौघो दुःखसमूहस्तन्नाशस्य मुख्यकारणं नराकारदेहं माययेति शेषः वस्तुतो निराकारं ईड्यं स्तुत्यम् परेषां ब्रह्मादीनामपीशं वरेण्यं श्रेष्ठं भारनाशं भूभारनाशकम् ॥ २५ ॥

प्रपन्नेति शरणागतानामखिलानन्ददातारं प्रपन्नं भक्तैरिति शेषः प्रपन्नानामार्त्तीनां निःशेषं यथा भवति तथा नाशं नाशकत्वं अभिधानं नाम यस्य तपसा शमदमादिना योगो येषां तादृशैर्योगीशैर्भावेन सत्तया

(१) भवानी सदा इति वा पाठः ।

सदा भोगभाजां सुदूरे विभान्तं
सदा योगभाजामदूरे विभान्तम्।
चिदानन्दकन्दं सदा राघवेशं
विदेहात्मजानन्दरूपं प्रपद्ये ॥२७॥
महायोगमायाविशेषानुयुक्तो(१)
विभासीश ! लीलानराकारवृत्तिः।
त्वदानन्दलीलाकथापूर्णकर्णाः
सदानन्दरूपा भवन्तीह लोके ॥२८॥
अहं मानपानाभिमत्तप्रमत्तो
न वेदाखिलेशाभिमानाभिमानः।

तद्रूपेणाभिभाव्यं ध्येयं कपीशः सुग्रीवः आदिना विभीषणसन्मितं राममित्रं रामरूपं स्वयम् ॥ २६ ॥

भोगभाजां भोगिनां संसारिणां सुदूरे विभान्तं तज्ज्ञानाविषय-मिति यावत् योगिनां सदा अदूरे विभान्तं तेषां सर्वदा आत्मत्वेन ज्ञान-विषयमित्यर्थः चिदानन्दकन्दं चित्चैतन्यज्ञानन्दस्य कन्दः सर्वचेतनानां सर्वानन्दानां तन्मूलकत्वात् 'अस्यैवानन्दस्य सर्वे मात्रामुपजीवन्ति' इति श्रुतेः राघवेशं रघुवंशस्वामिनं विदेहात्मजानन्दरूपम् जानक्या आनन्द-रूपं सर्वानन्दप्रदम् ॥ २७ ॥

महेति महती योगमाया तद्गुणविशेषैः सत्त्वादिभिरनुयुक्तः यथा जवाकुसुमयुक्तः स्फटिको रक्तो भाति तथा तदनुयोगात्लीलया नराकारा वृत्तिश्चेष्टा यस्य तादृशो विभासि तव या आनन्देन लीलास्तत्कथाभिः पूर्णाः कर्णा येषां ते सदा आनन्दरूपा इह लोके भवन्ति ॥ २८ ॥

अहंमानोऽहङ्कारस्तद्रूपं पानं सुरादि कर्मल्युडन्तस्तेनाभितो मत्तो तएव प्रकर्षेण मत्तः अखिला ये ईशा भूम्यादेः तदभिमानेन सृष्टो-

(१) महापापमायाविशेषार्थयुक्तो इति पाठान्तरम्।

इदानीं भवत्पादपद्मप्रसादात्
त्रिलोकाधिपत्याभिमानो विनष्टः ॥ २९ ॥
स्फुरद्रत्नकेयूरहाराभिरामं
धराभारभूतासुरानीकदावम् ।
शरच्चन्द्रवक्त्रं लसत्पद्मनेत्रं
दुरावारपारं भजे राघवेशम् ॥ ३० ॥
सुराधीशनीलाभ्रनीलाङ्गकान्तिं
विराधादिरक्षोवधाल्लोकशान्तिम् ।
किरीटादिशोभं पुरारातिलाभं
भजे रामचन्द्रं रघूणामधीशम् ॥ ३१ ॥
लसच्चन्द्रकोटिप्रकाशादिपीठे
समासीनमङ्के समाधाय सीताम् ।
स्फुरद्धेमवर्णां तडित्पुञ्जभासां
भजे रामचन्द्रं निवृत्तार्त्तितन्द्रम् ॥ ३२ ॥

भिमानो यस्य तादृशोऽहं त्वां न वेद न जानामि त्रिलोके यदाधिपत्यं तत्संयुक्तोऽभिमानो विनष्टः गतः ॥ २९ ॥

स्फुरद्रत्नकेयूरहारैरभिरामं जनमनोहरं धरायाः पृथ्व्या भारभूता ये असुरा दैत्यास्तदनीकस्य दावाग्नितुल्यं दुरापः दुःखेन प्राप्य अवारपारो यस्य तं पृषोदरादित्वाद्वर्णलोपः ॥ ३० ॥

सुराधीशनील इन्द्रनीलमणिः अभ्रं च तद्वन्नीला अङ्गकान्तिर्यस्य तं लोकशान्तिं लोकानां शान्तिः सुखं यस्मात्तं किरीटादिभिः शोभा यस्य तं पुरारातेर्लाभभूतं यत्नप्राप्यमित्यादि स्पष्टम् ॥ ३१ ॥

लसच्चन्द्रकोटिप्रकाशादि यत्र तादृशे पीठे उक्तविशेषणां सीतामङ्के समाधाय स्वीकृत्य समासीनम् निवृत्ते आर्त्तितन्द्रे दुःखालस्ये यस्मात्तं सदाप्रकाशरूपमित्यर्थः ॥ ३२ ॥

ततः प्रोवाच भगवान् भवान्या सहितो भवः ।
रामं कमलपत्राक्षं विमानस्थो नभःस्थले ॥ ३३ ॥
आगमिष्याम्ययोध्यायां द्रष्टुं त्वां राज्यसत्कृतम् ।
इदानीं पश्य पितरमस्य देहस्य राघव ! ॥ ३४ ॥
ततोऽपश्यद्विमानस्थं रामो दशरथं पुरः ।
ननाम शिरसा पादौ मुदा भक्त्या सहानुजः ॥ ३५ ॥
आलिङ्ग्य मूर्ध्न्यवघ्राय रामं दशरथोऽब्रवीत् ।
तारितोऽस्मि त्वया वत्स ! संसाराद्दुःखसागरात् ॥ ३६ ॥
इत्युक्त्वा पुनरालिङ्ग्य ययौ रामेण पूजितः ।
रामोऽपि देवराजं तं दृष्ट्वा प्राह कृताञ्जलिम् ॥ ३७ ॥
मत्कृते निहतान् संख्ये वानरान् पतितान् भुवि(१) ।
जीवयाशु सुधावृष्ट्या सहस्राक्ष ! ममाज्ञया ॥ ३८ ॥
तथेत्यमृतवृष्ट्या तान् जीवयामास वानरान् ।
ये ये मृता मृधे पूर्वं ते ते सुप्तोत्थिता इव ।
पूर्ववद्बलिनो हृष्टा रामपार्श्वमुपाययुः ॥ ३९ ॥
नोत्थिता राक्षसास्तत्र पीयूषस्पर्शनादपि ।
विभीषणस्तु साष्टाङ्गं प्रणिपत्याब्रवीद्वचः ॥ ४० ॥

भवः शिवः नभःस्थले आकाशे विमाने स्थितः सन् प्रोवाचेत्यन्वयः ॥३३
अस्य तव देहस्य पितरं जनयितारम् ॥ ३४ ॥
सहानुजः लक्ष्मणः पादौ मुदा शिरसा ननामेत्यन्वयः ॥३५—३९॥
पूर्ववदिति राक्षसानां तु मोक्षार्थं समुपस्थितस्य भगवतः शरैर्दग्धा-
नामुत्थापने कृतस्यापि सामर्थ्याभावात् शरपातकाले पुनर्जीवनस्यैव भगवता

(१) शयितान् भुवि इति विभिन्नः पाठः ।

देव ! मामनुगृह्णीष्व मयि भक्तिर्यदा तव ।
मङ्गलस्नानमद्य त्वं कुरु सीतासमन्वितः ॥ ४१ ॥
अलङ्कृत्य सह भ्रात्रा श्वो गमिष्यामहे वयम् ।
विभीषणवचः श्रुत्वा प्रत्युवाच रघूत्तमः (१) ॥ ४२ ॥
सुकुमारोऽतिभक्तो मे भरतो मामवेक्षते ।
जटावल्कलधारी स शब्दब्रह्मसमाहितः ॥ ४३ ॥
कथं तेन विना स्नानं अलङ्कारादिकं मम ? ।
अतः सुग्रीवमुख्यांस्त्वं पूजयाशु विशेषतः ॥ ४४ ॥
पूजितेषु कपीन्द्रेषु पूजितोऽहं न संशयः ।
इत्युक्तो राघवेणाशु स्वर्णरत्नाम्बराणि च ॥ ४५ ॥
ववर्ष राक्षसश्रेष्ठो यथाकामं यथारुचि ।
ततस्तान् पूजितान् दृष्ट्वा रामो रत्नैश्च यूथपान् ॥ ४६ ॥
अभिनन्द्य यथान्यायं विससर्ज हरीश्वरान् ।
विभीषणसमानीतं पुष्पकं सूर्यवर्चसम् ॥ ४७ ॥

अलङ्करणात् केचित्तु रत्नाकृष्यनार्थं रावणेन समुद्रे प्रक्षेपान्नोत्थानं यद्वा रावणदाहकाले सर्वेषां रत्नानां तद्वह्निभिर्दाहकरणेन भवनस्य समुद्रे प्रक्षेपेण नोत्थानमित्याहुः ॥ ४० ॥

यदेति यदोत्यर्थे ॥ ४१ ॥

गमिष्यामहे अयोध्यायामिति शेषः ॥ ४२ ॥

शब्दब्रह्मप्रणवस्तत्र समाहितः शक्तोऽर्थतस्य तद्ध्यानवान् ॥ ४३ ॥

सुग्रीवो मुख्यो येषां तान् कपीन्द्रानिति शेषः ॥ ४४–४६ ॥

अनुत्तमं न विद्यते उत्तमं यस्मात्तत् ॥ ४८ ॥

---

( १ ) गतुमसहितः पुरे इति केचित् पठन्ति ।

आरुरोह ततो रामस्तद्विमानमनुत्तमम्।
अङ्के निधाय वैदेहीं लज्जमानां यशस्विनीम्॥ ४८ ॥
लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता।
अब्रवीच्च विमानस्थः श्रीरामः सर्ववानरान्॥ ४९ ॥
सुग्रीवं हरिराजं च अङ्गदं च विभीषणम्।
मित्रकार्य्यं कृतं सर्वं भवद्भिः सह वानरैः॥ ५० ॥
अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ।
सुग्रीव! प्रति याह्याशु किष्किन्ध्यां सर्वसैनिकैः॥ ५१ ॥
स्वराज्ये वस लङ्कायां मम भक्तो विभीषण!।
न त्वां धर्षयितुं शक्ताः सेन्द्रा अपि दिवौकसः॥ ५२ ॥
अयोध्यां गन्तुमिच्छामि राजधानीं पितुर्मम।
एवमुक्तास्तु रामेण वानरास्ते महाबलाः॥ ५३ ॥
ऊचुः प्राञ्जलयः सर्वे राक्षसश्च विभीषणः।
अयोध्यां गन्तुमिच्छामस्त्वया सह रघूत्तम!॥ ५४ ॥
दृष्ट्वा त्वामभिषिक्तं(१) तु कौशल्यामभिवाद्य च।
पश्चाद् यामहे राज्यमनुज्ञां देहि नः प्रभो!॥ ५५ ॥

लज्जमानां तामिव जनान्ते भर्तृसमीपावस्थानात्तदभिनयः विक्रान्तेन पराक्रमशालिना॥ ४९ ॥

स्वयं विमानमारुह्य भूमिष्ठान् सर्ववानरादीनाह मित्रकार्य्यमिति वानरैः सह भवद्भिः सर्वं कार्यं कृतमित्यन्वयः॥ ५०। ५१॥

हे विभीषण! मम भक्तः सन् स्वराज्ये लङ्कायां वसेत्यन्वयः ननु पूर्वविरोधेन देवा मां पीडयिष्यन्ति तत्कथमत्रावस्थितिरत आह न त्वामिति॥ ५२—५४॥

(१) त्वामभिषेकार्द्रं इत्यपि पाठः।

रामस्तथेति सुग्रीव । वानरैः सविभीषण ।
पुष्पकं सहनूमांश्च शीघ्रमारोह साम्प्रतम् ॥ ५६ ॥
ततस्तु पुष्पकं दिव्यं सुग्रीवः सह सेनया ।
विभीषणश्च सामात्यः सर्वे चारुरुहुर्द्रुतम् ॥ ५७ ॥
तेष्वारूढेषु सर्वेषु कौवेरं परमासनम् ।
राघवेणाभ्यनुज्ञातमुत्पपात विहायसा ॥ ५८ ॥
बभौ तेन विमानेन हंसयुक्तेन भास्वता ।
प्रहृष्टश्च तदा रामश्चतुर्मुख इवापरः ॥ ५९ ॥
ततो बभौ भास्करबिम्बतुल्यं कुवेरयानन्तपसानुलब्धम् ।
रामेण शोभां नितरां प्रपेदे सीता समेतेन सहानुजेन ॥ ६० ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
त्रयोदशः सर्गः ।

इणीमहे सम्भजिष्याम इत्यर्थः रामस्तथेत्युक्त्वा हे सुग्रीव ! सविभी-
षण सहनूमान् वानरैः सह शीघ्रमारोह ॥ ५५–५८ ॥
चतुर्मुख इव तस्य हंसवाहनत्वात् ॥ ५९ । ६० ॥

इति श्रीमत्सकलराजवि० श्रीरामवर्मणः कृताव-
ध्यात्मरामायणे सेतौ युद्धकाण्डे
त्रयोदशः सर्गः ।

अथ चतुर्दशः सर्गः ।

पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः ।
अब्रवीन्मैथिलीं सीतां रामः शशिनिभाननाम् ॥ १ ॥
त्रिकूटशिखराग्रस्थां पश्य लङ्कां महाप्रभाम् ।
एतां रणभुवं पश्य मांसकर्दमपङ्किलाम् ॥ २ ॥
असुराणां प्लवङ्गानामत्र वैशसनं महत् ।
अत्र मे निहतः शेते रावणो राक्षसेश्वरः ॥ ३ ॥
कुम्भकर्णेन्द्रजिन्मुख्याः सर्वे चात्र निपातिताः ।
एष सेतुर्मया बद्धः सागरे सलिलाशये ॥ ४ ॥
एतच्च दृश्यते तीर्थं सागरस्य महात्मनः ।
सेतुबन्धमिति ख्यातं त्रैलोक्येन च पूजितम् ॥ ५ ॥
एतत्पवित्रं परमं दर्शनात् पातकापहम् ।
अत्र रामेश्वरो देवो मया शम्भुः प्रतिष्ठितः ॥ ६ ॥
अत्र मां शरणं प्राप्तो मन्त्रिभिश्च विभीषणः ।
एषा सुग्रीवनगरी किष्किन्ध्या चित्रकानना ॥ ७ ॥
तत्र रामाज्ञया ताराप्रमुखा हरियोषितः ।
आनयामास सुग्रीवः सीतायाः प्रियकाम्यया ॥ ८ ॥
ताभिः सहोत्थितं शीघ्रं विमानं प्रेक्ष्य राघवः ।

पातयित्वेति ॥ १ ॥
कर्दमोऽत्यन्तार्द्रद्रव्यं पङ्क ईषदार्द्रं इति भेदः ॥ २ ॥
वैशसनम् साधनं महायुद्धमिति यावत् मे मया त्वत्प्रियेच्छ ॥ ३—७ ॥
रामाज्ञया ताराप्रमुखाः सर्वा अयोध्यायामायान्त्विति रामाज्ञा ॥८॥

प्राह चाद्रिं ऋष्यमूकं पश्य वाल्यत्र मे हतः ॥ ९ ॥
एषा पञ्चवटी नाम राक्षसा यत्र मे हताः ।
अगस्त्यस्य सुतीक्ष्णस्य पश्याश्रमपदे शुभे ॥ १० ॥
एते ते तापसाः सर्वे दृश्यन्ते वरवर्णिनि ! ।
असौ शैलवरो देवि ! चित्रकूटः प्रकाशते ॥ ११ ॥
अत्र मां कैकयीपुत्रः प्रसादयितुमागतः ।
भरद्वाजाश्रमं पश्य दृश्यते यमुनातटे ॥ १२ ॥
एषा भागीरथी गङ्गा दृश्यते लोकपावनी ।
एषा सा दृश्यते सीते ! सरयूर्यूपमालिनी (१) ॥ १३ ॥
एषा सा दृश्यतेऽयोध्या प्रणामं कुरु भामिनि ! ।
एवं क्रमेण सम्प्राप्तो भरद्वाजाश्रमं हरिः ॥ १४ ॥
पूर्णे चतुर्दशे वर्षे पञ्चम्यां रघुनन्दनः ।
भरद्वाजं मुनिं दृष्ट्वा ववन्दे सानुजः प्रभुः ॥ १५ ॥
पप्रच्छ मुनिमासीनं विनयेन रघूत्तमः ।
शृणोषि कच्चिद्भरतः कुशल्यास्ते सहानुजः ॥ १६ ॥

प्राह सीतामिति शेषः ऋष्यमूकमद्रिं पश्य अत्र मे वाली हतस्तत्स्थानं पश्य अत्र मे रक्षोद्विषच्छी जानकी ॥ ९ ॥

आश्रमपदे आश्रमस्थाने ॥ १० । ११ ॥

दृश्यते भरद्वाजाश्रम इति शेषः सरयूरिति आनुपूर्व्येणसत्याद्विमानस्य युगपत्सर्वदर्शनम् ॥ १२ । १३ ॥

एवं वदन्निति शेषः ॥ १४ । १५ ॥

कच्चिदिति प्रश्ने ॥ १६ ॥

---

(१) यूपशालिनी इति पाठान्तरम् ।

सुभिक्षा वर्त्ततेऽयोध्या जीवन्ति च हि मातरः (१)।
श्रुत्वा रामस्य वचनं भरद्वाजः प्रहृष्टधीः॥ १७॥
प्राह सर्वे कुशलिनो भरतस्तु महामनाः।
फलमूलकृताहारो जटावल्कलधारकः॥ १८॥
पादुके सकलं न्यस्य राज्यं त्वां सुप्रतीक्षते।
यत्यत्कृतं त्वया कर्म दण्डके रघुनन्दन!॥ १९॥
राक्षसानां विनाशं च सीताहरणपूर्वकम्।
सर्वं ज्ञातं मया राम! तपसा ते प्रसादतः॥ २०॥
त्वं ब्रह्म परमं साक्षादादिमध्यान्तवर्जितः।
त्वमग्रे सलिलं सृष्ट्वा तत्र सुप्तोऽसि भूतकृत्॥ २१॥
नारायणोऽसि विश्वात्मन्! नराणामन्तरात्मकः।
त्वन्नाभिकमलोत्पन्नो ब्रह्मा लोकपितामहः॥ २२॥
अतस्त्वं जगतामीशः सर्वलोकनमस्कृतः।
त्वं विष्णुर्जानकी लक्ष्मीः शेषोऽयं लक्ष्मणाभिधः॥ २३॥

चकारौ पादपूरणे प्रहृष्टधीः प्रहृष्टचित्तः॥ १७। १८॥

पादुके पादुकयोः॥ १९॥

सीताहरणपूर्वकं राक्षसानां विनाशं कर्म॥ २०॥

यदादिमध्यान्तवर्जितं ब्रह्म तत्त्वमेव 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' इति श्रुत्यर्थं नारायणपदस्य दर्शयति त्वमिति॥२१॥

नारं जीवसमूहस्तत्स्थानकत्वात् नारायण इति श्रुत्यन्तरमाह नराणामिति॥ २२। २३॥

(१) मम मातर इति वा पाठः।

आत्मना सृजसीदं त्वमात्मन्येवात्ममायया ।
न सज्जसे नभोवत्त्वं चिच्छक्त्या सर्वसाक्षिकः ॥ २४ ॥
बहिरन्तश्च भूतानां त्वमेव रघुनन्दन ! ।
पूर्णोऽपि(१)मूढदृष्टीनां विच्छिन्न इव लक्ष्यसे ॥ २५ ॥
जगत्त्वं जगदाधारस्त्वमेव परिपालकः ।
त्वमेव सर्वभूतानां भोक्ता भोज्यं जगत्पते ! ॥ २६ ॥
दृश्यते श्रूयते यद्यत् स्मर्यते वा रघूत्तम ! ।
त्वमेव सर्वमखिलं त्वद्विनान्यन्न किञ्चन ॥ २७ ॥
माया सृजति लोकांश्च स्वगुणैरहमादिभिः ।
त्वच्छक्तिप्रेरिता राम ! तस्मात्त्वय्युपचर्य्यते ॥ २८ ॥
यथा चुम्बकसान्निध्याच्चलन्त्येवायसादयः ।
जडा तथा(२) त्वया दृष्टा माया सृजति वै जगत्॥२९॥

त्वमात्मना इदं सृजसि आत्मनि अधिष्ठाने एवं सर्वं सृष्ट्वा तत्र त्वं न सज्जसे आसक्तो न भवसि इतरजनवत् असङ्गे दृष्टान्तः नभोवत् चिच्छक्त्या सर्वस्य साक्षिकः साक्षी कः ॥ २४ ॥

तदेवोपपादयति बहिरिति विच्छिन्न इव ॥ २५ ॥

इदानीं भवतो रामस्य सार्वात्म्यमाह जगदिति जगत्त्वं त्वद्विवर्त्तत्वाज्जगद् इति भावः भोक्ता भोज्यम् उभयमपि त्वमेवेति भावः ॥ २६ । २७ ॥

ननु तत्किं स्रष्टृत्वादिकमपि मयि वास्तवं नेत्याह मायेति अहमादयोऽहङ्कारादयः त्वच्छक्त्या त्वदिच्छया स्रष्टृप्रेरकत्वेन त्वयि स्रष्टृत्वमुपचार इति भावः ॥ २८ ॥

तदेवाह यथेति अयः लोहम् ॥ २९ ॥

---

(१) पूर्णोऽपि इति वा पाठः ।
(२) जाता यथा इति वा पाठः ।

देहद्वयमदेहस्य तव विश्वं चिरंविषोः ।
विराट् स्थूलं शरीरं ते सूत्रं सूक्ष्ममुदाहृतम् ॥ ३० ॥
विराजः सम्भवन्त्येते अवतारा: सहस्रशः ।
कार्यान्ते प्रविशन्त्येव विराजं रघुनन्दन ! ॥ ३१ ॥
अवतारकथां लोके ये गायन्ति शृण्वन्ति च ।
अनन्यमनसो मुक्तिस्तेषामेव रघूत्तम ! (१) ॥ ३२ ॥
त्वं ब्रह्मणा पुरा भूमेर्भारहाराय राघव ! ।
प्रार्थितस्तपसा तुष्टस्त्वं जातोऽसि रघोः कुले (२) ॥ ३३ ॥
देवकार्य्यमशेषेण कृतं ते राम ! दुष्करम् ।
बहुवर्षसहस्राणि मानुषं देहमाश्रितः ॥ ३४ ॥
कुर्वन् दुष्करकर्माणि लोकद्वयहिताय च ।
पापहारीणि भुवनं यशसा पूरयिष्यसि ॥ ३५ ॥

देहद्वयं स्थूलं ब्रह्मा च सूत्रं हिरण्यगर्भः ॥ ३० ॥

विराज एवावतारकर्त्तृत्वमाह विराज इति यतः सम्भवन्त्यत एव तत्र लय इति भावः ॥ ३१ ॥

शृण्वन्ति कथयन्तीत्यर्थः ॥ २२ ॥

तपसा तुष्टः ब्रह्मणस्तपसा तुष्टः इत्यर्थः ॥ २४ ॥

जनानां पापहराणि अतएव तेषां लोकद्वये इहलोके परलोके च हिताय अन्यैर्दुष्कराणि कर्माणि कुर्वन् भुवनं चतुर्दशसंख्यकं यशसा पूरयिष्यसि ॥ २५ ॥

---

(१) शृण्वन्ति श्रद्धया नित्यं मुच्यन्ते ते नरा भुवि इत्यपि पाठान्तरम् ।
(१) ब्रह्मणा प्रार्थितस्त्वं हि भूमेर्भारापनुत्तये ।
तपसा तोषितः पूर्वं जातो दशरथात्मजः इत्यपि पठ्यते ।

प्रार्थयामि जगन्नाथ !(१)पवित्रं कुरु मे गृहम् ।
स्थित्वाद्य भुक्त्वा सबलः श्वो गमिष्यसि पत्तनम् ॥३६॥
तथेति राघवोऽतिष्ठत्तस्मिन्नाश्रम उत्तमे ।
ससैन्यः पूजितस्तेन सीतया लक्ष्मणेन च ॥३७॥
ततो रामश्चिन्तयित्वा मुहूर्त्तं प्राह मारुतिम् ।
इतो गच्छ हनूमंस्त्वमयोध्यां प्रति सत्वरः(२) ॥३८॥
जानीहि कुशली कच्चिज्जनो नृपतिमन्दिरे ।
शृङ्गिवेरपुरं गत्वा ब्रूहि मित्रं गुहं मम ॥३९॥
जानकीलक्ष्मणोपेतमागतं मां निवेदय ।
नन्दिग्रामं ततो गत्वा भ्रातरं भरतं मम ॥४०॥
दृष्ट्वा ब्रूहि सभार्य्यस्य सभ्रातुः कुशलं मम ।
सीतापहरणादीनि रावणस्य वधादिकम् ॥४१॥
ब्रूहि क्रमेण मे भ्रातुः सर्वं तत्र विचेष्टितम् ।
हत्वा शत्रुगणान् सर्वान् सभार्य्यः सह लक्ष्मणः ॥४२॥
उपयाति समृद्धार्थः सह ऋक्षहरीश्वरैः ।
इत्युक्त्वा तत्र वृत्तान्तं भरतस्य विचेष्टितम् ॥४३॥
सर्वं ज्ञात्वा पुनः शीघ्रमागच्छ मम सन्निधिम् ।

पत्तनमयोध्यानगरम् ॥ ३६ ॥
तथेत्युक्त्वा तत्राश्रमे अतिष्ठत्तातथेत्यादेः सङ्गित इति शेषः॥३७।३८
नृपतिमन्दिरे अयोध्यायाम् ॥ ३९–४१ ॥
तत्र रणे ॥ ४२–४४ ॥

---

(१) प्रार्थयाम रघुश्रेष्ठ ! इति वा पाठः ।

(२) मारुते ! गच्छ शीघ्रं त्वमयोध्यां भरतं प्रति इति विभिन्नः पाठः ।

तथेति हनुमांस्तत्र मानुषं वपुरास्थितः ॥ ४४ ॥
नन्दिग्रामं ययौ तूर्णं वायुवेगेन मारुतिः।
गरुत्मानिव वेगेन जिघृक्षन् भुजगोत्तमम् ॥ ४५ ॥
शृङ्गिवेरपूरं प्राप्य गुहमासाद्य मारुतिः।
उवाच मधुरं वाक्यं प्रहृष्टेनान्तरात्मना ॥ ४६ ॥
रामो दाशरथिः श्रीमान् सखा ते सह सीतया।
सलक्ष्मणस्त्वां धर्मात्मा क्षेमी कुशलमब्रवीत् ॥ ४७ ॥
अनुज्ञातोऽद्य मुनिना भरद्वाजेन राघवः।
आगमिष्यति तं देवं द्रक्ष्यसि त्वं रघूत्तमम् ॥ ४८ ॥
एवमुक्त्वा महातेजाः संप्रहृष्टतनूरुहम्।
उत्पपात महावेगो वायुवेगेन मारुतिः ॥ ४८ ॥
सोऽपश्यद्रामतीर्थं च सरयूं च महानदीम्।
तामतिक्रम्य हनुमान्नन्दिग्रामं ययौ मुदा ॥ ५० ॥
क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम्।
ददर्श भरतं दीनं कृशमाश्रमवासिनम् ॥ ५१ ॥
मलपङ्कविदिग्धाङ्गं जटिलं वल्कलाम्बरम्।
फलमूलकृताहारं रामचिन्तापरायणम् ॥ ५२ ॥
पादुके ते पुरस्कृत्य शासयन्तं वसुन्धराम्।
मन्त्रिभिः पौरमुख्यैश्च काषायाम्बरधारिभिः ॥ ५३ ॥

भुजगोत्तमं जिघृक्षन् गरुड इव वेगेन ययौ ॥ ४५—४८ ॥
संप्रहृष्टतनूरुहं गुहमिति शेषः ॥ ४९—५१ ॥
विदिग्धाङ्गं लिप्ताङ्गम् ॥ ५२ ॥
ते चित्रकूटे भगवता रामेण दत्ते काषायाम्बरधारिभिः प्रमुख-
मानवीयतस्यास्य रामौचित्येन मन्त्र्यादीनां तत्त्वम् ॥ ५२ ॥

हृतदेहं (१) मूर्त्तिमन्तं साक्षाद्धर्ममिव स्थितम्।
उवाच प्राञ्जलिर्वाक्यं हनूमान् मारुतात्मजः॥ ५४॥
यं त्वं चिन्तयसे रामं तापसं दण्डके स्थितम्।
अनुशोचसि काकुत्स्थः स त्वां कुशलमब्रवीत्॥ ५५॥
प्रियमाख्यामि ते देव! शोकं त्यज सुदारुणम्।
अस्मिन्मुहूर्त्ते भ्रात्रा त्वं रामेण सह सङ्गतः॥ ५६॥
समरे रावणं हत्वा रामः सीतामवाप्य च।
उपयाति समृद्धार्थः ससीतः सहलक्ष्मणः॥ ५७॥
एवमुक्तो महातेजा भरतो हर्षमूर्च्छितः।
पपात भुवि चास्वस्थः कैकेयीप्रियनन्दनः॥ ५८॥
आलिङ्ग्य भरतः शीघ्रं मारुतिं प्रियवादिनम्।
आनन्दजैरश्रुजलैः सिषेच भरतः कपिम्॥ ५९॥
देवो वा मानुषो वा त्वमनुक्रोशादिहागतः।
प्रियाख्यानस्य ते सौम्य! ददामि ब्रुवतः प्रियम्॥६०॥
गवां शतसहस्रञ्च ग्रामाणां च शतं वरम्।
सर्वाभरणसम्पन्ना मुग्धाः कन्यास्तु षोड़श॥ ६१॥

तादृशैर्मन्त्रिभिः हृतः परिहृतो देहो यस्य तम्॥ ५४॥
यं रामं त्वं चिन्तयसेऽनुशोचसि च स काकुत्स्थस्त्वां कुशलमब्रवीत्॥५५॥
रामेण सह सङ्गतो भविष्यसीति शेषः॥ ५६—५८॥
सौम्य! सोमवत् प्रियदर्शन! प्रियं ब्रुवतस्ते प्रियाख्यानस्य प्रति प्रियं ददामीति शेषः॥६०॥
मुग्धाः सुन्दर्यः॥ ६१॥ ६२॥

(१) धृतं देहमिति पाठान्तरम्।

एवमुक्त्वा पुनः प्राह भरतो मारुतात्मजम् ।
बहूनीमानि वर्षाणि गतस्य सुमहद्वनम् ॥ ६२ ॥
शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्त्तनम् ।
कल्याणी वत गाथेयं लौकिकी प्रतिभाति मे ॥ ६३ ॥
एति जीवन्तमानन्दो नरं वर्षशतादपि ।
राघवस्य हरीणाञ्च कथमासीत् समागमः ॥ ६४ ॥
तत्त्वमाख्याहि भद्रं ते विश्वसेयं वचस्तव ।
एवमुक्तोऽथ हनुमान् भरतेन महात्मना ॥ ६५ ॥
आचचक्षेऽथ रामस्य चरितं कृत्स्नशः क्रमात् ।
श्रुत्वा तु परमानन्दं भरतो मारुतात्मजात् ॥ ६६ ॥
आज्ञापयच्छत्रुहणं मुदायुक्तं मुदान्वितः ।
दैवतानि च यावन्ति नगरे रघुनन्दन ! ॥ ६७ ॥
नानोपहारबलिभिः पूजयन्तु महाधियः ।
सूता वैतालिकाश्चैव बन्दिनस्तुतिपाठकाः ॥ ६८ ॥
वारमुख्याश्च (१) शतशो निर्य्यान्त्वद्यैव सङ्घशः ।
राजदारास्तथामात्याः सेनाहस्त्यश्वपत्तयः ॥ ६९ ॥

कल्याणी सत्येत्यर्थः ॥ ६२ ॥ ६४ ॥

तत्त्वमाख्याहि येन ते वचो विश्वसेयम् ॥ ६५ ॥

परमानन्दं प्रापेति शेषः ॥ ६६ ॥

शत्रुहणं शत्रुघ्नं रामकुशलश्रवणेन मुदायुक्तं तेनैव च स्वयं मुदान्वितः किमाज्ञापयत्तदाह दैवतानि चेति ॥ ६७ ॥

उपहाराः गन्धधूपनैवेद्याद्याः ॥ ६८ ॥

वारमुख्या वेश्याः हस्त्यश्वपत्तिरूपाः सेना इत्यर्थः ॥ ६९ ॥

---

(१) राममुख्याश्च इति केचित् पठन्ति ।

ब्राह्मणाश्च तथा पौरा राजानो ये समागताः।
निर्यान्तु राघवस्याद्य द्रष्टुं शशिनिभाननम्॥ ७० ॥
भरतस्य वचः श्रुत्वा शत्रुघ्नपरिचोदिताः।
अलञ्चक्रुश्च नगरीं मुक्तारत्नमयोज्ज्वलैः॥ ७१ ॥
तोरणैश्च पताकाभिर्विचित्राभिरनेकधा।
अलङ्कुर्वन्ति वेश्मानि नानाबलिविचक्षणाः॥ ७२ ॥
निर्य्यान्ति वन्दिनः सर्वे रामदर्शनलालसाः।
हयानां शतसाहस्रं गजानामयुतं तथा॥ ७३ ॥
रथानां दशसाहस्रं स्वर्णसूत्रविभूषितम्।
पारमेष्ठ्यान्युपादाय द्रव्याण्युच्चावचानि च॥ ७४ ॥
ततस्तु शिबिकारूढा निर्ययू राजयोषितः।
भरतः पादुके न्यस्य शिरस्येव कृताञ्जलिः॥ ७५ ॥
शत्रुघ्नसहितो रामं पादचारेण निर्ययौ।
तदैव दृश्यते दूराद्विमानञ्चन्द्रसन्निभम्॥ ७६ ॥
पुष्पकं सूर्य्यसङ्काशं मनसा ब्रह्मनिर्मितम्।
एतस्मिन् भ्रातरौ वीरौ वैदेह्या रामलक्ष्मणौ॥ ७७ ॥

शशिनिभाननं शशिसदृशमुखमित्यर्थः॥ ७० ॥
मुक्तारत्नमयोज्ज्वलैरिति तोरणविशेषणम्॥ ७१ ॥
अलं कुर्वन्ति शत्रुघ्नप्रेरिता जना इति शेषः॥ ७२ ॥
वन्दिनः स्तुतयः॥ ७३ ॥
पारमेष्ठ्यानि ईश्वरार्हाणि॥ ७४ ॥ ७५ ॥
राममवलोकयितुमिति शेषः तदैव तस्मिन्नेव काले भरतयात्राकाले
इत्याह पवनात्मज इत्यनेनान्वयः यदुक्तं वाचा तदाह दृश्यते इत्यादि
॥ ७६ — ७८ ॥

सुग्रीवश्च कपिश्रेष्ठो मन्त्रिभिश्च विभीषणः ।
दृश्यते पश्यत जना इत्याह पवनात्मजः ॥ ७८ ॥
ततो हर्षसमुद्भूतो निःस्वनो दिवमस्पृशत् ।
स्त्रीबालयुववृद्धानां रामोऽयमिति कीर्त्तनात् ॥ ७९ ॥
रथकुञ्जरवाजिस्था अवतीर्य्य महीं गताः ।
ददृशुस्ते विमानस्थं जनाः सोममिवाम्बरे ॥ ८० ॥
प्राञ्जलिर्भरतो भूत्वा प्रहृष्टो राघवोन्मुखः ।
ततो विमानाग्रगतं भरतो राघवं मुदा ॥ ८१ ॥
ववन्दे प्रणतो रामं मेरुस्थमिव भास्करम् ।
ततो रामाभ्यनुज्ञातं विमानमपतद्भुवि ॥ ८२ ॥
आरोपितो विमानं तद्भरतः सानुजस्तदा ।
राममासाद्य मुदितः पुनरेवाभ्यवादयत् ॥ ८३ ॥
समुत्थाप्य चिरात् दृष्टं भरतं रघुनन्दनः ।
भ्रातरं स्वाङ्कमारोप्य मुदा तं परिषस्वजे ॥ ८४ ॥
ततो लक्ष्मणमासाद्य वैदेहीं नाम कीर्त्तयन् ।

अयं रामोऽयं राम इति निस्वनो दिवमस्पृशत् ॥ ७९ ॥
अम्बरे सोममिव रामं ददृशुः ॥ ८० ॥
अत्यानन्दवतो भरतस्य वर्णने कवेरपि तन्मयभावेनानन्दमग्नतया भरतपदपौनरुक्त्यंत्र न दोषाय ॥ ८१ ॥
अत्यूर्द्ध्वस्थस्य विमानस्य गत्वा रामस्य मेरुस्थभास्करोपमा ॥ ८२ ॥
॥ ८३ ॥ ८४ ॥
ततो लक्ष्मणमासाद्याभ्यवादयतेत्यन्वयः अनयोः शास्त्रोक्तविधिना नामगोत्रोच्चारणपूर्वकमभिवादनं वैदेह्यास्तु स्त्रीत्वात्स्वनाममात्रकीर्त्तनपूर्व्वकमभिवादनमित्याह नाम कीर्त्तयन्निति भरतोऽहमभिवादये मैथिलीति रामस्य तु भरतवर्म्मा अमुकगोत्रोऽहं त्वामभिवादये इत्येवमिति शेषः यद्यपि

अभ्यवादयत प्रीतो भरतः प्रेमविह्वलः ॥ ८५ ॥
सुग्रीवं जाम्बवन्तं च युवराजं तथाङ्गदम् ।
मैन्दद्विविदनीलांश्च ऋषभञ्चैव सस्वजे ॥ ८६ ॥
सुषेणं च नलं चैव गवाक्षं गन्धमादनम् ।
शरभं पनसं चैव भरतः परिषस्वजे ॥ ८७ ॥
सर्वे ते मानुषं रूपं कृत्वा भरतमादृताः ।
पप्रच्छुः कुशलं सौम्याः प्रहृष्टाश्च प्लवङ्गमाः ॥ ८८ ॥
ततः सुग्रीवमालिङ्ग्य भरतः प्राह भक्तितः ।
त्वत्सहायेन रामस्य जयोऽभूद्रावणो हतः ॥ ८९ ॥
त्वमस्माकं चतुर्णां तु भ्राता सुग्रीव ! पञ्चमः ।
शत्रुघ्नश्च तदा राममभिवाद्य सलक्ष्मणम् ॥ ९० ॥
सीतायाश्चरणौ पश्चाद्ववन्दे विनयान्वितः ।
रामो मातरमासाद्य विवर्णां शोकविह्वलाम् ॥ ९१ ॥
जग्राह प्रणतः पादौ मनो मातुः प्रसादयन् ।
कैकेयीं च सुमित्राञ्च ननामेतरमातरः ॥ ९२ ॥
भरतः पादुके ते तु राघवस्य सुपूजिते ।
योजयामास रामस्य पादयोर्भक्तिसंयुतः ॥ ९३ ॥

लक्ष्मणो भरतात्कनिष्ठो वयसा स्पष्टं चेदं जन्मप्रकरणे तथापि ज्येष्ठानुवर्तनेन स्वापेक्षयाधिकगुणत्वेन सद्व्यवहारेण ज्येष्ठानुवृत्तिरेवं कर्तव्येति भरतं प्रत्युपदेशदानेन च गुरुत्वबुद्ध्या तस्य नतिरुचितैव किं च कौशल्यायै प्रथमं दत्तपायसांशत्वात् लक्ष्मणस्य ज्येष्ठत्वं ततो हि कैकेय्यै पायसार्द्धदानं तदंशजश्च शत्रुघ्न इति स एव भरतात्कनिष्ठः अतएव वैदेहीं चेति चकारः स्वरसः सङ्गच्छते अतएव च शत्रुघ्नस्ततो लक्ष्मणनमस्कार उपपद्यते तयोर्युगपदुत्पन्नत्वादित्याहुः ॥ ८५ ॥

सस्वजे मिलत्वात् ॥ ८६—९१ ॥

राज्यमेतन्न्यासभूतं मया निर्यातितं तव।
अद्य मे सफलं जन्म फलितो मे मनोरथः ॥ ९४ ॥
यत्पश्यामि समायातमयोध्यां त्वामहं प्रभो!।
कोष्ठागारं बलं कोशं कृतं दशगुणं मया ॥ ९५ ॥
त्वत्तेजसा जगन्नाथ! पालयस्व पुरं स्वकम्।
इति ब्रुवाणं भरतं दृष्ट्वा सर्वे कपीश्वराः ॥ ९६ ॥
मुमुचुर्नेत्रजं तोयं प्रशशंसुर्मुदान्विताः।
ततो रामः प्रहृष्टात्मा भरतं स्वाङ्कगं मुदा ॥ ९७ ॥
ययौ तेन विमानेन भरतस्याश्रमं तदा।
अवरुह्य तदा रामो विमानाग्र्यान्महीतलम् ॥ ९८ ॥
अब्रवीत्पुष्पकं देवो गच्छ वैश्रवणं वह।
अनुगच्छानुजानामि कुबेरं धनपालकम् ॥ ९९ ॥

रामो वशिष्ठस्य गुरोः पदाम्बुजं
नत्वा यथा देवगुरोः शतक्रतुः।
दत्त्वा महार्हासनमुत्तमं गुरो-
रुपाविवेशाथ गुरोः समीपतः ॥ १०० ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
चतुर्दशः सर्गः।

प्रसादयन् ॥ ९२ ॥ ९३ ॥ निर्य्यातितं प्रतिदत्तम् ॥ ९४ ॥
कोष्ठागारम् अन्नादिस्थापनगृहं कोशं धनगृहम् ॥ ९५ ॥
त्वत्तेजसेति पूर्वान्वयि नेत्रजं तोयं मुमुचुः एवं सौभ्रात्रं विलोक-
येदिति हर्षात् स्वस्य तद्वैपरीत्येन शोकाच्च ॥ ९६ ॥
स्वाङ्कगं कृत्वेति शेषः ॥ ९७ ॥ ९८ ॥
धनपालकं कुबेरमनुगच्छेत्येतदहमनुजानामीत्यर्थः ॥ ९९ ॥ १०० ॥

इति चतुर्दशः सर्गः।

अथ पञ्चदशः सर्गः ।

ततस्तु कैकयीपुत्रो भरतो भक्तिसंयुतः ।
शिरस्यञ्जलिमाधाय ज्येष्ठं भ्रातरमब्रवीत् ॥ १ ॥
माता मे सत्कृता राम ! दत्तं राज्यं त्वया मम ।
ददामि तत्ते च पुनर्यथा त्वमददा मम ॥ २ ॥
इत्युक्त्वा पादयोर्भक्त्या साष्टाङ्गं प्रणिपत्य च ।
बहुधा प्रार्थयामास कैकेय्या गुरुणा सह ॥ ३ ॥
तथेति प्रतिजग्राह भरताद्राज्यमीश्वरः ।
मायामाश्रित्य सकलां नरचेष्टामुपागतः ॥ ४ ॥
स्वाराज्यानुभवो यस्य सुखज्ञानैकरूपिणः ।
निरस्तातिशयानन्दरूपिणः परमात्मनः ॥ ५ ॥
मानुषेण तु राज्येन किं तस्य जगदीशितुः ? ।

ततस्त्विति ॥ १ ॥

सत्कृता मत्पुत्राय राज्यदानपूर्वकं वनवासं कुर्विति तद्वाक्यपालनेन सत्कृता ॥ २ ॥

इत्युक्त्वा रामपादयोर्भक्त्या प्रणम्य मातृत्वाद्गुरुणा कैकेय्या सह प्रार्थयामास मद्वाक्यपालनेनाहं सन्तुष्टा अतः परं स्वेच्छया पुनस्तद्ददामि तत्पूर्वथा स्वीकार्येति प्रार्थयामास ॥ ३ ॥

मायामाश्रित्येति अन्यथा सच्चिदानन्दरूपस्य भगवतो दानप्रतिग्रहयोरनुपपत्तेरिति भावः सकलं राज्यं प्रतिजग्राहेत्यन्वयः ॥ ४ ॥

मायाश्रयणे हेतुमाह स्वाराज्येति स्वाराज्यमात्मनः सुखरूपतानिरस्तातिशय इतराभिभावकतारूपो यस्मात्ताद्दृशानन्दरूपस्य आनन्दवल्ल्यां मनुष्यानन्दादुत्तरोत्तरगतगुणानन्दक्रमेणानन्दकथनस्य ब्रह्मानन्दे समाप्तेस्तदभिभावकत्वरूपातिशयस्य क्वाप्यभावादिति भावः ॥ ५ ॥

यस्य भ्रूभङ्गमात्रेण त्रिलोकी नश्यति क्षणात् ॥ ६ ॥
यस्यानुग्रहमात्रेण भवन्त्याखण्डलश्रियः।
लीलासृष्टमहासृष्टेः कियदेतद्रमापतेः ॥ ७ ॥
तथापि भजतां नित्यं कामपूरविधित्सया।
लीलामानुषदेहेन सर्वमप्यनुवर्त्तते ॥ ८ ॥
ततः शत्रुघ्नवचनान्निपुणः श्मश्रुकृन्तकः।
सम्भाराश्चाभिषेकार्थं आनीता राघवस्य हि ॥ ९ ॥
पूर्वं तु भरते स्नाते लक्ष्मणे च महात्मनि।
सुग्रीवे वानरेन्द्रे च राक्षसेन्द्रे विभीषणे ॥ १० ॥
विशोधितजटः स्नातश्चित्रमाल्यानुलेपनः।
महार्हवसनोपेतस्तस्थौ तत्र श्रिया ज्वलन् ॥ ११ ॥
प्रतिकर्म च रामस्य लक्ष्मणस्य महामतिः।
कारयामास भरतः सीताया राजयोषितः ॥ १२ ॥

जगदीशितृत्वमेव दर्शयति यस्येति ॥ ६ ॥

लीलया सृष्टा महासृष्टिरनेककोटिब्रह्माण्डात्मिका येन तस्य एतद् अयोध्याराज्यम् ॥ ७ ॥

भजतां भक्तानां कामपूरस्य अभिलाषसमूहस्य विधित्सया पूरणेच्छया लीलया स्वकीयमानुषदेहेन सर्वमपि मानुषव्यवहारं अनुवर्तते लोकशिक्षणाय करोति ॥ ८ ॥

श्मश्रुकृन्तको नापितः सम्भाराः समुद्रजलादिरूपाः ॥ ९ ॥

स्नाते केशसंस्कारोद्वर्त्तनादिपूर्वकं कृतस्नाने ॥ १० ॥

विशोधितजटः केशरूपतां प्रापित जटः महार्हवसनोपेतः बहुमूल्यवस्त्रः ॥ ११ ॥

प्रतिकर्म उद्वर्त्तनादिसंस्कारः राजयोषितः दशरथस्त्रियः ॥ १२ ॥

महार्हवस्त्राभरणैरलञ्चक्रुः सुमध्यमाम् ।
ततो वानरपत्नीनां सर्वासामेव शोभना ॥ १३ ॥
अकारयत कौशल्या प्रहृष्टा पुत्त्रवत्सला ।
ततः स्यन्दनमादाय शत्रुघ्नवचनात् सुधीः ॥ १४ ॥
सुमन्त्रः सूर्य्यसङ्काशं योजयित्वाग्रतः स्थितः ।
आरुरोह रथं रामः सत्यधर्मपरायणः ॥ १५ ॥
सुग्रीवो युवराजश्च हनूमांश्च विभीषणः ।
स्नात्वा दिव्याम्बरधरा दिव्याभरणभूषिताः ॥१६॥
राममन्वीयुरग्रे च रथाश्वगजवाहनाः ।
सुग्रीवपत्न्यः सीता च ययुर्यानैः पुरं महत् ॥ १७ ॥
वज्रपाणिर्यथा देवैर्हरिताश्वरथे स्थितः ।
प्रययौ रथमास्थाय तथा रामो महत्पुरम् ॥१८ ॥
सारथ्यं भरतश्चक्रे रत्नदण्डं महाद्युतिः ।
श्वेतातपत्रं शत्रुघ्नो लक्ष्मणो व्यजनं दधे(१) ॥ १९ ॥
चामरं च समीपस्थो न्यवीजयदरिन्दमः ।
शशिप्रकाशं(२) त्वपरं जग्राहासुरनायकः ॥२० ॥

सुमध्यमां जानकीम् ॥ १२ ॥
अकारयत प्रतिकर्मेति शेषः ॥ १४ ॥
सूर्य्यसङ्काशं स्यन्दनमित्यन्वयः ॥ १५ ॥ १६ ॥
अन्वीयुः अनुजग्मुः पुरमयोध्यापुरम् ॥ ॥ १७ ॥ १८ ॥
रत्नदण्डमिति श्वेतातपत्रव्यजनचामराणां विशेषणम् ॥ १९ ॥
अरिन्दमः सुग्रीवः असुरनायको विभीषणः ॥ २० ॥

---

(१) व्यजनं महत् इति केचित् पठन्ति ।
(२) चन्द्रप्रकाशं इति वा पाठः ।

द्विजैः सिद्धसङ्घैश्च ऋषिभिर्दिव्यदर्शनैः।
स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः॥ २१॥
मानुषं रूपमास्थाय वानरा गजवाहनाः।
भेरीशङ्खनिनादैश्च मृदङ्गपणवानकैः॥ २२॥
प्रययौ राघवश्रेष्ठस्तां पुरीं समलङ्कृताम्।
ददृशुस्ते समायान्तं राघवं पुरवासिनः॥ २३॥

दूर्वादलश्यामतनुं महार्ह-
किरीटरत्नाभरणाचिताङ्गम्।
आरक्तकञ्जायतलोचनान्तं
दृष्ट्वा ययुर्मोदमतीव पुण्याः॥ २४॥
विचित्ररत्नाञ्चितसूत्रनद्ध-
पीताम्बरं पीनभुजान्तरालम्।
अनर्घ्यमुक्ताफलदिव्यहारै-
र्विरोचमानं रघुनन्दनं प्रजाः॥ २५॥
सुग्रीवमुख्यैर्हरिभिः प्रशान्तै-
र्निषेव्यमाणं रवितुल्यभासम्

स्तूयमानस्य रामस्य स्तुतिवाक्यानामिति शेषः॥ २१॥

वानरा इत्यस्य प्रययुरिति शेषः॥ २२॥

ते पुरवासिनः ये वनगमनकाले दुःखिता बभूवुस्ते इत्यर्थः॥ २३॥

आचिताङ्गं व्याप्ताङ्गं कञ्जं कमलं पुण्याः पुण्यवन्तः अयोध्याजनाः आययुः प्रापुः॥ २४॥

विचित्ररत्नै रचितं युक्तं यत्सूत्रं स्वर्णमयं कटिसूत्रं तेन बद्धः पीताम्बरो यस्य तं अमूल्यमुक्ताफलकृतैः दिव्यहारैः॥ २५॥

हरिभिर्वानरैः रवितुल्यभासं तत्तुल्यकान्तिं निश्रीताकण्ठकवचमभ्य-

कस्तूरिकाचन्दनलिप्तगात्रं
निवीतकल्पद्रुमपुष्पमालम् ॥ २६ ॥
श्रुत्वा स्त्रियो राममुपागतं मुदा
प्रहर्षवेगोत्कलिताननश्रियः ।
अपास्य सर्वं गृहकार्य्यमाहितं
हर्म्याणि चैवारुरुहुः स्वलङ्कृताः ॥ २७ ॥
दृष्ट्वा हरिं सर्वदृगुत्सवाकृतिं
पुष्पैः किरन्त्यः स्मितशोभिताननाः ।
दृग्भिः पुनर्नेत्रमनोरसायनं
स्वानन्दमूर्त्तिं मनसाभिरेभिरे ॥ २८ ॥
रामः स्मितस्निग्धदृशा प्रजास्तथा
पश्यन् प्रजानाथ इवापरः प्रभुः ।
शनैर्जगामाथ पितुः स्वलङ्कृतं
गृहं महेन्द्रालयसन्निभं हरिः ॥ २९ ॥
प्रविश्य वेश्मान्तरसंस्थितो मुदा
रामो ववन्दे चरणौ स्वमातुः ।

धृता कल्पद्रुमपुष्पमाला येन तम् ॥ २६ ॥

प्रहर्षवेगेनोत्कलितानि अतिप्रहृष्टानि आननानि यासां ताः आहितमत्यावश्यकमपि गृहकार्य्यमपास्येत्यर्थः ॥ २७ ॥

सर्वदृशामुत्सवभूता आकृतिर्यस्य तं नेत्रमनसोः रसायनभूतमत्यानन्दकरत्वात्तादृशं रामं दृग्भिर्दर्शनव्यापारैर्मनसा चाभिरेभिरे आलिङ्गितवत्यः ॥२८॥

स्मितयुतया अतएव स्निग्धया दृशा प्रजाः पश्यन् दर्शनेन सर्वसन्मानं कुर्वन् प्रजानाथ इव ब्रह्मेव ॥ २९ ॥

स्वमातुश्चरणौ ववन्दे अनेनाग्रे सर्वमातृप्रवेशानन्तरं सर्वप्रजाप्रस्थानके

क्रमेण सर्वाः पितृयोषितः प्रभु-
र्ननाम भक्त्या रघुवंशकेतुः ॥ २० ॥
ततो भरतमाहेदं रामः सत्यपराक्रमः ।
सर्वसम्पत्समायुक्तं मम मन्दिरमुत्तमम् ॥ २१ ॥
मित्राय वानरेन्द्राय सुग्रीवाय प्रदीयताम् ।
सर्वेभ्यः सुखवासार्थं मन्दिराणि प्रकल्पय ॥ २२ ॥
रामेणैवं समादिष्टो भरतश्च तथाऽकरोत् ।
उवाच च महातेजाः सुग्रीवं राघवानुजः ॥ २३ ॥
राघवस्याभिषेकार्थं चतुःसिन्धुजलं शुभम् ।
आनेतुं प्रेषयस्वाशु दूतांस्त्वरितविक्रमान् ॥ २४ ॥
प्रेषयामास सुग्रीवो जाम्बवन्तं मरुत्सुतम् ।
अङ्गदं च सुषेणं च ते गत्वा वायुवेगतः ॥ २५ ॥
जलपूर्णाञ्छातकुम्भकलशांश्च समानयन् ॥
आनीतं तीर्थसलिलं शत्रुघ्नो मन्त्रिभिः सह ॥ २६ ॥
राघवस्याभिषेकार्थं वशिष्ठाय न्यवेदयत् ।
ततस्तु प्रयतो वृद्धो वशिष्ठो ब्राह्मणैः सह ॥ २७ ॥
रामं रत्नमये पीठे ससीतं संन्यवेशयत् ।
वशिष्ठो वामदेवश्च जाबालिर्गौतमस्तथा ॥ २८ ॥
वाल्मीकिश्च तथा चक्रुः सर्वे रामाभिषेचनम् ।
कुशाग्रतुलसीयुक्तपुण्यगन्धजलैर्मुदा ॥ २९ ॥

विलम्बेन पश्चाद्गृहप्रवेश इति सूचितम् ॥ २० ॥ २१ ॥
सर्वेभ्यः अन्येभ्यो वानरविभीषणादिभ्यः ॥ २२–२५ ॥
शातकुम्भं स्वर्णम् ॥ २६–४० ॥

अभ्यषिञ्चन् रघुश्रेष्ठं वासवं वसवो यथा ।
ऋत्विग्भिर्ब्राह्मणैः श्रेष्ठैः कन्याभिः सह मन्त्रिभिः ॥ ४० ॥
सर्वौषधीरसैश्चैव दैवतैर्नभसि स्थितैः ।
चतुर्भिर्लोकपालैश्च सुवद्भिः सगणैस्तथा ॥ ४१ ॥
छत्रं च तस्य जग्राह शत्रुघ्नः पाण्डुरं शुभम् ।
सुग्रीवराक्षसेन्द्रौ तौ दधतुः श्वेतचामरे ॥ ४२ ॥
मालां च काञ्चनीं वायुर्ददौ वासवचोदितः ।
सर्वरत्नसमायुक्तं मणिकाञ्चनभूषितम्(१) ॥ ४३ ॥
ददौ हारं नरेन्द्राय स्वयं शक्रस्तु भक्तितः ।
प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ४४ ॥
देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात खात् ।
नवदूर्वादलश्यामं पद्मपत्रायतेक्षणम् ॥ ४५ ॥
रविकोटिप्रभायुक्तकिरीटेन विराजितम् ।
कोटिकन्दर्पलावण्यं पीताम्बरसमावृतम् ॥ ४६ ॥
दिव्याभरणसम्पन्नं दिव्यचन्दनलेपनम् ।
अयुतादित्यसङ्काशं द्विभुजं रघुनन्दनम् ॥ ४७ ॥
वामभागे समासीनां सीतां काञ्चनसन्निभाम् ।
सर्वाभरणसम्पन्नां वामाङ्के समुपस्थिताम् ॥ ४८ ॥

सर्वौषधीरसैरभ्यषिञ्चन् इत्यन्वयः नभसि स्थितैर्दैवतैः सह सुवद्भिः सगणैश्चतुर्भिर्लोकपालैश्च सह वसिष्ठादयोऽभ्यषिञ्चन्नित्यन्वयः ॥ ४१—४४॥

खात् आकाशात् ॥ ४५—४७ ॥

वामाङ्के वामभागे स्थिताम् ॥ ४८ ॥

(१) दिव्याभरणभूषितं इत्यपि पाठान्तरम् ।

रक्तोत्पलकराम्भोजां वामेनालिङ्ग्य संस्थिताम् ।
सर्वातिशयशोभाढ्यं दृष्ट्वा भक्तिसमन्वितः ॥ ४९ ॥
उमया सहितो देवः शङ्करो रघुनन्दनम् ।
सर्वदेवगणैर्युक्तः स्तोतुं समुपचक्रमे ॥ ५० ॥

श्रीमहादेव उवाच ।

नमोऽस्तु रामाय सशक्तिकाय
नीलोत्पलश्यामलकोमलाय ।
किरीटहाराङ्गदभूषणाय
सिंहासनस्थाय महाप्रभाय ॥ ५१ ॥
त्वमादिमध्यान्तविहीन एकः
सृजस्यवस्यत्सि च लोकजातम् ।
स्वमायया तेन न लिप्यसे त्वं
यत् स्वे सुखेऽजस्ररतोऽनवद्यः ॥ ५२ ॥
लीलां विधत्से गुणसंवृतस्त्वं
प्रपन्नभक्तानुविधानहेतोः ।

ईदृशीं सीतां वामेन करेणालिङ्ग्य संस्थितं दृष्ट्वा शिवः स्तोतुमुपचक्रमे इत्यन्वयः ॥ ४९ । ५० ॥

सशक्तिकाय मायाशक्त्यवतारसीतासहिताय ॥ ५१ ॥

आद्यन्तौ उत्पत्तिनाशौ तद्राहित्यादेव मध्यहीनः यतो मायया सृजसि अतएव तेन न लिप्यसे तज्जन्यादिकृतदोषभाग् न भवसीत्यर्थः यथेन्द्रजालिकः स्वमायानिर्मितजीवादिनाशेऽपि तद्दोषभाग् भवति ॥५२॥

गुणसंवृतः गुणसमूहया मायया संवृतः गुणशब्दोऽत्र तत्समूहमायापरः प्रपन्नाः शरणागता ये भक्तास्तेषां यदनुविधानं मोक्षस्तन्निमित्तमित्यर्थः त्वदवतारलीलाश्रवणादिभिस्तेषां पापक्षयद्वारा मोक्षो

नानावतारैः सुरमानुषाद्यैः
प्रतीयसे ज्ञानिभिरेव नित्यम् ॥ ५३ ॥
स्वांशेन लोकं सकलं विधाय तं
बिभर्षि च त्वं तदधः फणीश्वरः ।
उपर्य्यधो भान्वनिलोडुपौषधी-
प्रवर्षरूपोऽवसि नैकधा जगत् ॥ ५४ ॥
त्वमिह देहभृतां शिखिरूपः
पचसि भक्तमशेषमजस्रम् ।
पवनपञ्चकरूपसहायो
जगदखण्डमनेन बिभर्षि ॥ ५५ ॥
चन्द्रसूर्य्यशिखिमध्यगतं य-
त्तेज ईश ! चिदशेषतनूनाम् ।
प्राभवत्तनुभृतामिह धैर्य्यं
शौर्य्यमायुरखिलं तव सत्त्वम् ॥ ५६ ॥

भवतीत्याशयः सुरमानुषादिरूपैर्नानावतारैर्लीलां विभर्षि इत्यन्वयः सुरावतारा उपेन्द्राद्याः मानुषा रामकृष्णाद्याः एवम्भूतस्त्वं ज्ञानिभिरेव नित्यं प्रतीयसे न त्वन्यैस्ते तु मनुष्योऽयं कश्चिदित्येवं प्रतियन्ति॥ ५३ ॥

सकलं लोकं स्वांशेन विधाय तं लोकं तदधः फणीश्वरो भूत्वा त्वं बिभर्षि भानुः सूर्य्यः अनिलो वायुः उडुपश्चन्द्रः औषध्यो व्रीह्याद्याः प्रवर्षो मेघः नैकधा अनेकप्रकारेण ॥ ५४ ॥

प्रकारान्तरेणापि रक्षत्वमाह त्वमिति शिखिरूपो जाठराग्निरूपः पवनपञ्चकम् प्राणापानसमानोदानव्यानाः तदुक्तं गीतायां 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्' इति ॥ ५५ ॥

हे ईश चन्द्रादिगतं यत्तेजो यच्चाशेषशरीरिणां चित्चैतन्यं यच्च

त्वं विरिञ्चिशिव(१)विष्णुविभेदा-
त्कालकर्मशशिसूर्य्यविभागात् ।
वादिनां पृथगिवेश ! विभासि
ब्रह्मनिश्चितमनन्यदिहैकम् ॥ ५७ ॥
मत्स्यादिरूपेण यथा त्वमेकः
श्रुतौ पुराणेषु च लोकसिद्धः ।
तथैव सर्वं सदसद्विभाग-
स्त्वमेव नान्यद्भवतो विभाति ॥ ५८ ॥
यद्यत्समुत्पन्नमनन्तसृष्टौ
उत्पत्स्यते यच्च भवच्च यच्च ।

तनुभृतां शौर्य्यं धैर्य्यमायुश्च तदखिलं तव सत्त्वं त्वद्रूपा सत्तैव प्राभवत् तत्तद्रूपेण प्रादुर्भूतेत्यर्थः ॥ ५६ ॥

विरिञ्चिर्ब्रह्मा विभागो भेदः हे ईश ! वादिनां तत्तद्भक्तत्वेन तत्र तत्रेश्वरत्वाभिमानवतां त्वं तत्तद्रूपेण परस्परव्यावृत्त इव भासि तत्त्वमाह अनन्यत् भेदशून्यमत एवैकमीदृशं ब्रह्मैव त्वं त्वमेव च ब्रह्मादयस्ततो नैषां भेद इति भावः ॥ ५७ ॥

प्रकारान्तरेणापि सर्वस्य ब्रह्मरूपतां स्थापयति मत्स्यादीति एकस्यैव यथा दशरूपत्वं तथैकस्यैव सदसद्विभागरूपता सत् ब्रह्म विश्वादिकं असत् तदितरत्सर्वम् स एकस्त्वमेव यतो भवतोऽन्यत् न विभाति वस्तुतः पर्य्यालोचनेऽपि न ज्ञानविषयो भवतीत्यर्थः ॥ ५८ ॥

अनन्तसृष्टौ अन्तरहितायां सृष्टौ तदुक्तं पातञ्जले 'सर्वथा व्यष्ट्याद्यच्छेदो नैव कृतार्थंप्रत्यं प्रत्येन तु तन्निवृत्तिः' इति 'अनादिर्भगवान् कालो नान्तोऽस्य द्विज ! विद्यते । अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसं-

(१) ब्रह्मार्चित इति विभिन्नः पाठः ।

न दृश्यते स्थावरजङ्गमादौ
त्वया विनातः परतः परस्त्वम् ॥ ५९ ॥
तत्त्वं न जानन्ति परात्मनस्ते
जनाः समस्तास्तव माययातः ।
त्वद्भक्तसेवामलमानसानां
विभाति तत्त्वं परमेकमैशम् ॥ ६० ॥
ब्रह्मादयस्तेन विदुः स्वरूपं
चिदात्मतत्त्वं बहिरर्थभावाः ।
ततो बुधस्त्वामिदमेव रूपं
भक्त्या भजन्मुक्तिमुपैत्यदुःखः ॥ ६१ ॥
अहं भवन्नाम गृणन् कृतार्थो
वसामि काश्यामनिशं भवान्या ।
मुमूर्षमाणस्य विमुक्तयेऽहं
दिशामि मन्त्रं तव रामनाम ॥ ६२ ॥

मया' इति स्थितिश्च तादृश्यां सृष्टौ यज्जातं यज्जावि यच्च वर्त्तमानं तत्त्वया विना न दृश्यते सर्वं तद्रूपमेव दृश्यते अतस्त्वं परतः सर्वोत्कृ-ष्टाद्धिरण्यगर्भादपि पर इत्यर्थः ॥ ५९ ॥

नन्वेवं रूपं मां सर्वे जनाः किमिति न जानन्ति तत्राह तत्त्वमिति परमात्मनस्ते एतत्तत्त्वं एते समस्ता जनास्तव मायया संवृता इति शेषः अतो न जानन्ति तर्हि सर्वथा मामेवं कोऽपि न जानन्ति नेत्याह तद्भक्तेति ते तवैवं तत्त्वं जानन्तीत्यर्थः ॥ ६० ॥

ते तव चैतन्यरूपमात्मतत्त्वं ब्रह्मादयोऽपि न विदुः यतस्ते बहिर-र्थेषु भावश्चित्तं येषां तादृशाः ततो बुधः त्वद्रूपज्ञानसमर्थोऽपि इदं रूपमेव त्वां प्रकृतदृश्यमानरूपमेव त्वां भजन् ध्यायन् अदुःखः निवृत्तस-कलदुःखः सन्मुक्तिमुपैति ॥ ६१ ॥

अपरमपि सुलभं साधनं स्वानुभवितत्वेनानुपादेयत्वं च तत्र स्तव-

इमं स्तवं नित्यमनन्यभक्त्या
शृण्वन्ति गायन्ति लिखन्ति ये वै।
ते सर्वसौख्यं परमं च लब्ध्वा
भवत्पदं यान्तु भवत्प्रसादात्॥ ६३॥

इन्द्र उवाच।

रक्षोऽधिपेनाखिलदेवसौख्यं
हृतं च मे ब्रह्मवरेण देव!।
पुनश्च सर्वं भवतः प्रसादात्
प्राप्तं हतो राक्षसदुष्टशत्रुः॥ ६४॥

देवा ऊचुः।

हृता यज्ञभागा धरादेवदत्ता
मुरारे! खलेनादिदैत्येन विष्णो!।
हतोऽद्य त्वया नो वितानेषु भागाः
पुरावद्भविष्यन्ति युष्मत्प्रसादात्॥ ६५॥

पितर ऊचुः।

हतोऽद्य त्वया दुष्टदैत्यो महात्मन्!
गयादौ नरैर्दत्तपिण्डादिकान्नः

यन्नाह अहमिति अनिशं रटन् उच्चारयन् मरणसमये जन्तूनां मुक्तये हे राम! तव नामरूपं मन्त्रं दिशामि उपदिशामि॥ ६२। ६३॥

अखिलदेवसौख्यं अखिलदेवराज्यरूपं सौख्यम् यतस्त्वया राक्षसरूपोऽस्माकं दुष्टशत्रुर्हतः॥ ६४॥

धरादेवा भूदेवा विद्वांसस्तैर्यज्ञेषु दत्ता यज्ञभागा येन खलेन हृताः स त्वया हतस्तेन ते भागा नोऽस्माकं पुरावद्रावणोत्पत्तिप्राक्काल इव भविष्यन्ति॥ ६५॥

बलाद्दृत्तिं हृत्वा गृहीत्वा समस्ता-
निदानीं पुनर्लब्धसत्त्वा भवामः ॥ ६६ ॥

यक्षा ऊचुः।

सदा विष्टिकर्मण्यनेनाभियुक्ताः।
वहामो दशास्यं बलात् दुःखयुक्ताः।
दुरात्मा हतो रावणो राघवेश!
त्वया ते वयं दुःखजाताद्विमुक्ताः ॥ ६७ ॥

गन्धर्वा ऊचुः।

वयं सङ्गीतनिपुणा गायन्तस्ते कथामृतम्।
आनन्दामृतसन्दोहयुक्ताः पूर्णाः स्थिताः पुरा ॥ ६८ ॥
पश्चाद्दुरात्मना राम! रावणेनाभिविद्रुताः।
तमेव गायमानाश्च तदाराधनतत्पराः ॥ ६९ ॥
स्थितास्त्वया परित्राता हतोऽयं दुष्टराक्षसः।
एवं महोरगाः सिद्धाः किन्नरा मरुतस्तथा ॥ ७० ॥
वसवो मुनयो गावो गुह्यकाश्च पतत्रिणः।
सप्रजापतयश्चैते तथा चाप्सरसां गणाः ॥ ७१ ॥

लब्धसत्त्वास्तत्तिरस्कप्राप्त्या लब्धबलाः ॥ ६६ ॥

विष्टिकर्मणि वेतनदानं विना बलात्कर्मकारणं विष्टिस्तत्कर्मणि अभियुक्ताः प्रेरिताः दशास्यं वहामस्तदीयपल्यङ्क्यादिवहनेनेति शेषः दुःखजाताद्दुःखसमूहात् ॥ ६७ ॥

पुरा रावणराज्यात्पूर्वम् ॥ ६८ ॥

अभिविद्रुता बलेन स्ववशतां नीताः ॥ ६९ ॥

यतोऽयं हतो त एवं स्थितास्त्वया तद्दुःखमोचनेन परित्राताः ॥ ७०—७२ ॥

सर्वे रामं समासाद्य दृष्ट्वा नेत्रमहोत्सवम्।
स्तुत्वा पृथक् पृथक् सर्वे राघवेणाभिवन्दिताः॥ ७२॥
ययुः स्वं स्वं पदं सर्वे ब्रह्मरुद्रादयस्तथा।
प्रशंसन्तो मुदा रामं गायन्तस्तस्य चेष्टितम्॥ ७३॥
ध्यायन्तस्त्वभिषेकार्द्रं सीतालक्ष्मणसंयुतम्।
सिंहासनस्थं राजेन्द्रं ययुः सर्वे हृदिस्थितम्॥ ७४॥
खे वाद्येषु ध्वनत्सु प्रमुदितहृदयैर्देववृन्दैः स्तुवद्भिः
वर्षद्भिः पुष्पवृष्टिं दिवि मुनिनिकरैरीड्यमानं समन्तात्।
रामः श्यामः प्रसन्नः स्मितरुचिरमुखः सूर्यकोटिप्रकाशः
सीतासौमित्रिवाय्वात्मजमुनिहरिभिः सेव्यमानो विभाति ७५

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
पञ्चदशः सर्गः।

हृदि अन्तर्यामितया स्थितमेव राजेन्द्रं दृश्यमानराजेन्द्ररूपं ध्यायन्तो ययुरित्यन्वयः॥ ७४। ७५॥

इति श्रीमत्पूर्वकराजविपदुद्धरणसमर्थेत्यादिवि० श्रीरामवर्मणः कृतौ श्रीमदध्यात्मरामायणसेतौ युद्धकाण्डे
पञ्चदशः सर्गः।

---

अथ षोडशः सर्गः ।

श्रीमहादेव उवाच ।

रामेऽभिषिक्ते राजेन्द्रे सर्वलोकसुखावहे ।
वसुधा शस्यसम्पन्ना फलवन्तो महीरुहाः ॥ १ ॥
गन्धहीनानि पुष्पाणि गन्धवन्ति चकाशिरे ।
सहस्रशतमश्वानां धेनूनां च गवां तथा ॥ २ ॥
ददौ शतवृषान् पूर्वं द्विजेभ्यो रघुनन्दनः ।
त्रिंशत्कोटिं सुवर्णस्य ब्राह्मणेभ्यो ददौ पुनः ॥ ३ ॥
वस्त्राभरणरत्नानि ब्राह्मणेभ्यो मुदा तथा ।
सूर्य्यकान्तिसमप्रख्यां सर्वरत्नमयीं स्रजम् ॥ ४ ॥
सुग्रीवाय ददौ प्रीत्या राघवो भक्तवत्सलः ।
अङ्गदाय ददौ दिव्ये अङ्गदे रघुनन्दनः ॥ ५ ॥
चन्द्रकोटिप्रतीकाशं मणिरत्नविभूषितम् ! ।
सीतायै प्रददौ हारं प्रीत्या रघुकुलोत्तमः ॥ ६ ॥
अवमुच्यात्मनः कण्ठात् हारं जनकनन्दिनी ।
अवैचत हरीन् सर्वान् भर्त्तारं च मुहुर्मुहुः ॥ ७ ॥
रामस्तामाह वैदेहीमिङ्गितज्ञो विलोकयन् ।
वैदेहि ! यस्य तुष्टासि देहि तस्मै वरानने ! ॥८॥

रामे इति उत्तरार्द्धे आतेति जाता इति च शेषः ॥ १ ॥
निर्गन्धा निर्गन्धयुतानि अश्वानां धेनूनां गवां च सहस्रशतं ददौ ॥२॥
शतवृषानित्यत्र शतशब्दोऽनन्तवाची ॥ ३ ॥ ४ ॥
अङ्गदे बाहुभूषणे ॥ ५ ॥ ६ ॥
अवमुच्य भर्त्रा कण्ठे प्रतिमुक्तं पुनः कण्ठादवतार्येत्यर्थः ॥ ७ ॥
विलोकयन् वैदेहीं पश्यन् ॥ ८ ॥

हनूमते ददौ हारं पश्यतो राघवस्य च ।
तेन हारेण शुशुभे मारुतिर्गौरवेण च ॥ ९ ॥
रामोऽपि मारुतिं दृष्ट्वा कृताञ्जलिमुपस्थितम् ।
भक्त्या परमया तुष्ट इदं वचनमब्रवीत् ॥१० ॥
हनुमंस्ते प्रसन्नोऽस्मि वरं वरय काङ्क्षितम् ।
दास्यामि देवैरपि यद् दुर्लभं भुवनत्रये ॥ ११ ॥
हनूमानपि तं प्राह नत्वा रामं प्रहृष्टधीः ।
त्वन्नामस्मरतो राम ! न तृप्यति मनो मम ॥१२ ॥
अतस्त्वन्नाम सततं स्मरन् स्थास्यामि भूतले ।

गौरवेण सीताकृतादरेण ॥ ९ ॥ १० ॥

यद्वस्तु देवैरपि दुर्लभं तदपि तव वररूपं च दास्याम्येवेत्यर्थः उक्तं चान्यत्र “राज्योत्सवागतजनाय रघुप्रवीरः प्रीत्या त्वनेकमणिरत्नविभूषणानि । दत्त्वानिलात्मजमपास्य विदेहजायै मालां ददौ रघुपतिः परमादरेण ॥ तया हनुमते दत्ता सैव माला ह्यमूल्यिका । दशनैः शकलीकृत्य त्यक्ता तेन जलाशये ॥ हाहेति जल्पितं सर्वैस्तदा सद्वरवानरैः स्वजातीयभरे कर्म त्वया कृतमरिन्दम ॥ रामस्ततो मारुतिमत्युदारमाहूय चारादभिवर्त्तमानम् । पप्रच्छ कस्मान्महती सुमाला त्यक्ता त्वया ब्रूहि विदेहजार्पिता ॥ ब्रह्मेति यद्ब्रह्मविदो वदन्ति ह्यात्मेश्वरश्चेति वदन्ति सन्तः । सीतापते ! त्वंतदसीति बुद्ध्वा त्यक्ता मयेयं सकलार्त्तिहृत्या ॥ हनूमन्यदि मत्तस्त्वं वरं किमपि नेच्छसि तवेच्छां तर्हि निर्मुक्तां करिष्यामि च निष्फलाम् ॥ श्रीरामश्रवणे दास्ये ममास्तु चपला स्पृहा । तस्या विरोधिनी चातु निर्मूलां कुरुतां प्रभो ! ॥ मम स्वान्ते सदैव त्वं सीतया सह तिष्ठसि । अद्यैव सर्वे पश्यन्तु स्थितं त्वां जानकीपते ! ॥ विदीर्य्य वक्षस्थलमञ्जनीसुतः प्रदर्शयामास च राममद्वयम् । हृदम्बुजे संस्थितमञ्जनीचनं महीसुताराधितपादपङ्कजम् ॥ मारुतेश्चैभवं दृष्ट्वा सर्वे सन्तोषमागताः ! रामेणालिङ्गितः श्रीमान् हनूमानञ्जनीसुतः ॥ जयशब्दो महानासीत्तदा राघव-

यावत् स्थास्यति ते नाम लोके तावत्कलेवरम् ॥१३॥
मम तिष्ठतु राजेन्द्र ! वरोऽयं मेऽभिकाङ्क्षितः।
रामस्तथेति तं प्राह मुक्तस्तिष्ठ यथासुखम् ॥ १४ ॥
कल्पान्ते मम सायुज्यं प्राप्स्यसे नात्र संशयः।
तमाह जानकी प्रीता यत्र कुत्रापि मारुते ! ॥ १५ ॥
स्थितं त्वामनुयास्यन्ति भोगाः सर्वे ममाज्ञया।
इत्युक्तो मारुतिस्ताभ्यां ईश्वराभ्यां प्रहृष्टधीः ॥ १६ ॥
आनन्दाश्रुपरीताक्षो भूयोभूयः प्रणम्य तौ।
कृच्छ्राद्ययौ तपस्तप्तुं हिमवन्तं महामतिः ॥ १७ ॥
ततो गुहं समासाद्य रामः प्राञ्जलिमब्रवीत्।
सखे ! गच्छ पुरं रम्यं शृङ्गिवेरमनुत्तमम् ॥ १८ ॥
मामेव चिन्तयन्नित्यं भुंक्ष्व भोगान्निजार्जितान्।
अन्ते ममैव सारूप्यं प्राप्स्यसे त्वं न संशयः॥ १९ ॥
इत्युक्त्वा प्रददौ तस्मै दिव्यान्याभरणानि च।
राज्यं च विपुलं दत्त्वा विज्ञानं च ददौ विभुः ॥२०॥
रामेणालिङ्गितो हृष्टो ययौ स्वभवनं गुहः।

मण्डपे। सीताप्रसादिता तस्मै वरान् अभयदान्ददौ॥ रामलीलाकृतं चैतत् परमानन्ददायकम्। श्रोतॄणां वाचकानां पापसङ्घविदारकम्” ॥११।१२॥

तं तयोदारचरितम् ॥ १३ ॥

मुक्तः सततं मम नामस्मरणाद् जीवन्मुक्तः सन् तिष्ठ ॥ १४।१५ ॥

ईश्वराभ्यां सीतारामाभ्याम् ॥ १६ ॥

कृच्छ्रादिति रामदर्शनवियोगतः कृच्छ्रम् ॥ १७ ॥ १८ ॥

मामेव चिन्तयन्नित्यनेन भोगेष्वनासक्तो भवेति सूच्यते ॥ १९ ॥

विद्यमानराज्यादधिकदेशराज्यं विज्ञानमात्मतत्त्वज्ञानम् ॥ २० ॥

ये चान्ये वानराः श्रेष्ठा अयोध्यां समुपागताः ॥२१॥
अमूल्याभरणैर्वस्त्रैः पूजयामास राघवः ।
सुग्रीवप्रमुखाः सर्वे वानराः सविभीषणाः ॥ २२ ॥
यथार्हं पूजितास्तेन रामेण परमात्मना ।
प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम् ॥ २३ ॥
सुग्रीवप्रमुखाः सर्वे किष्किन्ध्यां प्रययुर्मुदा ।
विभीषणस्तु सम्प्राप्य राज्यं निहतकण्टकम् ॥२४॥
रामेण पूजितः प्रीत्या ययौ लङ्कामनिन्दितः ।
राघवो राज्यमखिलं शशासाखिलवत्सलः ॥ २५ ॥
अनिच्छन्नपि रामेण यौवराज्येऽभिषेचितः ।
लक्ष्मणः परया भक्त्या राममेवापरोऽभवत् ॥२६॥
रामस्तु परमात्मापि कर्माध्यक्षोऽपि निर्मलः ।
कर्तृत्वादिविहीनोऽपि निर्विकारोऽपि सर्वदा ॥ २७ ॥
स्वानन्देनापि तुष्टः सन् लोकानामुपदेशकृत् ।
अश्वमेधादियज्ञैश्च सर्वैर्विपुलदक्षिणैः ॥ २८ ॥
अयजत्परमानन्दो मानुषं वपुराश्रितः ।

आलिङ्गितः बहिःशरीरेण सर्वदा स्वानुसन्धानदामेनान्तश्चालिङ्गितः ॥२१॥

पूजयामास तानिति शेषः ॥ २२—२५ ॥

अनिच्छन्नित्यस्य यौवराज्यमिति कर्म ॥ २६ ॥

कर्माध्यक्षः सर्वकर्मसाक्षी कर्तृत्वादिविहीनो निरभिमानित्वात् अतएव निर्विकारः ॥ २७ ॥

स्वानन्देन तुष्ट इत्यनेन लौकिकानन्दसामग्रीनिरपेक्षत्वमुक्तम् लोकानामुपदेशकृत् अनेन लोकोपदेश एव यज्ञाद्यनुष्ठानप्रयोजनमुक्तम् ॥ २८ ॥

न पर्य्यदेवन्विधवा न च व्यालकृतं भयम् ॥ २९ ॥
न व्याधिजं भयं चासीद्रामे राज्यं प्रशासति ।
लोके दस्युभयं नासीदनर्थो नास्ति कश्चन ॥ ३० ॥
वृद्धेषु सत्सु बालानां नासीन्मृत्युभयं तथा ।
रामपूजापराः सर्वे सर्वे राघवचिन्तकाः ॥ ३१ ॥
ववर्षुर्जलदास्तोयं यथाकालं यथारुचि ।
प्रजाः स्वधर्मनिरता वर्णाश्रमगुणान्विता ॥ ३२ ॥
औरसानिव रामोऽपि जुगोप पितृवत्प्रजाः ।
सर्वलक्षणसंयुक्ताः सर्वधर्मपरायणाः ॥ ३३ ॥
दशवर्षसहस्राणि रामो राज्यमुपास्त सः ॥ ३४ ॥

इदं रहस्यं धनधान्यऋद्धिमत्
दीर्घायुरारोग्यकरं सुपुण्यदम् ।
पवित्रमाध्यात्मिकसंज्ञितं पुरा
रामायणं भाषितमादिशम्भुना ॥ ३५ ॥

रामो राज्यमिति सौराज्यमाह न पर्य्यदेवन्निति व्यालाः सर्पा व्याघ्राश्च ॥ २९ ॥

दस्यवश्चौराः ॥ ३० ॥

अनर्थाभावमेव प्रपञ्चयति वृद्धेष्विति ॥ ३१ ॥

वर्णाश्रमाणां ये गुणाः धर्माः पुराणेषूक्तास्तैरन्विताः ॥ ३२ ॥

औरसानिव स्वजान् प्रीतिमतीः प्रजा रामः पितृवज्जुगोप पितरि पुत्राणामिव प्रजानां रामे स्नेहः पितुः पुत्रेष्विव प्रजासु रामस्येति बोधितम् ॥ ३३ ॥

उपास्त अकरोदिति यावत् ॥ ३४ ॥

धनधान्यऋद्धिमत् तद्युक्तं दीर्घमायुरारोग्यं च तयोः कारकमात्मानमधिकृत्य भवमाध्यात्मिकम् ॥ ३५ ॥

शृणोति भक्त्या मनुजः समाहितो
भक्त्या पठेद्वा परितुष्टमानसः।
सर्वाः समाप्नोति मनोगताशिषो
विमुच्यते पातककोटिभिः क्षणात् ॥ २६ ॥
रामाभिषेकप्रयतः शृणोति यो
धनाभिलाषी लभते महद्धनम्।
पुत्राभिलाषी सुतमार्यसम्मतं
प्राप्नोति रामायणमादितः पठन् ॥ २७ ॥
शृणोति योऽध्यात्मिकरामसंहितां
प्राप्नोति राजा भुवमृद्धसम्पदम्।
शत्रून्विजित्यारिभिरप्रधर्षितो
व्यपेतदुःखो विजयी भवेन्नृपः ॥ २८ ॥
स्त्रियोऽपि शृण्वन्त्यधिरामसंहितां
भवन्ति ता जीवसुताश्च पूजिताः।
वन्ध्याऽपि पुत्रं लभते सुरूपिणं
कथामिमां भक्तियुता शृणोति या ॥ २९ ॥
श्रद्धान्वितो यः शृणुयात्पठेन्नरो
विजित्य कोपं च तथा विमत्सरः।

समाहितस्त्वेकचित्तः परितुष्टमानसः भगवत्कथापठनजानन्देनेति भावः मनोगताशिषः मनसा आशास्यमानानर्थान् ॥ २६ ॥

रामाभिषेकं रावणजयपूर्वकं प्राप्तं आर्यसम्मतं शिष्टसम्मतं तेन स्वयं शिष्टमिति यावत् ॥ २७ ॥

य आध्यात्मिकेत्यत्र सन्धिरार्षः ॥ २८ ॥

अधिरामसंहितां राममधिकृत्य प्रवृत्तामध्यात्मरामायणाख्याम् ॥२९

दुर्गाणि सर्वाणि विजित्य निर्भयो
भवेत् सुखी राघवभक्तिसंयुतः ॥ ४० ॥
सुराः समस्ता अपि यान्ति तुष्टतां
विघ्नाः समस्ता अपयान्ति शृण्वताम् ।
अध्यात्मरामायणमादितो नृणां
भवन्ति सर्वा अपि सम्पदः पराः ॥ ४१ ॥
रजस्वला वा यदि रामतत्परा
शृणोति रामायणमेतदादितः ।
पुत्रं प्रसूते ऋषभश्चिरायुषं
पतिव्रता लोकसुपूजिता भवेत् ॥ ४२ ॥
पूजयित्वा तु ये भक्त्या नमस्कुर्वन्ति नित्यशः
सर्वैः पापैर्विनिर्मुक्ता विष्णोर्यान्ति परं पदम् ॥ ४३ ॥
अध्यात्मरामचरितं कृत्स्नं शृण्वन्ति भक्तितः ।
पठन्ति वा स्वयं वक्त्रात्तेषां रामः प्रसीदति ॥ ४४ ॥
राम एव परं ब्रह्म तस्मिंस्तुष्टेऽखिलात्मनि ।
धर्मार्थकाममोक्षाणां यद्यदिच्छति तद्भवेत् ॥ ४५ ॥
श्रोतव्यं नियमेनैतद्रामायणमखण्डितम् ।
आयुष्यमारोग्यकरं कल्पकोट्यघनाशनम् ॥ ४६ ॥

कोपमित्युपलक्षणं कामादीनाम् विमत्सरः अमोघः सर्वाणि दुर्गाणि दुःखस्थानानि ॥ ४० ॥

शृण्वतां पुंसां सुरास्तुष्यन्ति विघ्ना नश्यन्ति सम्पदश्च भवन्ति ॥४१॥

रामतत्परा रामैकचित्ताः रजस्वलायाः श्रवणं चतुर्थेऽह्न्यारभ्य द्वादशरात्रान्तम् ॥ ४२ ॥

पूजयित्वेत्यादेः पुस्तकमिति शेषः ॥ ४३—४५ ॥

देवाश्च सर्वे तुष्यन्ति यक्षाः सर्वे महर्षयः।
रामायणस्य श्रवणे तुष्यन्ति पितरस्तथा ॥ ४७ ॥

अध्यात्मरामायणमेतदद्भुतं
वैराग्यविज्ञानयुतं पुरातनम्।
पठन्ति शृण्वन्ति लिखन्ति ये नरा-
स्तेषां भवेऽस्मिन्न पुनर्भवो भवेत् ॥ ४८ ॥

आलोड्याखिलवेदराशिमसकृद्यत्तारकं ब्रह्म त-
द्रामो विष्णुरहस्यमूर्त्तिरिति यो विज्ञाय भूतेश्वरः।
उद्धृत्याखिलसारसंग्रहमिदं संक्षेपतः प्रस्फुटं
श्रीरामस्य निगूढतत्त्वमखिलं प्राह प्रियायै भवः ॥ ४९ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे
षोडशः सर्गः।

अयं काण्डः समाप्तः।

आयुष्यं आयुर्जनकम् कल्पकोटिपर्यन्तं कृतमघम् ॥ ४६ । ४७ ॥

वैराग्यविज्ञानयुतं श्रोतॄणां तदुभयदायकमादिति भावः अस्मिन् भवे संसारे इत्यर्थः ॥ ४८ ॥

यो भूतेश्वरो भवः शिवो सकृदखिलवेदराशिमालोड्य यत्तारकं ब्रह्म तदेव रामः विष्णुरहस्यमूर्त्तिः अत्यन्तरहस्यमूर्तिः गुह्यामूर्त्तिरिति विज्ञायाखिलवेदानां सारभूता उपनिषदस्तदर्थसंग्रहमुद्धृत्य संक्षेपत इदं रामस्य निगूढतत्त्वं प्रियायै प्राह तस्मै नम इति शेषः अयं श्लोकस्तत्त्वश्रोतुः शिवशिष्यस्येति बोध्यम् ॥ ४९ ॥

इति श्रीमत्सकलराजविपद्दुरत्ययसमर्थेत्यादिवि० श्रीरामवर्मणः कृताध्यात्मरामायणे सेतौ युद्धकाण्डे
षोडशः सर्गः।

---

# उत्तरकाण्डम् ।

प्रथमः सर्गः ।

जयति रघुवंशतिलकः कौशल्याहृदयनन्दनो रामः ।
दशवदननिधनकारी दाशरथिः पुण्डरीकाक्षः ॥ १ ॥

पार्वत्युवाच ।

अथ रामः किमकरोत्कौशल्यानन्दवर्द्धनः ।
हत्वा मृधे रावणादीन् राक्षसान् भीमविक्रमः ? ॥ २ ॥
अभिषिक्तस्त्वयोध्यायां सीतया सह राघवः ।
मायामानुषतां प्राप्य कतिवर्षाणि भूतले ? ॥ ३ ॥
स्थितवान् लीलया देवः परमात्मा सनातनः ।
अत्यजन्मानुषं लोकं कथमन्ते रघूद्वहः ?(१) ॥ ४ ॥
एतदाख्याहि भगवन् ! श्रद्दधत्या मम प्रभो ! ।
कथापीयूषमास्वाद्य तृष्णा मेऽतीव वर्द्धते ।
रामचन्द्रस्य भगवन् ! ब्रूहि विस्तरशः कथाम् ॥ ५ ॥

मृधे युद्धे ॥ १—२ ॥

कथं केन प्रकारेण ॥ ४ ॥

श्रद्दधत्याः एतच्छ्रवणे श्रद्धावत्याः कथामृतमास्वाद्य मे मम तदास्वादनविषया तृष्णा अत्यन्तं वर्द्धते ॥ ५ ॥

---

(१) रघूत्तम इति वा पाठः ।

श्रीमहादेव उवाच ॥

राक्षसानां वधं कृत्वा राज्यं राम उपस्थिते।
आययुर्मुनयः सर्वे श्रीराममभिवन्दितुम् ॥ ६ ॥
विश्वामित्रोऽसितः कण्वो दुर्वासा भृगुरङ्गिराः।
कश्यपो वामदेवोऽत्रिस्तथा सप्तर्षयोऽमलाः ॥ ७ ॥
अगस्त्यः सह शिष्यैश्च मुनिभिः सहितोऽभ्यगात्।
द्वारमासाद्य रामस्य द्वारपालमथाब्रवीत् ॥ ८ ॥
ब्रूहि रामाय मुनयः समागत्य बहिःस्थिताः।
अगस्त्यप्रमुखाः सर्वे आशीर्भिरभिनन्दितुम् ॥ ९ ॥
प्रतिहारस्ततो राममगस्त्यवचनाद्द्रुतम्।
नमस्कृत्याब्रवीद्वाक्यं विनयावनतः प्रभुम् ॥ १० ॥
कृताञ्जलिरुवाचेदमगस्त्यो मुनिभिः सह।
देव! त्वद्दर्शनार्थाय प्राप्तो बहिरुपस्थितः ॥ ११ ॥
तमुवाच द्वारपालं प्रवेशय यथासुखम्।
पूजिता विविशुर्वेश्म नानारत्नविभूषितम् ॥ १२ ॥

रामे राज्यमुपस्थिते राज्यं प्राप्तवतीत्यर्थः अभिवन्दितुं नन्तुं स्तोतुं च ॥ ६ ॥

तानेव कीर्तनाह विश्वामित्र इति ॥ ७ ॥

मुनिभिः शिष्यैः सहित इत्यर्थः ॥ ८ ॥

अगस्त्यप्रमुखा मुनय आशीर्भिरभिनन्दितुं समागत्य बहिःस्थिताः सन्तीति रामाय ब्रूहीत्यन्वयः ॥ ९ । १० ॥

कृताञ्जलिः प्रतिहार इति शेषः प्राप्तः स्वाश्रमादागतः बहिर्द्वारि उपस्थितोऽस्तीति शेषः ॥ ११ ॥

पूजिताः प्रतिहारेण मार्गप्रदर्शनादिना पूजिताः कृतादरा इति यावत् ॥ १२ ॥

दृष्ट्वा रामो मुनीन् शीघ्रं प्रत्युत्थाय कृताञ्जलिः।
पाद्यार्घ्यादिभिरापूज्य गां निवेद्य यथाविधि ॥ १३ ॥
नत्वा तेभ्यो ददौ दिव्यान्यासनानि यथार्हतः।
उपविष्टाः प्रहृष्टाश्च मुनयो रामपूजिताः ॥ १४ ॥
संपृष्टकुशलाः सर्वे रामं कुशलमब्रुवन्।
कुशलं ते महाबाहो ! सर्वत्र रघुनन्दन ! ॥ १५ ॥
दिष्ट्येदानीं प्रपश्यामो हतशत्रुमरिन्दम ! ।
नहि भारः स ते राम ! रावणो राक्षसेश्वरः ॥ १६ ॥
सधनुस्त्वं हि लोकांस्त्रीन् विजेतुं शक्त एव हि।
दिष्ट्या त्वया हताः सर्वे राक्षसा रावणादयः ॥ १७ ॥
सह्यमेतन्महाबाहो ! रावणस्य निवर्हणम्।
असह्यमेतत्सम्प्राप्तं रावणेर्यन्निषूदनम् ॥ १८ ॥
अन्तकप्रतिमाः सर्वे कुम्भकर्णादयो मृधे।
अन्तकप्रतिमैर्बाणैर्हतास्ते रघुसत्तम ! (१) ॥ १९ ॥

गां मधुपर्कार्थं 'वृषभं च महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्' इति स्मृतेः ॥ १३ ॥

यथार्हतः आर्हो योग्यता तदनतिक्रमादित्यर्थः भगवतः सकाशात् पूजालाभेन प्रहर्षः ॥ १४ ॥

अब्रुवन् अपृच्छन् तमेवाभिनयति कुशलमित्यादि ॥ १५ ॥

स रावणस्तेन भारः क्लेशवध्यो न किन्तु सुकरवध इत्यर्थः ॥ १६ ॥

सुकरत्वमेव दर्शयति सधनुरिति इन्द्रजित स्मृत्वा आह दिष्ट्येति ॥ १७ ॥

तदेव स्पष्टयति सह्यमिति रावणेर्मेघनादस्य ॥ १८ ॥

या दक्षिणा पुरा दत्ता दातुं प्रतिज्ञाता सा रक्षोगणान् हत्वा

(१) रघुनन्दन इति पाठान्तरम्।

दत्ता चेयं त्वयाऽस्माकं पुरा ह्यभयदक्षिणा।
हत्वा रक्षोगणान् सङ्ख्ये कृतकृत्योऽद्य जीवसि ॥२०॥
श्रुत्वा तु भाषितं तेषां मुनीनां भावितात्मनाम्।
विस्मयं परमं गत्वा रामः प्राञ्जलिरब्रवीत् ॥ २१ ॥
रावणादीनतिक्रम्य कुम्भकर्णादिराक्षसान्।
त्रिलोकजयिनो हित्वा किं प्रशंसथ रावणिम्? ॥२२॥
ततस्तद्वचनं श्रुत्वा राघवस्य महात्मनः।
कुम्भयोनिर्महातेजा रामं प्रीत्या वचोऽब्रवीत् ॥ २३ ॥
शृणु राम! यथा वृत्तं रावणे रावणस्य च।
जन्मकर्मवरादानं सङ्क्षेपाद्वदतो मम ॥ २४ ॥
पुरा कृतयुगे राम! पुलस्त्यो ब्रह्मणः सुतः।
तपस्तप्तुं गतो विद्वान् मेरोः पार्श्वं महामतिः ॥ २५ ॥
तृणबिन्दोराश्रमेऽसौ न्यवसन् मुनिपुङ्गवः।
तपस्तेपे महातेजाः स्वाध्यायनिरतः सदा ॥ २६ ॥
तत्राश्रमे महारम्ये देवगन्धर्वकन्यकाः।
गायन्त्यो नृत्युस्तत्र हसन्त्यो वादयन्ति च ॥ २७ ॥
पुलस्त्यस्य तपो विघ्नं चक्रुः सर्वा अनिन्दिताः।
ततः क्रुद्धो महातेजा व्याजहार वचो महत् ॥ २८ ॥
या मे दृष्टिपथं गच्छेत् सा गर्भं धारयिष्यति।

पूर्णा कृता अतः कृतकृत्यः सन् जीवसि त्वमेव जीव तव जीवनमेव श्लाघ्यं जीवनमित्यर्थः ॥ १९—२४ ॥
यथा वृत्तं जातं तथा शृणु ॥ २५ ॥
मुनिपुङ्गवः मुनिश्रेष्ठः सन् अवसत् तपस्तेपे च ॥ २६ । २७ ॥
विघ्नं चक्रुः गायननृत्यादिभिरिति शेषः ॥ २८ । २९ ॥

ताः सर्वाः शापसंविग्ना न तं देशं प्रचक्रमुः ॥१९॥

तृणबिन्दोस्तु राजर्षेः कन्या तन्नाशृणोदिदम्।

वचचार मुनेरग्रे निर्भया तं प्रपश्यती ॥ २० ॥

बभूव पाण्डुरतनुर्व्यञ्जितान्तःशरीरजा।

दृष्ट्वा सा देहवैवर्ण्यं भीता पितरमन्वगात् ॥२१॥

तृणबिन्दुश्च तां दृष्ट्वा राजर्षिरमितद्युतिः।

ध्यात्वा मुनिकृतं सर्वमवैद्विज्ञानचक्षुषा ॥ २२ ॥

तां कन्यां मुनिवर्याय पुलस्त्याय ददौ पिता।

तां प्रगृह्याब्रवीत्कन्यां वाक्मिश्र्येव स द्विजः ॥२३॥

शुश्रूषणपरां दृष्ट्वा मुनिः प्रीतोऽब्रवीदिदम्।

दास्यामि पुत्रमेकन्ते उभयोर्वंशवर्धनम् ॥२४॥

ततः प्रासूत सा पुत्रं पुलस्त्याल्लोकविश्रुतम्।

विश्रवा इति विख्यातः पौलस्त्यो ब्रह्मवित्मुनिः॥२५॥

तस्य शीलादिकं दृष्ट्वा भरद्वाजो महामुनिः।

भार्यार्थं स्वां दुहितरं ददौ विश्रवसे मुदा। २६ ॥

तस्यां तु पुत्रः सञ्जज्ञे पौलस्त्याल्लोकसम्मतः।

पितृतुल्यो वैश्रवणो ब्रह्मणा चानुमोदितः ॥ २७ ॥

प्रपश्यतीत्यत्र नुमभाव आर्षः ॥ २० ॥

व्यञ्जितः प्रकटीकृतोऽन्तः मध्ये शरीरजो गर्भो यस्याः सा ॥ २१ ॥

अवैत् अजानात् ॥ २२ । २३ ॥

उभयोः मातापित्रोः ॥ २४ ॥

यं प्रासूत स विश्रवा इति विख्यात इत्यर्थः ॥ २५ ॥

शीलमुत्तमस्वभावः ॥ २६ ॥

वैश्रवणः कुबेरः ॥ २७ ॥

ददौ तत्तपसा तुष्टो ब्रह्मा तस्मै वरं शुभम्।
मनोऽभिलषितं तस्य धनेशत्वमखण्डितम् ॥ ३८ ॥
ततो लब्धवरः सोऽपि पितरं द्रष्टुमागतः।
पुष्पकेण धनाध्यक्षो ब्रह्मदत्तेन भास्वता ॥ ३९ ॥
नमस्कृत्याथ पितरं निवेद्य तपसः फलम्।
प्राह मे भगवान् ब्रह्मा(१)दत्त्वा वरमनिन्दितम् ॥ ४० ॥
निवासाय न मे स्थानं दत्तवान् परमेश्वरः।
ब्रूहि मे नियतं स्थानं हिंसा यत्र न कस्यचित् ॥ ४१ ॥
विश्रवा अपि तं प्राह लङ्का नाम पुरी शुभा।
राक्षसानां निवासाय निर्मिता विश्वकर्मणा ॥४२ ॥
त्यक्त्वा विष्णुभयाद्दैत्या विविशुस्ते रसातलम्।
सा पुरी दुःप्रधर्षान्यैर्मध्येसागरमाश्रिता ॥४३ ॥
तत्र वासाय गच्छ त्वं नान्यैः साधिष्ठिता पुरा।
पित्रादिष्टस्त्वसौ गत्वा तां पुरीं धनदोऽविशत् ॥४४॥
स तत्र सुचिरं कालमुवास पितृसम्मतः।
कस्यचित्त्वथ कालस्य सुमाली नाम राक्षसः ॥४५ ॥
रसातलान्मर्त्यलोकं चचार पिशिताशनः।

तत्तपसा तस्य तपसा मनोऽभिलषितं धनेशत्वरूपं ददौ ॥३८।३९॥

प्राह पितरमिति कर्म वरं दत्त्वेत्यस्य स्थानं न दत्तवानित्यनेनान्वयः ॥ ४० ॥

हिंसा पीडा यत्र कस्यापि स्यात् नास्ति तादृशं वदेत्यर्थः॥४१।४२

अन्यैः रिपुभिर्दुःप्रधर्षा ॥ ४३ ॥

पुरा दैत्यानां रसातलप्रवेशोत्तरमितः प्रागित्यर्थः ॥४४–४८ ॥

(१) पितरं प्राह भगवान् इति पाठान्तरम्।

गृहीत्वा तनयां कन्यां साक्षाद्देवीमिव श्रियम् ॥ ४६ ॥
अपश्यद्धनदं देवं चरन्तं पुष्पकेण सः ।
हिताय चिन्तयामास राक्षसानां महामनाः ॥ ४७ ॥
उवाच तनयां तत्र कैकसीं(१) नाम नामतः ।
वत्से ! विवाहकालस्ते यौवनं चातिवर्त्तते ॥ ४८ ॥
प्रत्याख्यानाच्च भीतैस्त्वं न वरैर्गृह्यसे शुभे ! ।
सा त्वं वरय भद्रं ते मुनिं ब्रह्मकुलोद्भवम् ॥ ४९ ॥
स्वयमेव ततः पुत्रा भविष्यन्ति महाबलाः ।
ईदृशाः सर्वशोभाढ्याः धनदेन समाः शुभे ! ॥ ५० ॥
तथेति साश्रमं गत्वा मुनेरग्रे व्यवस्थिता ।
लिखन्ती भुवमग्रेण पादेनाधोमुखी स्थिता ॥ ५१ ॥
तामपृच्छत् मुनिः का त्वं कन्यासि ? वरवर्णिनि ! ।
साब्रवीत्प्राञ्जलिर्ब्रह्मन् ! ध्यानेन ज्ञातुमर्हसि ॥ ५२ ॥
ततो ध्यात्वा मुनिः सर्वं ज्ञात्वा तां प्रत्यभाषत ।
ज्ञातं तवाभिलषितं मत्तः पुत्रानभीप्सयसि ॥ ५३ ॥
दारुणायां तु वेलायामागतासि सुमध्यमे ! ।
अतस्ते दारुणौ पुत्रौ राक्षसौ सम्भविष्यतः ॥ ५४ ॥
साब्रवीत् मुनिशार्दूल ! त्वत्तोऽप्येवंविधौ सुतौ ? ।

गृह्यसे प्रार्थ्यसे कचित्तथैव पाठः ॥ ४९ ॥
ईदृशा इत्यस्यैव विवरणं धनदेन समा इति ॥ ५० ॥
सा आश्रममिति छेदः लज्जावशात् भूलेखनादि ॥ ५१ ॥
का किं जातीया कन्यासि उत विवाहितासीति प्रश्नः ॥५२—५४॥

---

(१) नैकषीमिति पुस्तकान्तरे दृष्टम् ।

तामाह पश्चिमो यस्ते भविष्यति महामतिः ॥ ५५ ॥
महाभागवतः श्रीमान् रामभक्त्येकतत्परः ।
इत्युक्ता सा तथा काले सुषुवे दशकन्धरम् ॥ ५६ ॥
रावणं विंशतिभुजं दशशीर्षं सुदारुणम् ।
सद्योजातमात्रेण चचाल च वसुन्धरा ॥ ५७ ॥
बभूवुर्नाशहेतूनि निमित्तान्यखिलान्यपि ।
कुम्भकर्णस्ततो जातो महापर्वतसन्निभः ॥ ५८ ॥
ततः शूर्पणखा नाम जाता रावणसोदरा ।
ततो विभीषणो जातः शान्तात्मा सौम्यदर्शनः ॥ ५९ ॥
स्वाध्यायी नियताहारो नित्यकर्मपरायणः ।
कुम्भकर्णस्तु दुष्टात्मा द्विजान् सन्तुष्टचेतसः ॥ ६० ॥
भक्षयन् ऋषिसङ्घांश्च विचचारातिदारुणः ।
रावणोऽपि महासत्त्वो लोकानां भयदायकः ।
ववृधे लोकनाशाय ह्यामयो देहिनामिव ॥ ६१ ॥

पश्चिमोऽप्येवंविधो सुतान्वितस्य काकुः यस्ते पुत्रो भविष्यति स महामतिर्भविष्यतीत्यर्थः ॥ ५५ ॥

तदेवाह महाभागवत इति रामभक्तेरत्यन्तं युक्त इति शेषः एकस्मिन् तस्मिन् एव तत्परः सर्वदा दत्तचित्तः ॥ ५६ ॥

सद्योजातमात्रेण तस्य रक्षसो जन्ममात्रेण ॥ ५७ ॥

नाशहेतूनि रक्षोवंशस्य लोकानां चेति शेषः ॥ ५८ । ५९ ॥

स्वाध्यायी वेदाध्ययनवान् नित्यं कर्माग्निहोत्रादि तुष्टचेतसः अतिशान्तानित्यर्थः भक्षयन् इत्यनेनान्वयः ॥ ६० । ६१ ॥

राम ! त्वं सकलान्तरस्थमभितो जानासि विज्ञानदृक्
साक्षी सर्वहृदिस्थितो हि परमो नित्योदितो निर्मलः ।
त्वं लीलामनुजाकृतिः स्वमहिमा मायागुणैर्नाज्यसे
लीलार्थं प्रतिचोदितोऽद्य भवतो वक्ष्यामि रक्षोद्भवम् ॥ ६२ ॥

जानामि केवलमनन्तमचिन्त्यशक्तिं
चिन्मात्रमक्षरमजं विदितात्मतत्त्वम् ।
त्वां राम ! गूढनिजरूपमनुप्रवृत्तो
मूढोऽप्यहं भवदनुग्रहतश्चरामि ॥ ६३ ॥

एवं वदन्तमिनवंशपवित्रकीर्तिः
कुम्भोद्भवं रघुपतिः प्रहसन् बभाषे ।

आमयो रोगः सकलान्तरस्थं जानासि सर्वान्तर्यामित्वात् तदेव स्फुटयति सर्वहृदिस्थितो हीत्यन्तेन हियत इत्यर्थे विज्ञानदृक् विज्ञानेन स्वरूपेण दृक् सर्वद्रष्टा अनेन चित्तादिकरणान्तरनैरपेक्ष्यमुक्तम् अतएव साक्षी साक्षात् द्रष्टा नन्वहं मनुष्यः कुतो ममेदृशत्वं तत्राह त्वं लीलेति वस्तुतो न मनुष्यस्त्वमिति भावः स्वमहिमन् स्वमात्रज्ञेयमहिमन् अन्यैस्त्वन्महिमा दुर्ज्ञेय इत्यर्थः मायागुणैः रजआदिभिर्नाज्यसे न स्पृश्यसे एवं सर्वज्ञस्य तवाग्रे कथनं यद्यप्यनुचितं तथापि भवता लीलार्थं प्रतिचोदितः पृष्टो रक्षोद्भवं वक्ष्यामि रक्षोजन्मेत्यत्र सम्बिरार्थः ॥ ६२ ॥

ननु त्वं मामेकं कथं ज्ञातवानसीत्यत्राह जानामीति मूढोऽप्यहं भवदनुग्रहत एवं विशेषणं त्वां जानामि अनन्तं देशकालापरिच्छेद्यं अजराजत्वाभ्यां नाशोत्पत्तिराहित्यमुक्तम् सांसारिकान् प्रति गूढं गुप्तं कृतं निजरूपं येन तम् अथापि त्वामनुप्रवृत्तः त्वत्प्रवृत्तिमार्गमनुप्रवृत्तोऽङ्गीकृतप्रवृत्तिमार्ग इह लोके चरामि ॥ ६२ ॥

इनवंशे सूर्यवंशे पवित्रा कीर्तिर्यस्य सः एतत्सकलमप्युदाहृतमन्तर्यामित्वादिदृश्यमानं जगच्च मायाश्रितमेव तत्र हेतुरनन्यकृतत्वात् न

मायाश्रितं सकलमेतदनन्यकत्वात्
मत्कीर्तनं जगति पापहरं निबोध ॥६४॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे
प्रथमः सर्गः।

विद्यतेऽन्यत् यस्य सोऽनन्यकस्तस्य भावस्तत्त्वं मम तादृशत्वात् धर्मरहितत्वात् इतराधारत्वादेरप्यसम्भवात् सर्वं धर्मजातमपि त्वद्युक्तं मायाश्रितमेव जानीहीति शेषः स्वावतारस्य तत्प्रयोजनमाह मत्कीर्तनमिति स्वकीर्तनद्वारा पापहरणार्थमेवावतार इति भावः ॥ ६४ ॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थत्वादिवि० श्रीरामवर्मणः
कृतौ श्रीमदध्यात्मरामायणे सेतौ उत्तरकाण्डे
प्रथमः सर्गः।



अथ द्वितीयः सर्गः ।

श्रीरामवचनं श्रुत्वा परमानन्दनिर्भरः ।
मुनिः प्रोवाच सद्रसि सर्वेषां तत्र शृण्वताम् ॥ १ ॥
अथ वित्तेश्वरो देवस्तत्र कालेन केनचित् ।
आययौ पुष्पकारूढः पितरं द्रष्टुमञ्जसा ॥२ ॥
दृष्ट्वा तं कैकसी तत्र भ्राजमानं महौजसम् ।
राक्षसी पुत्रसामीप्यं गत्वा रावणमब्रवीत् ॥ ३ ॥
पुत्र ! पश्य धनाध्यक्षं ज्वलन्तं स्वेन तेजसा ।
त्वमप्येवं यथा भूयास्तथा यत्नं कुरु प्रभो ! ॥४ ॥
तच्छ्रुत्वा रावणो रोषात् प्रतिज्ञामकरोद्द्रुतम् ।
धनदेन समो वापि ह्यधिको वा चिरेण तु ॥५ ॥
भविष्याम्यम्ब ! मां पश्य सन्तापं त्यज सुव्रते ! ।
इत्युक्त्वा दुष्करं कर्त्तुं तपः स दशकन्धरः ॥६ ॥
आगमत् फलसिद्ध्यर्थं गोकर्णं तु सहानुजः ।
स्वं स्वं नियममास्थाय भ्रातरस्ते तपो महत् ॥ ७ ॥
आस्थिता दुष्करं घोरं सर्वलोकैकतापनम् ।
दशवर्षसहस्राणि कुम्भकर्णोऽकरोत्तपः ॥ ८ ॥

अथेति तत्र विश्रवस आश्रमे पितरं विश्रवसं ॥ १ ॥
सामीप्यं गत्वा सामीप्यं प्राप्य ॥ २ । ३ ॥
अचिरेणेति छेदः ॥ ४ ॥
मां पश्य शिवेन चक्षुषेति शेषः दुष्करं तपः कर्तुमित्यन्वयः ॥ ५ ॥
फलस्य वाञ्छितस्य सिद्ध्यर्थं सहानुजः कुम्भकर्णविभीषणसहितः
स्वं स्वं नियमं स्वस्ववासनोद्भूतं राजसतामससात्त्विकरूपम् ॥ ६ ॥
दुष्करं अन्यैरिति शेषः ॥ ७–८ ॥

विभीषणोऽपि धर्मात्मा सत्यधर्मपरायणः ।
पञ्चवर्षसहस्राणि पादेनैकेन तस्थिवान् ॥९॥
दिव्यवर्षसहस्रं तु निराहारो दशाननः ।
पूर्णे वर्षसहस्रे तु शीर्षमग्नौ जुहाव सः ।
एवं वर्षसहस्राणि नव तस्यातिचक्रमुः ॥ १० ॥
अथ वर्षसहस्रे तु दशमे दशमं शिरः ।
छेत्तुकामस्य धर्मात्मा प्राप्तश्चाथ प्रजापतिः ।
वत्स ! वत्स ! दशग्रीव ! प्रीतोऽस्मीत्यभ्यभाषत ।
वरं वरय दास्यामि यत्ते मनसि काङ्क्षितम् ॥११॥
दशग्रीवोऽपि तच्छ्रुत्वा प्रहृष्टेनान्तरात्मना ।
अमरत्वं वृणोमीश ! वरदो यदि मे भवान् ।
सुपर्णनागयक्षाणां देवतानां तथासुरैः ॥१२॥
अवध्यत्वं तु मे देहि तृणभूता हि मानुषाः ।
तथास्त्विति प्रजाध्यक्षः पुनराह दशाननम् ॥१३॥
अग्नौ हुतानि शीर्षाणि यानि तेऽसुरपुङ्गव ! ।
भविष्यन्ति यथापूर्वमक्षयाणि च सत्तम ! ॥ १४ ॥
एवमुक्त्वा ततो राम ! दशग्रीवं प्रजापतिः ।
विभीषणमुवाचेदं प्रणतं भक्तवत्सलः ॥ १५ ॥
विभीषण ! त्वया वत्स ! कृतं धर्मार्थमुत्तमम् ।

दशमं शिरश्छेत्तुकामस्य प्रजापतिः प्राप्तः समीपमिति शेषः॥१०।११
ततममरत्वमेव भगवदिच्छावशात् स्वयमेव विवृणोति सुपर्णेत्यादि ॥ १२ ॥
तथास्त्वित्यस्याऽवददिति शेषः ॥ १३ ॥
अक्षयाणि सुपर्णादिकृतक्षयरहितानि ॥ १४ । १५ ॥

तपस्ततो वरं वत्स ! वृणीष्वाभिमतं हि तम् ॥ १६ ॥
विभीषणोऽपि तं नत्वा प्राञ्जलिर्वाक्यमब्रवीत् ।
देव ! मे सर्वदा बुद्धिर्धर्मे तिष्ठतु शाश्वती ।
मा रोचयत्वधर्मे मे बुद्धिः सर्वत्र सर्वदा ॥ १७ ॥
ततः प्रजापतिः प्रीतो विभीषणमथाब्रवीत् ।
वत्स ! त्वं धर्मशीलोऽसि तथैव च भविष्यसि ॥ १८ ॥
अयाचितोऽपि ते दास्ये ह्यमरत्वं विभीषण ! ।
कुम्भकर्णमथोवाच वरं वरय सुव्रत ! ॥ १९ ॥
वाण्या व्याप्तोऽथ तं प्राह कुम्भकर्णः पितामहम् ।
स्वप्स्यामि देव ! षण्मासान् दिनमेकं तु भोजनम् ॥२०॥
एवमस्त्विति तं प्राह ब्रह्मा दृष्ट्वा दिवौकसः ।
सरस्वती च तद्वक्त्रान्निर्गता प्रययौ दिवम् ॥ २१ ॥
कुम्भकर्णस्तु दुष्टात्मा चिन्तयामास दुःखितः ।
अनभिप्रेतमेवास्यात् किं निर्गतमहो विधिः ॥ २२ ॥
सुमाली वरलब्धांस्तान् ज्ञात्वा पौत्रान् निशाचरान् ।
पातालान्निर्भयः प्रायात् प्रहस्तादिभिरन्वितः ॥ २३ ॥

विभीषणस्य धर्मविषयबुद्धिप्राप्तिकामनया तपःकर्तृत्वादरेण वत्सेति द्विः सम्बोधनम् ॥ १६ ॥

तदेवाह देव मे इत्यादिना ॥ १७ ॥

तथैव च भविष्यसि धर्मबुद्धिरेव भविष्यसि ॥ १८ । १९ ॥

वाण्या देवप्रार्थितया ॥ २० । २१ ॥

आस्यादिति छेदः अहो विधि दुरंदृष्ट इति शेषः ॥ २२ ॥

वरलब्धान् प्राप्तवरान् पौत्रान् पुत्रापुत्रान् विदादित्यादरस् प्रायात् रावणादिसमीपमिति शेषः ॥ २३ ॥

दशग्रीवं परिष्वज्य वचनं चेदमब्रवीत्।
दिष्ट्या ते पुत्र! संवृत्तो वाञ्छितो मे मनोरथः॥ २४ ॥
यद्भयाच्च वयं लङ्कां त्यक्त्वा याता रसातलम्।
तद्गतं नो महाबाहो! महद्विष्णुकृतं भयम्॥ २५ ॥
अस्माभिः पूर्वमुषिता लङ्केयं धनदेन ते।
भ्रात्राक्रान्तामिदानीं त्वं प्रत्यानेतुमिहार्हसि॥ २६ ॥
साम्ना वाथ बलेनापि राज्ञां बन्धुः कुतः सुहृत्।
इत्युक्तो रावणः प्राह नार्हस्येवं प्रभाषितुम्॥ २७ ॥
वित्तेशो गुरुरस्माकमेवं श्रुत्वा तमब्रवीत्।
प्रहस्तः प्रश्रितं वाक्यं रावणं दशकन्धरम्॥ २८ ॥
शृणु रावण! यत्नेन नैवं त्वं वक्तुमर्हसि।
नाधीता राजधर्मास्ते नीतिशास्त्रं तथैव च॥ २९ ॥
सुराणां न हि सौभ्रात्रं शृणु मे वदतः प्रभो!।
कश्यपस्य सुता देवा राक्षसाश्च महाबलाः॥ ३० ॥

मे वाञ्छितो मनोरथस्ते दिष्ट्या संवृत्तः॥ २४ ॥

अतो यद्भयादिति तद्विष्णुकृतं भयं नोऽस्माकं गतं सर्वैश्वर्यस्य त्वया प्राप्तत्वात्॥ २५ ॥

इयं लङ्का पूर्वमस्माभिरुषिता अनेनास्मत्सम्बन्धादियं तव धनभूतेति ध्वनितं इदानीं ते भ्रात्रा धनदेनाक्रान्तां त्वं प्रत्यानेतुं स्वाधीनां कर्तुं अर्हसि॥ २६ ॥

ननु ज्येष्ठे भ्रातरि कथं बलं योज्यं तत्राह राज्ञां बन्धुः कुतः सुहृत् कुतः सर्वथैतानुपमर्द्यैव राज्यप्रवृत्तेरिति भावः॥ २७ ॥

एवं श्रुत्वा रावणवाक्यं श्रुत्वेत्यर्थः॥ २८ । २९ ॥

सौभ्रात्रं भ्रात्रादिभिः प्रीतिः॥ ३० ॥

परस्परमयुध्यन्त त्यक्त्वा सौहृदमायुधैः ।
नैवेदानीन्तनं राजन्! वैरं देवैरनुष्ठितम् ॥ २१ ॥
प्रहस्तस्य वचः श्रुत्वा दशग्रीवो दुरात्मनः ।
तथेति क्रोधताम्राक्षस्त्रिकूटाचलमन्वगात् ॥ २२ ॥
दूतं प्रहस्तं संप्रेष्य निष्काश्य धनदेश्वरम् ।
लङ्कामाक्रम्य सचिवैः राक्षसैः सुखमास्थितः ॥ २३ ॥
धनदः पितृवाक्येन त्यक्त्वा लङ्कां महायशाः ।
गत्वा कैलासशिखरं तपसा तोषयञ्छिवम् ।
तेन सख्यमनुप्राप्य तेनैव परिपालितः ॥ २४ ॥
अलकां नगरीं तत्र निर्ममे विश्वकर्मणा ।
दिक्पालत्वं चकारात्र शिवेन परिपालितः ।
रावणो राक्षसैः सार्द्धमभिषिक्तः सहानुजैः ॥ २५ ॥
राज्यं चकारासुराणां त्रिलोकीं बाधयन् खलः ।
भगिनीं कालखञ्जाय(१) ददौ विकटरूपिणीम् ॥ २६ ॥

देवैरनुष्ठितं लङ्काहरणरूपं वैरमिदानीन्तनमेव न किन्तु प्राचीनमेव एवं च तैरस्मद्द्वेषकरणवदस्माकमपि तद्द्वेषकरणं न दोषायेति भावः ॥ २१ ॥

दुरात्मनः प्रहस्तस्येत्यन्वयः ॥ २२ ॥

धनदनामकमीश्वरं निष्काश्य ॥ २३ ॥

धनदः तद्दूतगमनोत्तरं पितृसमीपं गत्वा रावण एवमाह तात किमुचितमिति पृष्टवान् तेन च त्याग एवोचितोऽस्यावध्यत्वादित्युक्ते तां त्यक्तवानिति गाथा पौराणिकी ॥ २४ ॥

निर्ममे कारितवान् रावणोऽनुजैः सार्द्धं राक्षसैरभिषिक्तः लङ्काराज्य इति शेषः ॥ २५ ॥

असुराणां तदवताररूपरक्षसां यद्वा क्रूरकर्मत्वात्खलः स्वयमसुरप-

(१) कालकञ्जाय इति वा पाठः ।

विद्युज्जिह्वाय नाम्नासौ महामायो निशाचरः।
ततो मयो विश्वकर्मा राक्षसानान्दितेः सुतः॥ ३७॥
सुतां मन्दोदरीं नाम्ना ददौ लोकैकसुन्दरीम्।
रावणाय पुनः शक्तिममोघां प्रीतमानसः॥ ३८॥
वैरोचनस्य दौहित्रीं वृत्रज्वालेति विश्रुताम्।
स्वयं दत्तामुदवहत् कुम्भकर्णाय रावणः॥ ३९॥
गन्धर्वराजस्य सुतां शैलूषस्य महात्मनः।
विभीषणस्य भार्यार्थे धर्मज्ञां समुदावहत्॥ ४०॥
सरमां नाम सुभगां सर्वलक्षणसंयुताम्।
ततो मन्दोदरी पुत्रं मेघनादमजीजनत्॥ ४१॥
जातमात्रस्तु यो नादं मेघवत्प्रमुमोच ह।
ततः सर्वेऽब्रुवन्मेघनादोऽयमिति चासकृत्॥ ४२॥
कुम्भकर्णस्ततः प्राह निद्रा मां बाधते प्रभो!।
ततश्च कारयामास गुहां दीर्घां सुविस्तराम्॥ ४३॥
तत्र सुष्वाप मूढात्मा कुम्भकर्णो विघूर्णितः।
निद्रिते कुम्भकर्णे तु रावणो लोकरावणः॥ ४४॥
ब्राह्मणान् ऋषिमुख्यांश्च देवदानवकिन्नरान्।

दप्रयोगः एवमग्रेष्वपि राक्षसपदप्रयोग इति बोध्यं कालखञ्जाय तद्वंशाय नाम्ना विद्युज्जिह्वाय भगिनीं शूर्पणखां॥ ३६॥

राक्षसानां विश्वकर्मा दितेः सुतो मयः मन्दोदरीं कन्यां रावणाय ददौ पुनः शक्तिं चामोघां स्वनिर्मितां ददौ॥ ३७। ३८॥

स्वयं दत्तामिति तत्पित्रेति शेषः॥ ३९—४१॥

मेघनादेति नाम्नोऽन्वर्थत्वमाह जातमात्र इति॥ ४२—४४॥

देवादीन् समहोरगान्विजग्ये देवांश्चियमचेति जग्ने हृतवानित्यर्थः

देवस्त्रियो मनुष्यांश्च निजघ्ने स महोरगान् ॥ ४५ ॥
धनदोऽपि ततः श्रुत्वा रावणस्याक्रमं प्रभुः (१) ।
अधर्मं मा कुरुष्वेति दूतवाक्यैर्न्यवारयत् ॥ ४६ ॥
ततः क्रुद्धो दशग्रीवो जगाम धनदालयम् ।
विनिर्जित्य धनाध्यक्षं जहारोत्तमपुष्पकम् ॥ ४७ ॥
ततो यमस्तु वरुणं निर्जित्य समरेऽसुरः ।
स्वर्गलोकमगात्तूर्णं देवराजजिघांसया ॥ ४८ ॥
ततोऽभवन्महद्युद्धमिन्द्रेण सह दैवतैः ।
ततो रावणमभ्येत्य बबन्ध त्रिदशेश्वरः ॥ ४९ ॥
तच्छ्रुत्वा सहसागत्य मेघनादः प्रतापवान् ।
कृत्वा घोरं महद्युद्धं जित्वा त्रिदशपुङ्गवान् ॥ ५० ॥
इन्द्रं गृहीत्वा बद्ध्वासौ मेघनादो महाबलः ।
मोचयित्वा तु पितरं गृहीत्वेन्द्रं ययौ पुरम् ॥५१ ॥
ब्रह्मा तु मोचयामास देवेन्द्रं मेघनादतः ।
दत्त्वा वरान् बहूंस्तस्मै ब्रह्मा स्वभवनं ययौ ॥ ५२ ॥

देवस्त्रिय इति पाठान्तरं ॥ ४५ ॥
आक्रमन्देवादिष्वन्यायाचरणम् ॥ ४६ ॥
उत्तमपुष्पकं वाहनेषूत्तमं पुष्पकाख्यं वाहनमित्यर्थः ॥ ४७ ॥
स्वर्गलोकं मेरोरूर्द्ध्वस्थितं शक्रलोकं अनेन यमादिलोकाः तदधः स्थिता इति ध्वनयति ॥ ४८ ॥
दैवतैः सहितेनेन्द्रेणास्य युद्धमभवदित्यर्थः ॥ ४९ ।५० ॥
प्रथमत इन्द्रग्रहणं ततस्तस्य बन्धनं ततो बद्धस्य स्वपुरे आनयनम्॥५१॥

(१) पुनः इत्यपि पाठः ।

रावणो विजयी लोकान् सर्वान् जित्वा क्रमेण तु ।
कैलासं तोलयामास बाहुभिः परिघोपमैः ॥५३ ॥
तत्र नन्दीश्वरेणैवं शप्तोऽयं रावणेश्वरः ।
वानरैर्मानुषैश्चैव नाशं गच्छेति कोपिना ॥ ५४ ॥
शप्तोऽप्यगणयन् वाक्यं ययौ हैहयपत्तनम् ।
तेन बद्धो दशग्रीवः पुलस्त्येन विमोचितः ॥ ५५ ॥
ततोऽपि बलमासाद्य जिघांसुर्हरिपुङ्गवम् ।
धृतस्तेनैव कक्षेण वालिना दशकन्धरः ॥५६ ॥
भ्रामयित्वा तु चतुरः समुद्रान् रावणं हरिः ।
विसर्जयामास ततस्तेन सख्यं चकार सः ॥५७ ॥
रावणः परमप्रीत एवं लोकान्महाबलः ।
चकार स्ववशे राम ! बुभुजे स्वयमेव तान् ॥५८॥
एवं प्रभावो राजेन्द्र ! दशग्रीवः सहेन्द्रजित् ।
त्वया विनिहतः सङ्ग्रे रावणो लोकरावणः॥५९ ॥
मेघनादश्च निहतो लक्ष्मणेन महात्मना ।

इन्द्रमोचनप्रतिदानत्वेन तदभीष्टानेकवरदानम् ॥ ५२ । ५३ ॥

शापमाह वानरैरिति कोपिना कोपवता कैलासचालनादयं कोपः वानरमुखं नन्दीश्वरं दृष्ट्वा रावणेन हसितमित्यतो वा शापः ॥ ५४ ॥

अगणयन् किमस्य शापेन भवितेति तच्छापगणनामकुर्वन् हैहय-पत्तनं सहस्रार्जुननगरम् ॥ ५५ ॥

बलं हैहयप्रतिरूपं बलं हरिपुङ्गवं वालिनं तद्धननोद्यमेन गतस्य विपरीतं तत एवानिष्टलाभ इत्याह तेनैव कक्षेण धृत इति विषमम-लालङ्कारः ॥ ५६ ॥

स रावणः ॥ ५७—५९ ॥

कुम्भकर्णश्च निहतस्त्वया पर्वतसन्निभः ॥ ६० ॥
भवान्नारायणः साक्षाज्जगतामादिकृद्विभुः ।
त्वत्स्वरूपमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ ६१ ॥
त्वन्नाभिकमलोत्पन्नो ब्रह्मा लोकपितामहः ।
अग्निस्ते मुखतो जातो वाचा सह रघूत्तम ! ॥ ६२ ॥
बाहुभ्यां लोकपालौघाश्चक्षुर्भ्यां चन्द्रभास्करौ ।
दिशश्च विदिशश्चैव कर्णाभ्यां ते समुत्थिताः ॥ ६३ ॥
घ्राणात्प्राणः समुत्पन्नश्चाश्विनौ देवसत्तमौ ।
जङ्घाजानूरुजघनाद्भुवर्लोकादयोऽभवन् ॥ ६४ ॥
कुक्षिदेशात् समुत्पन्नाश्चत्वारः सागरा हरे ! ।
स्तनाभ्यामिन्द्रवरुणौ वालखिल्याश्च रेतसः ॥ ६५ ॥
मेढ्राद्यमो गुदान्मृत्युर्मन्यो रुद्रस्त्रिलोचनः ।
अस्थिभ्यः पर्वता जाताः केशेभ्यो मेघसंहतिः ॥ ६६ ॥
ओषध्यस्तव रोमभ्यो नखेभ्यश्च खरादयः ।
त्वं विश्वरूपः पुरुषो मायाशक्तिसमन्वितः ॥ ६७ ॥

अत्र रावणवध्यत्वेन्द्रवध्यकतया रामप्रष्ट इन्द्रजित उत्कर्ष उक्तः॥६०
एतत्तवामाश्चर्यायेत्याह भवानिति आदिकृत् उत्पत्तिकर्त्ता जगतो भगवत्स्वरूपत्वमेवाह त्वन्नाभीति अग्निस्ते इति 'मुखादग्निरजायत' इति श्रुतेः 'वागग्निमप्येति' इति श्रुतेश्च ॥ ६१ । ६२ ॥
बाहुभ्यामित्याद्यपि श्रुतिसिद्धमिति तद्विदां स्पष्टमेव ॥ ६३ ॥
प्राणः प्राणवायुः जङ्घाजानूरुजघनादिति समाहारद्वन्द्वः ॥ ६४ ॥
वालखिल्या ऋषिविशेषाः ॥ ६५ । ६६ ॥
विश्वरूपः विराडित्यर्थः मायागुणानां सत्त्वादीनाम् व्यतिकरे इति आधिक्यन्यूनताभ्यां परस्परसंश्लेषे सति नानारूपो ब्रह्मविष्णुरुद्रादिरूपो भासि ॥ ६७ ॥

नानारूप(१) इवाभासि गुणव्यतिकरे सति ॥
त्वामाश्रित्यैव विबुधाः पिबन्त्यमृतमध्वरे ॥ ६८ ॥
त्वया सृष्टमिदं सर्वं विश्वं स्थावरजङ्गमम् ।
त्वामाश्रित्यैव जीवन्ति सर्वे स्थावरजङ्गमाः ॥ ६९ ॥
त्वद्युक्तमखिलं वस्तु व्यवहारेऽपि राघव ! ।
क्षीरमध्यगतं सर्पिर्यथा व्याप्याखिलं पयः ॥ ७० ॥
त्वद्भासा भासतेऽर्कादि न त्वं तेनावभाससे ।
सर्वगं नित्यमेकं त्वां ज्ञानचक्षुर्विलोकयेत् ॥ ७१ ॥
नाज्ञानचक्षुस्त्वां पश्येदन्धदृक् भास्करं यथा ।
योगिनस्त्वां विचिन्वन्ति स्वदेहे परमेश्वरम् ॥ ७२ ॥
अतन्निरसनमुखैर्वेदशीर्षैरहर्निशम् ।
त्वत्पादभक्तिलेशेन गृहीता यदि योगिनः ॥ ७३ ॥

अग्निरूपं त्वामाश्रित्यैव अमृतं हविरध्वरे देवाः पिबन्ति ॥६८॥

त्वमेव सृष्टिस्थितिकर्तेत्याह त्वयेति ॥ ६९ ॥

व्यवहारे तत्कालेऽपि अखिलं वस्तु त्वद्युक्तमेव सत्त्वेन भातत्वे च सर्वव्यवहारः सत्ताभावे च सर्वत्र त्वदीये एवेति भावः तदेव दृष्टान्तेनोपपादयति सर्पिर्यथाखिलं पयो व्याप्य तिष्ठति तथा त्वमखिलं व्याप्य तिष्ठसीति सर्वत्र सदिति भासते इति च व्यवहारः 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतेः ॥ ७० ॥

तदेवाह त्वद्भासेति ईदृशस्त्वं न सर्ववेद्य इत्याह सर्वगमिति॥७१॥

ज्ञानचक्षुषोऽप्यात्मन्येव त्वां पश्यन्तीत्याह योगिन इति न तु स्वशाङ्गदेनेत्यर्थः एतेन सर्वत्र चैतन्यभूतस्त्वमेवेति सूचितं विचिन्वन्ति पश्यन्ति ॥ ७२ ॥

तथादर्शने करणमाह अतदिति अतत् दृश्यं जडं तन्निरसनमुखैर्न स्त्री न पुमानित्यादिरूपैर्वेदशीर्षैरुपनिषद्भागैः पश्यन्ति वस्तुतो निर्धर्मक-

---

(१) रूपधर इति पाठान्तरम् ।

विचिन्वन्तो हि पश्यन्ति विज्ञाय त्वां न चान्यथा ।
मया प्रलपितं किञ्चित् सर्वमस्य तवाग्रतः ।
क्षन्तुमर्हसि देवेश ! तवानुग्रहभागहम् ॥ ७४ ॥

हृद्ये प्रकाशपरिहीनमनन्यमेकं
चिन्मात्रमक्षरमजं वचनादिहीनम् ।
सर्वज्ञमीश्वरमनन्तगुणव्युदस्त-
माद्यं भजे रघुपतिं भजतामभिन्नम् ॥ ७५ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे
द्वितीयः सर्गः ।

त्वात्मज्ञानापि कृपेव वक्तुमशक्यतया निषेधमुखेनैव श्रुतयो मां प्रतिपादयन्तीति भावः तदपि तेषां ज्ञानं त्वद्भक्तिं विनोपनिषद्वाक्येन च नेत्याह त्वत्प्रसादेति अन्यथा नेति भावः ॥ ७२ ॥

विचिन्वन्तः उपनिषदः विचारयन्तः अन्यथा न केनचिदपि च धर्म-कृत्यं न पश्यन्तीत्यर्थः ॥ ७४ ॥

भजतां भक्तानां अभिन्नं स्वाभिन्नत्वेन बुद्धिविषयम् ॥ ७५ ॥

इति श्रीमद्रघुवरराजवि० श्रीरामवर्मणः कृताव-
ध्यात्मरामायणे सेतौ उत्तरकाण्डे
द्वितीयः सर्गः ।

---

तृतीयः सर्गः ।

श्रीराम उवाच ।

वालिसुग्रीवयोर्जन्म श्रोतुमिच्छामि तत्त्वतः ।
रवीन्द्रौ वानराकारौ जज्ञात इति नः श्रुतिः ॥ १ ॥

अगस्त्य उवाच ।

मेरोः स्वर्णमयस्याद्रेर्मध्यशृङ्गे मणिप्रभे ।
तस्मिन् सभास्ते विस्तीर्णा ब्रह्मणः शतयोजना ॥ २ ॥
तस्यां चतुर्मुखः साक्षात्कदाचिद्योगमास्थितः ।
नेत्राभ्यां पतितं दिव्यमानन्दसलिलं बहु ॥ ३ ॥
तद्गृहीत्वा करे ब्रह्मा ध्यात्वा किञ्चित्तदत्यजत्(१) ।
भूमौ पतितमात्रे च तस्माज्जातो महाकपिः ॥ ४ ॥
तमाह द्रुहिणो वत्स ! किञ्चित्कालं वसात्र मे ।
समीपे सर्वशोभाढ्य ततः श्रेयो भविष्यति ॥ ५ ॥
इत्युक्तो न्यवसत्तत्र ब्रह्मणा वानरोत्तमः ।

वालीति रवीन्द्रावपि 'आत्मा वै पुत्रनामासि' इति श्रुतेस्तयोरेव वानराकारत्वं ख्यातम् ॥ १ ॥

सभा आस्ते इति च्छेदः ॥ २ ॥

योगं ध्यानम् ॥ ३ ॥

किञ्चिद्ध्यात्वा तदत्यजत् भूमाविति शेषः भूमौ पतितमात्रे च तेन सलिलेन दार्ढ्यं प्राप्तमिति शेषः तस्मात्कपिर्जातः ॥ ४ ॥

द्रुहिणो ब्रह्मा मे समीपे वसेत्यन्वयः ब्रह्मणापि एवमुक्त इत्यन्वयः ऋक्षाधिपः स एव कपिः ॥ ५ ॥ ६ ॥

---

(१) तदासृजत् इति केचित् पठन्ति ।

एवं बहुतिथे काले गते कपाधिपः सुधीः ॥ ६ ॥
कदाचित्पर्यटन्नद्रौ फलमूलार्थमुद्यतः ।
अपश्यद्दिव्यसलिलां वापीं मणिशिलान्विताम् ॥ ७ ॥
पानीयं पातुमागच्छत्तत्र छायामयं कपिम् ।
दृष्ट्वा प्रतिकपिं मत्वा निपपात जलान्तरे ॥ ८ ॥
तत्रादृष्ट्वा हरिं शीघ्रं पुनरुत्प्लुत्य वानरः ।
अपश्यत् सुन्दरीं रामामात्मानं विस्मयं गतः ॥ ९ ॥
ततः सुरेशो देवेशं पूजयित्वा चतुर्मुखम् ।
गच्छन्मध्याह्नसमये दृष्ट्वा नारीं मनोरमाम् ॥ १० ॥
कन्दर्पशरविद्धाङ्गस्त्यक्तवान् वीर्यमुत्तमम् ।
तामप्राप्यैव तद्बीजं वालदेशे पतद्भुवि ॥ ११ ॥
वाली समभवत्तत्र शक्रतुल्यपराक्रमः ।
तस्य दत्त्वा सुरेशानः स्वर्णमालां दिवं गतः ॥ १२ ॥
भानुरप्यागतस्तत्र तदानीमेव भामिनीम् ।
दृष्ट्वा कामवशो भूत्वा ग्रीवादेशे सृजन्महत् ॥ १३ ॥
बीजं तस्मात्ततः सद्यो महाकायोऽभवद्धरिः ।
तस्य दत्त्वा हनूमन्तं सहायार्थं गतो रविः ॥ १४ ॥

उद्यत उद्यमवान् फलमूलार्थं नद्यामद्रौ पर्यटन् वापीमपश्यत् ॥ ७ ॥

छायामयं स्वच्छायारूपम् प्रतिकपिं स्वविरोधिकपिम् ॥ ८ ॥
आत्मानं सुन्दरीं रामां तद्रूपं स्त्रीरूपमपश्यत् ॥ ९ ॥
सुरेश इन्द्रश्चतुर्मुखं पूजयित्वा पुरं गच्छन् मनोरमां तां नारीं दृष्ट्वा ॥ १० ॥

तामप्राप्यैव तया सह मिलनं विनैव वीर्यं त्यक्तवान् ॥ ११—१२ ॥
तस्य ग्रीवादेशे महद्बीजमसृजत् त्यक्तवान् ॥ १४ ॥

पुत्रद्वयं समादाय गत्वा सा निद्रिता क्वचित् ।
प्रभातेऽपश्यदात्मानं पूर्ववद्वानराकृतिम् ॥ १५ ॥
फलमूलादिभिः सार्धं पुत्राभ्यां सहितः कपिः ।
गत्वा चतुर्मुखस्याग्रे ऋक्षराजः स्थितः सुधीः ॥ १६ ॥
ततोऽब्रवीत् समाश्वास्य बहुशः कपिकुञ्जरम् ।
तत्रैकं देवतादूतमाहूयामरसन्निभम् ॥ १७ ॥
गच्छ दूत ! मयादिष्टो गृहीत्वा वानरोत्तमम् ।
किष्किन्ध्यां दिव्यनगरीं निर्मितां विश्वकर्मणा ॥ १८ ॥
सर्वसौभाग्यवलितां देवैरपि दुरासदाम् ।
तस्यां सिंहासने वीरं राजानमभिषेचय ॥ १९ ॥
सप्तद्वीपगता ये ये वानराः सन्ति दुर्जयाः ।
सर्वे ते ऋक्षराजस्य भविष्यन्ति वशेऽनुगाः ॥ २० ॥
यदा नारायणः साक्षाद्रामो भूत्वा सनातनः ।
भूभारहरणार्थाय सम्भविष्यति भूतले ॥ २१ ॥
तदा सर्वे सहायार्थे तस्य गच्छन्तु वानराः ।
इत्युक्तो ब्रह्मणा दूतो देवानां स महामतिः ॥ २२ ॥
यथाज्ञप्तस्तथा चक्रे ब्रह्मणा तं हरीश्वरम् ।
देवदूतस्ततो गत्वा ब्रह्मणे तन्न्यवेदयत् ॥ २३ ॥

पूर्ववत्पुंरूपमित्यर्थः ॥ १५ । १६ ॥

समाश्वास्य भाविनो दुर्वारत्वात्तस्य शोकरूपता कथमित्यादिविशेषो-
वाचिकमाश्वासेत्यर्थः देवतादूतं देवदूतमित्यर्थः ॥ १७ । १८ ॥

सौभाग्यवलितां तद्युक्ताम् ॥ १९ ॥

वशे भविष्यन्ति वशगाश्च भविष्यन्ति ॥ २०–२२ ॥

ततश्च किष्किन्ध्याराज्यादिदानम् ॥ २३ ॥

तदादि वानराणां सा किष्किन्ध्याऽभून्नृपाश्रयः ।
सर्वेश्वरस्त्वमेवासीरिदानीं ब्रह्मणाऽर्थितः ॥ २४ ॥
भूमेर्भारो हृतः कृत्स्नस्त्वया लोकात्तदेहिना ।
सर्वभूतान्तरस्थस्य नित्यमुक्तचिदात्मनः ॥ २५ ॥
अखण्डानन्दरूपस्य कियानेष पराक्रमः ।
तथापि वर्ण्यते सद्भिर्लीलामानुषरूपिणः ॥ २६ ॥
यशस्ते सर्वलोकानां पापहत्यै सुखाय च ।
य इदं कीर्त्तयेन्मर्त्यो वालिसुग्रीवयोर्भवत् ॥ २७ ॥
जन्म त्वदाश्रयत्वात् स मुच्यते सर्वपातकैः ।
अथान्यां सम्प्रवक्ष्यामि कथां राम ! त्वदाश्रयाम् ॥ २८ ॥
सीता हृता यदर्थं सा रावणेन दुरात्मना ।
पुरा कृतयुगे राम ! प्रजापतिसुतं विभुम् ॥ २९ ॥
सनत्कुमारमेकान्ते समासीनं दशाननः ।
विनयावनतो भूत्वा ह्यभिवाद्येदमब्रवीत् ॥ ३० ॥

तदादि तत्प्रभृति हे नृप ! वानराणां सा किष्किन्ध्या आश्रयो ऽभूत् त्वमेवेदानीं ब्रह्मणा अर्थितः सन् सर्वेश्वरः सर्ववानरेश्वरः ॥ २४ ॥

लोकात्तदेहिना लोकात्तगृहीतमनुष्यदेहेन अयं पराक्रमस्तव नाश्चर्यमित्याह सर्वभूतेति यस्त्वामेवं वेत्ति सोऽपि स्वेच्छया सृष्टिसंहारसमर्थो भवति वेद्यात्मनस्तव किं वाच्यमिति भावः ॥ २५ ॥

मन्दोदयस्तावानपर्येष किं वर्णनेन तत्राह तथापीति सर्वलोकपापनाशाय अमलमेषां सुखाय चानाश्चर्यमपि आश्चर्यवत्कृत्वा वर्ण्यते बुधैः ॥ २६ । २७ ॥

तज्जन्म त्वदाश्रयत्वात्त्वदुपकारार्थत्वात् यस्तयोर्जन्म कथयेत् स पातकैर्मुच्यते ॥ २८ ॥

तदर्थं सीता हृता तां त्वदाश्रयां त्वद्विषयां कथां वक्ष्यामि प्रजापतेः सुतं मानसं सुतम् ॥ २९ । ३० ॥

को न्वस्मिन् प्रवरो लोके देवानां बलवत्तरः ? ।
देवाश्च यं समाश्रित्य युद्धे शत्रुं जयन्ति हि ? ॥ २१ ॥
कं यजन्ति द्विजा नित्यं कं ध्यायन्ति च योगिनः ? ।
एतन्मे शंस भगवन् ! प्रश्नं प्रश्नविदांवर ! ॥ २२ ॥
ज्ञात्वा तस्य हृदिस्थं यत्तदशेषेण योगदृक् ।
दशाननमुवाचेदं शृणु वक्ष्यामि पुत्रक ! ॥२३ ॥
भर्त्ता यो जगतां नित्यं यस्य जन्मादिकं नहि ।
सुरासुरैर्नुतो नित्यं हरिर्नारायणोऽव्ययः ॥ २४ ॥
यन्नाभिपङ्कजाज्जातो ब्रह्मा विश्वसृजाम्पतिः ।
सृष्टं येनैव सकलं जगत् स्थावरजङ्गमम् ॥ २५ ॥
तं समाश्रित्य विबुधा जयन्ति समरे रिपून् ।
योगिनो ध्यानयोगेन तमेवानुजपन्ति हि ॥ २६ ॥
अहर्षेर्वचनं श्रुत्वा प्रत्युवाच दशाननः ।
दैत्यदानवरक्षांसि विष्णुना निहितानि च ॥ २७ ॥
कां वा गतिं प्रपद्यन्ते प्रेत्य ते मुनिपुङ्गव ! ।
तमुवाच मुनिश्रेष्ठो रावणं राक्षसाधिपम् ॥ २८ ॥

अस्मिंल्लोके प्रवरः श्रेष्ठः विवक्षितं श्रैष्ठ्यमेवाह देवानामित्यादि बलवत्तरत्वमेव प्रकटयति देवाश्चेति ॥ २१ । २२ ॥

तस्य रावणस्य हृत्स्थं तादृशान्मे मरणं भवत्वितीच्छारूपम् ॥ २३ ॥

यः सुरासुरैर्नुतः स हरिर्नारायणादिपदवाच्य इत्यर्थः ॥ २४ ॥

अथ तल्लक्षणमाह यन्नाभीति अनेन ब्रह्मवहितजगत्स्रष्टृत्वरूपं तल्लक्षणमुक्तम् ॥ २५ ॥

अनुजपन्ति ध्यायन्ति ॥ २६ । २७ ॥

कां वेति वा शब्दो वाक्यालङ्कारे ॥ २८ । २९ ॥

दैवतैर्निहता नित्यं गत्वा स्वर्गमनुत्तमम् ।
भोगक्षये पुनस्तस्माद्भ्रष्टा भूमौ भवन्ति ते ॥ ३८ ॥
पूर्वार्जितैः पुण्यपापैर्म्रियन्ते चोद्भवन्ति च ।
विष्णुना ये हतास्ते तु प्राप्नुवन्ति हरेर्गतिम् ॥ ४० ॥
श्रुत्वा मुनिमुखात् सर्वं रावणो हृष्टमानसः ।
योत्स्येऽहं हरिणा सार्द्धमितिचिन्तापरोऽभवत् ॥ ४१ ॥
मनःस्थितं परिज्ञात्वा रावणस्य महामुनिः ।
उवाच वत्स ! तेऽभीष्टं भविष्यति न संशयः ॥ ४२ ॥
कञ्चित्कालं प्रतीक्षस्व सुखी भव दशानन ! ।
एवमुक्त्वा महाबाहो ! मुनिः पुनरुवाच तम् ॥ ४३ ॥
तस्य स्वरूपं वक्ष्यामि ह्यरूपस्यापि मायिनः ।
स्थावरेषु च सर्वेषु नदेषु च नदीषु च ॥ ४४ ॥
ओङ्कारश्चैव सत्यं च सावित्री पृथिवी च सः ।
समस्तजगदाधारः शेषरूपधरो हि सः ॥ ४५ ॥
सर्वे देवाः समुद्राश्च कालः सूर्यश्च चन्द्रमाः ।

हरेर्गतिं मुक्तिम् सा च क्रमेण हिरण्यगर्भेण सहेति बोध्यम् ॥ ४० ॥

एवं मुमुक्षुरपि रावणो भगवन्मायावशात्तमोगुणप्रधानत्वाच्च भगवद्द्वेषेणैव मुक्तिं प्रार्थयते योत्स्येऽहमिति कथं योत्स्ये इत्यर्थः ॥ ४१ । ४

सुखी भवेत्यस्य तत इत्यादि ततो मरणलाभेन सुखित्वम् ॥ ४२ ॥

स्थावरेषु नदेषु च व्याप्त इति शेषः ॥ ४४ ॥

इदमुपलक्षणं तदाह ओङ्कार इति प्रणवरूपत्वेन सर्वशास्त्रव्याप्तिरुक्ता 'ओङ्कारो वै सर्वा वाक्' इति श्रुतेः तदेवाह सत्यं वाक्यं सावित्री गायत्री च स इत्यनेनार्थोऽपि सर्वस्तद्रूप एवेत्याह पृथिवी चेति इदमुपलक्षणं तदाह समस्तेति ॥ ४५ । ४६ ॥

सूर्योदयो दिवारात्री(१) यमश्चैव तथानिलः ॥ ४६ ॥
अग्निरिन्द्रस्तथा मृत्युः पर्जन्यो वसवस्तथा ।
ब्रह्मा रुद्रादयश्चैव ये चान्ये देवदानवाः ॥ ४७ ॥
विद्योतति ज्वलत्येष पाति चात्तीति विश्वकृत् ।
क्रीडां करोत्यव्ययात्मा सोऽयं विष्णुः सनातनः ॥ ४८ ॥
तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ।
नीलोत्पलदलश्यामो विद्युद्वर्णाम्बरावृतः ॥ ४९ ॥
शुद्धजाम्बूनदप्रख्यां श्रियं वामाङ्कसंस्थिताम् ।
सदानपायिनीं देवीं पश्यन्नालिङ्ग्य तिष्ठति ॥ ५० ॥
द्रष्टुं न शक्यते कैश्चिद्देवदानवपन्नगैः ।
यस्य प्रसादं कुरुते स चैनं द्रष्टुमर्हति ॥ ५१ ॥
न च यज्ञतपोभिर्वा न दानाध्ययनादिभिः ।
शक्यते भगवान्द्रष्टुमुपायैरितरैरपि ॥ ५२ ॥

शेषादयो दानवान्ताः सर्वे तद्रूपा एवेति विराड्रूपक्रम् ॥४७॥
सूर्यादौ प्रकाशो अग्नेर्ज्वलनं रक्षासंहारौ च तदधीनौ एवेत्याह विद्योततीति तत्सर्वमयत्नेनैवेत्याह क्रीडां करोतीति क्रीडामिव करोतीत्यर्थः नतु कश्चित्प्रयासोऽस्येति भावः ॥ ४८ ॥
उक्तमेवार्थं सामान्येनोपसंहरति तेनेति अथैतद्ध्यानाशक्तं प्रति अन्यत् ध्येयं रूपमाह नीलोत्पलेति विद्युद्वर्णाम्बरं पीताम्बरं जाम्बूनदप्रख्यां तत्सदृशकान्तिम् देवीं पश्यन् स्वदर्शनेन सृष्ट्यादिव्यापारादौ प्रवर्त्तयन् आलिङ्ग्य तिष्ठतीति अनेन तस्याः स्वतो नात्यन्तं भेद इति दर्शितं शक्तिशक्तिमतोस्तादात्म्यस्यैव शास्त्रसिद्धान्तत्वात् ॥ ४९ । ५० ॥
तादृशोऽपि तत्प्रसादं विना द्रष्टुमशक्य इत्याह द्रष्टुमिति ॥५१॥
तद्दर्शने तद्भक्तिरेवासाधारण उपाय इत्याह नचेति ॥ ५२ ॥

---

(१) सूर्योदयो दिवारात्रि इत्यपि पाठः ।

तद्वक्तैस्तद्गतप्राणैस्तच्चित्तैर्धूतकल्मषैः।
शक्यते भगवान्विष्णुर्वेदान्तामलदृष्टिभिः॥ ५३॥
अथ वा द्रष्टुमिच्छा ते शृणु त्वं परमेश्वरम्।
त्रेतायुगे स देवेशो भविता नृपविग्रहः॥ ५४॥
हितार्थं देवमर्त्यानामिक्ष्वाकूणां कुले हरिः।
रामो दाशरथिर्भूत्वा महासत्त्वपराक्रमः॥ ५५॥
पितुर्नियोगात्स भ्रात्रा भार्यया दण्डके वने।
विचरिष्यति धर्मात्मा जगन्मात्रा स्वमायया॥ ५६॥
एवं ते सर्वमाख्यातं मया रावण! विस्तरात्।
भजस्व भक्तिभावेन तदा रामं श्रिया युतम्॥ ५७॥
एवं श्रुत्वा सुराध्यक्षो ध्यात्वा किञ्चिद्विचार्य च।
त्वया सह विरोधेप्सुर्मुमुदे रावणो महान्॥ ५८॥
युद्धार्थी सर्वतो लोकान् पर्य्यटन् समवस्थितः।
एतदर्थं महाराज! रावणोऽतीव बुद्धिमान्।
हृतवान् जानकीं देवीं त्वयात्मवधकाङ्क्षया॥ ५९॥

तद्भक्तैरिति च शक्यते द्रष्टुमिति शेषः॥ ५३॥

अथ वा द्रष्टुमिच्छा एतैरुपायैर्विनापीति शेषः नृपविग्रहः गृहीतराजशरीरः॥ ५४॥

हितार्थमित्यस्य तद्रक्षार्थमिति तत्त्वम्। शेषः महासत्त्वपराक्रमः महान्तौ सत्त्वपराक्रमौ यस्य सः॥ ५५॥

जगन्मात्रेत्यं जगत्कारणत्वपालकत्वाभ्याम्॥ ५६॥

सुराध्यक्ष इति च्छेदः तमोगुणप्रधानत्वाद्विरोधेप्सुः॥ ५७॥

एतदर्थं त्वद्विरोधेन त्वत्तो मृत्युलाभार्थम्॥ ५८॥

इमां कथां यः शृणुयात्पठेद्वा
संश्रावयेद्वा श्रवणार्थिनां सदा।
आयुष्यमारोग्यमनन्तसौख्यं
प्राप्नोति लाभं धनमक्षयं च ॥ ६० ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे
तृतीयः सर्गः।

त्यजात्मेति त्वत्कर्तृकात्मत्यागेच्छयेत्यर्थः ॥ ५८ । ६० ॥
इति श्रीमत्सकलराजविपद्धरचरणसमर्थेत्यादिवि० श्रीरामवर्मणः
कृतौ श्रीमदध्यात्मरामायणटीकायां उत्तरकाण्डे
तृतीयः सर्गः।

---

चतुर्थः सर्गः।

एकदा ब्रह्मणो लोकादायान्तं नारदं मुनिम्।
पर्यटन् रावणो लोकान् दृष्ट्वा नत्वाऽब्रवीद्वचः॥ १॥
भगवन्! ब्रूहि मे योद्धुं कुत्र सन्ति महाबलाः।
योद्धुमिच्छामि बलिभिस्त्वं ज्ञातासि जगत्त्रयम्॥ २॥
मुनिर्ध्यात्वाह सुचिरं श्वेतद्वीपनिवासिनः।
महाबला महाकायास्तत्र याहि महामते!॥ ३॥
विष्णुपूजारता ये वै विष्णुना निहताश्च ये।
त एव तत्र सञ्जाता अजेयाश्च सुरासुरैः॥ ४॥
श्रुत्वा तद्रावणो वेगान्मन्त्रिभिः पुष्पकेण तान्
योद्धुकामः समागत्य श्वेतद्वीपसमीपतः॥ ५॥
तत्प्रभाहततेजस्कं पुष्पकं नाचलत्ततः।
त्यक्त्वा विमानं प्रययौ मन्त्रिणश्च दशाननः॥ ६॥
प्रविशन्नेव तद्द्वीपं धृतो हस्तेन योषिता।
पृष्टश्च त्वं कुतः कोऽसि प्रेषितः केन वा वद॥ ७॥
इत्युक्तो लीलया स्त्रीभिर्हसन्तीभिः पुनःपुनः।

नारदोऽपि सर्वतो बलवन्तं त्वां त्वत्समीपं मत्प्राणेव माद्दे त्वाह्न ब्रूहीति ॥ १ ॥

ज्ञातासीति त्वम् ॥ २—४ ॥

मन्त्रिभिः सह पुष्पकेण श्वेतद्वीपसमीपतः समागत्य स्थितः ॥ ५ ॥

तद्द्वीपप्रभया हततेजस्कं प्रतिहतगतिकम् मन्त्रिणश्च प्रययुः पद्भ्यामिति शेषः ॥ ६ ॥

योषिता दासीरूपया कयाचित् ॥ ७ । ८ ॥

कृच्छ्राद्वस्त्रादिनिर्मुक्तस्तासां श्रीणां दशाननः ॥८॥
आश्चर्यमतुलं लब्ध्वा चिन्तयामास दुर्मतिः ।
विष्णुना निहतो यामि वैकुण्ठमिति निश्चितः ॥९॥
मयि विष्णुर्यथा कुप्येत्तथा कार्यं करोम्यहम् ।
इति निश्चित्य वैदेहीं जहार विपिनेऽसुरः ॥१०॥
आनयेव पराभानं स जहारावनीसुताम् ।
मातृवत्पालयामास त्वत्तः काङ्क्षन्वधं स्वकम् ॥११॥
रामस्त्वं परमेश्वरोऽसि सकलं जानासि विज्ञानदृक्
भूतं भव्यमिदं त्रिकालकलनासाक्षी विकल्पोज्झितः ।
भक्तानामनुवर्त्तनाय सकलां कुर्वन् क्रियासंहतिं
त्वाम्हत्त्वमनुजाकृतिर्मुनिवचो भासीश लोकार्चितः ॥१२॥
स्तुत्वैवं राघवं तेन पूजितः कुम्भसम्भवः ।
स्वाश्रमं मुनिभिः सार्धं प्रययौ हृष्टमानसः ॥१३॥

विष्णुना हतः सर्वथा वैकुण्ठं यामि यास्यामीति निश्चितः निश्चयवान् सन् ॥ ९ । १० ॥

स्वकवधं स्वीयं वधमित्यर्थः ॥ ११ ॥

एवं कथाछला स्वाश्रमं जिगमिषू रामं भगवन्तं स्तौति रामेति त्वकमानवत्वे हेतुः विज्ञानदृक् विज्ञानं स्वस्वरूपमेव दृक् ज्ञानकारणं यस्य यावे इतरकारणानपेक्ष इति यावत् अतएव भूतं अतीतं भव्यं भावि इदं वर्त्तमानं एवं त्रिषु कालेषु या कलना तत्तत्कालवैचित्र्यं तस्य साक्षात् द्रष्टा विकल्पोज्झितः भक्तानामनुवर्त्तनाय स्वचरितकीर्त्तनादिना तेषां पापक्षयाय सकलक्रियासंहतिं कुर्वन् मनुजाकृतिः न तु वस्तुतो मनुष्य इत्यर्थः देवलोकैरिन्द्रादिभिरर्चितस्त्वं मुनीनामस्माकं वच आदृत्यन् भासि शोभसे ॥ १२ ॥

तेनैव पूजितो अगस्त्य एवं राघवं स्तुत्वा स्वाश्रमं ययौ ॥१३॥

रामस्तु सीतया सार्द्धं भ्रातृभिः सह मन्त्रिभिः।
संसारीव रमानाथो रममाणोऽवसद्गृहे ॥ १४ ॥
अनासक्तोऽपि विषयान् बुभुजे प्रियया सह।
हनूमत्प्रमुखैः सद्भिर्वानरैः परिवेष्टितः ॥ १५ ॥
पुष्पकं चागमद्राममेकदा पूर्ववत्प्रभुम्।
प्राह देव! कुवेरेण प्रेषितं त्वामहं ततः ॥ १६ ॥
जितं त्वं रावणेनादौ पश्चाद्रामेण निर्जितम्।
अतस्त्वं राघवं नित्यं वह यावद्वसेद्भुवि ॥ १७ ॥
यदा गच्छेद्रघुश्रेष्ठो वैकुण्ठं याहि मां तदा।
तच्छ्रुत्वा राघवः प्राह पुष्पकं सूर्यसन्निभम् ॥ १८ ॥
यदा स्मरामि भद्रं ते तदागच्छ ममान्तिकम्।
तिष्ठान्तर्धाय सर्वत्र गच्छेदानीं ममाज्ञया ॥ १९ ॥
इत्युक्त्वा रामचन्द्रोऽपि पौरकार्याणि सर्वशः।
भ्रातृभिर्मन्त्रिभिः सार्द्धं यथान्यायं चकार सः ॥ २० ॥
राघवे शासति भुवं लोकनाथे रमापतौ।
वसुधा शस्यसम्पन्ना फलवन्तश्च भूरुहाः ॥ २१ ॥

संसारीव न तु वस्तुतस्तथा ॥ १४ ॥

अनासक्तोऽप्यासक्तवद्विषयान् बुभुजे सद्भिः साधुभिः ॥ १५ ॥

ततो भवदाज्ञया कुवेरसमीपगमनानन्तरं कुवेरेण त्वां प्रति प्रेषितमिति प्राह ॥ १६ ॥

अथ कुवेरवच आह जितमिति ॥ १७ ॥

यावद्गच्छेदिति पाठेऽपि यदा गच्छेदित्येवार्थः मां याहि मां प्रत्यागच्छेत्यर्थः ॥ १८ ॥

तदा आगच्छेति छेदः आगमनोत्तरमाज्ञानमन्तर्धाय तिष्ठ यथा सर्वलोको मां देवत्वेन न जानीयादित्यर्थमेवमुक्तिः ॥ १९ । २० ॥

जना धर्मपराः सर्वे पतिभक्तिपराः स्त्रियः ।
नापश्यत्पुत्रमरणं कश्चिद्राजनि राघवे ॥ २२ ॥
समारुह्य विमानाग्र्यं राघवः सीतया सह ।
वानरैर्भ्रातृभिः सार्द्धं सञ्चचारावनिं प्रभुः ॥ २३ ॥
अमानुषाणि कार्य्याणि चकार बहुशो भुवि ।
ब्राह्मणस्य सुतं दृष्ट्वा बालं मृतमकालतः ॥ २४ ॥
शोचन्तं ब्राह्मणं चापि ज्ञात्वा रामो महामतिः ।
तपस्यन्तं वने शूद्रं हत्वा ब्राह्मणबालकम् ॥ २५ ॥
जीवयामास शूद्रस्य ददौ स्वर्गमनुत्तमम् ।
लोकानामुपदेशार्थं परमात्मा रघूत्तमः ॥ २६ ॥
कोटिशः स्थापयामास शिवलिङ्गानि सर्वशः ।
सीतां च रमयामास सर्वभोगैरमानुषैः ॥ २७ ॥
शशास रामो धर्मेण राज्यं परमधर्मवित् ।
कथां संस्थापयामास सर्वलोकमलापहाम् ॥ २८ ॥
दशवर्षसहस्राणि मायामानुषविग्रहः ।
चकार राज्यं विधिवल्लोकवन्द्यपदाम्बुजः ॥ २९ ॥

शास्ति शिक्षयति सति पालयतीति यावत् ॥ २१ । २२ ॥

ततः कदाचित्पृथिव्यां सम्यक्पालनं वर्त्तते नवेति द्रष्टुं पुष्पकं गत्वा तत्रारुह्य पृथिव्यां सञ्चारं कुर्वन्ननेकान्यमानुषाणि कार्याणि चकारेत्याह समारुह्येति ॥ २३ ॥

तेषां मध्ये कियत्कमाह ब्राह्मणस्येति अकालतः अकाले सार्व-विभक्तिकस्तसिः ॥ २४ । २५ ॥

लोकानामुपदेशार्थं 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन' इति न्यायेन ॥ २६ । २७ ॥

एकपत्नीव्रतो रामो राजर्षिः सर्वदा शुचिः ।
गृहमेधीयमखिलमाचरन् शिक्षयन् जनान् ॥२०॥
सीता प्रेम्णाऽनुवृत्त्या च प्रश्रयेण दमेन च ।
भर्तुर्मनोहरा साध्वी भावज्ञा सा ह्रिया भिया ॥२१॥
एकदाक्रीडविपिने सर्वभोगसमन्विते ।
एकान्ते दिव्यभवने सुखासीनं रघूत्तमम् ॥२२॥
नीलमाणिक्यसङ्काशं दिव्याभरणभूषितम् ।
प्रसन्नवदनं शान्तं विद्युत्पुञ्जनिभाम्बरम् ॥ २३ ॥
सीता कमलपत्राक्षी सर्वाभरणभूषिता ।
राममाह कराभ्यां सा लालयन्ती पदाम्बुजे ॥२४॥
देवदेव ! जगन्नाथ ! परमात्मन् ! सनातन ! ।
चिदानन्दादिमध्यान्तरहिताशेषकारण !॥ २५ ॥
देव ! देवाः समासाद्य मामेकान्ते ऽब्रुवन्वचः ।
बहुशोऽर्थयमानास्ते वैकुण्ठगमनं प्रति ॥ २६ ॥

कथां सचरित्रविषयाम् ॥ २८ । २९ ॥

शिक्षयन् जनानिति भगवतो धर्माचरणं लोकशिक्षार्थमेवेति भावः ॥ २० ॥

प्रेमप्ररूढावस्था प्रीतिः अनुवृत्तिरानुकूल्यम् प्रश्रयस्तन्मतानुष्ठानं दम इन्द्रियनिग्रहः भावज्ञा अभिप्रायज्ञा मनोहरा आसीदिति शेषः ॥ २१ ॥

आक्रीडविपिनं पुष्पवाटिका ॥ २२ २३ ॥

रामस्य पदाम्बुजे कराभ्यां लालयन्ती राममाह ॥ २४ ॥

चिदानन्द ज्ञानसुखरूप आदिमध्यान्तहीन आद्यन्तयोरभावादेव मध्यस्याप्यभावः अशेषस्य जगतः कारणम् ॥ २५ ॥

हे देव देवा इन्द्राद्याः ते तव वैकुण्ठगमनं प्रति बहुशो मां प्रार्थयमाना वचोऽब्रुवन् ॥ २६ ॥

त्वया समेतश्चिच्छक्त्या रामस्तिष्ठति भूतले।
विसृज्यास्मान् स्वकं धाम वैकुण्ठं च सनातनम् ॥३७॥
आस्ते त्वया जगद्धात्रि! रामः कमललोचनः।
अग्रतो याहि वैकुण्ठं त्वं तथा चेद्रघूत्तमः ॥३८॥
आगमिष्यति वैकुण्ठं सनाथान्नः करिष्यति।
इति विज्ञापिताहन्तैर्मया विज्ञापितो भवान् ॥३९॥
यद्युक्तं तत् कुरुष्वाद्य नाहमाज्ञापये प्रभो!।
सीतायास्तद्वचः श्रुत्वा रामो ध्यात्वाऽब्रवीत् क्षणम् ॥४०॥
देवि! जानामि सकलं तत्रोपायं वदामि ते।
कल्पयित्वा मिषं देवि! लोकवादं त्वदाश्रयम् ॥४१॥
त्यजामि त्वां वने लोकवादाद्भीत इवापरः।
भविष्यतः कुमारौ द्वौ वाल्मीकेराश्रमान्तिके ॥४२॥
इदानीं दृश्यते गर्भः पुनरागत्य मेऽन्तिकम्।
लोकानां प्रत्ययार्थं त्वं कृत्वा शपथमादरात् ॥४३॥
भूमेर्विवरमाविश्य वैकुण्ठं यास्यसि द्रुतम्।
पश्चादहं गमिष्यामि एष एव सुनिश्चयः ॥४४॥

निर्विषयचित्तःसविषयत्वसम्पादकत्वेन चिच्छक्तिरूपया मायया विसृज्य त्यक्त्वा स्वकं सनातनं धाम वैकुण्ठं च हित्वा ॥ ३७ ॥

अतः प्रथमं त्वमागच्छ ततः स आगमिष्यत्येव यतस्त्वया विना शक्तिमतः स्थातुमशक्यत्वात् ॥ ३८—४० ॥

लोकवादरूपं मिषं कल्पयित्वा ततो भीतः अपर इव पृथग्जन इव त्वां त्यजामि सर्वस्यापि स्वकल्पनारूपत्वादि ममापि जनमनसि कल्पयिष्यामीत्याशयः ॥ ४१ । ४२ ॥

प्रत्ययार्थं सीता नेदृशीति विश्वासार्थम् ॥ ४३ । ४४ ॥

इत्युक्त्वा तां विसृज्याथ रामो भ्रातृसलक्ष्मणः।
मन्त्रिभिर्मन्त्रतत्त्वज्ञैर्बलमुख्यैश्च संवृतः ॥ ४५ ॥
तत्रोपविष्टं श्रीरामं सुहृदः पर्युपासत।
हास्यप्रौढ़कथासक्ता(१) हासयन्तः स्थिता हरिम्॥४६॥
कथाप्रसङ्गात्पप्रच्छ रामो विजयनामकम्।
पौरा जानपदा मे किं वदन्तीह शुभाशुभम्?॥ ४७॥
सीतां वा मातरं वा मे भ्रातृन्वा कैकयीमथ।
न भेतव्यं त्वया ब्रूहि शापितोऽसि ममोपरि ॥ ४८ ॥
इत्युक्तः प्राह विजयो देव! सर्वे वदन्ति ते।
कृतं सुदुष्करं सर्वं रामेण विदितात्मना ॥ ४९ ॥
किन्तु हत्वा दशग्रीवं सीतामाहृत्य राघवः।
अमर्षं दूरतः कृत्वा स्ववेश्म प्रत्यपादयत् ॥ ५० ॥
कीदृशं हृदये तस्य सीता सम्भोगजं सुखम्।
या हृता विजनेऽरण्ये रावणेन दुरात्मना ॥ ५१ ॥
अस्माकमपि दुष्कर्म योषितां मर्षणं भवेत्।
यादृक् भवति वै राजा तादृश्यो नियतं प्रजाः ॥ ५२ ॥

हास्यविषये प्रौढाश्च ते कथासु सक्ताः ॥ ४५ । ४६ ॥

इह एतज्जन्मविषये ॥ ४७ ॥

सीतामित्यादेः प्रतीति शेषः तत्तद्विषयं किं शुभाशुभं वदन्तीत्यर्थः शापितोऽसि स्वशपथपूर्वं पृच्छामीत्यर्थः ॥ ४८ । ४९ ॥

वेश्म प्रत्यपादयत् गृहं प्रवेशितवान् ॥ ५० ॥

या दुष्टेन रावणेन हृता सैवासीता सापि गृहं प्रवेशितेति शेषः ॥ ५१ ॥

किं चैवं सति अस्मदादीनामपि योषितां दुष्कर्ममर्षणं तद्योग्य

(१) हास्यप्रौढिकथाभिज्ञाः इति पाठान्तरम्।

श्रुत्वा तद्वचनं रामः स्वजनान् पर्यपृच्छत ।
तेऽपि नत्वाब्रुवन् राममेवमेतन्न संशयः ॥ ५३ ॥
ततो विसृज्य सचिवान् विजयं सुहृदस्तथा ।
आहूय लक्ष्मणं रामो वचनं चेदमब्रवीत् ॥ ५४ ॥
लोकापवादस्तु महान् सीतामाश्रित्य मेऽभवत् ।
सीतां प्रातः समानीय वाल्मीकेराश्रमान्तिके ॥ ५५ ॥
त्यक्त्वा शीघ्रं रथेन त्वं पुनरायाहि लक्ष्मण ! ।
वक्ष्यसे यदि वा किञ्चित्तदा मां हतवानसि ॥ ५६ ॥
इत्युक्तो लक्ष्मणो भीत्या प्रातरुत्थाप्य जानकीम् ।
सुमन्त्रस्य रथे कृत्वा जगाम सहसा वनम् ॥ ५७ ॥
वाल्मीकेराश्रमस्यान्ते त्यक्त्वा सीतामुवाच सः ।
लोकापवादभीत्या त्वां त्यक्तवान् राघवो वने ॥ ५८ ॥
दोषो न कश्चिन्मे मातर्गच्छाश्रमपदं मुनेः ।
इत्युक्त्वा लक्ष्मणः शीघ्रं गतवान् रामसन्निधिम् ॥ ५९ ॥
सीतापि दुःखसन्तप्ता विललापातिमुग्धवत् ।
शिष्यैः श्रुत्वा च वाल्मीकिः सीतां ज्ञात्वा स दिव्यदृक् ॥ ६०

सहनयोग्यं भवेत् भविष्यतीत्यर्थः तदेव स्पष्टयति यादृगिति नियतं विक्रमेण प्रजास्तादृश्यो भवन्ति राजव्यवहारानुरूपव्यवहारा भवन्तीत्यर्थः ॥ ५२–५४ ॥

लोकापवादः कलङ्कः समानीय अन्तःपुरान्निष्काश्य ॥ ५५ ॥

रथेन पुनरायाहि इत्युक्त्या सीताया अपि रथेन नयनं सूचितं न तु साक्षात्तथोक्तम् तस्यां क्रोधातिशयं द्योतयितुमेव मां हतवानसि अत्रार्थे विपरीतोक्तौ महद्वधप्रयुक्तप्रायश्चित्तमित्यर्थः ॥ ५६—६० ॥

अतिमुग्धवत् अल्पज्ञवत् शिष्यैः शिष्यसङ्घैः ॥ ६१ ॥

अर्घ्यादिभिः पूजयित्वा समाश्वास्य च जानकीम् ।
ज्ञात्वा भविष्यं सकलमार्पयन्मुनियोषिताम् ॥ ६१ ॥
तास्ताः सम्पूजयन्ति स्म सीतां भक्त्या दिने दिने ।
ज्ञात्वा परात्मनो लक्ष्मीं मुनिवाक्येन योषितः ।
सेवां चक्रुः सदा तस्या विनयादिभिरादरात् ॥ ६२ ॥

रामोऽपि सीतारहितः परात्मा
विज्ञानदृक्केवल आदिदेवः ।
सन्त्यज्य भोगानखिलान् विरक्तो
मुनिव्रतोऽभून्मुनिसेविताङ्घ्रिः ॥ ६३ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे
चतुर्थः सर्गः ।

मुनियोषितामार्पयत् एषा सर्वथा रक्षणीयेति तासां हस्ते दत्तवान् ॥ ६२ ॥

परात्मनो विष्णोः ॥ ६३ ॥

मुनिसेविताङ्घ्रिः मुनिभिः सेवितावङ्घ्री यस्य मुनीनां सेवितावङ्घ्री येनेति वा ॥ ६४ ॥

इति श्रीमद्व्रजराजविपदुद्धरणसमर्थत्यादिवि० श्रीरामवर्मणः
कृतावध्यात्मरामायणे सेतौ उत्तरकाण्डे
चतुर्थः सर्गः ।

---

पञ्चमः सर्गः ।

# रामगीता ।

श्रीमहादेव उवाच ।

ततो जगन्मङ्गलमङ्गलात्मना
विधाय रामायणकीर्त्तिमुत्तमाम् ।
चचार पूर्वाचरितं रघूत्तमो
राजर्षिवर्य्यैरभिसेवितं यथा ॥ १ ॥
सौमित्रिणा पृष्ट उदारबुद्धिना
रामः कथाः प्राह पुरातनीः शुभाः ।
राज्ञः प्रमत्तस्य नृगस्य शापतो
द्विजस्य तिर्य्यक्त्वमथाह राघवः ॥ २ ॥

अथ भगवान् शिवो रामलक्ष्मणसंवादव्याजेन परतत्त्वमुपदेष्टुमाह तत इति जगतां यानि मङ्गलानि आनन्दास्तेषामुपजीव्यभूतं मङ्गलं ब्रह्मानन्दः स एवात्मा स्वरूपं तेन 'तस्यैवानन्दस्यान्यानि मात्रामुपजीवन्ति' इति श्रुतेः 'मङ्गलानां च मङ्गलं' इति स्मृतेश्च किञ्च जगतां मङ्गलं कल्याणं यस्मात्तादृशः कल्याणरूप आत्मा मूर्तिस्तया उत्तमां श्रोत्रादीनां मोक्षदत्वेनात्युत्तमां रामायणकीर्त्तिं वाल्मीक्यादिकृतनानाविधरामायणप्रवर्त्तिकां रावणवधादिजां कीर्त्तिं विधाय स्थितो रघूत्तमः ततः सीतापरित्यागानन्तरं पूर्वैः स्ववंशजैराचरितं प्रजापालनसत्कथाश्रवणादिकं केवलं तत्पूर्वजैरेवाचरितमिति न किन्त्वन्यैरपि राजर्षिश्रेष्ठैर्यथाभिसेवितं तथा चचार कृतवान् ॥ १ ॥

उदारा गुरुदेवविश्वासलक्षणमहागुणवती यद्वा उदारा रामगीता बुद्धिर्यस्य तेन पुरातनीः प्राचीनराजसम्बन्धिनीः शुभाः धर्माधर्मनिर्णेत्र्यः प्रमत्तस्य स्वगोमध्यप्रविष्टमिश्रितब्राह्मणगोदानात्प्रमत्तस्य नृगस्य राज्ञो द्विजस्य शापात्तिर्य्यक्त्वमाह तेनाज्ञानकृतब्रह्मस्वापहारेण परमधार्मिकस्यापीदृक्त्वमवस्थेति सर्वथा ब्रह्मस्वविमुखता धर्म इति सूचितम् ॥ २ ॥

कदाचिदेकान्त उपस्थितं प्रभुं
रामं रमालालितपादपङ्कजम्।
सौमित्रिरासादितशुद्धभावनः
प्रणम्य भक्त्या विनयान्वितोऽब्रवीत्॥ ३॥
त्वं शुद्धबोधोऽसि हि सर्वदेहिना-
मात्माऽस्यधीशोऽसि निराकृतिः स्वयम्।
प्रतीयसे ज्ञानदृशां महामते! (१)
पादाब्जभृङ्गाहितसङ्गसङ्गिनाम्॥ ४॥
अहं प्रपन्नोऽस्मि पदाम्बुजं प्रभो!
भवापवर्गं तव योगिभावितम्।

एकान्ते विजने उपस्थितं प्राप्तम् विनयान्वितः सन् भक्त्या गुरुरय-मिति बुद्ध्या प्रणम्य अनेन गुरूपसदनप्रकार उक्तः आसादितं शुद्धं भावनं भावनान्तःकरणं येन सः शुद्धान्तःकरण इति यावत् भगवदुक्तसत्कथाश्र-वणेन शुद्धान्तःकरण इत्यर्थः॥ ३॥

हे महामते! महती सर्वविषया मतिर्यस्य तस्य सम्बोधनं त्वं शुद्धबोधोऽसि अनवच्छिन्नचैतन्यरूपोऽसि सर्वदेहिनामात्मासि जीवानां तत्प्रतिबि-म्बत्वात् अधीशोऽसि अन्तर्यामित्वान्नियन्तासि वास्तवभेदाभावाच्च सर्वा-त्मत्वम् औपाधिकभेदाच्च नियन्तृनियम्यभावो बोध्यः निराकृतिः अस्म-दादिवत्स्वार्जितकर्माधीनशरीराकृतिरहितः नन्वेवं सर्वैः कथमेवं न ज्ञायते अत आह ज्ञानदृशां स्वयमेवं प्रतीयसे ज्ञायते अनेनेति ज्ञानं वेदान्तवा-क्यजातं तदेव दृक् दर्शनसाधनं येषां तेषामिति सम्बन्धसामान्ये षष्ठी तैरित्यर्थः तादृशदृक्लाभश्च त्वद्भक्त्यधीन इत्याह पादेति त्वच्चरणकमल-योर्भृङ्गवदाहितः कृतः सङ्गो येन तादृशान्तःकरणसङ्गवतां त्वच्चरणकम-लसंलग्नान्तःकरणवतामित्यर्थः॥ ४॥

अथ प्रार्थयते अहमिति भवस्य संसारस्यापवर्गो निवृत्तिर्येनास्तादृशं

(१) ज्ञानदृशामथापि ते इति विभिन्नः पाठः।

यथाञ्जसाज्ञानमपारवारिधिं
सुखं तरिष्यामि तथानुशाधि माम् ॥ ५ ॥
श्रुत्वाथ सौमित्रिवचोऽखिलं तदा
प्राह प्रपन्नार्तिहरः प्रसन्नधीः ।
विज्ञानमज्ञानतमोपशान्तये
श्रुतिप्रपन्नं क्षितिपालभूषणः ॥ ६ ॥
आदौ स्ववर्णाश्रमवर्णिताः क्रियाः
कृत्वा समासादितशुद्धमानसः ।
समाप्य तत्पूर्वमुपात्तसाधनः
समाश्रयेत्सद्गुरुमात्मलब्धये ॥ ७ ॥

तव पदाम्बुजं प्रपन्नोऽस्मि शरणं प्राप्तोऽस्मि योगिभावितं योगिभिः संसारमुक्तये भावितम् अनेन तस्य भवापवर्गत्वे सदाचारप्रमाणमुक्तम् प्रार्थनीयमाह अपारवारिधिरूपं यदज्ञानं संसारमूलकारणं यथाञ्जसमक्लेशेन तरिष्यामि तथा मामनुशाधि शिक्षय अपारवारिधिमित्यनेन अपारप्रसिद्धसमुद्राव्यतिरेक उक्तः अशक्यतरणता अनेन ध्वनिता ॥ ५ ॥

अथोत्तरमवतारयति श्रुत्वेति रामः सौमित्रिवचः श्रुत्वा अथ शब्दो वाक्यालङ्कारे तदा श्रवणाव्यवहितकाले एव प्रपन्नानां भक्तानामार्तिं संसारदुःखं हरति तादृशः प्रसन्ना भ्रमादिहीना भक्तानुग्रहपरा च धीर्यस्य स क्षितिपालानां राज्ञां भूषणभूतो अज्ञानरूपतमस उपशान्तये तदर्थं सच्छिरार्थैः श्रुतिभिः ‘तमेव विदित्वातिमृत्युमेति’ इत्यादिश्रुतिभिः प्रपन्नं तत्फलकत्वेन बोधितं विज्ञानमात्मतत्त्वज्ञानमिति सामान्यतः प्रपन्नं प्राह ॥ ६ ॥

अथ तादृशज्ञानप्राप्तये क्रमेण बहिरङ्गान्तरङ्गसाधनान्याह आदाविति स्ववर्णाश्रमेषु शास्त्रेण वर्णिता याः क्रिया नित्यनैमित्तिकयज्ञदानादिरूपास्ताः कृत्वा समासादित शुद्धमानसः प्राप्तान्तःकरणशुद्धिः तत्पूर्वमुपात्तसाधनः तदनुष्ठानपूर्वकमेव उपात्तानि साधनानि शमदमादीनि

क्रिया शरीरोद्भवहेतुराहृता
प्रियाप्रियौ तौ भवतः सुरागिणः ।
धर्मेतरौ तत्र पुनः शरीरकं
पुनः क्रियाचक्रवदीर्यते भवः ॥ ८ ॥
अज्ञानमेवास्य हि मूलकारणं
तद्धानमेवात्र विधौ विधीयते ।

येन तादृशः अनेन कर्मणां बहिरङ्गत्वं शमादीनामन्तरङ्गत्वं स्फुटमेवोक्तम् किन्तु शमदमवैराग्यदार्ढ्यपर्यन्तं कर्मानुष्ठानमेवेति सूचितं ततस्तत्कर्मानुष्ठानं समाप्य त्यक्त्वा सन्न्यस्येति यावत् आत्मतत्त्वे अवधानाय तत् फलकाय तत्त्वमस्यादिवाक्यार्थविचाराय सद्गुरुं श्रोत्रियं ब्रह्मनिष्ठमित्यादिलक्षणलक्षितं समाश्रयेत् सेवेत अनेन व्युत्पत्तिबलेन स्वयमेव वाक्यार्थविचारः क्रियमाणो न फलायेति सूचितम् ॥ ७ ॥

संसारस्य भ्रमितचक्ररूपत्वात्तन्निवृत्तेश्च तत्कारणाज्ञाननिवृत्तिमूलकत्वादज्ञाननिवृत्तेश्च तत्त्वज्ञानैकसाध्यत्वात्तत्त्वज्ञानस्य च वेदान्तविचारसाध्यत्वात्तदर्थं गुरुसमाश्रयणमित्याह क्रियेति भवः संसारश्चक्रवद्विपरिवर्त्तमान ईर्यते कथ्यते तमेवोपपादयति आहृता आदरपूर्वं पूर्वजन्मार्जिता क्रिया एतस्य शरीरोद्भवस्य जन्मनो हेतुः तत्र जन्मनि सुरागिणो विषयाभिलाषवतः तौ शास्त्रप्रसिद्धौ धर्मेतरौ धर्माधर्मौ प्रियाप्रियौ सुखदुःखजनकौ भवतः कस्यचिद्धर्म एव सुखत्वगुणा प्रवृत्तिः; कस्यचिदधर्म एवं कदाचिदिद्यमूलम् एवं तत्रोत्पादितकर्मणा पुनः शरीरं पुनः क्रिया इत्येवं चक्रवद्विपरिवृत्तिः यथा चक्रे भ्राम्यमाणे अधोभागः कदाचिदुपरि उपरितनश्चाधः पुनरुपरि पुनरधः एवं जन्मक्रिययोर्जन्यजनकभावेन परिवृत्तिरिति बोध्यम् ॥ ८ ॥

तस्य चाज्ञानमेव मूलमित्याह अज्ञानमेवेति अत्र विधौ संसारनिवृत्तिलक्षणे कर्त्तव्ये अर्थे तद्धानमेव मूलकारणत्वादज्ञानहानमेव विधीयते साधनत्वेनेति शेषः ननु कर्मैव तन्नाशकमस्तु किं ज्ञानेनेत्याशङ्क्याह विद्यैव ज्ञानमेव तन्नाशविधौ मूलाज्ञाननाशने पटीयसी समर्था न

विद्यैव तन्नाशविधौ पटीयसी
न कर्म तज्जं सविरोधमीरितम् ॥ ९ ॥
नाज्ञानहानिर्न च रागसङ्क्षयो
भवेत्ततः कर्म सदोषमुद्भवेत् ।
ततः पुनः संसृतिरप्यवारिता
तस्माद्बुधो ज्ञानविचारवान् भवेत् ॥ १० ॥
ननु क्रियावेदमुखेन चोदिता
यथैव विद्यापुरुषार्थसाधनम् ।
कर्त्तव्यता प्राणभृतः प्रचोदिता
विद्या सहायत्वमुपैति सा पुनः ॥ ११ ॥

कर्म समर्थमिति शेषः यतस्तत् तज्जं अज्ञानजं आत्मस्वरूपाज्ञानजन्य-देहाद्यभिमानजन्यत्वात्कर्मणोऽज्ञानजन्यत्वम्बोध्यम् ननु तज्जन्यस्यापि तन्नाशकत्वं हस्तिकर्कण्वादौ दृष्टमित्याशङ्क्य तज्जन्यत्वं वा न नाशकत्वे प्रयोजकं किन्तु सविरोधत्वमेवेत्याह यत् सविरोधं तदीरितं नाशक-मुक्तमित्यर्थः ॥ ९ ॥

अतएव कर्मणा नाज्ञानहानिरित्याह नाज्ञानेत्यादि यतः कर्मणा विरोधाभावान्नाज्ञाननाशो नापि रागनाशो वस्तुतः कर्मानुष्ठानात् पुनः सदोषं क्षयिफलत्वादिदोषविशिष्टं कर्मैवोद्भवेत् कर्मणश्च पुनः संसार एवेति न मुक्तिं प्रत्याशा ततस्तस्माद्बुधो विवेकी ज्ञानविचारवान् ज्ञाय-तेऽनेनेति ज्ञानं वेदान्तवाक्यं तद्विचारवान् भवेत् ॥ १० ॥

इदानीं ज्ञानस्यैव मोक्षहेतुत्वं वक्तुं ज्ञानकर्मसमुच्चयवादं दूषणा-यानुवदति सार्धेन नन्वित नन्विति शङ्कायां यथा, विद्या वेदमुखेन श्रुति-पुराणलक्षणेन ब्रह्मविदाप्नोति परमित्यादिना पुरुषार्थसाधनमुक्ता तथा 'उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः । तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्' इत्यादिना क्रियापि तत्साधनत्वेनोक्ता किञ्च क्रिया कर्त्तव्यता तृतीयार्थे प्रथमा कर्त्तव्यतया आवश्यके कृत्ये अवश्यकर्त्तव्य-

कर्माकृतौ दोषमपि श्रुतिर्जगौ
तस्मात्सदा कार्यमिदं मुमुक्षुणा।
ननु स्वतन्त्रा ध्रुवकार्य्यकारिणी
विद्या न किञ्चिन्मनसाप्यपेक्षते॥ १२॥
न सत्यकार्योऽपि हि यद्वदध्वरः
प्रकाङ्क्षतेऽन्यानपि कारकादिकान्।
तथैव विद्या विधितः प्रकाशितै-
र्विशिष्यते कर्मभिरेव मुक्तये॥ १३॥

तथा प्रचोदिता नित्यनैमित्तिकरूपा एवं च तदकरणे प्रत्यवायोत्पत्त्या ज्ञानोत्पत्तिरेव न स्यात् तस्मात्सा पुनर्विद्यायाः सहायत्वं प्राप्नोति घटे जननीये यथा दण्डचक्रादीनां परस्परसहायता॥ ११॥

कर्त्तव्यतेति श्लोकमेव विवृणोति कर्मेति 'वीरहा वा एष देवानां योऽग्निमुद्वासयते यावज्जीवमग्निहोत्रं जुहोति' इति श्रुतिः तत्र सिद्धान्ती शङ्कते नन्विति ध्रुवं स्थिरं कार्य्यमिदं पुरुषार्थमोक्षजनिका विद्या यतः स्वतन्त्रा विनापि सहायेन स्वकार्यसम्पादने समर्था यथा तेजस्तिमिरनिवर्त्तनसमर्थं मनसापि किञ्चित्सहायभूतं वस्तु नापेक्षते तथा फले जननीये सहायान्तरसम्भावनापि नेति भावः अनेन विद्या फलजनने निरपेक्षा स्वतन्त्रत्वात्तेजोवदित्यनुमानं सूचितम्॥ १२॥

समुच्चयवादी परिहरति नेति त्वदुक्तं नेत्यर्थः सत्यकार्यः 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यादि वेदेन बोधितः स्थिर-कार्योऽप्यध्वरः यथान्यानपि कारकादिकान् आरादुपकारकप्रयाजा-द्यङ्गानि देशकालादीनि च प्रकाङ्क्षते तथा विद्यापि 'अग्निहोत्रं जुहोति' इत्यादिविधिवाक्यतः तन्मुखेन प्रकाशितैः कर्मभिः सहितैव मुक्तये विशिष्यत इत्यर्थः विद्या फलदाने कर्मापेक्षा अङ्गित्वात् प्रया-जाद्यङ्गापेक्षदर्शादिवदिति सत्प्रतिपक्षानुमानमनेन सूचितम्॥ १२॥

केचिद्वदन्तीति वितर्कवादिन-
स्तदप्यसद्दृष्टविरोधकारणात् ।
देहाभिमानादभिवर्द्धते क्रिया
विद्या गताहङ्कृतितः प्रसिद्ध्यति ॥ १४ ॥
विशुद्धविज्ञानविरोचनाञ्चिता
विद्यात्मवृत्तिश्चरमेति भण्यते ।
उदेति कर्माखिलकारकादिभि-
र्निहन्ति विद्याखिलकारकादिकम् ॥ १५ ॥

तदनूद्य सिद्धान्ती दूषयति केचिदिति यत्केचिद्वितर्कवादिन इति ज्ञानकर्मणी समुच्चित्य मुक्तिसाधनं वदन्ति तदप्यसत् यथा केवलं कर्म मोक्षसाधनमित्यसत्तथा तन्मीलितमित्यप्यसत् तत्र हेतुर्दृष्टविरोधकारणात् दृष्टो यो विरोधः सर्वलोकदृष्टविरोधरूपात्कारणात्तदसदित्यर्थः विरोधमेवाह देहाभिमानात्क्रिया वर्द्धते अनात्मनि देहादावात्मत्वाभिमानात् क्रियावृद्धिः विद्या तु गताहङ्कृतितः गताऽहङ्कृतिर्यस्य तस्य नष्टाहङ्कृतेः प्रसिध्यति सार्वविभक्तिकस्तसिः एवञ्चाहङ्कारसत्तामूलकत्वात् क्रियाविद्ययोः समुच्चयो विरुद्ध इत्यर्थः ॥ १४ ॥

अथ पूर्वपक्ष्युक्तानुमानं दूषयन् विद्यास्वरूपमाह विशुद्धं विज्ञानं येभ्यस्तेषां वेदान्तवाक्यानां यद्विरोचनं रोचनं एतयोरभेदावबोधनं विचारस्तेनाञ्चिता प्रापिता या चरमा आत्मवृत्तिर्ब्रह्माकारान्तःकरणवृत्तिः सा विद्येति भण्यते विद्वद्भिरिति शेषः पुनः समुच्चयवारणाय विद्याकर्मणोर्वैलक्षण्यमाह कर्म यत्नादि अखिलकारकादिभिः कर्त्तव्यकर्मादिभिरङ्गैश्च सहितं सदुदेति फलोन्मुखं भवति विद्या पुनरखिलकारकादि निहन्ति तत्र कर्तृत्वादिबुद्धिं निहन्ति सकलव्यापारपरित्यागेन ब्रह्मणि समाप्तिर्हि विद्या अतः स्वोत्पत्तौ चित्तशुद्धिद्वारा कर्मसापेक्षा स्वफले जनयितव्ये तन्निरपेक्षैवान्यथा विद्यास्वरूपस्यैव भङ्गापत्तेरिति पूर्वपक्ष्युक्तहेतोरसिद्धिरिति भावः ॥ १५ ॥

तस्मात्त्यजेत्कार्यमशेषतः सुधी-
र्विद्याविरोधान्न समुच्चयो भवेत्।
आत्मानुसन्धानपरायणः सदा
निवृत्तसर्वेन्द्रियवृत्तिगोचरः॥ १६॥
यावच्छरीरादिषु माययात्मधी-
स्तावद्विधेयो विधिवादकर्मणाम्।
नेतीतिवाक्यैरखिलं निषिध्य तत्
ज्ञात्वा परात्मानमथ त्यजेत्क्रियाः॥ १७॥
यदा परात्मात्मविभेदभेदकं
विज्ञानमात्मन्यवभाति भास्वरम्।

उपसंहरन् मुमुक्षोर्वृत्तिप्रकारमाह तस्मादिति विद्याविरोधात् विद्यायाः कर्मणा सह विरोधेन समुच्चयो न भवेत् तस्मात् सुधीर्मुमुक्षुरशेषतः कर्म त्यजेत् काम्यन्तु सर्वथा त्याज्यमेव नित्यनैमित्तिकमपि यावच्चित्तशुद्धिकर्त्तव्यमेव ततोऽपि ब्रह्मणि चित्तस्थैर्यपर्य्यन्तं कर्त्तव्यमेव ततस्तदनुसन्धाने प्रतिबन्धकत्वात् प्रयोजनाभावाच्च तदपि त्याज्यमेवेति भावः इदानीं मुमुक्षुकर्त्तव्यमाह निवृत्ताः सर्वेषामिन्द्रियाणां गोचरा विषयाः शब्दादयो यस्मात् तादृशः सन् आत्मनः सच्चिदानन्दस्यानुसन्धानमेव परमयनं प्राप्यं यस्य तथाविधो भवेत् अत्रेन्द्रियप्रत्याहारः कर्त्तव्यत्वेनोक्तस्तेन तत्पूर्वं प्राणायामाद्यपीहाक्षिप्तम्॥ १६॥

रागिविरागिभेदेन कर्मणां कर्त्तव्यतेत्याह यावदिति मायया अविद्यया शरीरादिष्वनात्मसु आत्मधीरहङ्कर्त्तेत्यादिरूपा यावद्वर्त्तते तावद्विधिवादकर्मणां विधिर्यजेतेत्यादिवादः कर्त्तव्यताबोधको येषां कर्मणां विधेयो वरीवर्त्ति तत्कर्मता भवेत् तदपगमे तु तदखिलं जगन्नेतीति वाक्यैः अथात आदेशो नेतिनेतीत्यादिवाक्यैर्निषिध्य मिथ्यात्वेन निर्णीय तद्विलक्षणतया सत्यत्वेन परात्मस्वरूपं ज्ञात्वा क्रियास्त्यजेत् निरूपितमेतत्॥ १७॥

आत्मविज्ञाने सत्यवश्यमविद्या निवर्त्तत इत्याह यदेति आत्मनि

तदैव माया प्रविलीयतेऽञ्जसा
सकारका कारणमात्मसंसृतेः ॥ १८ ॥
श्रुतिप्रमाणाभिविनाशिता च सा
कथं भविष्यत्यपि कार्य्यकारिणी ? ।
विज्ञानमात्रादमलाद्द्वितीयत-
स्तस्मादविद्या न पुनर्भविष्यति ॥ १९ ॥
यदि स्म नष्टा न पुनः प्रसूयते
कर्त्ताहमस्येति मतिः कथं भवेत् ? ।

शुद्धे अन्तःकरणे परमात्मन ईशस्यात्मनो जीवस्य च यो विभेदो मायान्तःकरणरूपोपाधिद्वयकृतो विभेदो भेदस्तस्य भेदकं नाशकं भास्वरं प्रकाशशीलं यद्विज्ञानं इतरवृत्त्युपमर्दनपूर्वकं ब्रह्माकाराखण्डाकारवृत्तिर्यदावभाति अभ्यासवशादितरप्रकारेणोदेति तदैवं सकारका जन्मान्तरप्रापककर्मसहिता माया तस्य जीवोपाधिभूताविद्याख्या झटिति विलीयते नश्यति ननु तन्नाशेऽपि संसारनाशः कथमतो मायाविशेषणं आत्मसंसृतेः कारणं संसारस्योपादानं कारणमेवञ्च तन्नाशे कार्य्यनाशो भवत्येवेति भावः ॥ १८ ॥

उक्तमेवार्थं पुनर्दार्ढ्यायाह श्रुतीति 'तत्त्वमसि' इत्यादिश्रुतिरूपैः प्रमाणैस्तज्जनितज्ञानेन नाशिता सा अविद्या कथमपि कार्यकारिणी भविष्यतीति काकुस्तया सर्वथा नेत्यर्थः कुतः कार्यकारित्वासम्भवादिति भावः पुनश्च तस्या नोद्भव इत्याह विज्ञानमात्रादिति अमलाद्द्वितीयतः शुद्धाद्द्वितीयात्मविषयकविज्ञानमात्रादितरासहकृताद्दिध्यासनपरिपाकजन्यान्नाशितो यदा तस्मात् सा पुनर्न भविष्यति रज्जुज्ञानमूलकस्य सर्पस्य रज्जुज्ञानेन निरस्तस्य यथा न पुनरुत्पत्तिरिति भावः ॥ १९ ॥

विद्याया इतरनिरपेक्षाया एव मोक्षकारणत्वमुक्तम् युक्तिपूर्वकं पुनः कथयति मोक्षदार्ढ्याय यदीति यदि नष्टा तत्त्वज्ञाननाशिता सा च पुनः प्रसूयते नोत्पद्यते तदा कारणाभावादहंमतिः कथं भवेत् कथमपि

तस्मात् स्वतन्त्रा न किमप्यपेक्षते
विद्या विमोक्षाय विभाति केवला ॥ २० ॥
सा तैत्तिरीयश्रुतिराह सादरं
न्यासं प्रशस्ताखिलकर्मणां स्फुटम् ।
एतावदित्याह च वाजिनां श्रुतिः
ज्ञानं विमोक्षाय न कर्म साधनम् ॥ २१ ॥
विद्यासमत्वेन तु दर्शितस्त्वया
क्रतुर्न दृष्टान्त उदाहृतः समः ।
फलैः पृथक्त्वाद्बहुकारकैः क्रतुः
संसाध्यते ज्ञानमतो विपर्ययम् ॥ २२ ॥

न भवेदित्यर्थः तदभावाच्च तत्काले कर्माभाव इति स्वफलजनने सा स्वतन्त्रा इतरनिरपेक्षैव किमप्यपेक्षते द्वितीयस्यासम्भवात् अतः केवला असहायैव विमोक्षाय विभाति तत्फलिका भवतीत्यर्थः ॥ २० ॥

अत्रार्थे श्रुतिरपि प्रमाणमित्याह सेति सा प्रसिद्धा 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इत्यादिका तैत्तिरीयश्रुतिः प्रशस्तानामर्थवादैः प्राशस्त्येन बोधितानामपि कर्मणां न्यासं त्यागं सादरं स्फुटमाह न तु कर्मसमुच्चयमित्यर्थः तथा वाजिनां वाजसनेयिनाम् 'एतावदरे खल्वमृतत्वम्' इत्यादिका ज्ञानं विमोक्षाय साधनं न कर्मेत्येतदाह ॥ २१ ॥

अहङ्कारत्यागरूपकारणवैधर्म्यात् क्रियाज्ञानयोर्वैधर्म्यमुक्त्वा फलप्रयुक्तमपि वैधर्म्यमाह विद्येति हे समुच्चयवादिन् त्वया क्रतुरग्निष्टोमादिर्विद्यासमत्वेन दर्शितः परन्तु समो दृष्टान्तो नोदाहृतः अनेन क्रतुर्विद्यासमः श्रुतिबोधितकर्तव्यताकत्वात् इत्यनुमानं निरस्तं दृष्टान्ताभावात् अन्वय्येवानुमानं न व्यतिरेकीति भावः एतच्चाकरे विस्तरेण प्रपञ्चितम् ननु विद्याकर्मणी समे एकफलत्वाच्चक्रदण्डादिवदित्यनुमानमिति चेत्तत्राह फलैः पृथक्त्वात् षष्ठ्यर्थे तृतीया फलानां भेदादित्यर्थः एवञ्च स्वरूपासिद्धो हेतुरिति भावः समानकारकत्वमपि हेतुर्नेत्याह क्रतुर्ब-

सप्रत्यवायो ह्यहमित्यनात्मधीः
अज्ञप्रसिद्धा न तु तत्त्वदर्शिनः ।
तस्माद्बुधैस्त्याज्यमपि क्रियात्मभि-
र्विधानतः कर्मविधिप्रकाशितम् ॥ २३ ॥
श्रद्धान्वितस्तत्त्वमसीतिवाक्यतो
गुरोः प्रसादादपि शुद्धमानसः ।
विज्ञाय चैकात्म्यमथात्मजीवयोः
सुखी भवेन्मेरुरिवाप्रकम्पनः ॥ २४ ॥
आदौ पदार्थावगतिर्हि कारणं
वाक्यार्थविज्ञानविधौ विधानतः

द्धिभिः कारकैरहं ममताभिमानरूपैरान्तरैर्बाह्यैश्च देशकालादिभिश्च साध्यते ज्ञानं ततो विपर्ययं यदतो न तयोः साम्यमिति भावः ॥ २२ ॥

ननु करणे प्रत्यवायभिया कर्म कार्यमिति चेन्नेत्याह सप्रत्यवाय इति कर्मत्यागेन हि निश्चयेनाहं प्रत्यवायसहितो भविष्यामीत्येवं शुद्धात्मनि अनात्मधर्मस्य धीरज्ञस्य तत्त्वज्ञानविकलस्य प्रसिद्धा न तु तत्त्वदर्शिनः तस्याहंबुद्धेरभावात् पापादेरनात्मधर्मतानिश्चयाच्च तस्मात् बुधैः कर्मक्रियात्मभिः षष्ठ्यर्थे तृतीया क्रियाफलसक्तचित्तानां विधानतो विधानेनेति कर्त्तव्यतया युक्तं कर्म विधिभिरवश्यकर्त्तव्यतया बोधितमपि त्याज्यमित्यर्थः ॥ २३ ॥

अथ विरक्तस्य कार्यमाह श्रद्धेति गुरुशास्त्रयोर्विश्वासः श्रद्धा तदन्वितो मुमुक्षुः शुद्धमानसोऽपि निष्कामकर्मानुष्ठानाच्छुद्धमानसश्च गुरोः प्रसादात्तत्त्वमसीतिवाक्यतः सुतरामात्मजीवयोरैकात्म्यं विज्ञाय मनननिदिध्यासनपरिपाकाभ्यां साक्षात्कृत्य च एवार्थः साक्षात्कृत्यैव सुखी भवेत् सकलदुःखहीनो भवेदित्यर्थः अप्रकम्पनः विषयाभिलाषाक्षोभितान्तःकरणः ॥ २४ ॥

महावाक्यं विवरीतुं वाक्यार्थस्य पदार्थबोधपूर्व्वकत्वमाह आदाविति

तत्त्वंपदार्थौ परमात्मजीवका-
वसीति चैकात्म्यमथानयोर्भवेत् ॥ २५ ॥
प्रत्यक्परोक्षादिविरोधमात्मनो-
र्विहाय संगृह्य तयोश्चिदात्मताम् ।
संशोधितां लक्षणया च लक्षितां
ज्ञात्वा स्वमात्मानमथाद्वयो भवेत् ॥ २६ ॥
एकात्मकत्वाज्जहती न सम्भवेत्
तथाऽजहल्लक्षणताविरोधतः ।

विधानतः भ्रमप्रमादराहित्येन वाक्यार्थविज्ञानस्य विधावुत्पत्तौ आदौ प्रथमं मुख्यमिति वाक्यपदार्थावगतिः कारणं हि प्रसिद्धं तस्य पदत्रयं तत्त्वमसीति तत्र तत्पदार्थः परमात्मा सर्व्वज्ञत्वादिगुणः त्वं पदार्थो जीवः अनयोस्तत्त्वंपदार्थयोरैकात्म्यं तद्बोधकमसीति पदम् ॥ २५ ॥

ननु सर्व्वज्ञत्वादिगुणस्येशस्य किञ्चिज्ज्ञत्वधर्मवता जीवेनैकात्म्यं विरुद्धमित्याशङ्क्याह प्रत्यगिति अहंबुद्धिवेद्यत्वं प्रत्यक्त्वं जीवधर्मः परोक्षत्वमीशधर्मस्तदादिधर्मजातमात्मनोः परमात्मजीवात्मनोर्व्विरोधं विहाय त्यक्त्वा तयोः संशोधितां युक्तिभिः सम्यग्विचारितां तत्त्वंपदाभ्यां गङ्गाद्यभावेऽपि वक्ष्यमाणप्रकारया लक्षणया लक्षितां चिदात्मतां संगृह्य तत्त्वंपदोपस्थितिविषयां ज्ञात्वा स्वमात्मानं तथाज्ञात्वाथ एकात्मज्ञानानन्तरं अद्वयो भवेत् चित्स्वरूपतां प्राप्त इव भवेत् पूर्वमपि तत्स्वरूप एव विस्मृतकण्ठचामीकरन्यायेन च तत्प्राप्तिरत इवेत्युक्तम् अयंभावः तत्त्वम्पदयोर्द्वावर्थौ वाच्यो लक्ष्यश्च तत्र तत्पदस्य मायोपाधिः सर्वज्ञत्वादिविशिष्टो वाच्यः त्वं पदस्यापि किञ्चिज्ज्ञत्वादिविशिष्टो मायाकार्याविद्योपाधिरविद्यावदन्तःकरणोपाधिर्वाच्यः उभयोरपि विशेषणांशत्यागेन शुद्धचिदात्मा लक्ष्यः तत्र वाच्ययोर्विरुद्धधर्मकत्वादैक्यासम्भवेऽपि लक्ष्ययोरैक्यं निर्बाधमेवेति ॥ २६ ॥

उक्तलक्षणास्वरूपमाह एकात्मकत्वादिति जहती लक्षणा जहत्स्वार्थलक्षणा यथा गङ्गायां घोष इत्यत्र गङ्गापदार्थस्य प्रवाहस्य घोषा-

सोऽयंपदार्थाविव भागलक्षणा
युज्येततत्त्वम्पदयोरदोषतः ॥ २७ ॥
रसादिपञ्चीकृतभूतसम्भवं
भोगालयं दुःखसुखादिकर्मणाम्।
शरीरमाद्यन्तवदादिकर्मजं
मायामयं स्थूलमुपाधिमात्मनः ॥ २८ ॥

धारतानुपपत्त्या सर्वथा तत्परित्यागेन तीररूपार्थलक्षणा सा प्रकृतेन एकात्मकत्वात् विशेष्यांशस्यैकत्वात् सर्वथा स्वार्थत्यागाभावात् तथा जहदजहल्लक्षणता अजहत्स्वार्थलक्षणावत्त्वमपि अत्र न सम्भवति यथा काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य स्वार्थात्यागेनैव दध्युपघातकलक्षणा सापि न विरोधतः विशेषणत्यागेन सर्वथा स्वार्थत्यागाभावात् अतो भागलक्षणा जहदजहल्लक्षणा युज्येत अदोषतः पूर्वोक्तदोषाभावात् विशेष्यांशस्यात्यागाद्विशेषणांशस्य त्यागाच्च तत्र दृष्टान्तः सोऽयं पदार्थाविव यथा सोऽयं देवदत्त इत्यत्र तद्देशादिविशिष्टोऽतीतानुभवविषयो वा तत्पदार्थः एतद्देशादिविशिष्टो अनुभूयमानो वेदम्शब्दार्थः तयोश्च विरुद्धविशेषणकत्वादैक्यासम्भवेन देशादिरूपविशेषणत्यागेनानुभवमतातीतत्वादिविशेषणत्यागेन वा लक्षणयैक्यं तद्वदिति भावः ॥ २७ ॥

अथ त्वम्पदार्थत्वाय जीवोपाधिमाह रसादीति रसा पृथ्वी आदिर्येषां तानि पञ्चीकृतानि भूतानि तेभ्यः सम्भवो यस्य तत् पञ्चीकरणं चेत्थम् एकैकं भूतं द्विधाभूतं द्विधाविभज्य तत्रैकभागश्चतुर्धा विभज्य तेषां भागानां स्वेतरभूतचतुष्टयार्द्धभागचतुष्टये संयोजने एकैकं भूतं पञ्चात्मकं भवति भागाधिक्याच्च प्रातिस्विकतया भूरादिव्यवहारोऽपि सुखदुःखयोरादीनि यानि कर्माणि तेषां भोगस्तत्कर्मजसुखदुःखानुभवस्तस्यालयमाश्रयभूतमाद्यन्तवत् उत्पत्तिनाशयोगि आदिकर्मजं प्राग्भावीयकर्मजन्यं मायामयं परम्परया मायाधिकारः तद्विकारभूतविकारत्वात् एतच्छरीरमात्मनः स्थूलमुपाधिं वदन्तीति शेषः ॥ २८ ॥

सूक्ष्मं मनोबुद्धिदशेन्द्रियैर्युतं
प्राणैरपञ्चीकृतभूतसम्भवम् ।
भोक्तुः सुखादेरनुसाधनं भवेत्
शरीरमन्यद्विदुरात्मनो बुधाः ॥ २९ ॥
अनाद्यनिर्वाच्यमपीह कारणं
मायाप्रधानन्तु परं शरीरकम् ।
उपाधिभेदात्तु यतः पृथक्स्थितं
स्वात्मानमात्मन्यवधारयेत् क्रमात् ॥ ३० ॥

अथ सूक्ष्मोपाधिमाह सूक्ष्ममिति बुधा अन्यत् स्थूलशरीरविलक्षणं शरीरं लिङ्गदेहाख्यं आत्मन उपाधिं विदुः तत्स्वरूपमाह सूक्ष्मं चक्षुराद्यविषयः मनोबुद्धिदशेन्द्रियैः प्राणैश्च युतं संकल्पात्मकं मनः निश्चयात्मिका बुद्धिः घ्राणरसनाचक्षुस्त्वक्श्रोत्रेतिपञ्चज्ञानेन्द्रियाणि वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि प्राणापानव्यानोदानसमानाश्च प्राणास्तैर्युतं एतत् सप्तदशसमुदायात्मकं तदाधारभूताभ्याह अपञ्चीकृतभूतसम्भवं तेभ्य उत्पन्नं अतएवादृश्यं तथा भोक्तुः सुखदुःखादयः सुखदुःखाद्यनुभवस्यानुसाधनं स्थूलशरीरस्यैतदनुगतस्यैव भोगसाधनमिति भावः एतद्वियोगेनैव मरणव्यवहार इति बोध्यम् ॥ २९ ॥

इति जीवोपाधिद्वयमुक्त्वा ईशोपाधिमाह अनादीति अनादि उत्पत्तिहीनं नानाविधपरिणामशालितया परिणामरूपेण नश्वरमिति अनादित्वमालोक्तत्रा सूचितमनिर्वाच्यं सत्त्वासत्त्वाभ्यां निर्वक्तुमशक्यं कारणं सकलप्रपञ्चस्य जनकं ईदृशी माया तु ब्रह्मणः परं ईश्वरव्यवहारसम्पादकत्वादुत्कृष्टं प्रधानं शरीरकं स्वार्थे कः एवमुपाधिभेदादेकमेव चैतन्यम् यतः पृथक्स्थितं जीव ईश इति भेदबुद्धिविषयमतो अयमयोपाधिपरित्यागेन स्वात्मानमात्मनि अवधारयेदभेदेन जानीयात् क्रमाच्छ्रवणमनननिदिध्यासनक्रमेणेत्यर्थः ॥ ३० ॥

कोषेष्वयं तेषु तु तत्तदाकृति-
र्विभाति सङ्गात् स्फटिकोपलो यथा।
असङ्गरूपोऽयमजो यतोऽद्वयो
विज्ञायतेऽस्मिन् परितो विचारिते ॥ ३१ ॥
बुद्धेस्त्रिधा वृत्तिरपीह दृश्यते
स्वप्नादिभेदेन गुणत्रयात्मनः।
अन्योऽन्यतोऽस्मिन् व्यभिचारतो मृषा
नित्ये परे ब्रह्मणि केवले शिवे ॥ ३२ ॥

अथ वाक्यार्थविचारफलमाह कोषेष्विति आनन्दमयस्य ब्रह्मत्वं अन्नमयप्राणमयमनोमयविज्ञानमयेषु चतुर्षु कोषेषु तत्तत्सङ्गात्तत्तदाकृति-र्विभाति यथा जवादिसङ्गात् स्फटिको अनेकाकृतिर्भाति आनन्दमयस्यापि जीवत्ववादिनां तु तेन सह पञ्चसु कोषेष्विति बोध्यम्. अस्मिन्नङ्गा-वाक्ये परितो विचारिते सम्यग्विचारिते सत्ययमात्मा असङ्गरूपः अन्नमयादिभिः सङ्गरहितः 'असङ्गो न हि सज्जत' इति श्रुतेः अजोऽ-द्वयश्च विज्ञायते स्थूलोऽहमित्यादिरूपस्य तत्तत्कोषसङ्गात्प्रतीतिः स्फटि-कवत् तत्त्वज्ञस्य तु न तथा प्रतीतिरिति भावः एवं च तत्तदुपाधिकृत-तद्रूपताप्रतीतिनिरास एव विचारफलमिति भावः ॥ ३१ ॥

जाग्रदाद्यवस्थापि बुद्धिधर्मो नात्मधर्म इत्याह बुद्धेरिति इह आत्मनि स्वप्नादिभेदेन जाग्रत्स्वप्नसुषुप्तिभेदेन या त्रिधा वृत्तिर्दृश्यते सापि गुणत्रयात्मनः सत्त्वरजस्तमोरूपगुणत्रयस्वरूपाया बुद्धेः धर्मः उक्तावस्थात्रयस्योक्तमूलकत्वात् एतदवस्थात्रयस्यास्मिन् अवस्थानं व्यभि-चारतो मृषा बुद्ध्याध्यासनिबन्धनं न तु वास्तवमित्यर्थः अन्योऽन्यतो व्यभिचारतस्तस्यावस्थात्रयस्य स्वरूपतो मृषात्वात् तज्ज्ञानस्य मृषात्वमेव स्वप्नकाले जाग्रत्सुषुप्त्योरभावात् जाग्रति इतरद्वयस्याभावात् सुषुप्तावित-रयोरभावात् परस्परं व्यभिचारो बोध्यः आत्मनस्तदनाश्रयत्वं विशेष-णैराह नित्ये उत्पत्तिनाशशून्ये परे गुणत्रयातीते ब्रह्मणि व्यापके केवले

देहेन्द्रियप्राणमनश्चिदात्मनां
सङ्घादजस्रं परिवर्त्तते धियः।
वृत्तिस्तमोमूलतयाज्ञलक्षणा
यावद्भवेत्तावदसौ भवोद्भवः॥ २३॥
नेतिप्रमाणेन निराकृताखिलो
हृदा समास्वादितचिद्घनामृतः।
त्यजेदशेषं जगदात्तसद्रसं
पीत्वा यथाम्भः प्रजहाति तत्फलम्॥ २४॥

अखण्डे शिवे आनन्दरूपे एवं भूते सदेकरूपे परस्परव्यभिचारधर्माभास-
मसम्भवि इति भावः॥ २२॥

अथ त्याज्यत्वाय संसारमूलभूतां वृत्तिमाह देहेति एषां सङ्घात्
इतरेतराध्यासविषयात् अजस्रं यावद्धियो बुद्धेर्वृत्तिस्तमोमूलतया अज्ञ-
लक्षणा अज्ञत्वज्ञापिका यावत्परिवर्त्तते तावद्भवोद्भवः संसारोद्भवो भवेत्
तमः पदं रजसोऽप्युपलक्षणम् रजस्तमःप्रधानाद्बुद्धिः संसारहेतुस्तात्त्व-
शेषा त्याज्येति भावः॥ २३॥

कृतमहावाक्यविचारस्य कर्त्तव्यमाह नेतीति अथात आदेशो नेति
नेतीति प्रमाणेन निराकृतं मिथ्यात्वेन गृहीतमखिलं जगत् येन स
ततो हृदा सत्त्वप्रधानेन मनसा सम्यगास्वादितं चिद्घनं घनामृतं
दुःखासम्भिन्नं सुखं येन सः स्वर्गादि तु परिणामदुःखत्वात्तत्सम्भिन्न-
मेव एवं भूतो अशेषं जगद्देहेन्द्रियादिदृश्यसमूहं त्यजेत् हानोपादान-
बुद्धिविषयं न कुर्यात् किन्तूदासीनस्तत्र भवेत् ननु देहेन्द्रियादिभि-
रेव तज्ज्ञानलाभात् कथमुपजीव्यस्य त्याग इत्याशङ्क्य दृष्टान्तदर्शनेन
परिहरति यथा तृष्णावान् आत्तः सद्रसो माधुर्यं येन तादृशं नारिकेल-
नारङ्गादिफलान्तर्वर्त्यम्भः पीत्वा तदास्वादनभूतं तत्फलं जहाति तत्रो-
दासीनो भवति तद्वत् सर्वदृश्यसारांशो ब्रह्म तल्लाभे सति निःसारं दृश्यं
नोपादेयं नापि हेयमिति भावः अतो भयादिसम्भावना तद्धेयमित्यु-
च्यते॥ २४॥

कदाचिदात्मा न मृतो न जायते
न चीयते नापि विवर्द्धतेऽनवः(१) ।
निरस्तसर्वातिशयः सुखात्मकः
स्वयंप्रभः सर्वगतोऽयमद्वयः ॥ ३५ ॥
एवं विधे ज्ञानमये सुखात्मके
कथं भवो दुःखमयः प्रतीयते ? ।
अज्ञानतोऽध्यासवशात्प्रकाशते
ज्ञाने विलीयेत विरोधतः क्षणात् ॥ ३६ ॥

इतरस्यानित्यत्वेन तत्र वैराग्यार्थमात्मन एव नित्यत्वमाह कदाचिदिति कदापीत्यर्थः अनवः उत्पत्त्यनन्तरं विद्यमानो हि नवः तेन जन्मानन्तराऽस्तित्वं व्यावर्त्तितम् नवत्वाभावेन जीर्णत्वाभावादवस्थान्तरापत्तिरूपपरिणामोऽपि निरस्तः अनेन जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते नश्यतीति षड्भावविकाररहितत्वमुक्तम् एवं चैतद्भिन्नं सर्वमुक्तषड्भावविकारवत्त्वादनित्यमिति ततो विरज्येतेति बोधितं यत देहधर्मो त एव निरस्तः सर्वस्य देहेन्द्रियादेरतिशयो महत्त्वं येन स्वलाभात्‌ः 'यल्लाभान्नापरो लाभ' इति श्रुतेः यतः सुखात्मकः आनन्दस्वरूपः स्वयंप्रभः स्वप्रकाशः देहेन्द्रियादिस्तु दुःखस्वरूपः परप्रकाश्यश्च 'यस्य भासा सर्वमिदं विभाति' इति श्रुतेः सर्वगतो व्यापकः अयमहं बुद्धिविषयः प्रत्यगात्मापि अद्वय उक्ताद्वयब्रह्मस्वरूप एव न ततोऽतिरिक्त इति भावः 'अयमात्मा ब्रह्म' इति श्रुतेः ॥ ३५ ॥

ननु एवंविधे विकारशून्ये आत्मनि जन्ममरणादिप्रवाहरूपसंसारभानं कथमिति शङ्कते एवम्विधे इति दुःखमयः दुःखप्रचुरः उत्तरयति अज्ञानमूलको योऽध्यासो देहान्तःकरणादौ अहं ममेत्यध्यासस्तद्वशात्‌ एवं च भ्रान्तिरूपा तत्प्रतीतिरिति भावः नन्वेवं कथं तस्य संसारस्य निवृत्तिस्तत्राह ज्ञानेति आविर्भूत इति शेषः ज्ञानस्याज्ञानविरोधित्वा-

(१) विवर्द्धतेऽमरः इति केचित् वदन्ति ।

यदन्यदन्यत्र विभाव्यते भ्रमात्
अध्यासमित्याहुरमुं विपश्चितः।
असर्पभूते हि विभावनं यथा
रज्ज्वादिके तद्वदपीश्वरे जगत् ॥ २७ ॥
विकल्पमायारहिते चिदात्मके-
ऽहङ्कार एषः प्रथमः प्रकल्पितः।
अध्यास एवात्मनि सर्वकारणे
निरामये ब्रह्मणि केवले परे ॥ २८ ॥
इच्छादिरागादिसुखादिधर्मिकाः
सदा धियः संसृतिहेतवः परे।

स्तुत्पत्तिनाश एव कारणभूताज्ञाननाशात्तत्कार्यसंसारस्यापि विलय इत्यर्थः यथा रज्ज्वां सर्पस्य लय इत्यर्थः ॥ २६ ॥

अथाध्यासलक्षणमाह यदन्यदिति यदन्यत्सर्पादिकमन्यत्र रज्ज्वादौ भ्रमात् भ्रमजनकाद्दोषाद्विभाव्यते विज्ञायते अमुं विपश्चितो विद्वांसोऽध्यास इत्याहुः यथा असर्पभूते रज्ज्वादौ अहिविभावनं सर्पारोपो रज्जुबुद्धिमूलकस्तद्वदीश्वरेऽपि जगत् देहादिसंसारात्मकं सर्वं विभाव्यते आत्मज्ञानाभावात् यथार्थतया ज्ञायते ॥ २७ ॥

आत्मनि जगद्भाने कीदृशोऽध्यासो निमित्तं तदाह विकल्पेति सर्वविकल्पकारणमायारहिते वस्तुतः तत्सङ्गरहिते चिदात्मके चित्स्वरूपे सर्वकारणे निरामये दुःखासंभिन्नानन्दमये केवले सर्वविकारशून्ये परे दृश्यविलक्षणे ब्रह्मणि व्यापके आत्मनि प्रथममहङ्कारः कल्पितः स एवाध्यासः अहंबुद्ध्यात्मकोऽध्यास एव सर्वसंसारकारणमिति भावः ॥ २८ ॥

बुद्धिनिष्ठ एव संसारो न त्वात्मनिष्ठ इत्यन्वयव्यतिरेकौ प्रमाणयति इच्छादीति परे सर्वसाक्षिणि आत्मनि संसृतिहेतवः भासमानसंसारकारणं सदा कालत्रयेऽपि इच्छादिरागादिसुखादिधर्मिकाः इच्छो-

यस्मात्प्रसुप्तौ तदभावतः परः
सुखस्वरूपेण विभाव्यते हि नः ॥ ३९ ॥
अनाद्यविद्योद्भवबुद्धिबिम्बितो
जीवः प्रकाशोऽयमितीर्य्यते चितः ।
आत्मा धियः साक्षितया पृथक्स्थितो
बुद्ध्या परिच्छिन्नपरः स एव हि ॥ ४० ॥
चिद्बिम्बसाक्ष्यात्मधियां प्रसङ्गत-
स्त्वेकत्र वासादनलाक्तलोहवत् ।

किञ्च रागद्वेषौ सुखदुःखं इत्येवमादिधर्मिकाः धिय एव धीषु सतीषु संसार इत्यन्वयमुक्त्वा तद्व्यतिरेकमाह यस्मात्कारणात् प्रसुप्तौ तदभावात् धीवृत्त्यभावात् पर आत्मा नो अस्माभिः तृतीयार्थे षष्ठी सुखरूपेण सुखस्वरूपमात्रेण विभाव्यते निश्चीयते न तु संसारित्वेनेति भावः सुप्तोत्थितस्य सुखमहमस्वाप्समिति प्रत्यभिज्ञानुभवात्सदात्मस्वरूपनिश्चयो ऽस्तीति तात्पर्यम् ॥ ३९ ॥

पुनस्तत्त्वं पदार्थस्वरूपमाह अनादीति अनादिर्या विद्या तत उद्भवो यस्या बुद्धेरन्तःकरणस्य तत्र बिम्बितः प्रतिबिम्बितश्चितः प्रकाशः स जीव इतीर्य्यते आत्मा परमात्मा धियः साक्षितया धीधर्मासङ्गेनैव पृथक्स्थितः अन्तर्यामितयेत्यर्थः जीवोऽहं सुखीत्यादिप्रकारेणान्तःकरणधर्माध्यासवान् परमात्मा तु साक्षितया सर्वत्र विद्यमानोऽपि न तथेति भावः अतएव बुद्ध्या परिच्छिन्नपरः बुद्धिकृतपरिच्छेदरहितः अतएव परः एवं च स्थानेन प्रतिबिम्बाधारविलये प्रतिबिम्बस्य विलयात् स जीवः स एव परमात्मैव हि प्रसिद्धम् स इत्यस्य चार्थतिर्बोध्या॥४०॥

अथ बुद्ध्यात्मनोः परस्पराध्यासवशात् परस्परधर्मभानमिति द्रढीय पुनराह चिद्बिम्बेति चिदात्मचेतसोरन्योन्याध्यासवशात्परस्परतादात्म्यारोपाच्जडाजडत्वं प्रतीयते चेतसो वृत्तीनां ज्ञानत्वं जीवात्मनो जडत्वं प्रतीयते अतएव ज्ञानाश्रय आत्मेति चिद्य एव तार्किकव्यवहारः जीवात्मनि अहात्मा कथ्यते बुधैरिति आत्मव्यवहारश्च तत्र हेतुः चिदित्यादि

अन्योन्यमध्यासवशात्प्रतीयते
जडाजडत्वं च चिदात्मचेतसोः ॥ ४१ ॥
गुरोः सकाशादपि वेदवाक्यतः
सञ्जातविद्यानुभवो निरीक्ष्य तम् ।
स्वात्मानमात्मस्थमुपाधिवर्जितं
त्यजेदशेषं जडमात्मगोचरम् ॥ ४२ ॥
प्रकाशरूपोऽहमजोऽहमद्वयः
असकृद्विभातोऽहमतीव निर्मलः ।
विशुद्धविज्ञानघनो निरामयः
सम्पूर्ण आनन्दमयोऽहमक्रियः ॥ ४२ ॥

चिद्बिम्बं यस्य स चिदाभासः सर्वैः सहितः साक्षः सेन्द्रियः स चासावात्मा मनः धीरन्तःकरणं तेषां प्रकृष्टसङ्गादतिसन्निकर्षादध्यास इत्यर्थः अत्र दृष्टान्तः अनलाक्रान्तलोहवत् अग्नितप्तलोहपिण्डवत् अग्निधर्मो दाहकत्वं लोहधर्मस्य वर्तुलत्वाद्यनले भासते तत्र हेतुरेकत्र वासात् परस्परविभागेन वृत्तेरित्यर्थः तद्वदेव तयोरपि परस्परधर्माध्यास इत्यर्थः ॥ ४१ ॥

उक्तमेवार्थं दार्ढ्याय पुनराह गुरोरिति वेदवाक्यत इत्यनेन श्रवणं गुरोः सकाशादपि ततश्चानेन मननमुक्तम् ताभ्यां सञ्जातो विद्यया स्वात्मरूपस्यात्मनोऽनुभवो यस्य सः अनेन कृतनिदिध्यासन इत्यर्थः तं चिदानन्दस्वरूपं स्वात्मानमुपाधिवर्जितं रहितोपाधिधर्ममात्मस्थं हृत्स्थं निरीक्ष्य अपरोक्षीकृत्याशेषं जडं दृश्यं त्यजेत् तत्रोदासीनो भवेदिति भावः ॥ ४२ ॥

ध्येयं निरुपाधिकं स्वरूपं श्लोकद्वयेनाह प्रकाशेति अहं प्रकाशरूपः स्वप्रकाशः परप्रकाशहीनः परप्रकाशरूपो यथा घटादिः अजो जन्मादिहीनः अद्वयः स्वजातीयद्वितीयरहितः असकृद्विभातः सकृदपि परेण भासकान्तरेण प्रकाशितः सकृद्विभातः न सकृद्विभातो असकृद्विभातः 'न तत्र सूर्यो भाति न चन्द्रतारकं' इति श्रुतेः 'न तद्भासयते

सदैवमुक्तोऽहमचिन्त्यशक्तिमा-
नतीन्द्रियज्ञानमविक्रियात्मकः ।
अनन्तपारोऽहमहर्निशं बुधै-
र्विभावितोऽहं हृदि वेदवादिभिः ॥ ४४ ॥
एवं सदात्मानमखण्डितात्मना
विचारमाणस्य विशुद्धभावना ।
हन्यादविद्यामचिरेण कारकै-
रसायनं यद्वदुपासितं रुजः ॥ ४५ ॥
विविक्त आसीन उपारतेन्द्रियो
विनिर्जितात्मा विमलान्तराशयः ।

ह्रूयं' इति श्रुतेश्च अतीव निर्मलः मायाकृतावरणविक्षेपरहितः विशुद्धविज्ञानघनः विशुद्धचिदेकरसः निरामयः कर्त्तृत्वाभिमानरहितः सम्पूर्णः देशकालपरिच्छेदहीनः आनन्दमयः आनन्दरूपः स्वार्थे मयट् अक्रियः परिणामहीनः ॥ ४३ ॥

सदैवेति अहं सदैव कालत्रयेऽपि मुक्तः सर्वधर्मरहितः अचिन्त्यशक्तिमान् यः परमात्मा अतीन्द्रियज्ञान इन्द्रियातिरिक्तज्ञानरूपः 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुतेः अविक्रियात्मको अपरिणामी अनन्तपारः अन्तः कालतः पारः परन्तीरं तावविद्यमानौ यस्य तेन देशकालपरिच्छेदहीनः ईदृशो यः परमात्मा बुधैर्हृदि अहर्निशं विभावितः सोऽहमित्यर्थः ॥ ४४ ॥

एवं भावनायाः फलमाह एवमिति उक्तरीत्या सदा आत्मानं अखण्डितात्मना विषयानाक्रष्टचित्तेन विचारमाणस्य ध्यायतः धातूनामनेकार्थत्वात् चरमाण एव चारमाणः स्वार्थेऽण् विशुद्धभावना ब्रह्माकारान्तःकरणवृत्तिरुदेतीति शेषः सा चोदिता कारकैर्देहान्तरप्रापककर्मभिः सहाविद्यामचिरेण शीघ्रमेव हन्यात् यथोपासितं सेवितं रसायनं रुजो हन्यात् तद्वत् ॥ ४५ ॥

तत्र ध्याने इतिकर्त्तव्यतामाह विविक्त इति निर्जन इत्यर्थः

विभावयेदेकमनन्यसाधनो
विज्ञानदृक् केवल आत्मसंस्थितः ॥ ४६ ॥
विश्वं यदेतत्परमात्मदर्शनं
विलापयेदात्मनि सर्वकारणे।
पूर्णश्चिदानन्दमयोऽवतिष्ठते
न वेद बाह्यं न च किञ्चिदान्तरम् ॥ ४७ ॥
पूर्वं समाधेरखिलं विचिन्तयेत्
ओङ्कारमात्रं सचराचरं जगत्।

आसीनो यथोचित पद्मासनाद्युपविष्ट उपारतेन्द्रियः निवृत्तव्यापारेन्द्रियः तेन शमदमादिसम्पन्नः विनिर्जितात्मा प्राणायामादिभिर्जितान्तःकरणः अतएव विमलान्तराशयो विशुद्धचित्तः विज्ञानदृक् विज्ञाने एव दृक् भावनं यस्य सः दृग्दृश्यभ्रमरहितः अनेन निर्विकल्पकसमाधियुक्तः अनन्यसाधनः तत्त्वज्ञानातिरिक्तमुक्तिसाधनास्तित्वभ्रमरहितः केवलोऽसङ्गः आत्मसंस्थितः आत्मन्येव संस्था समाप्तिः सञ्जाता यस्य सः तेन न कदापि विषयान्तरसञ्चारवच्चित्तः विभावयेत् ध्यायेत् ॥ ४६ ॥

किञ्च यदेतत् भूतं भविष्यद्वर्त्तमानं विश्वं परमात्मा दर्शनं भासको यस्य तत् 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः तत्सर्वकारणे मायासन्निधानात् सर्वोपादानत्वेनाभिमते आत्मनि विलापयेत् उपादानसत्ताव्यतिरेकेण कार्यसत्तां न पश्येत् तादृशस्य लक्षणमाह सम्पूर्णः अवाप्तसमस्तकामः तस्य काम्याभावात् चिदानन्दमयः तद्रूपोऽवतिष्ठते बाह्यमान्तरं च दृश्यं न जानाति सर्वत्र ब्रह्मदर्शनादिति भावः ॥ ४७॥

समाधिसिद्धेः पूर्वं यत्कर्त्तव्यं तदाह पूर्वमिति समाधेः सकलविषयव्यासङ्गनिवृत्तिपूर्वकं ब्रह्माकारवृत्तिः समाधिस्ततः पूर्वं अखिलं सचराचरं जगत् ओङ्कारमात्रं विचिन्तयेत् ओङ्कारो मीयते अनयेति मात्रा प्रमाणं बोधकत्वेन परिच्छेदको यस्य तथा जानीयात् तदेव

तदेव वाच्यं प्रणवो हि वाचको
विभाव्यतेऽज्ञानवशान्न बोधतः ॥ ४८ ॥
अकारसंज्ञः पुरुषो हि विश्वको
ह्युकारकस्तैजस ईर्य्यते क्रमात् ।
प्राज्ञो मकारः परिपठ्यतेऽखिलैः
समाधिपूर्वं न तु तत्त्वतो भवेत् ॥ ४९ ॥
विश्वं त्वकारं पुरुषं विलापयेत्
उकारमध्ये बहुधा व्यवस्थितम् ।
ततो मकारे प्रविलाप्य तैजसं
द्वितीयवर्णं प्रणवस्य चान्तिमे ॥ ५० ॥

विवृणोति तदेवेति जगदेवेत्यर्थः प्रणवो वाचको विभाव्यते एतत् हि प्रसिद्ध इत्यर्थः इयं भावना ज्ञानवशादेव न बोधतः निर्विशेषब्रह्म-साक्षात्कारस्तदुत्तरं नेत्यर्थः तस्य सर्वदृत्त्युपमर्दकत्वात् ॥ ४८ ॥

उक्तमर्थं विवृणोति अकारेति अकारसंज्ञस्तद्वाच्यः पुरुषो हि विश्वको विश्व एव विश्वकः विश्वशब्देन परिभाषितः अयं जाग्रत्साक्षी विराट् ततः स्वप्नसाक्षी तैजसः तेन पदेन परिभाषितः लिङ्गदेहाभि-मानी हिरण्यगर्भ उकारस्तः उकारप्रतिपाद्य ईर्य्यते ततः सुषुप्तिसाक्षी प्राज्ञपदवाच्यो मायोपाधिको मकारस्तद्वाच्यः पठ्यते अखिलैर्वेदैः इयं भावना समाधिपूर्वं समाधेः पूर्वमेव न तत्त्वतः तत्त्वसाक्षात्कारे सति न भवेत् सर्वस्य ब्रह्मणि प्रविलयात् ॥ ४९ ॥

अथ विलापनप्रकारमाह द्वाभ्याम् विश्वन्त्विति उकारमध्ये बहुधा व्यवस्थितं स्थूलदेहनिबन्धनं स्थूलदेहाभिमानेन स्थितं विश्वं पुरुषं तद्वाचकमकारं च विलापयेत् तत्रार्थे विलीनं भावयेत् ततस्तैजसं लिङ्गदेहाभिमानिनं पुरुषं तद्वाचकम् प्रणवद्वितीयवर्णमुकारं विलीन-विश्वकं मकारे विलाप्य विलीनं भावयित्वा ॥ ५० ॥

मकारमप्यात्मनि(१) चिद्घने परे
विलापयेत्प्राज्ञमपीह कारणम् ।
सोऽहं परं ब्रह्म सदाविमुक्तिम-
द्विज्ञानदृङ्मुक्त उपाधितोऽमलः ॥ ५१ ॥
एवं सदा जातपरात्मभावनः
स्वानन्दतुष्टः परिविस्मृताखिलः ।
आस्ते स नित्यात्मसुखप्रकाशकः
साक्षाद्विमुक्तोऽचलवारिसिन्धुवत् ॥ ५२ ॥
एवं सदाऽभ्यस्तसमाधियोगिनो
निवृत्तसर्वेन्द्रियगोचरस्य हि ।

ततस्तादृशं मकारं तद्वाच्यं प्राज्ञं च कारणं कारणत्वाभिमानिनं पुरुषं दृढात्मनि चिद्घने परे विलापयेत् तथा भावयेत् ततः सोऽहं सर्वविलापाधिष्ठानं परं ब्रह्म विभावयेत् तद्विशिनष्टि सदाविमुक्तिमत् नित्यमुक्तम् अन्वहं पदार्थस्य रागद्वेषादिमलिनस्य कथं ब्रह्मत्वभावनेत्या-शङ्क्याहंपदार्थं विशिनष्टि उपाधितो मुक्तः अतएवामलः तथा भावने साधनं विज्ञानदृग्विज्ञानं निदिध्यासनं ब्रह्मात्मप्रत्ययाविच्छेदरूपा दृक् तत्साक्षात्कारे साधनं यस्य सः ॥ ५१ ॥

एवं भावयतो लक्षणमाह एवमिति उक्तप्रकारेण सदा जाता परमात्मन्येकभावना यस्य सः परिविस्मृतमखिलं पुत्रदेहादि येन सः अतएव स्वस्वरूपानन्देनैव तुष्टः न तु विषयानन्देन तस्य परिणामे दुःखरूपत्वात्ततो विरक्त इत्यर्थः साक्षान्नित्यात्मनि सुखप्रकाशकः साक्षा-दौपाधिक नामरूपभेदराहित्येन नित्यमखण्डितमात्मस्वरूपं यस्य स्व-प्रकाशश्च तद्रूपः एवंरूपो विमुक्तो जीवन्मुक्तः अचलं निश्चलं वारि यस्य तादृशसिन्धुवदास्ते विषयसम्बन्धरूपलहरीरहित आस्त इत्यर्थः॥५२॥

ईदृशस्य मत्प्राप्तिर्भवत्येवेत्याह एवमिति उक्तप्रकारेण सदाभ्यस्त-

(१) मकारमप्यात्मनि इति पठनीयम् ।

विनिर्जिताशेषरिपोरहं सदा
दृश्यो भवेयं जितषड्गुणात्मनः ॥ ५३ ॥
ध्यात्वैवमात्मानमहर्निशं मुनि-
स्तिष्ठेत् सदा मुक्तसमस्तबन्धनः।
प्रारब्धमश्नन्नभिमानवर्जितो
मय्येव साक्षात्प्रविलीयते ततः ॥ ५४ ॥
आदौ च मध्ये च तथैव चान्ततो
भवं विदित्वा भयशोककारणम्।
हित्वा समस्तं विधिवादचोदितं
भजेत् स्वमात्मानमथाखिलात्मनाम् ॥ ५५ ॥

समाधेर्योगिनः निवृत्ताः सर्वेषामिन्द्रियाणां गोचरा विषयाः शब्दादयो यस्य विनिर्जिता अशेषा रिपवः कामादयो येन तस्य तज्जयेन विषयेष्वन्तःकरणप्रवृत्तिः सूचिता अतएव सर्वज्ञत्वनित्यत्वनित्यतृप्तत्वबोधरूपत्वस्वतन्त्रत्वनित्यमलुप्तत्वानन्तरूपाः षड्गुणा यस्य तादृश आत्मा जितो वशीकृतो येन तस्य सदा दृश्यो भवेयम् एतेन मद्भक्तस्य योगिनोऽहं दृश्यो न तु भक्तिविहीनस्येति सूचितम् ॥ ५३ ॥

एवंविधो जीवन्मुक्तः प्रारब्धवशेन अनभिमानः भोगानश्नंस्तिष्ठेत् ततो मय्येव विलीयते मद्रूपो भवतीत्याह ध्यात्वैवमिति ॥ ५४ ॥

सर्वधर्मापेक्षया अयमेवधर्मो ज्यायानित्याह आदौ चेति भवं संसारं आदिमध्यावसानेषु सर्वथा भयशोकयोः कारणं विदित्वा तत्कारणीभूतं विधिवादैर्यजेतेत्यादिभिश्चोदितं बोधितं समस्तं कर्ममार्गं काम्यं हित्वा अखिलात्मनां जीवानां स्वरूपभूतं मामात्मानं परमेश्वरं भजेत् यथा धनस्यार्जनेनादौ दुःखं मध्ये पालनकृतं तत्र राजादिकृतभयमन्ते नाशे शोकपर्यवसायिदुःखमेवं पदार्थमात्रं द्रष्टव्यम् ॥ ५५ ।

आत्मन्यभेदेन विभावयन्निदं
भवत्यभेदेन मयात्मना तदा ।
यथा जलं वारिनिधौ यथा पयः
क्षीरे वियद्व्योम्न्यनिले यथानिलः ॥ ५६ ॥
इत्थं यदीक्षेत हि लोकसंस्थितो
जगन्मृषैवेति विभावयन्मुनिः ।
निराकृतत्वाच्छ्रुतियुक्तिमानतो
यथेन्दुभेदो दिशि दिग्भ्रमादयः ॥ ५७॥
यावन्न पश्येदखिलं मदात्मकं
तावन्मदाराधनतत्परो भवेत् ।

मय्यभेदभावनया नामरूपाविभागेन मद्रूप एव भवतीत्यत्र समर्थं सदृष्टान्तमाह आत्मनीति आत्मनि सर्वाधिष्ठाने मयि इदं स्वस्वरूपं जीवमभेदेन विभावयन् यदा तिष्ठतीति शेषः तदा मयात्मना परमेश्वरेणाभेदेन भवति अभिन्नो भवति तत्र दृष्टान्तः यथा समुद्रे प्रविष्टं नद्यादिजलं समुद्र एव यथा क्षीरे गवादिक्षीरे प्रक्षिप्तं पयः क्षीरमेव यथा व्योम्नि महाकाशे घटाद्यवच्छिन्नाकाशो घटादिभङ्गे यथा चर्मभस्त्रिकाद्यवच्छिन्नो वायुरनिलो महावायौ नामरूपाविभागेनैकीभवतीत्यर्थः ॥ ५६॥

एवमात्मतत्त्वज्ञस्य जगत्सत्यत्वभ्रमः स्वत एवापैतीत्याह इत्थमिति हि अयमयं लोकसंस्थितोऽपि जीवन्मुक्तिदशायां प्रारब्धवशाल्लोकव्यवहारं कुर्वन्नपि जगन्मृषैवेति विभावयन् सन् यदि यदा इत्थमीक्षते एकात्म्यं जानीयात् तदा निवृत्तजगत्सत्यत्वभ्रमो भवतीति शेषः तत्र हेतुः श्रुतियुक्तिमानतो निराकृतत्वात् 'अतोऽन्यदार्त्तम्' इत्यादिश्रुतिरूपात् जगन्मिथ्या दृश्यत्वात् शुक्तिरजतवदिति तदुपबृंहितानुमानरूपात् मानतः प्रमाणतो निराकृतत्वात् तत्र दृष्टान्तो यथेन्दुभेदः एकचन्द्रे द्विचन्द्रत्वभ्रमस्तदेकत्वज्ञानेन निवर्त्तते यथा च दिशि प्राच्यादौ अन्यदिक्त्वभ्रमः सोऽपि तत्त्वज्ञानान्निवर्त्तते एवं भ्रमतः पुरुषस्य दिक्षु भ्रमणभ्रमः निकटवर्त्तिवृक्षादौ च भ्रमणभ्रमस्तत्स्थैर्यज्ञानेन निवर्त्तते तद्वत् ॥ ५७ ॥

श्रद्धालुरत्यूर्जितभक्तिलक्षणो
यस्तस्य दृश्योऽहमहर्निशं हृदि ॥ ५८ ॥
रहस्यमेतच्छ्रुतिसारसंग्रहं
मया विनिश्चित्य तवोदितं प्रिय ! ।
यस्त्वेतदालोचयतीह बुद्धिमान्
स मुच्यते पातकराशिभिः क्षणात् ॥ ५९ ॥
भ्रातर्यदीदं परिदृश्यते जगत्
मायैव सर्वं परिहृत्य चेतसा ।
मद्भावनाभावितशुद्धमानसः
सुखी भवानन्दमयो निरामयः ॥ ६० ॥

ईदृशज्ञाने मदाराधनमेवोपाय इत्याह यावदिति अखिलं जगत् मदात्मकं मदधिष्ठानकं मद्विवर्त्तभूतं यावन्न पश्येत् तावत् मत्प्राप्तये श्रद्धालुः भगवदाराधनमेव ज्ञानप्रापकमित्यत्र दृढ़विश्वासवान् अतिशयेनोर्जिता वृद्धिमती भक्तिर्मयि भगवति पूज्यताबुद्धिरूपा चिह्नं लक्षणं यस्य सः तावन्मदाराधननिष्ठो भवेत् एवं हि तस्य हृदि अहं अहर्निशं दृश्यो भवामि 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति स्मृतेः ॥ ५८ ॥

स्वोक्तवचनजातस्य श्रुतिसमत्वं कथमेतदालोचनमपि मदाराधनप्रतिबन्धकदुरितध्वंसोपाय इत्याह रहस्यमिति श्रुतिसारसंग्रहत्वेनातिगोपनीयता अप्रामाण्यशङ्काकलङ्कराहित्यं सूचितमालोचयति सम्यग्विचारयति ॥ ५९ ॥

अथ भगवान् उक्तमेवार्थं संक्षेपेण दार्ढ्याय पुनराह भ्रातरिति यदीति यदित्यर्थे यदिदं जगत् परिदृश्यते तत्सर्वं मायैवेति ज्ञात्वेति शेषः चेतसा सर्वं परिहृत्य तत्रौदासीन्यं कृत्वा मद्भावनया मदैक्यभावनया भावितं शुद्धं मानसं यस्य तादृशस्तिष्ठ इत्युपदिश्याशिषं प्राह निरामयः सन् सुखी भव सर्वदुःखनिवृत्त्येति भावः ततोऽन्तरङ्गामन्यामाशिषमाह

य: सेवते मामगुणं गुणात्परं
हृदा कदा वा यदि वा गुणात्मकम् ।
सोऽहं स्वपादाञ्चितरेणुभि: स्पृशन्
पुनाति लोकत्रितयं यथा रवि: ॥ ६१ ॥
विज्ञानमेतदखिलं श्रुतिसारमेकं
वेदान्तवेद्यचरणेन मयैव गीतम् ।
य: श्रद्धया परिपठेद्गुरुभक्तियुक्तो
मद्रूपमेति यदि मद्वचनेषु भक्ति: ॥ ६२ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे पञ्चम: सर्ग: ।

इति रामगीता समाप्ता ।

आनन्दमयो भव तद्रूपो भवेत्यर्थ: यद्यपि पूर्वमानन्दरूपत्वमस्त्येव तथापि तत्प्राप्तिर्विस्मृतकण्ठस्थभूषणप्राप्तिवत् ॥ ६० ॥

एवं रीत्या स्वोपासकस्य लोकपावनत्वमाह य इति कदा वा यदा कदाचिदित्यर्थ: हृदा निर्मलेनान्त:करणेन यो मामगुणं प्राकृतसत्त्वरजस्तमोरूपगुणरहितम् सच्चिदानन्दत्वात् अत एव गुणादव्याकृतात्परं मायातीतं यदि वा यद्वेत्यर्थे गुणात्मकं सर्वज्ञत्वादिलोकोत्तरलावण्यादिगुणवानात्मा मूर्तिर्यस्य तं दृश्यमानं रूपं सेवते यद्विविधोपासक: अहं मद्रूप एव मामक इत्यर्थो वा 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय' इत्युक्ते: तादृशो भक्त: स्वपादकमलरेणुभि: संस्पृशन् लोकत्रयमपि पुनाति अज्ञानध्वान्तनिरसनेन पवित्रीकरोति यथा रवि: स्वकरैर्जगद्वितिमिरीकरोति तद्वत् ॥ ६१ ॥

इदानीमेतदुपन्यासार्थालोचनासमर्थस्य पाठमात्रतोऽपि महत्फलमाह विज्ञानं विज्ञानजनकं करणव्युत्पत्त्येति बोध्यम् वेदान्तैरुपनिषद्वाक्यैर्वेद्यं चरणं जगज्जन्मादिलक्षणं कर्म यस्य तेन ननु पाठमात्रादेतादृशमहत्फलप्राप्ति: कथमित्याशङ्क्य भवत्येवेति सूचयंस्तत्र हेतुमाह मद्वचनेषु भक्तिर्विश्वासो यदीत्यर्थात् हि वाक्यविश्वासस्यैव फलदायकत्वादिति भाव: ॥ ६२ ॥

इति पञ्चम: सर्ग: ।

षष्ठः सर्गः ।

श्रीमहादेव उवाच ।

एकदा मुनयः सर्वे यमुनातीरवासिनः ।
आजग्मू राघवं द्रष्टुं भयाल्लवणरक्षसः ॥ १ ॥
कृत्वाग्रे तु मुनिश्रेष्ठं भार्गवं च्यवनं द्विजाः ।
असङ्ख्याताः समायाता रामाद्भयकाङ्क्षिणः ॥ २ ॥
तान् पूजयित्वा परया भक्त्या रघुकुलोत्तमः ।
उवाच मधुरं वाक्यं हर्षयन् मुनिमण्डलम् ॥ ३ ॥
करवाणि मुनिश्रेष्ठाः ! किमागमनकारणम् ? ।
धन्योऽस्मि यदि यूयं मां प्रीत्या द्रष्टुमिहागताः ॥ ४ ॥
दुष्करं चापि यत्कार्य्यं भवतां तत्करोम्यहम् ।
आज्ञापयन्तु मां भृत्यं ब्राह्मणा दैवतं हि मे ॥ ५ ॥
तच्छ्रुत्वा सहसा हृष्टश्च्यवनो वाक्यमब्रवीत् ।
मधुनामा महादैत्यः पुरा कृतयुगे प्रभो ! ॥ ६ ॥
आसीदतीव धर्मात्मा देवब्राह्मणपूजकः ।
तस्य तुष्टो महादेवो ददौ शूलमनुत्तमम् ॥ ७ ॥
प्राह चानेन यं हंसि स तु भस्मीभविष्यति ।

एकदेति लवणरक्षसः लवणनाम्नो भयादित्यर्थः ॥ १ ॥

रामाल्लवणकृतभयनाशकाङ्क्षिणः ॥ २ । ३ ॥

हे मुनिश्रेष्ठाः अहं किं भवत्कार्य्यं करवाणि मत्समीपे भवदागमनस्य च किं कारणं यदि यत् प्रीत्या सर्वदुःखनिवर्तनक्षमत्वबुद्ध्या या प्रीति तया मां द्रष्टुमागतास्तत् धन्योऽस्मि ॥ ४—६ ॥

अनुत्तमं न विद्यते यस्मादुत्तममधिकं यस्मात्तत् ॥ ७—८ ॥

रावणस्यानुजा भार्या तस्य कुम्भीनसी सुता ॥ ८ ॥
तस्यां तु लवणो नाम राक्षसो भीमविक्रमः।
आसीद्दुरात्मा दुर्धर्षो देवब्राह्मणहिंसकः ॥ ९ ॥
पीड़ितास्तेन राजेन्द्र! वयं त्वां शरणं गताः।
तच्छ्रुत्वा राघवोऽप्याह मा भैर्ष्टा मुनिपुङ्गवाः! ॥ १० ॥
लवणं नाशयिष्यामि गच्छन्तु विगतज्वराः।
इत्युक्त्वा प्राह रामोऽपि भ्रातॄन् को वा हनिष्यति ॥ ११ ॥
लवणं राक्षसं दद्याद्ब्राह्मणेभ्योऽभयं महत्।
तच्छ्रुत्वा प्राञ्जलिः प्राह भरतो राघवाय वै ॥ १२ ॥
अहमेव हनिष्यामि देवाज्ञापय मां प्रभो!।
ततो रामं नमस्कृत्य शत्रुघ्नो वाक्यमब्रवीत् ॥ १३ ॥
लक्ष्मणेन महत्कार्यं कृतं राघव! संयुगे।
नन्दिग्रामे महाबुद्धिर्भरतो दुःखमन्वभूत् ॥ १४ ॥
अहमेव गमिष्यामि लवणस्य वधाय च।
त्वत्प्रसादाद्रघुश्रेष्ठ! हन्म्यां तं राक्षसं युधि ॥ १५ ॥
तच्छ्रुत्वा स्वाङ्कमारोप्य शत्रुघ्नं शत्रुसूदनः।
प्राहायेवाभिषेक्ष्यामि मधुराराज्यकारणात् ॥ १६ ॥

यतो दुरात्मा अतः सर्वैर्दुर्धर्षो दुःसहः ॥ ९ ॥

वो युष्माकं मा भीः भवत्विति शेषः ॥ १० ॥

विगतज्वराः गतदुःखाः ॥ ११ ॥

लवणराक्षसमभिलक्ष्य को वा हनिष्यतीत्यनेनान्वयः को वा ब्राह्मणेभ्यो अभयं दद्यात् दास्यतीत्यर्थः ॥ १२—१४ ॥

वधाय च वधाय त्वित्यर्थः हन्म्यां हनिष्यामीत्यर्थः ॥ १५ । १६ ॥

आनाय्य च सुसम्भारान् स्नानार्थेनाभिषेचने।
अनिच्छन्तमपि स्नेहादभिषिक्तमकारयत् ॥ १७ ॥
दत्त्वा तस्मै शरं दिव्यं रामः शत्रुघ्नमब्रवीत्।
अनेन जहि बाणेन लवणं लोककण्टकम् ॥ १८ ॥
स तु संपूज्य तच्छूलं गेहे गच्छति काननम्।
भक्षणार्थं तु जन्तूनां नाना प्राणिवधाय च ॥ १९ ॥
स तु नायाति सदनं यावद्वनचरो भवेत्।
तावदेव पुरद्वारि तिष्ठ त्वं धृतकार्मुकः ॥ २० ॥
योत्स्यते स त्वया क्रुद्धस्तदा वध्यो भविष्यति।
तं हत्वा लवणं क्रूरं तद्वनं मधुसंज्ञितम् ॥ २१ ॥
निवेश्य नगरं तत्र तिष्ठ त्वं मेऽनुशासनात्।
अश्वानां पञ्चसाहस्रं रथानां च तदर्धकम् ॥ २२ ॥
गजानां षट्शतानीह पत्तीनामयुतत्रयम्।
आगमिष्यति पश्चात्त्वमग्रे साधय राक्षसम् ॥ २३ ॥
इत्युक्त्वा मूर्ध्न्यवघ्राय प्रेषयामास राघवः।
शत्रुघ्नं मुनिभिः सार्धमाशीर्भिरभिनन्द्य च ॥ २४ ॥
शत्रुघ्नोऽपि तथा चक्रे यथा रामेण चोदितः।

अभिषेचनते निमित्तं विषयसम्पत्त्यामवमर्षः स्नानीति अकारयत् वसिष्ठादिभिरिति शेषः ॥ १७ । १८ ॥

गेहे संपूज्य स्थापयित्वा वनं गच्छतीत्यर्थः ॥ १९ ॥

स तु यावद्वनचरो भवेत् भवति सदनं नायाति तावदेवेत्यन्वयः ॥२०

क्रुद्धः सन् योत्स्यते शूलं विनैवेति शेषः ॥ २१ । २२ ॥

त्वमग्रे प्रथममेक एव राक्षसं साधय नाशय पश्चाद्भवोत्तरं सेना त्वदुपनीपमागमिष्यतीत्यर्थः ॥ २३–२५ ॥

हत्वा मधुसुतं युद्धे मथुरामकरोत् पुरीम् ॥ २५ ॥
स्फीतां जनपदां चक्रे मथुरां दानमानतः।
सीतापि सुषुवे पुत्रौ द्वौ वाल्मीकेरथाश्रमे ॥ २६ ॥
मुनिस्तयोर्नाम चक्रे कुशो ज्येष्ठोऽनुजो लवः।
क्रमेण विद्यासम्पन्नौ सीतापुत्रौ बभूवतुः ॥ २७ ॥
उपनीतौ च मुनिना वेदाध्ययनतत्परौ।
कृत्स्नं रामायणं प्राह काव्यं बालकयोर्मुनिः ॥ २८ ॥
शङ्करेण पुरा प्रोक्तं पार्वत्यै पुरहारिणा।
वेदोपबृंहणार्थाय तावदग्राहयत् प्रभुः ॥ २९ ॥
कुमारौ स्वरसम्पन्नौ सुन्दरावश्विनाविव।
तन्त्रीतालसमायुक्तौ गायन्तौ चेरतुर्वने ॥ ३० ॥
तत्र तत्र मुनीनां तौ समाजे सुररूपिणौ।
गायन्तावभितो दृष्ट्वा विस्मिता मुनयोऽब्रुवन् ॥ ३१ ॥
गन्धर्वेष्विह किन्नरेषु भुवि वा देवेषु देवालये
पातालेष्वथ वा चतुर्मुखसदने लोकेषु सर्वेषु च।
अस्माभिश्चिरजीविभिश्चिरतरं दृष्ट्वा दिशः सर्वतो

स्फीतां समृद्धां जनपदां जनवासस्थानभूतां पूर्वं तु वनत्वात् तथा ॥ २६ ॥ २७ ॥

क्रममेवाह उपनीतौ चेति ॥ २८ ॥

यत्पुरा शङ्करेण पार्वत्यै प्रोक्तं रामायणं तद्वेदोपबृंहणार्थाय वेदतात्पर्यार्थज्ञाननिमित्तमग्राहयत् ग्राहयतोऽर्थतश्च बोधितवानित्यर्थः॥२९

तन्त्रीशब्दतालाभ्यां समायुक्तौ सर्वैरस्येव युक्तौ यथा तयोर्वैषम्यं न भवति तथा गायन्तौ चेरतुः तन्त्रीलयेति पाठे तन्त्र्यालयौ मूर्च्छना तत्र समायुक्तौ अत्यन्तनिपुणौ ॥ ३० । ३१ ॥

नाम्नायीदृग्गीतवाद्यगरिमा नादर्शि नाश्रावि च ॥ २२ ॥
एवं स्तुवद्भिरखिलैर्मुनिभिः प्रतिवासरम् ।
आसाते सुखमेकान्ते वाल्मीकेराश्रमे चिरम् ॥ २३ ॥
अथ रामोऽश्वमेधादींश्चकार बहुदक्षिणान् ।
यज्ञान् स्वर्णमयीं सीतां विधाय विपुलद्युतिः ॥ २४ ॥
तस्मिन्विताने ऋषयः सर्वे राजर्षयस्तथा ।
ब्राह्मणाः क्षत्रिया वैश्याः समाजग्मुर्दिदृक्षवः ॥ २५ ॥
वाल्मीकिरपि संगृह्य गायन्तौ तौ कुशीलवौ ।
जगाम ऋषिवाटस्य समीपं मुनिपुङ्गवः ॥ २६ ॥
तत्रैकान्ते स्थितं शान्तं समाधिविरमे मुनिम् ।
कुशः पप्रच्छ वाल्मीकिं ज्ञानशास्त्रं कथान्तरे ॥ २७ ॥
भगवन् ! श्रोतुमिच्छामि सङ्क्षेपाद्भवतोऽखिलम् ।
देहिनः संसृतिर्बन्धः कथमुत्पद्यते दृढः ? ॥ २८ ॥
कथं विमुच्यते देही दृढबन्धाद्भवाभिधात् ? ।
वक्तुमर्हसि सर्वज्ञ ! मह्यं शिष्याय ते मुने ! ॥ २९ ॥

भूलोके गन्धर्वकिन्नरमध्ये नेदृशः देवालये स्वर्गे देवेषु न पाताले नागेषु न अथवा ब्रह्मलोकेऽपि नेदृशो गायकः नाम्नायीत्यस्यैव विवरणं नादर्शि साक्षाद्दीदृशं गानं स्वकर्णाभ्यां न श्रुतमित्यर्थः नाश्रावि कर्णोपकर्णिकायामप्येकदेशे ईदृशो विशिष्टगाताऽस्तीति न श्रुतमपीत्यर्थः ॥ २२ ॥

स्तुवद्भिर्मुनिभिः सहेति शेषः ॥ २३ ॥ २४ ॥

विताने यज्ञसंसदि दिदृक्षवः यज्ञमिति शेषः संगृह्य गृहीत्वा ऋषिवाटस्य ऋषिवाटस्थानस्य ॥ २५ ॥ २६ ॥

ज्ञानशास्त्रं तत्त्वज्ञानकारणं शास्त्रम् इतःपरं मुनिवियोगकालस्य सन्निहितत्वादिदं गुह्यं तत्त्वं पप्रच्छेति भावः ॥ २७ ॥

भवतः सकाशादिति शेषः संसृतिर्बन्धः संसाररूपो बन्धः ॥ २८ ॥ २९ ॥

वाल्मीकिरुवाच ।

शृणु वक्ष्यामि ते सर्वं सङ्क्षेपाद्बन्धमोक्षयोः ।
स्वरूपं साधनं चापि मत्तः श्रुत्वा यथोदितम् ॥ ४० ॥
तथैवाचर भद्रं ते जीवन्मुक्तो भविष्यसि ।
देह एव महागेहमदेहस्य चिदात्मनः ॥ ४१ ॥
तस्याहङ्कार एवास्मिन्मन्त्री तेनैव कल्पितः ।
देहगेहाभिमानं स्वं समारोप्य चिदात्मनि ॥ ४२ ॥
तेन तादात्म्यमापन्नः स्वचेष्टितमशेषतः ।
विदधाति चिदानन्दे तद्भासितवपुः स्वयम् ॥ ४३ ॥
तेन संकल्पितो देही सङ्कल्पनिगडावृतः ।
पुत्रदारगृहादीनि सङ्कल्पयति चानिशम् ॥ ४४ ॥

तच्च मत्तः श्रुत्वा यथा मयोदितं कथितं भविष्यति ॥ ४० ॥

तथैवाचरेत्यन्वयः अदेहस्य वस्तुतो देहसम्बन्धहीनस्यापि देहो महागेहमेव यथा गृहस्वामिना गृहस्य न तादात्म्यं तथास्य चिदात्मनो देहेनापि न तदिति भावः ॥ ४१ ॥

तस्य चिदात्मनोऽस्मिन् देहे अहङ्कार एव मन्त्री स चाहङ्कारस्तेनैव कल्पितः तत्सान्निध्येन मायायास्तद्रूपः परिणाम इत्यतस्तेन कल्पित इत्युक्तं सोऽहङ्कारः स्वं स्वीयं देहरूपगेहविषयमहङ्कारं ममेत्याकाराभिमानं चिदात्मनि आरोप्य ॥ ४२ ॥

तेन चिदात्मना तादात्म्यमभेदमापन्नो यतः अतः स्वचेष्टितं चिदानन्दे विदधाति ननु जडस्याहङ्कारस्य कथं चेष्टितमत आह तद्भासितवपुस्तत्सम्पर्कादेव तादृशसामर्थ्यवानयं जात इत्यर्थः ॥ ४३ ॥

तेनाहङ्कारेण सङ्कल्पितोऽयमेव स संकल्पान् करोत्विति सङ्कल्पाधिष्ठीकृतः यद्वा स्वीयसङ्कल्पेनैव तद्वान् कृतोऽहङ्कारसन्निकर्षेण तादात्म्यापन्नत्वात् यथा भार्याविशिष्ट एव गृहस्थो गृहस्थस्य भार्येति च व्यव-

सङ्कल्पयन् स्वयं देही परिशोचति सर्वदा ।
त्रयस्तस्याहमो देहा अधमोत्तममध्यमाः ॥ ४५ ॥
तमःसत्त्वरजःसंज्ञा जगतः कारणं स्थितेः ।
तमोरूपाद्धि संकल्पान्नित्यं तामसचेष्टया ॥ ४६ ॥
अत्यन्तं तामसो भूत्वा कृमिकीटत्वमाप्नुयात् ।
सत्त्वरूपो हि सङ्कल्पो धर्मज्ञानपरायणः ॥ ४७ ॥
अदूरमोक्षसाम्राज्यः सुखरूपो हि तिष्ठति ।
रजोरूपो हि सङ्कल्पो लोके स व्यवहारवान् ॥ ४८ ॥
परितिष्ठति संसारे पुत्रदारानुरञ्जितः ।
त्रिविधं तु परित्यज्य रूपमेतन्महामते ! ॥ ४९ ॥
सङ्कल्पः परमाप्नोति पदमात्मपरिक्षये ।

हारो तद्द्वयं व्यवहारो बोध्यः तदीयसङ्कल्परूपनिगडेनावृतो बद्धः सङ्कल्पयति कामयते ॥ ४४ ॥

तानि कामयन् तद्लाभे लब्धनाशे च शोचति त्रयः तमःसत्त्वरजोरूपाः ॥ ४५ ॥

तदेवाह तम इत्यादि अतएव जगतः स्थितेः कारणं तेषां कार्यविशेषानाह तमोरूपादिति तमोरूपात् तमोगुणप्राधान्येन कृतात्सङ्कल्पादित्यर्थः वृत्तिवृत्तिमतोरभेदात् तमोरूपादित्युक्तकारणानुरूपत्वात् कार्यस्य तत्कृतचेष्टायास्तामसत्वम् ॥ ४६ । ४७ ॥

मोक्षोऽप्यनयैव वृत्त्या प्राप्य इत्याहादूरेति अतएव स पुरुषः सुखरूपस्तिष्ठति हि प्रसिद्धं यस्य रजोरूपः सङ्कल्पः स लोके व्यवहारवान् ॥ ४८ ॥

ततः व्यवहारयुतः पुत्रदारानुरञ्जितः संसारे राजससङ्कल्पकृततत्तत्कर्मवशात्तिष्ठति यस्य सङ्कल्प एतत्पूर्वोक्तं त्रिविधमपि रूपं परित्यज्य शाम्यतीति शेषः ॥ ४९ ॥

स परं पदमाप्नोति सत्त्वरूपसङ्कल्पस्य हि क्रमेण सर्वसङ्कल्पनाशद्वारा

दृष्टीः सर्वाः परित्यज्य नियम्य मनसा मनः ॥ ५० ॥
सबाह्याभ्यन्तरार्थस्य सङ्कल्पस्य क्षयं कुरु ।
यदि वर्षसहस्राणि तपश्चरसि दारुणम् ॥ ५१ ॥
पातालस्थस्य भूस्थस्य स्वर्गस्थस्यापि तेऽनघ ! ।
नान्यः कश्चिदुपायोऽस्ति सङ्कल्पोपशमादृते ॥ ५२ ॥
अनाबाधेऽविकारे स्वे सुखे परमपावने ।
सङ्कल्पोपशमे यत्नं पौरुषेण परं कुरु ॥ ५३ ॥
सङ्कल्पतन्तौ निखिला भावः प्रोक्ताः किलानघ ! ।
छिन्ने तन्तौ न जानीमः क्व यान्ति विभवाः पराः ॥ ५४ ॥
निःसङ्कल्पो यथाप्राप्तव्यवहारपरो भव ।
क्षये सङ्कल्पजालस्य जीवो ब्रह्मत्वमाप्नुयात् ॥ ५५ ॥

दूरमोजत्वं प्रागुक्तं बोध्यं आत्मचरित्रे आत्मा सङ्कल्पः मनस्त्वं दृष्टीः सर्वेन्द्रियज्ञानानि परित्यज्य मनसैव मनो विनियम्य विषयेभ्यो निवार्य ॥ ५० ॥

बाह्येन्द्रियसहितो बाह्येन्द्रियविषयसहितो य आभ्यन्तरेन्द्रियविषयोऽर्थस्तस्य तद्विषयस्य सङ्कल्पस्य क्षयं कुरु सङ्कल्पं त्यजेत्यर्थः अन्योपायेन न सर्वथा सुखप्राप्तिरित्याह यदीति ॥ ५१ ॥

तादृशतपःपूर्वकं पातालाद्यन्यतमलोकस्थस्यापि तव सङ्कल्पोपशमादृते तं विना ॥ ५२ ॥

अनाबाधे दुःखासंभिन्ने अविकारे विषयसम्बन्धं विनैव प्राप्ये परमपावने स्वात्मरूपे सुखे तत्प्राप्तिनिमित्तं न कश्चिदुपायोऽस्तीत्यर्थस्तस्मात्तदुपशमे यत्नं कुरु ॥ ५३ ॥

सङ्कल्पस्यैवाधारत्वात्तन्नाशे एव सर्वविषयनिवृत्तिरित्याह सङ्कल्पतन्तावित्ति विभवाः विशिष्टो भवः संसारो येभ्यस्तादृशास्ते पराभावास्ते क्व यान्तीति न जानीमः सर्वथा नश्यन्त्येवेति भावः ॥ ५४ ॥

तस्मान्निःसङ्कल्पो त्यक्तेच्छो यथाप्राप्तं व्यवहारं कुर्वित्यर्थः सङ्कल्पक्षयफलमाह क्षयेति ॥ ५५ ॥

अधिगतपरमार्थतामुपेत्य
प्रसभमपास्य विकल्पजालमुच्चैः ।
अधिगमय पदं तदद्वितीयं
विततसुखाय सुषुप्तचित्तवृत्तिः ॥ ५६ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे
पञ्चः सर्गः ।

प्रसभं हठेन विकल्पजालं त्यक्त्वा अधिगतः परमार्थो ब्रह्मतत्त्वं येन तद्भावमुपेत्य प्राप्य तदद्वितीयं पदं अधिगमय प्राप्नुहि विततसुखायानुच्छेद्यसुखाय तदर्थं निदिध्यासनमुपदिशति सुषुप्तिकालिका चित्तवृत्तिर्यस्य तादृशो भव सकलविषयरहितचित्तवृत्तिरेव ब्रह्माकारचित्तवृत्तिरिति भावः ॥ ५६ ॥

इति श्रीमत्सकलराजधिपदुर्द्धरधरुमर्येत्यादिवि० श्रीरामवर्मणः
कृतौ श्रीमदध्यात्मरामायणे सेतौ उत्तरकाण्डे
षष्ठः सर्गः ।

---

सप्तमः सर्गः ।

वाल्मीकिना बोधितोऽसौ कुशः सद्यो गतभ्रमः ।
अन्तर्युक्तो बहिः सर्वमनुकुर्वंश्चचार सः ॥ १ ॥
वाल्मीकिरपि तौ प्राह सीतापुत्रौ महाधियौ ।
तत्र तत्र च गायन्तौ पुरे वीथिषु सर्वशः ॥ २ ॥
रामस्याग्रे प्रगायेतां शुश्रूषुर्यदि राघवः ।
न ग्राह्यं वै युवाभ्यां तद्यदि किञ्चित्प्रदास्यति ॥ ३ ॥
इति तौ चोदितौ तत्र गायमानौ विचेरतुः ।
यथोक्तं ऋषिणा पूर्वं तत्र तत्राभ्यगायताम् ॥ ४ ॥
तां स शुश्राव काकुत्स्थः पूर्वचर्यां ततस्ततः ।
अपूर्वपाठजातिं च गेयेन समभिप्लुताम् ॥ ५ ॥
बालयो राघवः श्रुत्वा कौतूहलमुपेयिवान् ।
अथ कर्मान्तरे राजा समाहूय महामुनीन् ॥ ६ ॥
राज्ञश्चैव नरव्याघ्रः पण्डितांश्चैव नैगमान् ।
पौराणिकाञ्छब्दविदो ये च वृद्धा द्विजातयः ॥ ७ ॥
एतान् सर्वान् समाहूय गायकौ संप्रवेशयत् ।

वाल्मीकिनेति सद्गुरूपदेशात् कुशस्योत्तमाधिकारित्वाच्च तत्काल-मेव निदिध्यासनात्तत्साधनसम्पदिति भावः यत्करोति तदनुकुर्वन्निव तत्त्वा-स्याभावादिति भावः ॥ १ । २ ॥

यदि किञ्चिद्राघवो धनं दास्यति तन्न ग्राह्यम् ॥ ३ ॥

यथोक्तं यथाशिक्षितम् ॥ ४ ॥

अपूर्वपाठजातिं अपूर्वपठनरीतिं गेयेन गानेन व्याप्ताम् ॥ ५ । ६ ॥

शब्दविदः व्याकरणविदः ॥ ७ ॥

ते सर्वे हृष्टमनसो राजानो ब्राह्मणादयः ॥ ८ ॥
रामं तौ दारकौ दृष्ट्वा विस्मिता ह्यनिमेषणाः।
अवोचन् सर्व एवैते परस्परमथागताः(१) ॥ ९ ॥
इमौ रामस्य सदृशौ बिम्बाद्बिम्बमिवोदितौ।
जटिलौ यदि न स्यातां न च वल्कलधारिणौ ॥ १० ॥
विशेषं नाधिगच्छामो राघवस्यानयोस्तदा।
एवं संवदतां तेषां विस्मितानां परस्परम् ॥ ११ ॥
उपचक्रमतुर्गातुं तावुभौ मुनिदारकौ।
ततः प्रवृत्तं मधुरं गान्धर्वमतिमानुषम् ॥ १२ ॥
श्रुत्वा तन्मधुरं गीतमपराह्णे रघूत्तमः।
उवाच भरतं चाभ्यां दीयतामयुतं वसु ॥ १३ ॥
दीयमानं सुवर्णन्तु न तज्जगृहतुस्तदा।
किमनेन सुवर्णेन राजन्नौ वन्यभोजिनौ? ॥ १४ ॥
इति सन्त्यज्य संदत्तं जग्मतुर्मुनिसन्निधिम्।
एवं श्रुत्वा तु चरितं रामः स्वस्यैव विस्मितः ॥ १५ ॥
ज्ञात्वा सीताकुमारौ तौ शत्रुघ्नं चेदमब्रवीत्।
हनूमन्तं सुषेणञ्च बिभीषणमथाङ्गदम् ॥ १६ ॥

संप्रवेशयत् अद्भाव आर्षः ॥ ८ ॥
रामं दारकौ च दृष्ट्वा विस्मिताः सन्तो अनिमेषणा अपश्यन्निति शेषः ॥ ९ ॥
बिम्बं प्रतिबिम्बम् ॥ १० । ११ ॥
अतिमानुषं मनुष्यलोकीयगानमतिक्रान्तम् ॥ १२ । १३ ॥
नौ आवां वन्यभोजिनौ स्व इति शेषः ॥ १४–१७ ॥

(१) परस्परमथादृताः इति वा पाठः।

भगवन्तं महात्मानं वाल्मीकिं मुनिसत्तमम् ।
आनयध्वं मुनिवरं ससीतं देवसम्मितम् ॥ १७ ॥
अस्यास्तु पर्षदो मध्ये प्रत्ययं जनकात्मजा ।
करोतु शपथं सर्व्वे जानन्तु गतकल्मषाम् ॥ १८ ॥
सीतां तद्वचनं श्रुत्वा गताः सर्वेऽतिविस्मिताः
ऊचुर्यथोक्तं रामेण वाल्मीकिं रामपार्षदाः ॥ १९ ॥
रामस्य हृद्गतं सर्वं ज्ञात्वा वाल्मीकिरब्रवीत् ।
श्वः करिष्यति वै सीता शपथं जनसंसदि ॥२० ॥
योषितां परमं दैवं पतिरेव न संशयः ।
तच्छ्रुत्वा सहसा गत्वा सर्वे प्रोचुर्मुनेर्वचः ॥ २१ ॥
राघवस्यापि रामोऽपि श्रुत्वा मुनिवचस्तथा ।
राजानो ! मुनयः ! सर्वे शृणुध्वमिति चाब्रवीत् ॥ २२ ॥
सीतायाः शपथं लोका विजानन्तु शुभाशुभम् ।
इत्युक्ता राघवेणाथ लोकाः सर्वे दिदृक्षवः ॥ २३ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महर्षयः ।
वानराश्च समाजग्मुः कौतूहलसमन्विताः ॥ २४ ॥
ततो मुनिवरस्तूर्णं ससीतः समुपागमत् ।
अग्रतश्चर्षिं कृत्वा याम्ती किञ्चिदवाङ्मुखी ॥ २५ ॥

प्रत्ययं सर्वजनस्य शुद्धत्वनिश्चयोत्पादकं शपथमित्यन्वयः सीतामिति पूर्वोक्तवि ॥ १८—२१ ॥

राघवस्यापि सविधं तद्वच ऊचुरिति अन्वयः राजानो मुनय इति सम्बोधने ॥ २२ ॥

सीतायाः शपथं दृष्ट्वा तस्याः शुभाशुभं धर्माधर्मरूपं विजानन्तु, निर्णयन्तु ॥ २३—२५ ॥

कृताञ्जलिर्बाष्पकण्ठा सीता यत्र विवेश तम् ।
दृष्ट्वा लक्ष्मीमिवायान्तीं ब्रह्माणमनुयायिनीम् ॥ २६ ॥
वाल्मीकेः पृष्ठतः सीतां(१) साधुवादो महानभूत् ।
तदा मध्ये जनौघस्य प्रविश्य मुनिपुङ्गवः ॥ २७ ॥
सीता सहायो वाल्मीकिरिति प्राह च राघवम् ।
इयं दाशरथे ! सीता सुव्रता धर्मचारिणी ॥ २८ ॥
अपापा ते पुरा त्यक्ता ममाश्रमसमीपतः ।
लोकापवादभीतेन त्वया राम ! महावने ॥ २९ ॥
प्रत्ययं दास्यते सीता तदनुज्ञातुमर्हसि ।
इमौ तु सीतातनयौ इमौ यमलजातकौ ॥ ३० ॥
सुतौ तु तव दुर्धर्षौ तथ्यमेतद्ब्रवीमि ते ।
प्रचेतसोऽहं दशमः पुत्रो रघुकुलोद्वह ! ॥ ३१ ॥
अनृतं न स्मराम्युक्तं यथेमौ तव पुत्रकौ ।
बहून् वर्षगणान् सम्यक् तपश्चर्या मया कृता ॥ ३२ ॥
नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली ।

बाष्पकण्ठा सैव ॥ २६—२८ ॥

अपापापि लोकापवादभीत्या त्यक्ता ॥ २९ ॥

सा सीता प्रत्ययं विश्वासजनकं शपथं तव स्थाने करिष्यतीति करुण-रसाक्रान्तचित्ततया इमावितिपदमौनरुक्तं न दोषाय ॥ ३० ॥

तत्रादौ भगवान् वाल्मीकिः स्वधर्मशपथैः सीताया अदुष्टत्वमापयति प्रचेतस इत्यादिना ॥ ३१ ॥

यथाद्य यावदनृतमुक्तं न स्मरामि तथा इमौ तव पुत्रकाविति वाक्यमपि सत्यमेवेत्यर्थः ॥ ३२ । ३३ ॥

---

(१) पृष्ठतः कृत्वा इति पाठान्तरम् ।

वाल्मीकिनैवमुक्तस्तु राघवः प्रत्यभाषत ॥ ३३ ॥
एवमेतन्महाप्राज्ञ! यथा वदसि सुव्रत! ।
प्रत्ययो जनितो मह्यं तव वाक्यैरकिल्बिषैः ॥ ३४ ॥
लङ्कायामपि दत्तो मे वैदेह्या प्रत्ययो महान् ।
देवानां पुरतस्तेन मन्दिरे संप्रवेशिता ॥ ३५ ॥
सेयं लोकभयाद्ब्रह्मन्! अपापापि सती पुरा ।
सीता मया परित्यक्ता भवान् तत् क्षन्तुमर्हसि ॥ ३६ ॥
ममैव जातौ जानामि पुत्रावेतौ कुशीलवौ ।
शुद्धायां जगतीमध्ये सीतायां प्रीतिरस्तु मे ॥ ३७ ॥
देवाः सर्वे परिज्ञाय रामाभिप्रायमुत्सुकाः ।
ब्रह्माणमग्रतः कृत्वा समाजग्मुः सहस्रशः ॥ ३८ ॥
प्रजाः समागमन् हृष्टाः सीता कौषेयवासिनी ।
उदङ्मुखी ह्यधोदृष्टिः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ३९ ॥
रामादन्यं यथाहं वै मनसापि न चिन्तये ।
तथा मे धरणी देवी विवरं दातुमर्हति ॥ ४० ॥
तथा शपन्त्याः सीतायाः प्रादुरासीन्महाद्भुतम् ।
भूतलाद्दिव्यमत्यर्थं सिंहासनमनुत्तमम् ॥ ४१ ॥

प्रत्ययो विश्वासः ॥ ३४ ॥

महान् प्रत्ययजनकः शपथो अग्निप्रवेशरूपः ॥ ३५ ॥

लोकभयात् लोककृतदुर्वादभयात् ॥ ३६ ॥

जगतीमध्ये तद्वर्तिलोकमध्ये शुद्धायां शपथेन सर्वलोकज्ञातशुद्धतायाम् ॥ ३७—३८ ॥

विवरं प्रवेशाय छिद्ररूपं मार्गम् ॥ ४० ॥

महाद्भुतमत्याश्चर्यं दिव्यं सिंहासनं प्रादुरासीत् ॥ ४१ ॥

नागेन्द्रैर्ध्रियमाणं च दिव्यदेहैरविप्रभम् ।
भूदेवी जानकीं दोर्भ्यां गृहीत्वा स्नेहसंयुता ॥ ४२ ॥
स्वागतं तामुवाचैनां आसने सन्न्यवेशयत् ।
सिंहासनस्थां वैदेहीं प्रविशन्तीं रसातलम् ॥ ४३ ॥
निरन्तरा पुष्पवृष्टिर्दिव्या सीतामवाकिरत् ।
साधुवादश्च सुमहान् देवानां परमाद्भुतः ॥ ४४ ॥
ऊचुश्च बहुधा वाचो ह्यन्तरीक्षगताः सुराः ।
अन्तरीक्षे च भूमौ च सर्वे स्थावरजङ्गमाः ॥ ४५ ॥
वानराश्च महाकायाः सीताशपथकारणात् ।
केचिच्चिन्तापरास्तस्थुः केचिद्ध्यानपरायणाः ॥ ४६ ॥
केचिद्रामं निरीक्षन्तः केचित्सीतामचेतसः ।
मुहूर्त्तमात्रं तत्सर्वं तूष्णीम्भूतमचेतनम् ॥ ४७ ॥
सीताप्रवेशनं दृष्ट्वा सर्वं सम्मोहितं जगत् ।
रामस्तु सर्वं ज्ञात्वैव भविष्यत्कार्यगौरवम् ॥ ४८ ॥

सर्वाश्चर्यत्वदिव्यत्वोपपादकं रविप्रभमिति ॥ ४२ ॥

दोर्भ्यां गृहीत्वा स्वागतमिति तामुवाचाथैनामासने संन्यवेशयत् ॥ ४३ ॥

साधुवादश्चासीदिति शेषः ॥ ४४ ॥

बहुधा वाचः बहुप्रकारवाचः सीते ! मैवं कर्तुमर्हा इति राघवो गृहीतशपथोऽपि पुनः शपथग्रहणे प्रवृत्त इत्येवं बहुप्रकारवाचः ॥ ४५ ॥

सीताशपथकारणात् बहुधा वाच ऊचुरित्यनुकर्षः तस्थुश्चिन्तापराः क्व सीता गमिष्यतीत्यादिचिन्तायुक्ताः ध्यानपरायणाः भूप्रविष्टसीतारूपस्य ध्यानपरायणाः ॥ ४६ ॥

रामं निरीक्षन्तः किं करिष्यतीत्याद्येवम् सीतां निरीक्षन्तः कथं गच्छत्येवेत्याद्येवंप्रकारेण अचेतनमासीदिति शेषः ॥ ४७ ॥

भविष्यतः कार्यस्य गौरवं निश्चयं ज्ञात्वैव ज्ञात्वापि ॥ ४८ ॥

अजानन्निव दुःखेन शुशोच जनकात्मजाम्।
अगस्त्याद्यैर्ऋषिभिः सार्द्धं बोधितो रघुनन्दनः॥ ४९॥
प्रतिबुद्ध इव स्वप्नाद्यकारानन्तराः क्रियाः।
विससर्ज ऋषीन् सर्वान् ऋत्विजो ये समागताः॥ ५०॥
तान् सर्वान् धनरत्नाद्यैस्तोषयामास भूरिशः।
उपादाय कुमारौ तौ अयोध्यामगमत्प्रभुः॥ ५१॥
तदादिनिस्पृहो रामः सर्वभोगेषु सर्वदा।
आत्मचिन्तापरो नित्यमेकान्ते समुपस्थितः॥ ५२॥
एकान्ते ध्याननिरते एकदा राघवे सति।
ज्ञात्वा नारायणं साक्षात्कौशल्या प्रियवादिनी॥ ५३॥
भक्त्यागत्य प्रसन्नं तं प्रणता प्राह हृष्टधीः।
राम! त्वं जगतामादिरादिमध्यान्तवर्जितः॥ ५४॥
परमात्मा परानन्दः पूर्णः पुरुष ईश्वरः।
जातोऽसि मे गर्भगृहे मम पुण्यातिरेकतः॥ ५५॥

अजानन्निव शुशोच लोकव्यवहारानुसारेणेत्यर्थः बोधितः भाविनो दुष्परिहारत्वादिकथाभिः कृतदुःखापनयनः॥ ४९॥

ऋत्विजो ये इत्यत्र तान् विससर्जेत्यनुकर्षः॥ ५०॥

तान् ऋत्विक्प्रभृतीन्॥ ५१॥

एकान्ते समुपस्थितः तत्रैव स्थित आसीत्॥ ५२॥

ध्याननिरते राघवे सतीत्यर्थः रामं तच्चरित्रैर्विभाव्यैव तत्स्वरूपमाद्यनारायणं ज्ञात्वा॥ ५३॥

प्रणता नारायणोऽयमिति बुद्ध्या आदिः कारणं स्वयं चोत्पत्तिनाशरहितस्तदभावादेव च मध्यवर्जितः॥ ५४॥

सर्वेषां परम उत्कृष्ट आत्मा अन्तर्यामिविधया प्रेरकत्वात् परानन्दः हिरण्यगर्भानन्दादपि उत्कृष्टो य आनन्दस्तद्रूपः पूर्णः पुरुषः

अवसाने ममाप्यद्य समयोऽभूद्रघूत्तम ! ।
नाद्याप्यबोधजः कृत्स्नो भवबन्धो निवर्त्तते ॥ ५६ ॥
इदानीमपि मे ज्ञानं भवबन्धनिवर्त्तकम् ।
यथा सङ्क्षेपतो भूयात्तथा बोधय मां विभो ! ॥ ५७ ॥
निर्वेदवादिनीमेवं मातरं मातृवत्सलः ।
दयालुः प्राह धर्मात्मा जराजर्जरितां शुभाम् ॥ ५८ ॥
मार्गास्त्रयो मया प्रोक्ताः पुरा मोक्षाप्तिसाधकाः ।
कर्मयोगो ज्ञानयोगो भक्तियोगश्च शाश्वतः ॥ ५९ ॥
भक्तिर्विभिद्यते मातस्त्रिविधा गुणभेदतः ।
स्वभावो यस्य यस्तेन तस्य भक्तिर्विभिद्यते ॥ ६० ॥

प्राप्तसर्वकामत्वात् पूर्णः अतएवेश्वरः सर्वनियन्ता ईदृशोऽपि त्वं मम गर्भरूपे स्थले मदीयपुण्यार्धिक्याज्जातो जात इव ॥ ५५ ॥

अवसाने त्वय्या अवसानकाले अतिवाईक्ये इत्यर्थः त्वदवतारसमाप्तिकाले च समयः प्रश्नावसरः अबोधजः अज्ञानजः कृत्स्नो न निवर्त्तते सर्वदा त्वत्सङ्गात् किञ्चिन्निवृत्तोऽपि सर्वथा न निवर्तत इति भावः ॥ ५६ ॥

इदानीमपि अवसानकालेऽपि तथा सङ्क्षेपतो बोधयेत्यन्वयः॥५७॥

निर्वेदो विषयेष्ववैराग्यं तत्प्रकाशनशीलां वादिनीमीदृशवचनवक्त्रीम् ॥ ५८ ॥

मोक्षमार्गानाह कर्मेत्यादि अलं त्वं बोध्यं ज्ञानयोगस्त्रिधा एतज्जन्मानुष्ठितकर्मयोगसम्पादितचित्तशुद्ध्या जातः एतज्जन्मानुष्ठित भक्तियोगकृतचित्तशुद्ध्या जातः पूर्वार्जिताभ्यामाभ्यां सम्पादितया एतज्जन्मनि तदनुष्ठानानपेक्षो वेति अन्यथा केवलकर्मभक्तिभ्यां ज्ञानं विना मोक्षस्य 'तमेव विदित्वातिमृत्युमेति नान्यः पन्थाः विद्यतेऽयनाय' इति श्रुतिविरोधतया यथाश्रुतमूलासङ्गतिः स्यादिति दिक् तेषां मध्ये भक्तियोगरूपो मार्गो ज्ञानजनने सुलभ इत्यर्थः ॥ ५९ ॥

गुणभेदतः तमोरजःसत्त्वरूपगुणभेदेन तामसी राजसी सात्त्विकी चेति त्रिधेत्यर्थः ॥ ६० ॥

यस्तु हिंसां समुद्दिश्य दम्भं मात्सर्यमेव वा ।
भेददृष्टिश्च संरम्भी भक्तो मे तामसः स्मृतः ॥ ६१ ॥
फलाभिसन्धिर्भोगार्थी धनकामो यशस्तथा ।
अर्चादौ भेदबुद्ध्या मां पूजयेत् स तु राजसः ॥ ६२ ॥
परस्मिन्नर्पितं यस्तु कर्मनिर्हरणाय वा ।
कर्त्तव्यमिति वा कुर्य्याद्भेदबुद्ध्या स सात्त्विकः ॥ ६३ ॥
मद्गुणाश्रयणादेव मय्यनन्तगुणालये ।
अविच्छिन्ना मनोवृत्तिर्यथा गङ्गाम्बुनोऽम्बुधौ ।
तदेव भक्तियोगस्य लक्षणं निर्गुणस्य हि ॥ ६४ ॥
अहैतुक्यव्यवहिता या भक्तिर्मयि जायते ।

भक्तित्रैविध्याद्भक्तस्यापि त्रैविध्यं तत्र तामसम्भक्तमाह यस्त्विति हिंसां शत्रोः दम्भं पूजालाभादिफलकं मात्सर्यं परगुणद्वेषः भेददृष्टिः अरिमित्रादिदृष्टिः संरम्भी तत्तद्विषयकाग्रहवान् ॥ ६१ ॥

फलं स्वर्गस्तदभिसन्धिस्तत्कामः भोग ऐहिकः यश इत्यत्र यशः काम इत्यर्थः गोवलीवर्दन्यायेन पृथग्निर्देशः अर्चादौ प्रतिमादौ आदिना स्थण्डिलादिपूजास्थानसंग्रहः भेदबुद्ध्या अयमुपास्योऽहमुपासक इत्येवं रूपया ॥ ६२ ॥

यो निर्हरणाय पापनाशाय कर्म मत्पूजनरूपं परस्मिन् मयि अर्पितं कुर्याद्भगवतः प्रेरणया यदस्त तन्नैव मया कृतं तेन स एव तुष्यत्विति बुद्धिर्ब्रह्मार्पणं नाम अथवा शास्त्रबोधितत्वादवश्यकर्तव्यमिति बुद्ध्या यः कुर्यात् स सात्त्विकः अत्रापि भेदबुद्धेरुपादानादभेदबुद्धिरेतत् फलमिति सूचितम् ॥ ६३ ॥

एतत्फलीभूतं निर्गुणभक्तियोगलक्षणमाह मद्गुणेति अविच्छिन्ना मनोवृत्तिरित्यन्तेन अनन्तगुणालये मयि या अविच्छिन्ना मनोवृत्तिरेतत् मद्गुणध्यानस्य निर्गुणध्यानस्य लक्षणं प्रापकम् तत्र दृष्टान्तः यथा गङ्गाम्बुनोऽम्बुधौ इति अनेनाभेदविषयत्वं मनोवृत्तेर्दर्शितम् ॥ ६४ ॥

सा मे सालोक्य सामीप्य सार्ष्टि सायुज्यमेव वा ॥ ६५ ॥
दत्तान्यपि न गृह्णन्ति भक्ता मत्सेवनं विना ।
स एवात्यन्तिको योगो भक्तिमार्गस्य भामिनि ! ॥ ६६ ॥
मद्भावं प्राप्नुयात्तेन अतिक्रम्य गुणत्रयम् ।
महता कामहीनेन स्वधर्माचरणेन च ॥ ६७ ॥
कर्मयोगेन शस्तेन वर्जितेन विहिंसनम् ।
मद्दर्शनस्तुतिमहापूजाभिः स्मृतिवन्दनैः ॥ ६८ ॥
भूतेषु मद्भावनया सङ्गेनासत्यवर्जनैः ।
बहुमानेन महतां दुःखिनामनुकम्पया ॥ ६९ ॥
स्वसमानेषु मैत्र्या च यमादीनां निषेवया ।
वेदान्तवाक्यश्रवणान्मम नामानुकीर्त्तनात् ॥ ७० ॥

अद्वैतक्यं फलानुद्देशः अतएवाव्यवहिता विशेषेणावहिता सम्बद्धा सार्ष्टिः सारूप्यम् ॥ ६५ ॥

उक्तफलानि दत्तान्यपि परन्तु भक्ता मत्सेवनं विना तेषु मत्सेवाया अभावात् तानि न गृह्णन्ति नाङ्गीकुर्वन्ति स एव सालोक्यादितिरस्कार एव आत्यन्तिको योगः स एव पूर्णो भक्तो यो मत्सेवारहितं मोक्षमपि न बहु मन्यते इति ॥ ६६ ॥

तेन भक्तियोगेन गुणत्रयं तद्रूपां मायामतिक्रम्य मद्भावं मदैक्यं प्राप्नुयात् अथ कर्मयोगमाह महतेति कामहीनेन फलोद्देशहीनेन स्वधर्मो नित्यनैमित्तिकरूपः ॥ ६७ ॥

तादृशकर्मयोगेन मद्भावं प्राप्नुयात् कथम्भूतेन विहिंसनं हिंसावर्जितेन हिंसारहितेनेति यावत् उक्तभक्तियोगप्राप्त्युपायमाह मद्दर्शनेति स्मृतिः स्मरणं वन्दनं प्रणतिः ॥ ६८ ॥

सर्वभूतेषु मद्भावनया ईश्वरभावनया असङ्गेन दुष्टसङ्गपरित्यागेन ॥ ६९ ॥

यमादयो यमनियमप्राणायामादयः ॥ ७० ॥

सत्सङ्गेनार्जवेनैव ह्यहमः परिवर्जनात्।
काङ्क्षया मम धर्मस्य परिशुद्ध्यान्तरो जनः॥ ७१ ॥
मद्गुणश्रवणादेव याति मामञ्जसा जनः।
यथा वायुवशात् गन्धः स्वाश्रयाद्घ्राणमाविशेत्॥७२॥
योगाभ्यासरतं चित्तमेवमात्मानमाविशेत्।
सर्वेषु प्राणिजातेषु ह्यहमात्मा व्यवस्थितः॥ ७३ ॥
तमज्ञात्वा विमूढात्मा कुरुते केवलं बहिः।
क्रियोत्पन्नैर्नैकभेदैर्द्रव्यैर्मे नाम्ब! तोषणम्॥ ७४ ॥
भूतावमानिनार्चायामर्चितोऽहं न पूजितः॥ ७५ ॥
तावन्मामर्चयेद्देवं प्रतिमादौ स्वकर्मभिः।
यावत्सर्वेषु भूतेषु स्थितं चात्मनि न स्मरेत्॥ ७६ ॥

अहमः अहङ्कृतिः अहङ्कर्त्तृत्वादिबुद्धेः मम धर्मस्य मत्पूजादिरूपस्य काङ्क्षया इच्छया॥ ७१॥

अञ्जसा शीघ्रमायाति मदभिन्नो भवति स्वाश्रयात् वायुना स्वाश्रयापकर्षणात्॥ ७२॥

अहमात्मा व्यवस्थितः सर्वत्र चेतनोऽहमेवेत्यर्थः॥ ७३॥

तं सर्वत्र चैतन्यरूपमादकं मामज्ञात्वा बहिःक्रियोत्पन्नैरनेकभेदैर्द्रव्यैर्गन्धपुष्पधूपादिभिः हे अम्ब! मे तोषणं सन्तोषं न कुरुते न जनयति इत्यर्थः सर्वभूतस्थितत्वेन मामज्ञात्वा कृतया पूजया कोऽपि फलदो मम सन्तोषो नेत्यर्थः॥ ७४॥

सर्वप्राण्यपमानकर्त्रा यावत्प्रतिमा न पूजिता तावदेव विशिष्टानां वा पूजायोग्या तदनन्तरं न तत्पूजेत्यर्थः अर्चित इत्यस्य व्याख्या पूजित इति॥ ७५॥

तावन्मामर्चयेदित्यर्थं मध्यमशिष्यायेनोत्तरात्रयपि यावत् सर्वभूतस्थितं मामात्मनि न स्मरेत् स एवाहमिति न जानीयात् तावदेव

यस्तु भेदं प्रकुरुते स्वात्मनश्च परस्य च।
भिन्नदृष्टेर्भयं मृत्युस्तस्य कुर्य्यान्न संशयः॥ ७७॥
मामतः सर्वभूतेषु परिच्छिन्नेषु संस्थितम्।
एकं ज्ञानेन मानेन मैत्र्या चार्चेदभिन्नधीः॥ ७८॥
चेतसैवानिशं सर्वभूतानि प्रणमेत् सुधीः।
ज्ञात्वा मां चेतनं शुद्धं जीवरूपेण संस्थितम्॥ ७९॥
तस्मात्कदाचिन्नेक्षेत भेदमीश्वरजीवयोः।
भक्तियोगो ज्ञानयोगो मया मातरुदीरितः॥ ८०॥
आलम्ब्यैकतरं वापि पुरुषः शममृच्छति।
ततो मां भक्तियोगेन मातः! सर्वहृदि स्थितम्॥ ८१॥
पुत्त्ररूपेण वा नित्यं स्मृत्वा शान्तिमवाप्स्यसि।
श्रुत्वा रामस्य वचनं कौशल्यानन्दसंयुता॥ ८२॥

पूजादावधिकारो न तदुत्तरं पूज्यपूजकभावापगमात् इति भावः इयमेव भावना मुख्येति ध्वनयितुं भेदं निन्दति यस्त्विति भिन्नदृष्टेस्तस्य मृत्युर्भयं कुर्यात् अत्र संशयो नास्तीत्यर्थः॥ ७६॥

तस्माद्भेदं त्यक्त्वैवाहमुपास्य इत्याह मामत इति एकं मां ज्ञानेन मानेन एवं सज्ञानपूर्वकं सर्वप्राणिसम्माननेन मैत्र्या सर्वत्र मित्रबुद्ध्या मामर्चेत् इतीयमेव मे मुख्या पूजा कापि शत्रुबुद्धिः सर्वथा न कार्येति भावः अभिन्नधीः एकएव चेतनो भगवान् सर्वत्रेत्येवं बुद्धिरित्यर्थः॥ ७७।७७

तथा सर्वभूतानि चेतसा प्रणमेत् तत्र हेतुर्ज्ञात्वेति॥ ७९॥

ईश्वरजीवयोरिति परमेश्वरजीवानां चेत्यपि बोध्यम् ज्ञानयोगो भक्तियोगसहितो ज्ञानयोग इत्यर्थः॥ ८०॥

एकतरं केवलभक्तियोगमपीत्यर्थः शममृच्छति तस्य परिणामे ज्ञानयोग प्रापकत्वादिति भावः॥ ८१॥

भक्तियोगेन उत्कृष्टोऽयमीश्वरः पूज्य इत्येवंरूपेण तत्रासामर्थ्ये त्वाह पुत्त्ररूपेण वेति॥ ८२॥

रामं सदा हृदि ध्यात्वा छित्त्वा संसारबन्धनम् ।
अतिक्रम्य गतोस्तिस्रोऽप्यवाप परमां गतिम् ॥ ८३ ॥
कैकेयी चापि योगं रघुपतिगदितं पूर्वमेवाधिगम्य
श्रद्धाभक्तिप्रशान्ता हृदि रघुतिलकं भावयन्ती गतासुः ।
गत्वा स्वर्गं स्फुरन्ती दशरथसहिता मोदमानावतस्थे
माता श्रीलक्ष्मणस्याप्यतिविमलमतिः प्राप भर्त्तुः समीपम् ।८४

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे
सप्तमः सर्गः ।

तिस्रो गतीः सात्त्विकराजसतामसीः तत्र सात्त्विकी अर्चिरादि-गतिः राजसी धूमादिगतिस्तामसी जायस्व म्रियस्वेत्येवं रूपा तत्राद्या दहराद्युपासकानां द्वितीया कर्मिणां तृतीयान्येषां परमां गतिम् । नास्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्त इति श्रुतिप्रमाण्याम् ॥ ८३ ॥

पूर्वमेव चित्रकूटगिरौ ॥ ८४ ॥

इति श्रीमत्सकलराजविपद्दुरुरगसमर्थेत्यादिवि० श्रीरामवर्मणः
कृतौ श्रीमदध्यात्मरामायणसेतौ उत्तरकाण्डे
सप्तमः सर्गः ।

---

श्रीमहादेव उवाच ।

अथ काले गते कस्मिन् भरतो भीमविक्रमः ।
युधाजिता मातुलेन ह्याहूतोऽगात्ससैनिकः ॥ १ ॥
रामाज्ञया गतास्तत्र हत्वा गन्धर्वनायकान् ।
तिस्रः कोटीः पुरे द्वे तु निवेश्य रघुनन्दनः ॥ २ ॥
पुष्करं पुष्करावत्यां तक्षं तक्षशिलाह्वये ।
अभिषिच्य सुतौ तत्र धनधान्यसुसंवृतौ ॥ ३ ॥
पुनरागत्य भरतो रामसेवापरोऽभवत् ।
ततः प्रीतो रघुश्रेष्ठो लक्ष्मणं प्राह सादरम् ॥ ४ ॥
उभौ कुमारौ सौमित्रे ! गृहीत्वा पश्चिमां दिशम् ।
तत्र भिल्लान्विनिर्जित्य दुष्टान् सर्वापकारिणः ॥ ५ ॥
अङ्गदश्चित्रकेतुश्च महासत्त्वपराक्रमौ ।
द्वयोर्द्वे नगरे कृत्वा गजाश्वधनरत्नकैः ॥ ६ ॥
अभिषिच्य सुतौ तत्र शीघ्रमागच्छ मां पुनः ।
रामस्याज्ञां पुरस्कृत्य गजाश्वबलवाहनः ॥ ७ ॥
गत्वा हत्वा रिपून् सर्वान् स्थापयित्वा कुमारकौ ।
सौमित्रिः पुनरागत्य रामसेवापरोऽभवत् ॥ ८ ॥

अथेति कस्मिन् कस्मिंश्चिदित्यर्थः मातुलेनाहूतः स्वदेशसमीपवर्तिगन्धर्वविषयस्थगन्धर्ववधार्थम् ॥ १ ॥

तिस्रः कोटीर्गन्धर्वनायकान् हत्वेत्यन्वयः पुरे पुष्करावतीतक्षशिलाख्ये ॥ २ ॥

सुतौ पुष्करतक्षनामानौ ॥ ३ । ४ ॥

कुमारौ स्वपुत्त्रौ पश्चिमां दिशं याहीति शेषः ॥ ५–८ ॥

ततस्तु काले महति प्रयाते
रामं सदा धर्मपथे स्थितं हरिम् ।
द्रष्टुं समागादृषिवेशधारी ।
कालस्ततो लक्ष्मणमित्युवाच ॥ ९ ॥
निवेदयस्वातिबलस्य दूतं
मां द्रष्टुकामं पुरुषोत्तमाय ।
रामाय विज्ञापनमस्ति तस्य
महर्षिमुख्यस्य चिराय धीमन् ! ॥ १०

तस्य तद्वचनं श्रुत्वा सौमित्रिस्त्वरयान्वितः ।
आचचक्षेऽथ रामाय स संप्राप्तं तपोधनम् ॥ ११ ॥
एवं ब्रुवन्तं प्रोवाच लक्ष्मणं राघवो वचः ।
शीघ्रं प्रवेश्यतां तात ! मुनिः सत्कारपूर्वकम ॥ १२ ॥
लक्ष्मणस्तु तथेत्युक्त्वा प्रावेशयत तापसम् ।
स्वतेजसा ज्वलन्तं तं घृतसिक्तं यथानलम् ॥ १३ ॥
सोऽभिगम्य रघुश्रेष्ठं दीप्यमानः स्वतेजसा ।
मुनिर्मधुरवाक्येन वर्धस्वेत्याह राघवम् ॥ १४ ॥
तस्मै स मुनये रामः पूजां कृत्वा यथाविधि ।

ततः समागमनानन्तरम् ॥ ९ ॥

अतिबलस्य महर्षिमुख्यस्य दूतं रामं द्रष्टुकामं पुरुषोत्तमाय निवेदयस्व यस्याहं दूतस्तस्य महर्षिमुख्यस्य रामाय चिराय विज्ञापनमस्ति रामं प्रति चिरकालं बोधनीयं वाक्यमस्ति ॥ १० ॥

स सौमित्रिरित्यन्वयः ॥ ११—१२ ॥

वर्धस्वेत्यस्य भूराज्याधिकस्वर्गराज्यलाभेन वर्धस्वेति तद्धृदयस्थितोऽर्थः ॥ १४ ॥

पृष्टानामयमव्यग्रो रामः पृष्टोऽथ तेन स ॥ १५ ॥
दिव्यासने समासीनो रामः प्रोवाच तापसम्।
यदर्थमागतोऽसि त्वमिह तत्प्रापयस्व मे ॥ १६ ॥
वाक्येन चोदितस्तेन रामेणाह मुनिर्वचः।
द्वन्द्वमेव प्रयोक्तव्यमनालक्ष्यन्तु तद्वचः ॥ १७ ॥
नान्येन चैतत् श्रोतव्यं नाख्यातव्यं च कस्यचित्।
शृणुयाद्वा निरीक्षेद्वा यः स वध्यस्त्वया प्रभो ! ॥ १८ ॥
तथेति च प्रतिज्ञाय रामो लक्ष्मणमब्रवीत्।
तिष्ठ त्वं द्वारि सौमित्रे ! नायात्वत्र जनो रहः ॥१९॥
यद्यागच्छति को वापि स वध्यो मे न संशयः।
ततः प्राह मुनिं रामो येन वा त्वं विसर्ज्जितः ॥ २० ॥
यत्ते मनीषितं वाक्यं तद्वदस्व ममाग्रतः।
ततः प्राह मुनिर्वाक्यं शृणु राम ! यथातथम् ॥ २१ ॥
ब्रह्मणा प्रेषितोऽस्मीश ! कार्यार्थं तेऽन्तिकं प्रभो !।
अहं हि पूर्वजो देव ! तव पुत्रः परन्तप ! ॥ २२ ॥

तेनानामयं पृष्टो रामो तस्मै अनामयं पृष्ट्वा प्रोवाचेत्यन्वयः ॥१५॥
यदर्थं यत्प्रापणार्थं तत्स्वस्वामिवाक्यम् ॥ १६ ॥
द्वन्द्वमेव रहस्यमेव अनालक्ष्यं तृतीयेनेति शेषः ॥ १७ ॥
तदेव स्पष्टयति नान्येनेति निरीक्षेद्वा कथयन्तावावामिति शेषः ॥१८॥
अत्र रहः रहस्थाने जन आवाभ्यामतिरिक्तस्तृतीयो जन इत्यर्थः ॥ १९ ॥
को वापि त्वं वा अन्यो वा येन त्वं विसर्जितः प्रेषितस्तस्य वा मनीषितं अथवा ते तवैव मनीषितं यद्वाक्यं तद्वदस्व ॥ २० ॥
यथातथं सत्यमित्यर्थः ॥ २१ ॥
त्वं क इति जिज्ञासां सम्भाव्य स्वयमेवोत्तरमाह अहं हीति पूर्वजः

मायासङ्कमजो वीर ! कालः सर्वहरः स्मृतः ।
ब्रह्मा त्वामाह भगवान् सर्वदेवर्षिपूजितः ॥ २३ ॥
रक्षितुं स्वर्गलोकस्य समयस्ते महामते ! ।
पुरा त्वमेक एवासीर्लोकान् संहृत्य मायया ॥ २४ ॥
भार्यया सहितस्त्वं मामादौ पुत्रमजीजनः ।
तथा भोगवतं नागमनन्तमुदकेशयम् ॥ २५ ॥
मायया जनयित्वा त्वं द्वौ ससत्त्वौ महाबलौ ।
मधुकैटभकौ दैत्यौ हत्वा मेदोऽस्थिसञ्चयम् ॥ २६ ॥
इमां पर्वतसम्बद्धां मेदिनीं पुरुषर्षभ ! ।
पद्मे दिव्यार्कसङ्काशे नाभ्यामुत्पाद्य मामपि ॥ २७ ॥
मयि विधाय प्रजाध्यक्षं मयि सर्वं न्यवेदयत् ।

एवं स्वरूपेणया पूर्वं महत्तत्त्वमेवायमंशविशेष इत्याह अतिरिक्तमेवेदं तत्त्वमिति शैवाः ॥ २२ ॥

मायासङ्कमसदीयवचनात्मम् ॥ २३ ॥

अथ ब्रह्मवाक्यमाह रक्षितुमिति समयः अवतारसमये मतः कालः एतावन्तं कालं भूलोके स्थित्वा पुनः स्वर्गमागन्तव्येवं रूपः ननु मम स्वर्गेण कः सम्बन्धः इत्याशङ्कां निवर्तयितुं पूर्वकथामाह पुरेति 'सदेव सोम्येदमग्र आसीत्' इति श्रुतेः मायापि कार्याक्षमतायदभेदेनैव तदेति भावः ॥ २४ ॥

भार्यया मायया भवत्ताविष्येन तस्या अथवं परिणामशीलत्वादिति भावः भोगवतं भोग इवभावा भावः एतानुभावयि महत्तत्त्वाधिष्ठातारावित्याहुः ॥ २५ ॥

ससत्त्वौ सपराक्रमौ तयोर्मेदोऽस्थिसञ्चयं तद्रूपाम् ॥ २६ ॥

इमां मेदिनीं निर्मितवानिति शेषः अत एव नाभ्यां विद्यमाने पद्मे मामुत्पाद्य ॥ २७ ॥

तं च मां प्रजाध्यक्षं विधाय भवान् मयि सर्वं प्रजोत्पादनभार-

सोऽहं संयुक्तसंभारस्त्वामस्तौषं जगत्पते ! ॥ २८ ॥
रक्षां विधत्स्व भूतेभ्यो ये मे वीर्यापहारिणः ।
ततस्त्वं कश्यपाज्जातो विष्णुर्वामनरूपधृक् ॥ २९ ॥
हृतवानसि भूभारं वधाद्रक्षोगणस्य च ।
सर्वासूत्सार्यमाणासु प्रजासु धरणीधर ! ॥ ३० ॥
रावणस्य वधाकाङ्क्षी मर्त्यलोकमुपागतः ।
दशवर्षसहस्राणि दशवर्षशतानि च ॥ ३१ ॥
कृत्वा वासस्य समयं विदधे ह्यात्मनः पुरा ।
स ते मनोरथः पूर्णः पूर्णे चायुषि वै नृप ॥ ३२ ॥
कालस्तापसरूपेण त्वत्समीपमुपागमम् ।
ततो भूयश्च ते बुद्धिर्यदि राज्यमुपासितुम् ॥ ३३ ॥
तत्तथा भव भद्रं ते एवमाह पितामहः ।
यदि ते गमने बुद्धिर्देवलोकं जितेन्द्रिय ! ॥ ३४ ॥
सनाथा विष्णुना देवा भवन्तु विगतज्वराः ।
चतुर्मुखस्य तद्वाक्यं श्रुत्वा कालेन भाषितम् ॥ ३५ ॥
हसन् रामस्तदा वाक्यं कृतान्तकमब्रवीत् ।

आदिभागे त्वमेवेदं स्थापितवान् संयुक्तसम्भारः अङ्गीकृतप्रजोत्पादनादिव्यवहारः ॥ २८ ॥

ये वीर्यापहारिणः मे वीर्यस्य मत्प्रजानां दुःखदाः दुष्टाः ततः मां प्रति तथा प्रतिज्ञातोऽवतारमित्यर्थः ॥ २९—३१ ॥

समयं वासकालप्रतिज्ञां मनोरथः प्रतिज्ञाविषयः वासः मनुष्यलोके आयुषि पूर्णे सति ॥ ३२ ॥

अहं कालस्तापसरूपेण त्वत्समीपमुपागमं प्राप्तवानस्मि ॥ ३३ ॥

तत्तथा भव राज्यमुपास्स्वेत्यर्थः ॥ ३४ । ३५ ॥

श्रुतं तव वचो मेऽद्य ममापीष्टतरं तु तत् ॥ ३६ ॥
सन्तोषः परमो भूयो मद्यागमनकारणात् ।
अवाप्तानपि लोकानां कार्यार्थं मम सम्भवः ॥ ३७ ॥
भद्रं तेऽस्त्वागमिष्यामि यत एवाहमागतः ।
मनोरथस्तु सम्प्राप्तो न मेऽत्रास्ति विचारणा ॥ ३८ ॥
मत्सेवकानां देवानां सर्वकार्येषु वै मया ।
स्थातव्यं मायया पुत्र ! यथा चाह प्रजापतिः ॥ ३९ ॥
एवं तयोः कथयतोर्दुर्वासा मुनिरभ्यगात् ।
राजद्वारं राघवस्य दर्शनापेक्षयाहतम् ॥ ४० ॥
मुनिर्लक्ष्मणमासाद्य दुर्वासा वाक्यमब्रवीत् ।
शीघ्रं दर्शय रामं मे कार्यं मेऽत्यन्तमाहितम् ॥ ४१ ॥
तच्छ्रुत्वा प्राह सौमित्रिर्मुनिं ज्वलनतेजसम् ।
रामेण कार्यं किं तेऽद्य किं तेऽभीष्टं करोम्यहम् ? ॥ ४२ ॥
राजा कार्यान्तरे व्यग्रो मुहूर्तं संप्रतीक्ष्यताम् ।
तच्छ्रुत्वा क्रोधसंतप्तो मुनिः सौमित्रिमब्रवीत् ॥ ४३ ॥
अस्मिन् क्षणे तु सौमित्रे ! न दर्शयसि चेद्विभुम् ।

कृतस्य जगतोऽन्तकम् नाशकं कालमित्यर्थः ॥ ३६ ॥
कार्यार्थं सम्भवः तेन निष्पन्नकार्यस्यावस्थाने न प्रयोजनमित्यर्थः ३७
मनोरथः अयमेव मे मनोरथो यदि ते गमनमिति भावः ॥३८॥
स्थातव्यं तत्तत्कार्योद्युक्तेन भाव्यं माययेत्यनेन सर्वमिदं मायैवेति ज्ञापयति ॥ ३९ ॥
आहतं यथा भवति तथा दर्शनेच्छया राजद्वारमभ्यगात् ॥४०।४१॥
रामेण कार्यं किन्ते इति तदर्थं कार्यमहं सम्पादयामीति भावः तदेवाह किन्ते इत्यादि ॥ ४२ । ४२ ॥

राज्यं सविषयं वंशं भस्मीकुर्यान्न संशयः ॥ ४४ ॥
श्रुत्वा तद्वचनं घोरमृषेर्दुर्वाससो भृशम्।
स्वरूपं तस्य वाक्यस्य चिन्तयित्वा स लक्ष्मणः ॥ ४५ ॥
सर्वनाशाद्वरं मेऽद्य नाशो ह्येकस्य कारणात्।
निश्चित्यैवं ततो गत्वा रामस्य प्राह लक्ष्मणः ॥ ४६ ॥
सौमित्रेर्वचनं श्रुत्वा रामः कालं व्यसर्जयत्।
शीघ्रं निर्गम्य रामोऽपि ददर्शात्रेः सुतं मुनिम् ॥ ४७ ॥
रामोऽभिवाद्य संप्रीतो मुनिं पप्रच्छ सादरम्।
किं कार्यं ते करोमीति मुनिमाह रघूत्तमः ॥ ४८ ॥
तच्छ्रुत्वा रामवचनं दुर्वासा राममब्रवीत्।
अद्य वर्षसहस्राणामुपवाससमापनम् ॥ ४९ ॥
अतो भोजनमिच्छामि सिद्धं यत्ते रघूत्तम !।
रामो मुनिवचः श्रुत्वा सन्तोषेण समन्वितः ॥ ५० ॥
यत्सिद्धमन्नं मुनये यथावत् समुपाहरत्।
मुनिर्भुक्त्वान्नममृतं सन्तुष्टः पुनरभ्यगात् ॥ ५१ ॥
स्वमाश्रमं गते तस्मिन् रामः सस्मार भाषितम्।
कालेन शोकदुःखार्त्तो विमनाश्चातिविह्वलः ॥ ५२ ॥

वंशं दशरथस्येति शेषः तेन सर्वेषां भवदादीनां नाशं करिष्यामीत्यर्थः॥४४
भृशमतिशयेन घोरमित्यन्वयः स्वरूपं वाच्यं व्यक्तं वार्थम् ॥४५॥
कारणाद्दुर्वाससोरूपात् ॥ ४६—४८ ॥
वर्षसहस्राणां सम्बन्धीय उपवासस्तस्य समापनं समाप्ति कार्यं:॥४९॥
यत्सिद्धं त्वद्गेहेऽस्ति तद्भोजनमिच्छामि ॥ ५० ॥
अमृतमञ्जतवत् स्वादु ॥ ५१ ॥
कालेन भाषितमित्यन्वयः स्मृत्वा च शोकादियुक्तः सन् ॥ ५२ ॥

अवाङ्मुखी दीनमना न शशाकाभिभाषितुम् ।
मनसा लक्ष्मणं ज्ञात्वा हतप्रायं रघूद्वहः ॥ ५३ ॥
अवाङ्मुखो बभूवाथ तूष्णीमेवाखिलेश्वरः ।
ततो रामं विलोक्याह सौमित्रिर्दुःखसंप्लुतम् ॥ ५४ ॥
तूष्णीं भूतं चिन्तयन्तं गर्हन्तं स्नेहबन्धनम् ।
मत्कृते त्यज सन्तापं जहि मां रघुनन्दन ! ॥ ५५ ॥
गतिः कालस्य कलिता पूर्वमेवेदृशी प्रभो ! ।
त्वयि क्षीणप्रतीज्ञे तु नरको मे ध्रुवं भवेत् ॥ ५६ ॥
मयि प्रीतिर्यदि भवेद्यद्यनुग्राह्यता तव ।
त्यक्त्वा शङ्कां जहि प्राज्ञ ! मा मा धर्मं त्यज प्रभो ! ॥ ५७
सौमित्रिणोक्तं तच्छ्रुत्वा रामश्चलितमानसः ।
आहूय मन्त्रिणः सर्वान् वशिष्ठं चेदमब्रवीत् ॥ ५८ ॥
मुनेरागमनं यत्तु कालस्यापि हि भाषितम् ।
प्रतिज्ञामात्मनश्चैव सर्वमावेदयत् प्रभुः ॥ ५९ ॥

मनसा हतप्रायं ज्ञात्वा प्रतिज्ञाया अन्यथा कर्त्तुमशक्यत्वादिति भावः ॥ ५३ । ५४ ॥

स्नेहकृतं बन्धनं गर्हन्तं निन्दयन्तं स्नेहाद्वधे अशक्तता तदकरणे च प्रतिज्ञाहानिरिति चिन्तयन्तम् ॥ ५५ ॥

पूर्वमेवेदृशीति इदमवश्यं भावीति भावः मत्कृते त्वत्प्रतिज्ञाहानौ ममापि नरक इत्यर्थः ॥ ५६ ॥

धर्मं मा त्यजेत्यन्वयः अनेन प्रतिज्ञापालनमेव क्षत्रियस्य मुख्यो धर्मस्तद्विधेयानां च तत्प्रतिज्ञानिर्वाहणं परमो धर्म इति सूचितम् ॥ ५७

चलितमानसस्त्वक्तुमशक्तत्वात् ॥ ५८ ॥

मुनेर्दुर्वासः ॥ ५९ । ६० ॥

श्रुत्वा रामस्य वचनं मन्त्रिणः सपुरोहिताः ।
ऊचुः प्राञ्जलयः सर्वे राममक्लिष्टकारिणम् ॥ ६० ॥
पूर्वमेव हि निर्दिष्टं तवभूभारहारिणः ।
लक्ष्मणेन वियोगस्ते ज्ञातो विज्ञानचक्षुषा ॥ ६१ ॥
त्यजाशु लक्ष्मणं राम ! मा प्रतिज्ञां त्यज प्रभो ! ।
प्रतिज्ञाते परित्यक्ते धर्मो भवति निष्फलः ॥ ६२ ॥
धर्मे नष्टेऽखिले राम ! त्रैलोक्यं नश्यति ध्रुवम् ।
त्वं तु सर्वस्य लोकस्य पालकोऽसि रघूत्तम ! ॥ ६३ ॥
त्यक्त्वा लक्ष्मणमेवैकं त्रैलोक्यं त्रातुमर्हसि ।
रामो धर्मार्थसहितं वाक्यं तेषामनिन्दितम् ॥ ६४ ॥
सभामध्ये समाश्रुत्य प्राह सौमित्रिमञ्जसा ।
यथेष्टं गच्छ सौमित्रे ! माभूद्धर्मस्य सङ्क्षयः ॥ ६५ ॥
परित्यागो वधो वापि सतामेवोभयं समम् ।
एवमुक्ते रघुश्रेष्ठे दुःखव्याकुलितेक्षणः ॥ ६६ ॥
रामं प्रणम्य सौमित्रिः शीघ्रं गृहमगात् स्वकम् ।
ततोऽगात्सरयूतीरमाचम्य स कृताञ्जलिः ॥ ६७ ॥
नवद्वाराणि संयम्य मूर्ध्नि प्राणमधारयत् ।

भूभारहारित्वस्तावन्मात्रफलकतया धृतशरीरस्य तव पूर्वं त्वत्तः पूर्वमित्यर्थः लक्ष्मणगमनं निर्दिष्टभावी च त्वयोऽस्माभिर्ज्ञात एवास्ते।६१।

प्रतिज्ञातेऽर्थे परित्यक्ते अन्यथाकृते ॥ ६२ ॥

धर्मे नष्टे राम इति शेषः तव त्रैलोक्यपालकत्वेन त्वद्धर्मनाशे कृत्स्नत्रैलोक्यनाश इति भावः ॥ ६३ । ६४ ॥

समाश्रुत्य वसिष्ठादिवाक्यं श्रुत्वेत्यर्थः ॥ ६५ ॥

सताम् उभयं सममेवेत्यन्वयः उक्ते उक्तवतीत्यर्थः ॥ ६६ । ६७ ॥

यदक्षरं परं ब्रह्म वासुदेवाख्यमव्ययम् ॥ ६८ ॥
यदं तत्परमं धाम चेतसा सोऽभ्यचिन्तयत् ।
वायुरोधेन संयुक्तं सर्वे देवाः महर्षयः ॥ ६९ ॥
साग्नयो लक्ष्मणं पुष्पैस्तुष्टुवुश्च समाकिरन् ।
अदृश्यं विबुधैः कैश्चित्सशरीरं स वासवः ॥ ७० ॥
गृहीत्वा लक्ष्मणं शक्रः स्वर्गलोकमथागमत् ।
ततो विष्णोश्चतुर्भागं तं देवं सुरसत्तमाः ।
सर्वे देवर्षयो दृष्ट्वा लक्ष्मणं समपूजयन् ॥ ७१ ॥

लक्ष्मणे हि दिवमागते हरौ
सिद्धलोकगतयोगिनस्तदा ।
ब्रह्मणा सह समागमन्मुदा
द्रष्टुमाहितमहाहिरूपकम् ॥ ७२ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे
अष्टमः सर्गः ।

नवद्वाराणि चक्षुषी कर्णौ नासिका मुखं पायूपस्थे ब्रह्मरन्ध्रं
चेति ॥ ६८ ॥

अभ्यचिन्तयत् वासुदेवोऽहमित्यध्यायत ॥ ६९ ॥

तुष्टुवुः पुष्पैः समाकिरंश्च विबुधैः कैश्चिददृश्यं कैरपि देवैर्न दृश्य-
मित्यर्थः ॥ ७० । ७१ ॥

हरौ हर्यंशे सिद्धलोकगतयोगिनः तल्लोकस्थ योगिन इत्यर्थः
आहितं प्राप्तं महाहिरूपं येन तत् दुग्धं यथा दधिभावमापद्यते
तथायमेव देहः तत्तादृशरूपतां प्राप्त इत्यर्थः ॥ ७२ ॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिवि० श्रीरामवर्मणा
कृताध्यात्मरामायणसेतौ उत्तरकाण्डे
अष्टमः सर्गः ।

---

नवमः सर्गः ।

श्रीमहादेव उवाच ।

लक्ष्मणं तु परित्यज्य रामो दुःखसमन्वितः ।
मन्त्रिणो नैगमांश्चैव वशिष्ठं चेदमब्रवीत् ॥ १ ॥
अभिषेक्ष्यामि भरतमधिराज्ये महामतिम् ।
अद्य चाहं गमिष्यामि लक्ष्मणस्य पदानुगः ॥ २ ॥
एवमुक्ते रघुश्रेष्ठे पौरजानपदास्तदा ।
द्रुमा इव च्छिन्नमूला दुःखार्त्ताः पतिता भुवि ॥ ३ ॥
मूर्च्छितो भरतो वापि श्रुत्वा रामाभिभाषितम् ।
गर्हयामास राज्यं स प्राहेदं रामसन्निधौ ॥ ४ ॥
सत्येन च शपेनाहं त्वां विना दिवि वा भुवि ।
काङ्क्षे राज्यं रघुश्रेष्ठ ! शपे त्वत्पादयोः प्रभो ! ॥ ५ ॥
इमौ कुशलवौ राजन् ! अभिषिञ्चस्व राघव ! ।
कोशलेषु कुशं वीरमुत्तरेषु लवं तथा ॥ ६ ॥

नैगमा वणिजः ॥ १ ॥

अद्य चाहमित्यर्थः पदानुगः पदान्यनुलक्ष्यीकृत्य गन्ता अन्यथा तेन बहुव्यवधानं स्यादित्यर्थः ॥ २ ॥

उक्ते उक्तवति सति ॥ ३ ॥

भरतो वापि भरतश्चापीत्यर्थः राज्यं गर्हयामास तन्निन्दापूर्वकमिदं प्राह चेत्यर्थः ॥ ४ ॥

सत्येन शपे सत्यं मे नश्यतु यदि राज्याकांक्षेत्येकः शपथः त्वत्पादकोश शपे त्वत्पादयोः स्पर्शने च शपथ इत्यपरः शपथः ॥ ५ ॥

तर्हि सर्वगमने को राज्यं पालयिष्यतीत्याशङ्क्याहेमाविति ॥६।७॥

गच्छन्तु दूतास्त्वरितं शत्रुघ्नानयनाय हि ।
अस्माकमेतद्गमनं सर्वासाय शृणोतु सः ॥ ७ ॥
भरतेनोदितं श्रुत्वा पतितस्तोः समीक्ष्य तम् ।
प्रजाश्च भयसंविग्ना रामविश्लेषकातराः ॥ ८ ॥
वशिष्ठो भगवान् राममुवाच सदयं वचः ।
पश्य तातादरात्सर्वाः पतिता भूतले प्रजाः ॥ ९ ॥
तासां भावानुगं राम ! प्रसादं कर्त्तुमर्हसि ।
श्रुत्वा वशिष्ठवचनं ताः समुत्थाप्य पूज्य च ॥ १० ॥
सस्नेहो रघुनाथस्ताः किं करोमीति ? चाब्रवीत् ।
ततः प्राञ्जलयः प्रोचुः प्रजा भक्त्या रघूद्वहम् ॥ ११ ॥
गन्तुमिच्छसि यत्र त्वमनुगच्छामहे वयम् ।
अस्माकमेषा परमा प्रीतिर्धर्मो यमक्षयः ॥ १२ ॥
तवानुगमने राम ! हृद्गता नो दृढा मतिः ।
पुत्रदारादिभिः सार्द्धमनुयामोऽद्य सर्वथा ॥ १३ ॥
तपोवनं वा स्वर्गं वा पुरं वा रघुनन्दन ! ।
ज्ञात्वा तेषां मनोदार्ढ्यं कालस्य वचनं यथा ॥ १४ ॥
भक्तं पौरजनं चैव बाढमित्याह राघवः ।
कृत्वैव निश्चयं रामस्तस्मिन्नेवाहनि प्रभुः ॥ १५ ॥
प्रस्थापयामास च तौ रामभद्रः कुशीलवौ ।

तं तथा कठोरं वदन्तं पतिता भुवीति शेषः ॥ ८ ॥
तातेति सम्बोधनम् ॥ ९ ॥
भावानुगं अभिप्रायानुगं पूज्येति स्पष्टार्थः ॥ १० । ११ ॥
अयं तदनुगमनरूपः ॥ १२ । १३ ॥
तपोवनाद्यन्यतमं यत्नापि तदनुयाम इत्यर्थः ॥ १४–१७ ॥

अष्टौ रथसहस्राणि सहस्रञ्चैव दन्तिनाम् ॥ १६ ॥
षष्टिं चाश्वसहस्राणामेकैकस्मै ददौ बलम् ।
बहुरत्नौ बहुधनौ हृष्टपुष्टजनावृतौ ॥ १७ ॥
अभिवाद्य गतौ रामं [illegible] तु कुशीलवौ ।
शत्रुघ्नानयने दूतान् प्रेषयामास राघवः ।
ते दूतास्त्वरितं गत्वा शत्रुघ्नाय न्यवेदयन् ॥ १८ ॥
कालस्यागमनं पश्चादृषिमुख्यस्य चेष्टितम् ।
लक्ष्मणस्य च निर्याणं प्रतिज्ञां राघवस्य च ॥ १९ ॥
पुत्राभिषेचनं चैव सर्वं रामचिकीर्षितम् ।
श्रुत्वा तद्दूतवचनं शत्रुघ्नः कुलनाशनम् ॥ २० ॥
व्यथितोऽपि धृतिं लब्ध्वा पुत्रावाहूय सत्वरः ।
अभिषिच्य सुबाहुं वै मथुरायां महाबलः ॥ २१ ॥
यूपकेतुं च विदिशानगरे शत्रुसूदनः ।
अयोध्यां त्वरितं प्रागात् स्वयं रामदिदृक्षया ॥ २२ ॥
ददर्श च महात्मानं तेजसा ज्वलनप्रभम् ।
दुकूलयुगसंवीतं महर्षिभिरमर्त्यैर्वृतम् ॥ २३ ॥
अभिवाद्य रमानाथं शत्रुघ्नो रघुपुङ्गवम् ।
प्राञ्जलिर्धर्मसहितं वाक्यं प्राह महामतिः ॥ २४ ॥
अभिषिच्य सुतौ तत्र राजन् राजीवलोचन ! ।
तवानुगमने राजन्विद्धि मां कृतनिश्चयम् ॥ २५ ॥

कालस्य च भगवद्वियोगजदुःखासहिष्णुतया क्रमेण ॥ १८ ॥
ऋषिमुख्यस्य दुर्वाससः प्रतिज्ञां प्रजानां बहुनयनविषयाम् ॥ १९ ॥
चिकीर्षितं स्वगमनरूपं कुलस्य भ्रातृसमूहस्य नाशनम् ॥ २०—२२ ॥
अमर्त्यैः ऋषिभिः अतिचिरजीविभिर्मार्कण्डेयाद्यैः ॥ २३-२५ ॥

त्यक्तुं नार्हसि मां वीर ! भक्तं तव विशेषतः।
शत्रुघ्नस्य दृढां बुद्धिं विज्ञाय रघुनन्दनः ॥ २६ ॥
सज्जीभवतु मध्याह्ने भवानित्यब्रवीद्वचः।
अथ क्षणात्समुत्पेतुर्वानराः कामरूपिणः ॥ २७ ॥
ऋक्षाश्च राक्षसाश्चैव गोपुच्छाश्च सहस्रशः।
ऋषीणां देवतानां च पुत्रा रामस्य निर्गमम् ॥ २८ ॥
श्रुत्वा प्रोचुः रघुश्रेष्ठं सर्वे वानरराक्षसाः।
तवानुगमने विद्धि निश्चितार्थान्हि नः प्रभो ! ॥२९॥
एतस्मिन्नन्तरे रामं सुग्रीवोऽपि महाबलः।
यथावदभिवाद्याह राघवं भक्तवत्सलम् ॥ ३० ॥
अभिषिच्याङ्गदं राज्ये आगतोऽस्मि महाबलम्।
तवानुगमने राम ! विद्धि मां कृतनिश्चयम् ॥ ३१ ॥
श्रुत्वा तेषां दृढं वाक्यं ऋक्षवानरराक्षसाम्।
विभीषणमुवाचेदं वचनं मृदुसादरम् ॥ ३२ ॥
भविष्यति धरा यावत् प्रजास्तावत्प्रशाधि मे।
वचनाद्राक्षसं राज्यं प्रापितोऽसि ममोपरि ॥ ३३ ॥
न किञ्चिदुत्तरं वाच्यं त्वया मत्कृतकारणात्।
एवं विभीषणं सूक्त्वा हनुमन्तमथाब्रवीत् ॥ ३४ ॥
मारुते ! त्वं चिरञ्जीव ममाज्ञां मा मृषा कृथाः।

मे वचनात् प्रशाधि राक्षसं रक्षःसम्बन्धिराज्यं च प्रशाधि यतोऽन्यथा नदेत्याह प्रापितोऽसीति अन्यवचनोक्तौ मद्वचःपातकं तवेति भावः ॥ ता । ३३ ॥

गच्छन्तमेवानुगता जनास्ते सपुत्रदाराः सह बन्धुवर्गैः ।
अनावृतद्वारमिवापवर्गं रामं व्रजन्तं ययुरात्मकामाः ॥ ४२ ॥
सान्तःपुरः सानुचरः सभार्यः शत्रुघ्नयुक्तो भरतोऽनुयायात् ।
गच्छन्तमालोक्य रमासमेतं श्रीराघवं पौरजनाः समस्ताः॥ ४३॥
सबालवृद्धाश्च ययुर्द्विजाग्र्याः सामात्यवर्गाश्च समन्त्रिणो ययुः ।
सर्वे गताः क्षत्रमुखाः प्रहृष्टा वैश्याश्च शूद्राश्च तथापरे च॥ ४४॥
सुग्रीवमुख्या हरिपुङ्गवाश्च स्नाता विशुद्धाः शुभशब्दयुक्ताः ।
न कश्चिदासीद्भवदुःखयुक्तो दीनोऽथ वा बाह्यसुखेषु सक्तः॥ ४५
आनन्दरूपानुगता विरक्ता ययुश्च रामं पशुभृत्यवर्गैः ।
भूतान्यदृश्यानि च यानि तत्र ये प्राणिनः स्थावरजङ्गमाश्च ॥ ४६
साक्षात्परात्मानमनन्तशक्तिं जग्मुर्विरक्ताः परमेकमीशम् ।
नासीदयोध्यानगरे तु जन्तुः कश्चित्तदा राममना न यातः॥ ४
शून्यं बभूवाखिलमेव तत्र पुरं गते राजनि रामचन्द्रे ।
ततोऽतिदूरं नगराद्गत्वादृष्ट्वा नदीं तां हरिनेत्रजाताम् ॥ ४

अनावृतद्वारमिवापवर्गतुल्यं व्रजन्तं राममनुययुः ॥ ४२ ॥

अनुयायात् अन्वगच्छदित्यर्थः क्वचित्तथैव पाठः ॥ ४३ ॥

सामात्यवर्गाः समन्त्रिणो द्विजाग्र्या ययुः क्षत्रमुखाः क्षत्रं क्षत्रियाः मुखं मुख्या अपरे येषां तादृशा वैश्यादयः ॥ ४४ । ४५ ॥

दुःखबाह्यसुखयोगाभावे हेतुः आनन्दरूपानुगता आनन्दरूपं रामममनुगताः तदनुगमनात् तदानन्दप्रतिभासात्तद्योगः सर्वत्र वैराग्यं चेति भावः ॥ ४६ ॥

जग्मुरनुजग्मुः यो राममना रामं न यातो नानुयातस्तादृशो जन्तुर्नासीदित्यर्थः ॥ ४७ ॥

राजनि गते अखिलं शून्यं बभूव हरिनेत्रजातां सरयूम् ॥ ४८ ॥

ततश्च रामस्य तपावनोऽसौ ददर्श चाशेषमिदं हृदिस्थम् ।
अथागतस्तत्र पितामहो महान् देवाश्च सर्वे ऋषयश्च सिद्धाः ॥
विमानकोटीभिरपारपारं समावृतं खं सुरसेविताभिः ।
रविप्रकाशाभिरभिस्फुरत् स्वं ज्योतिर्मयं तच्च नभो बभूव ॥ ५० ॥
स्वयं प्रकाशैर्महतां महद्भिः समावृतं पुण्यकृतां वरिष्ठैः ।
ववुश्च वाताश्च सुगन्धवन्तो ववर्ष वृष्टिः कुसुमावलीनाम् ॥ ५१ ॥
उपस्थिते देवमृदङ्गनादे गायत्सु विद्याधरकिन्नरेषु ।
रामस्तु पद्भ्यां सरयूजलं सकृत् स्पृष्ट्वा परिक्रामदनन्तशक्तिः ॥ ५२
ब्रह्मा तदा प्राह कृताञ्जलिस्तं रामं परात्मन् ! परमेश्वरस्त्वम्
विष्णुः सदानन्दमयोऽसि पूर्णो जानासि तत्त्वं निजमेवमेकम् ५
तथापि दासस्य ममाखिलेश ! कृतं वचो भक्तपरोऽसि विद्वन् !
त्वं भ्रातृभिर्वैष्णवमेकमाद्यं प्रविश्य देहं परिपाहि देवान् ॥ ५४

ऋतं पावनं विराड्रूपमात्मनो येन सः अशेषमिदं जगत् हृदिस्थं ददर्श आत्मानं विराड्रूपं ऋतवानित्यर्थः ॥ ४९ ॥

अपारपारं अवधिरूपपारद्वयहीनं तादृशमपि विमानावृतमासीत् ज्योतिर्मयं नक्षत्रगणप्रचुरमिव ॥ ५० ॥

येऽत्र लोके पुण्यं कृत्वा स्वर्गे स्वर्वेभ्य आधिक्यं प्राप्तास्तैश्च नभः समावृतं चौ भादपूरणे ॥ ५१ ॥

परिक्रामत् पर्यक्रामत् जलोपर्यगच्छदित्यर्थः तत्रैव हेतुगर्भं विशेषणमनन्तशक्तिरिति ॥ ५२ ॥

हे परमात्मन् परमेश्वर जगत्सृष्टिस्थितिलयकर्त्ता त्वमेवेत्यर्थः त्वमेवं एकं निजं तत्त्वं ब्रह्मरूपं जानासि ॥ ५३ ॥

नन्वेवं ब्रह्मणस्तव ब्रह्मरूपस्य कथं शरीरपरिग्रहो त आह तथापीति भक्तानुग्रहार्थं मायया सर्वं मायया सर्वमिदं कृतमिति भावः अतो वैष्णवं देहं प्रविश्य देवान् पाहि रक्ष ॥ ५४ ॥

यद्वा परो वा यदि रोचते तं प्रविश्य देहं परिपाहि सत्त्वम्
त्वमेव देवाधिपतिश्च विष्णुर्जानन्ति नत्वां पुरुषा विना माम्॥५५
सहस्रकृत्वस्तु नमो नमस्ते प्रसीद देवेश। पुनर्नमस्ते।
पितामहप्रार्थनया स रामः पश्यत्सु देवेषु महाप्रकाशः॥५६॥
गुणांश्च चक्रूंषि दिवौकसां तदा बभूव चक्रादियुतश्चतुर्भुजः।
शेषो बभूवेश्वरतल्पभूतः सौमित्रिरत्यद्भुतभोगधारी॥५७॥
बभूवतुश्चक्रदरौ च दिव्यौ कैकेयिसूनुर्लवणान्तकश्च।
सीता च लक्ष्मीरभवत्पुरैव रामो हि विष्णुः पुरुषः पुराणः।५८
सहानुजः पूर्वशरीरकेण बभूव तेजोमयदिव्यमूर्त्तिः।
विष्णुं समासाद्य सुरेन्द्रमुख्या देवाश्च सिद्धा मुनयश्च यक्षाः।५९
पितामहाद्याः परितः परेशं स्तवैर्गृणन्तः परिपूजयन्तः।
आनन्दसंप्लावितपूर्णचित्ता बभूविरे प्राप्तमनोरथास्ते॥६०॥
तदाह विष्णुर्द्विजवर्यं महात्मा एते हि भक्ता मयि चानुरक्ताः

यदीति यं इत्यर्थः अथवा यो परो देह स्तव रोचते तं वा प्रविश्य पाहि एवं विष्णुरूपं त्वां मां विना अन्ये पुरुषा न जानन्ति॥५५॥

एवं विष्णुरूपं ज्ञात्वा भक्त्या प्रणमति सहस्रेति॥५६॥

चक्रूंषि सुष्यान् स्वप्रभयेति शेषः रामदेह एव तथाभूतो जातः अनेन विष्णुदेह एव मायया द्विभुजत्ववैशिष्ट्येन लोकदृग्गोचर आसीदिति सूचितं भोगः सर्पशरीरं पूर्वगतोऽपि स तस्मिन्नवसरे तेन देहेन वर्ज्जितः॥५७॥

दरः शङ्खः लवणान्तकः शत्रुघ्नः सीता च पुरैव लक्ष्मीरूपा अभवत् तथापि तत्काले लक्ष्मीरूपेण वर्ज्जितासीदिति शेषः हि यतो रामो विष्णुरित्यर्थः॥५८॥

पूर्वशरीरकेण विष्णुदेहेन॥६०॥

नन्वेवं भगवतो विष्णुरूपप्राप्त्या वैकुण्ठवास इत्यायातं एवं च सभापर्वणि भारते सर्वदिक्पालसभावर्णने ब्रह्मसभाप्रस्तावे दाशरथी रामो

यान्तं दिवं मामनुयान्ति सर्वे तिर्यक्शरीरा अपि पुण्ययुक्ताः। ६१
वैकुण्ठसाम्यं परमं प्रयान्तु समाविशन्त्वाशु ममाज्ञया त्वम्।
श्रुत्वा हरीवाक्यमथाब्रवीत्तः सान्तानिकान्यान्तु विचित्रभोमान्
लोकान्महीतोपरि दीप्यमानांस्तद्भावयुक्ताः कृतपुण्यपुञ्जाः।
ये चापि ते राम! पवित्रनाम स्मरन्ति मर्त्या लयकालएव। ६२
अज्ञानतो वाऽपि भजन्तु लोकांस्तानेव योगैरपि चाधिगम्यान्।
ततोऽतिहृष्टा हरिराज्ञया॥ सृष्ट्वा जलं त्यक्तकलेवरास्ते। ६४।

यमसभायां दृष्ट इति नारदेनोक्तं तत्क्रियते इति चेत् अत्र वदामः अवतारपरिग्रहस्य हि प्रयोजनद्वयं दुष्टवधेन शिष्टपालनं स्वाचरणेन लोकानां धर्ममर्यादाबोधनं च एतदर्थमेव तेषां तत्तत्कर्मानुष्ठाने प्रवृत्तिरन्यथा अकामस्य भगवतः किं यज्ञाद्यनुष्ठानेन एवं च धर्मबोधनार्थं तदनुष्ठानस्य आजन्म इदयधर्मानुष्ठानस्यानुकलोकवासः फलमिति बोधयितुं दाशरथिरामत्वं प्रत्यभिज्ञापकेन मायिकेन केनचिच्छरीरेण तल्लोके वासेनाततः रामायणे एतदर्थाकथनं तु इतिहासेषु उक्तत्वात् सर्वेषामां वाक्लोकादीनां भूतभाविसर्वार्थज्ञानवत्त्वादित्यन्यत्र विस्तरः सहैव तत्र तस्मिन् समये विष्णुं दिव्यं ब्रह्मापयाङ्क मदनुगमनादेव पुण्ययुक्तत्वानुमानम् ॥ ६१ ॥

वैकुण्ठसाम्यं वैकुण्ठसमानलोकं सार्धं त्वञ् चातुर्वर्ण्यादित्वादात्मज्ञा एतत् ममाज्ञया समाविशस्व तादृशलोकं प्रवेशयस्व को अत्र सान्तानिका लोकविशेषाः ॥ ६२ ॥

तेषां लोकानामुत्तमत्वमाह मही यौमपरि दीप्यमानान् ब्रह्मलोकादूर्ध्वं दीप्यमानान् अपि च येऽपि मनुष्या लयकाल एव मरणकाल एवं न तु ततः प्रागपि कदाचित् तत्राप्यज्ञानतो वा अज्ञानत एव वा यच्च एवार्थः ते पवित्रनाम रामेत्येतत् स्मरन्ति वदन्ति तेऽपि तानेव लोकान् योगैः प्राप्यान् भजन्तु अनेनाजन्माभ्यस्तयोगोऽन्तकाले त्वन्नामस्मर्त्ता च सम इति सूचितम् ॥ ६३ । ६४ ॥

प्रपेदिरे प्राक्तनमेव रूपं यदंशजा ऋक्षहरीश्वरास्ते ।
प्रभाकरं प्राप हरिप्रवीरः सुग्रीव आदित्यजवीर्यवत्त्वात् ।६५।
ततो विमग्नाः सरयूजलेषु नराः परित्यज्य मनुष्यदेहम् ।
आरुह्य दिव्याभरणाविमानं प्रापुश्च ते सान्तनिकाख्यलोकान् ६६
तिर्यक्प्रजाता अपि रामदृष्टा जलं प्रविष्टा दिवमेव याताः ।
दिष्टचवो जानपदाश्च लोका रामं समालोक्य विमुक्तसङ्गाः ६७
स्मृत्वा हरिं लोकगुरुं परेशं स्पृष्ट्वा जलं स्वर्गमवापुरज्ञः ।
एतावदेवोत्तरमाह शम्भुः श्रीरामचन्द्रस्य कथावशेषम् ॥६८॥
यः पादमप्यत्र पठेत्स पापाद्विमुच्यते जन्मसहस्रजातात् ।
दिने दिने पापचयं प्रकुर्वन् पठेन्नरः श्लोकमपीह भक्त्या ॥६९॥
विमुक्तसर्वाघचयः प्रयाति रामेति सालोक्यमनन्यलभ्यम् ।
आख्यानमेतद्रघुनायकस्य कृतं पुरा राघवचोदितेन ॥ ७० ॥
महेश्वरेणाप्तभविष्यदर्थं श्रुत्वा तु रामः परितोषमेमि ।
रामायणं काव्यमनन्तपुण्यं श्रीशङ्करेणाभिहितं भवान्यै ॥७१॥

यो यदंशजः स तद्रूपमेव प्रापेत्यर्थः तदाह प्रभाकरमिति आदित्यजवीर्यवत्त्वात् आदित्यदेहजवीर्योत्पन्नत्वात् ॥ ६५ ॥

सान्तनिकाख्येत्यत्र ह्रस्व आर्षः ॥ ६६ ॥

रामदृष्टाः भगवद्दृष्ट्या क्षीणसर्वपापाः विमुक्तसङ्गा भूत्वेति शेषः॥६७

अज्ञः शीघ्रम् ॥ ६८ ॥

अथ रामायणपाठफलमाह य इति तथा पापं कुर्वन्नपि रामायणश्लोकमपि पठन् विमुक्तसर्वपापः रामस्य सालोक्यं प्रयाति राघवचोदितेन अन्तर्यामिविधया रघुनायकप्रेरितेन ॥ ६९ । ७० ॥

आप्तो व्याप्तः सर्वज्ञो भविष्यदर्थो यत्र तदाख्यानं श्रुत्वा रामः परितोषमेति भगवन्तं सर्वगतं रामं आवयामीतिबुद्ध्या यो वाचयति

भक्त्या पठेद्यः शृणुयात्स पापैर्विमुच्यते जन्मशतोद्भवैश्च ।
अध्यात्मरामं पठतश्च नित्यं श्रोतुश्च तद्भक्त्या लिखितुश्च रामः । ७२
अतिप्रसन्नश्च सदा समीपे सीतासमेतः श्रियमातनोति ॥ ७३
रामायणं जनमनोहरमादिकाव्यं
ब्रह्मादिभिः सुरवरैरपि संस्तुतञ्च ।
श्रद्धान्वितः पठति यः शृणुयात्तु नित्यं
विष्णोः प्रयाति सदनं स विशुद्धदेहः ॥ ७४ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे
नवमः सर्गः ।

श्रीमदध्यात्मरामायणं समाप्तिमगमत् ।

तद्वाचि तं तत्सर्वंगतत्वात् श्रुत्वा वाचकस्योपरि तोषमेति तत्परितोषे च तस्य सर्वार्थसिद्धिरिति भावः अनन्तपुण्यं वाचकश्रोत्रोरनन्तसुखद-मित्यर्थः ॥ ७१ ॥

अध्यात्मरामं तत्पदघटितमध्यात्मरामायणाख्यं पुराणमित्यर्थः श्रोतुः लिखितुश्चातिप्रसन्नः सन् सदा समीपे स्थितो भूत्वा श्रियमातनोतीत्यन्वयः ॥ ७२—७४ ॥

इति श्रीमत्सकलराजविपद्धुर्य्यसमर्थत्वादिविरुदावलीविराजमानस्य हिम्मतिवर्म्मणः पुत्रस्य श्रीरामवर्म्मणः कृतावध्यात्मरामायणसेतौ उत्तरकाण्डे नवमः सर्गः ।

समाप्तोऽयं श्रीमदध्यात्मरामायणसेतुः ।

५८ तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्)सभाष्य सटीक २

५९ बृहदारण्यक सटीक सभाष्य १०

६० सुश्रुत वैद्यक ४

६१ शार्ङ्गधर (वैद्यक) १

६२ वेतालपञ्चविंशतिः ।।।०

६३ पातञ्जलदर्शन(सभाष्यसटीक) ४

६४ आत्मतत्त्वविवेक(बौद्धाधिकार) २

६५ मुक्तिकोपनिषद् /

६६ उपमान चिन्तामणि ।०

६७ नागानन्द नाटक १

६८ पूर्णप्रज्ञ दर्शनम् सभाष्य २

६९ चन्द्रशेखरचम्पूकाव्य ३

७० सामवेदस्य मन्त्र ब्राह्मणम् (भाष्य सहितम्) २

७३ सामवेदस्य आरण्यसंहिता सायणाचार्य्यकृत भाष्यसहिता १

७२ विद्धशालभञ्जिकानाटिका सटीक ।

७३ कारण्डव्यूह (बौद्धशास्त्र) २

७४ कुवलयानन्द अलङ्कारसटीक ३

७५ प्रियदर्शिका नाटिका सटीक ।।

७६ सारस्वत व्याकरण सटीक पूर्वार्द्धम् १।

७७ वासवदत्ता सटीक २

७८ (कालिदास कृत पुष्पवाण-विलास काव्य सटीक ।।

७९ महिम्न शतकम्, पदारविन्द शतकम्, स्तुतिशतकम्, मन्दस्मित शतकम्, कटाक्षशतकम्, १

८० मनुसंहिता टीका सहित ५

८१ नैषधचरितम् टीका सहित १०

८२ चन्द्रलोक प्राचीन अलङ्कार ।।

८३ वीरमित्रोदय (स्मृतिशास्त्र) १०

८४ भावप्रकाश (वैद्यक) १०

८५ प्रबोधचन्द्रोदय नाटक सटीक २

८६ अनर्घराघवनाटक(मुरारिकृत) २

८७ दैवतब्राह्मणसभाष्य १

८८ षड्विंशब्राह्मणम् सभाष्य १

८९ मीमांसा परिभाषा ।।०

९० अर्थसंग्रह(लौगाक्षीमीमांसा)।।०

९१ रघुवंश सटीक १।।०

९२ मेघदूत सटीक ।।।

९३ कथासरित्सागर (सम्पूर्ण) ६

९४ ईश्वरानुमानचिन्तामणि (गङ्गेशोपाध्याय कृत) १

९५ न्यायदर्शन सभाष्य सवृत्ति २।।

९६ सटीक वाल्मीकिरामायण बालकाण्डम् २

९७ साहित्य दर्पण टीका सहित अलङ्कार शास्त्र ४

९८ मदनपालनिघण्टुः (वैद्यक) १

९९ संस्कृतशिक्षामञ्जरीप्रथमभागः/

१०० संस्कृतशिक्षामञ्जरीद्वितीयभागः

१०१ साहित्यदर्पणम् (अलङ्कार) १।।

१०२ श्रीहर्षचरित वाणभट्टकृत २

१०३ अमरकोष ।।

१०४ वेदान्तसूत्र शङ्कराचार्य्य कृत शारीरकभाष्य तथा गोविन्दानन्द-कृत टीका सहित १०

१०५ वेदान्तपरिभाषा १

१०६ वेतालसारसटीक १
१०७ सटीक निदान (वैद्यक) ४
१०८ कामन्दकी नीतिसार १
१०९ मल्लिकामारुतप्रकरण सटीक २
११० अत्रि विष्णु, हारीत, याज्ञवल्क्य उशना अङ्गिरा यम आपस्तम्ब संवर्त्त कात्यायन वृहस्पति पराशर व्यास शङ्ख लिखित दक्ष गौतम शातातप वशिष्ठ प्रणीत संहिता (धर्मशास्त्र) १५
१११ मत्स्यपुराण ६
११२ चरकसंहिता(वैद्यक)सम्पूर्ण १०
११३ रसेन्द्रचिन्तामणि तथा रसरत्नाकर (वैद्यक) ६
११४ भगवद्गीता शङ्करभाष्य आनन्दगिरिकृतटीका तथा सुबोधिनीसमेत ५
११५ शब्दशक्तिप्रकाशिका १
११६ मालतीमाधव सटीक १॥
११७ सटीक भट्टिकाव्य ४
११८ सटीक काव्यप्रकाश ४
११९ सभाष्यशाण्डिल्यसूत्र ॥/
१२० लघुकौमुदीव्याकरणम् ॥०
१२१ महानाटकम्(हनुमन्नाटक) १
१२२ दशरूपकम्(अलङ्कार) १॥०
१२३ भोजचम्पू ( भोजदेव कृत चम्पूरामायणम् ) १
१२४ भारत चम्पूसटीक ४
१२५ मार्कण्डेयपुराणम् ५
१२६ गोलाध्यायः १
१२७ गणिताध्यायः १
१२८ पञ्चदशी (सटीक) २
१२९ पातञ्जलदर्शनस्य भोजवृत्तिः १
१३० शकुन्तलानाटक टीकासहित १
१३१ शब्दरूपादर्शः ॥०
१३२ वृहत्संहिता वा वाराहीसंहिता १।/
१३३ तर्कामृत (जगदीशकृत) ।०
१३४ द्वात्रिंशत्पुत्तलिका १
१३५ उत्तररामचरितसटीक १।
१३६ शङ्करविजय १॥०
१३७ मृच्छकटिकप्रकरण सटीक २
१३८ काव्यादर्शसटीक(अलङ्कार) २
१३९ अष्टाङ्गहृदय संहिता (वाग्भटकृत वैद्यक) ३
१४० शुक्रनीति सटीक २
१४१ गीतगोविन्द सटीक ॥०
१४२ अग्निपुराणम् ७
१४३ विष्णुपुराणम् सटीक ५
१४४ मीमांसादर्शन सभाष्य १२
१४५ अध्यात्मरामायणम् सटीक ४
१४६ महानिर्वाणतन्त्रम् सटीक ४
१४७ मीमांसादर्शनस्य अधिकरणमाला १०
१४८ श्रुतबोधः (छन्दो ग्रन्थ) /
१४९ बालरामायण नाटक सटीक ३
१५० लिङ्गपुराणम् ५

कलिकाता संस्कृतविद्यामन्दिरे—बि, ए, उपाधिधारिणः
श्रीजीवानन्द विद्यासागर-भट्टाचार्य्यस्य सकाशात् लभ्यानि ।

